'मास्टर' मणिमालायाः १३५ संख्यको मणिः (न्यायविभागे ४)



श्रीमन्महामहोपाध्यायगङ्गेशोपाध्यायकृतं

# सव्यभिचार-प्रकरणम्

[ दीधिति–गादाधरी–कालीशङ्करीसंवलितम् ]

श्रीमद्रामाचरणभट्टाचार्यकृत-

विवृत्या-मनोरमाख्यया टीकया च

समलङ्कृतम्

प्रकाशकः—

मास्टर खेलाड़ीलाल ऐण्ड सन्स्

संस्कृत बुकडिपो,

कचौड़ीगली, काशी।

# THE SAVYABHICHAR PRAKARANAM

OF

M. M. SHRI GANGESHOPADHYAYA.

With the Commentaries
DIDHITI, GADADHARI, VIVRITI, MANORAMA
& KALISHANKARI.

BY

M. M. Shri Raghunath Shiromani, Pandit Shri Gadadhara Bhattacharya, Nyayacharya Tarktirtha, SHRI VAMA-CHARAN BHATTACHARYA & Pandit Shri Kali Shankara Bhattacharya Siddhanta Vageesh.

PUBLISHED BY

MASTER KHELARI LAL & SONS
SANSKRIT BOOK-DEPOT,
KACHAURIGALI, BENARES.

*Branch:—*
Moradpur, Bankipur, PATNA.

1940

*First Edition* ] [ *Price Rs. 2/12-/*

ॐ

श्रीमहामहोपाध्यायगंगेशोपाध्यायविरचितम्

# सव्यभिचारप्रकरणम्

श्रीमन्महामहोपाध्यायरघुनाथशिरोमणिकृत-

**दीधित्या**

नैयायिककुलाग्रगण्यवरेण्यश्रीमद्गदाधरभट्टाचार्यकृत-

**गादाधर्याख्यया** टीकया च

समेतम् ।



पंडितप्रवर**श्रीवामाचरणभट्टाचार्य**न्यायाचार्यतर्कतीर्थविरचितया

**विवृत्या, मनोरमाख्यया** टीकया च

समुद्भासितम् ।



सिद्धान्तवागीशश्रीकालीशंकरभट्टाचार्यकृत**कालीशंकर्याख्येन**

सुप्रसिद्धेन क्रोड़पत्रेण युतम् ।



तच्च

काश्यां

विविधग्रन्थप्रकाशनलब्धप्रतिष्ठेन

**मास्टर खेलाड़ीलाल एण्ड सन्स पुस्तकागाराध्यक्षेण**

**प्रकाशितम् ।**

---

मूल्यमाणकद्वादशाधिकरूप्यकद्वयम् ।

प्रकाशकः—

मास्टर खेलाड़ीलाल एन्ड सन्स्

कचौड़ी गली, काशी ।

बहुविधनव्यन्यायग्रन्थेषु रचितसुविस्तृतव्याख्यः

नैयायिककुलवर्यः सुप्रचुरच्छात्रसम्पन्नः ।

सम्प्रतिगादाधर-सव्यभिचारसुटीकनेन जुष्टश्रीः

श्रीमान् वामाचरणन्यायाचार्यश्चिरं जीव्यात् ॥

भट्टपल्लयभिजन-त्यक्तमहामहोपाध्यायपदवीक

काशीस्थतर्करत्नोपाधिक—

श्रीपञ्चाननदेवशर्मणः शुभाशीरेषा ।

मुद्रकः—

बी० के० शास्त्री;

ज्योतिष प्रकाश प्रेस,

विश्वेश्वरगंज, काशी ।

# समर्पणम्



ॐ नमो भगवते

श्रीमते काशीस्वामिने

विश्वेश्वराय

पुस्तकमिदं

सुसमर्पितम्

अस्तु ।

इति श्रीवामाचरणभट्टाचार्यस्य ।

ओ३म्

# विज्ञप्तिः

अनन्तधीरप्रवरैः सुसेवितः, सुशासितो वीरवरेण्यभूभुजा।
सुदर्शनीयः सुरमन्दिरश्रिया, सदा य आसीदसता विवर्जितः॥ १ ॥
यदीयशुभ्रं कुसुमोपमं यशः, सदाहृतं सत् सुरभीव विस्तृतम्।
निषेव्य सभ्यो न जनः स राजते, जहाति यो न स्वपुरं प्रियं तदा॥ २ ॥
अनेकपण्यक्रयविक्रये रताः, प्रतापवन्तो धनिनो विलासिनः।
जनप्रमोदाय विधाय चारुताम्, मनोरमे यत्र वसन्ति सन्ततम्,॥ ३ ॥
निकुञ्जपुञ्जे किल यत्र मञ्जुले, समुज्ज्वलत् पुष्पदलप्रकाशिते।
सकान्तया चञ्चलभृङ्गमालया, सदाशयानां प्रसभं हृतं मनः॥ ४ ॥
निरन्तरं कान्तवसन्तसंगमादपङ्कजं यत्र सरो न वर्त्तते।
समन्ततः शान्तसमीरसेवनात्, जनश्रमो यत्र नवा विराजते॥ ५ ॥
बालाः स्त्रियोऽपि यत्रैव, शास्त्रज्ञानसमन्विताः।
लेभे च जननं यत्र नव्यन्यायो विदाम्बरात्॥ ६ ॥
समस्तभारतश्रेष्ठविद्याधारत्वमीरितम्।
यत्र तत्रैव गौड़ेऽहं जातः सर्वजनादृते॥ ७ ॥
वाराणसीप्रवासीमां रचयामि सुविस्तृताम्।
पुनः सव्यभिचारस्य विवृतिञ्च मनोरमाम्,॥ ८ ॥
यदि बुद्धिमतां कश्चिदुपकारोऽनया भवेत्।
तदा प्रीतस्त्यजाम्येव स्वकीयश्रमवेदनाम्,॥ ९ ॥
असम्यङ्मुद्रणात् जाता याऽशुद्धिर्वा प्रमादतः।
साऽशुद्धिः सर्वथा सद्भिः क्षन्तव्या धीमतां वरैः॥ १० ॥
इति प्रार्थयते योऽसौ स वामाचरणाभिधः।
कठोरतर्कशास्त्रस्य भावमुद्भावयत्ययम्॥ ११ ॥
आशीर्वादं सतां लब्ध्वा स्मृत्वा गुरुपदाम्बुजम्।
पितरौ च नमस्कृत्य प्रसन्नो विरमाम्यहम्॥ १२ ॥
अष्टादशशतादूर्द्ध्वं द्विषष्टिशाकवर्षके।
आषाढ़शुक्लपञ्चम्यां समाप्तिं पुस्तिका गता॥ १३ ॥

इति—

**श्रीवामाचरणभट्टाचार्यस्य**

श्रीगणेशाय नमः ।

# अथानुमानगादाधर्यां

# सव्यभिचारप्रकरणम् ।

## विवृतिमनोरमाख्यटीकाद्वयालङ्कृतम्

* अथ सव्यभिचारचिन्तामणिः *

सव्यभिचारोऽपि त्रिविधः,

---

❀ विवृतिः ❀

ब्रह्मा विष्णुरपीश्वरः स्मरहरो यस्याः समुत्पद्यते
यस्याः पादसरोजगन्धनिचये भृङ्गायते देवता ।
यामेकामृषयस्तुवन्ति जननीमाजन्मजन्मापहां
वन्दे तां यमयन्त्रणाप्रशमनीमाद्यामवेद्यामहम् ॥ १ ॥

मातस्त्वच्चरणज्ञानप्रकारकविनिश्चयः ।
ज्ञानाभावस्य विज्ञानं प्रतिबध्नातु मामकम् ॥ २ ॥

सहस्रवारं पितरौ प्रणम्य प्रणम्य च श्रीचरणे गुरूणाम् ।
सुचिन्त्य वामाचरणस्त्वबोधां गदाधरोक्तिं विवृणोति धीरः ॥३॥

तस्य सव्यभिचारस्य ग्रन्थस्यैवापरिष्कृताम् ।
गादाधरींपरिष्कृत्य प्रकाशयति सादरम् ॥ ४ ॥

धीरा यदीह नवनीतिनिदाघतापैः
श्रान्तास्तदा पिबत शीतलमादरेण ।
दत्तं मया गुरुवचःसरसां प्रभूतं
गादाधरी विवृतिवारि सुखावगाहम् ॥ ५ ॥

(विवृतिः) विभक्तानां हेत्वाभासानां मध्ये प्रथमोद्दिष्टसव्यभिचारविभागमाह-मूले-**सव्यभिचारोऽपीति** । **त्रिविध इति** । उद्देश्यतावच्छेदकीभूतसव्यभिचारत्वसमनियतवस्तुमदन्यसंख्यावानित्यर्थः । तादृशी च संख्या साधारणत्वाऽसाधारणत्वानुपसंहारित्वगतत्रित्वरूपा, तस्याश्च स्वाश्रयाश्रयत्वसम्बन्धेन साध्यत्वमवधेयम् ।

❀ मनोरमा ❀

गुरूणां चरणे नत्वा नत्वा देवन्दिगम्बरम् ।
मया सव्यभिचारस्य क्रियते सा मनोरमा ॥ १ ॥

सव्यभिचारोऽपीति । 'त्रिविध' इत्यत्र विधाशब्दार्थस्तु उद्देश्यतावच्छेदकसमनियत-

## साधारणासाधारणानुपसंहारिभेदात् ।

---

❀ अथ सव्यभिचारदीधितिः ❀

(दी०) यद्यपि लक्षणतः सामान्यमप्रतीतवतो विशेषजिज्ञासानु-

❀ अथ सव्यभिचारगादाधरी ❀

(गा०) सव्यभिचारसामान्यलक्षणमनुक्त्वा मणिकृतस्तद्विभजन-माक्षिपति–यद्यपीति। लक्षणतः = लक्षणवाक्यतः। सामान्यं = साधारणा-साधारणानुपसंहारित्रितयसाधारणधर्मम्। अप्रतीतवतः-'अन्तेवासिन'इति

❀ विवृतिः ❀

निरुक्तायाः संख्यायाः ज्ञापकं हेतुमाह–**साधारणेति**। साधारणभेदासाधारणभेदा-नुपसंहारिभेदान्यतमभेदादित्यर्थः। निरुक्तभेदस्य प्रतियोगितासम्बन्धेन, स्वनि-रूपित प्रतियोगितावच्छेदकसाधारणत्वाद्यन्यतमवत्त्वसम्बन्धेन वा हेतुत्वं बोध्यम्। स्वरूपेण तस्य तथात्वे घटादौ व्यभिचारापत्तिः स्यादिति ध्येयम्। तथाच 'सव्यभिचारः सव्यभिचारत्वसमनियतवस्तुमदन्यसंख्यावान् साधारणभेदासाधारणभेदानुपसंहारि-भेदान्यतमभेदा'दित्याकारकोऽनुमानप्रयोगोऽनुसंधेय इति भावः।

टीकायां—**सव्यभिचारेति**। साधारणादि-त्रितयसाधारणकिंचिद्धर्मप्रकारक-ज्ञानप्रयोजकलक्षणात्मकवाक्यादित्यर्थः। तद्विभजनम्=सव्यभिचारविभागः, सव्य-भिचारत्वावान्तरधर्मेण धर्मिप्रतिपादनमितियावत्। **आक्षिपतीति**। तादृशविभागस्या-संगतत्वसंपादकं पूर्वपक्षं प्रदर्शयतीत्यर्थः। **यद्यपीतीति** = यद्यपीत्यादि ग्रन्थेनेत्यर्थः। लक्षणशब्दस्य स्वरूपाद्यर्थकत्वभ्रमनिराकरणायाह-**लक्षणवाक्यतइति**। लक्षणात्मक-वाक्यादित्यर्थः। अप्रतीतवतः=साधारणादि त्रितयसाधारण धर्मप्रकारकज्ञानशून्यस्य।

❀ मनोरमा ❀

वस्तुमदन्यसङ्ख्यावान्। तथा च सव्यभिचारः सव्यभिचारत्वसमनियतवस्तुमदन्यसङ्ख्यावान्, साधारणाद्यन्यतमभेदात्। भेदस्य प्रतियोगित्वसम्बन्धेन हेतुत्वं बोध्यम्। न चोक्तहेतोः पक्षमात्रवृत्तित्वेन दृष्टान्ताभाव इति वाच्यम्, यो न तादृश संख्यावान् स न प्रतियोगित्व सम्बन्धेन तादृशान्यतमभेदवान् यथा घट इत्याकारकव्यतिरेकिदृष्टान्तस्यैव सुलभत्वादितिभावः। यद्यपि व्यतिरेकिदृष्टान्तस्याप्रयोजकत्वेन न साध्यसाधकत्वम्, अन्यथा सव्यभिचारत्वस्यापि हेतुत्वसंभवेन साधारणादिभेदस्य हेतुत्वानुसरणं निर्युक्तिकं स्यादितिविभाव्यते तदा भेदादित्यत्र ल्यब्लोपे पञ्चमीमभ्युपगम्य साधारणादिभेदं स्वीकृत्य सव्यभिचारस्त्रिविध इत्येवमर्थः करणीय इति ध्येयम्। निरुक्तसव्यभिचारत्वसमनियत वस्तुमदन्यसंख्या च—साधारणत्वासाधारणत्वानुपसंहारित्वगत-त्रित्वरूपा। तत्र समनियतत्वं च व्याप्यत्वे सति व्यापकत्वम्। व्याप्यत्वं व्यापकत्वञ्च, स्वाश्रयाश्रय-त्वसम्बन्धेन बोध्यम्। व्याप्यत्वानुपादाने साधारणत्वासाधारणत्वानुपसंहारित्वघटत्वैतद्गतचतुष्ट्व-संख्याया अपि स्वाश्रयाश्रयत्वसम्बन्धेन सव्यभिचारत्वव्यापकतया तादृशचतुष्ट्वसंख्यामादाय

❀ दीधितिः ❀

दयात् सामान्यलक्षणानन्तरमेव विशेषविभागो युक्तस्तथापि सव्य-

❀ गादाधरी ❀

शेषः। विशेषजिज्ञासानुदयात्=अवान्तरधर्मप्रकारकज्ञानेच्छोत्पत्त्यसम्भवात्। सामान्यज्ञानस्य विशेषजिज्ञासायां स्वातन्त्र्येण, इष्टसाधनताज्ञानधर्मितावच्छेदकज्ञानसम्पादकतया वा हेतुत्वादिति भावः। सामान्यलक्षणानन्तरं=सव्यभिचारसामान्यलक्षणानन्तरम्। विभागः=सव्यभिचारविभागः। सव्यभिचारत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादन-

❀ विवृतिः ❀

अन्तेवासिनः=शिष्यस्य। **अवान्तरेति**। सव्यभिचारत्वावान्तरधर्मप्रकारक ज्ञानविषयकेच्छोत्पादासम्भवादित्यर्थः। सामान्यज्ञानस्य=सामान्यधर्मप्रकारकज्ञानस्य। विशेषजिज्ञासायां=तद्धर्मावान्तरधर्मप्रकारकज्ञानेच्छायां। स्वातन्त्र्येण=स्वतन्त्रान्वयव्यतिरेकशालित्वेन; इष्टसाधनताज्ञानानात्मकत्वेन वा। हेतुत्वादित्यग्रेणान्वयः।

नन्विष्टसाधनताज्ञानानात्मकसामान्यधर्मप्रकारकज्ञानस्य विशेषजिज्ञासाहेतुत्वमप्रामाणिकम्, पृथक्सामान्यज्ञानं विनापि इष्टसाधनताज्ञानात् सामान्यधर्मावान्तर धर्मप्रकारकज्ञानेच्छोदयस्य सर्वसिद्धत्वादित्यतआह–**इष्टेति**। इष्टसाधनताज्ञानस्य=स्वप्रकारकत्वसम्बन्धेन तद्धर्मावान्तरधर्मविशिष्टज्ञानमिष्टसाधनमित्याकारकज्ञानस्य, धर्मितायामवच्छेदकीभूतो यस्तादृशावान्तरधर्मस्तत्प्रकारकं यज्ज्ञानं तदुत्पादप्रयोजकतयेत्यर्थः। तथाच विशेषजिज्ञासां प्रति सामान्यधर्मप्रकारकज्ञानस्य तत्त्वेन पृथगेव साक्षात् कारणत्वं, अथवा प्रथमं सामान्यधर्मप्रकारकं ज्ञानं, ततः सामान्यधर्मावान्तरधर्मरूपेष्टसाधनताज्ञानधर्मितावच्छेदकप्रकारकं ज्ञानं, ततस्तादृशेष्टसाधनताज्ञानं, ततो जिज्ञासेत्यादिरीत्या परम्परया कारणत्वमतः सामान्यज्ञानं विना विशेषजिज्ञासोत्पादो न सम्भवत्येवेति हृदयम्। **सव्यभिचारत्वावान्तरेति**। सव्यभिचारत्वव्याप्येन परस्परविरुद्धसाधारणत्वादिधर्मेणेत्यर्थः। धर्मिप्रतिपादनम्=

❀ मनोरमा ❀

सव्यभिचारस्य चतुर्विधत्वापत्तिरतस्तदुपादानम्। तदुपादाने तु न तदापत्तिः, निरुक्तचतुष्ट्वसंख्यायाः स्वाश्रयाश्रयत्वसम्बन्धेन सव्यभिचारत्वाभाववति घटे विद्यमानतया व्याप्यत्वाभावात्।

साधारणत्वासाधारणत्वगतद्वित्वसंख्यायाः सव्यभिचारत्वाभाववति सर्वत्रैव स्वाश्रयाश्रयत्वसम्बन्धेनाऽवृत्तित्वेन सव्यभिचारत्वव्याप्यतया तादृशद्वित्वसंख्यामादाय सव्यभिचारस्य द्विविधत्वापत्तिवारणाय व्यापकत्वदलोपादानम्। व्यापकत्वोक्तौ तु न तदापत्तिः, निरुक्तद्वित्वसंख्यायाः सव्यभिचारत्ववत्यनुपसंहारिणि स्वाश्रयाश्रयत्वसम्बन्धेनाऽसत्त्वेन तस्याः सव्यभिचारत्वाऽव्यापकत्वात्। साधारणत्वासाधारणत्वानुपसंहारित्वसव्यभिचारत्वगत चतुष्ट्वसंख्याया अपि स्वाश्रयाश्रयत्वसम्बन्धेन सव्यभिचारत्वसमनियततया तामादाय सव्यभिचारस्य चतुर्विधत्वापत्तिवारणाय 'वस्तुमदन्यत्वं' संख्या-

**तत्र सव्यभिचारः साध्य-तदभावप्रसञ्जक इति न त्रितयसाधारणं**

❀ दीधितिः ❀

**भिचारपदस्य साधारणमात्रे प्रसिद्धतया तन्मात्रस्य लक्ष्यभावं बुध्यमानैरन्तेवासिभिरसाधारणादिसाधारणस्य लक्षणस्यातिव्याप्तिस्तद्व्यावृत्तस्यैव च साधुता प्रतीयेत, अतस्तद्वारणाय लक्ष्यान्तरमपि दर्शयति-सव्यभिचार इति ।**

❀ गादाधरी ❀

मिति यावत् । नायं ग्रन्थो विभागपरः, अपि त्वसाधारणानुपसंहारिणोऽलक्ष्यताभ्रमनिबन्धनवक्ष्यमाणसामान्यलक्षणातिव्याप्तिभ्रमनिराकरणाय त्रयाणां लक्ष्यताप्रदर्शनपर इति समाधत्ते-तथापीति । साधारणमात्रे प्रसिद्धतया = भूरिप्रयोगविषयसाधारणमात्रकतया । "अतिव्याप्तिः"-प्रतीयेतेति सम्बध्यते । तद्व्यावृत्तस्य—असाधारणादिव्यावृत्तस्य । साधुता—निर्दोषता ।

❀ विवृतिः ❀

सव्यभिचारत्वावच्छिन्नानां साधारणादिधर्मिणां या प्रतिपत्तिः, तदनुकूलव्यापारः । **तथापी**त्यादिसमाधानस्याशयं प्रदर्शयति-**नायमित्यादि**। अयं ग्रन्थः='सव्यभिचारोऽपी'त्यादिग्रन्थः। न विभागपरः = न विभागबोधेच्छयोच्चरितः। **अलक्ष्यतेति**। सव्यभिचारसामान्यलक्षणस्याऽलक्ष्यताभ्रमप्रयुक्तो यो वक्ष्यमाणसव्यभिचारसामान्यलक्षणस्यासाधारणादावतिव्याप्तिभ्रमस्तन्निराकरणायेत्यर्थः । वक्ष्यमाणसामान्यलक्षणस्य तत्रापि सत्त्वादित्याशयः। त्रयाणां = साधारणासाधारणानुपसंहारित्रयाणाम् । लक्ष्यताप्रदर्शनपरः=सव्यभिचारसामान्यलक्षणलक्ष्यताप्रदर्शनबोधेच्छयोच्चरितः। 'अयं ग्रन्थ'इति पूर्वेणान्वयः । **भूरीति** । साधारणरूपार्थबोधकत्वेन भूरिप्रयोगविषयीभूतं

❀ मनोरमा ❀

वशेषणम् । तच्च स्ववृत्तित्व, स्वसमानाधिकरणस्वेतरवृत्तित्वोभयसम्बन्धेन वस्तुविशिष्टान्यत्वरूपम् । निरुक्तचतुष्टयस्य सव्यभिचारत्ववृत्तित्वेन, सव्यभिचारत्वभिन्नसव्यभिचारत्वसमानाधिकरणसाधारणत्वादिवृत्तित्वेन च सव्यभिचारत्वरूपवस्तुविशिष्टतया वस्तुविशिष्टान्यसंख्यापदेन तस्या धर्तुमशक्यत्वान्न तामादाय सव्यभिचारस्य चतुर्विधत्वापत्तिः । न च सव्यभिचारत्वगतैकत्वसंख्यायाः स्वाश्रयाश्रयत्वसम्बन्धेन सव्यभिचारत्वसमनियततया, तादृशोभयसम्बन्धेन वस्तुविशिष्टान्यत्वेन च तामादाय सव्यभिचारस्यैकविधत्वापत्तिरिति वाच्यम्, उद्देश्यतावच्छेदकावृत्तित्वस्य संख्याविशेषणत्वोपगमात् । न च तथापि गगनस्याश्रयाऽप्रसिद्ध्या साधारणत्वासाधारणत्वानुपसंहारित्वगगनैतद्गतचतुष्ट्वसंख्याया अपि सव्यभिचारत्वसमनियततया वस्तुमदन्यत्वेन च धर्तुं शक्यतया तादृशचतुष्ट्वसंख्यामादाय सव्यभिचारस्य चतुर्विधत्वापत्तिरिति वाच्यम्, अवृत्त्यवृत्तित्वेनापि संख्यायाः विशेषणीयत्वादिति ध्येयम् ।

नन्वेवमपि साधारणासाधारणानुपसंहार्य्यन्यतमत्वगतैकत्वसंख्यामादाय सव्यभिचारस्यैकविधत्वापत्तिः, एवं साधारणासाधारणान्यतरत्व, अनुपसंहारित्व-गतद्वित्वमादाय सव्यभिचारस्य

**लक्षणम्, एकस्योभयं प्रत्यसाधकत्वात्, अनापादकत्वाच्च।**

❀ दीधितिः ❀

**कश्चित्तु सामान्यज्ञानाधीनो विभागो न तल्लक्षण(तः) प्रत्ययम-**

❀ गादाधरी ❀

लक्ष्यान्तरमिति। तथाच सव्यभिचार इति मूलस्य वक्ष्यमाणसव्यभिचारसामान्यलक्षणलक्ष्य इत्यर्थः।

एतद्ग्रन्थस्य विभागपरत्वमुपपादयतो मतमाह—कश्चिदिति। सामान्यज्ञानाधीनः=सामान्यज्ञानसामान्याधीनः। "तल्लक्षणप्रत्ययं"-लक्षणवाक्याधीनसामान्यज्ञानमात्रम्। अत्र च विभागोपयुक्तसामान्यज्ञानस्योपायान्तरतोऽभ्युपगमे पश्चादपि सामान्यलक्षणाभिधानमसङ्गतमनाकाङ्क्षितत्वादित्यस्वरससूचनाय 'कश्चि'दित्युक्तम्।

❀ विवृतिः ❀

साधारणमात्रं यस्य तादृशत्वेनेत्यर्थः। दीधितौ—**तन्मात्रस्येति**। साधारणमात्रस्येत्यर्थः। लक्ष्यभावं=लक्ष्यत्वं। बुध्यमानैः=ज्ञायमानैः। अन्तेवासिभिः=शिष्यैः। असाधारणादिसाधारणस्य=असाधारणेऽनुपसंहारिण्यपि वर्त्तमानस्य। लक्षणस्य=सव्यभिचारसामान्यलक्षणस्य। टीकायां—**सम्बध्यत इति**। अन्तेवासिवृत्तिभ्रमविषयीभूता अतिव्याप्तिः स्यादित्याशयः। **असाधारणादिव्यावृत्तस्य**=असाधारणादाववर्त्तमानस्य। उपसंहरति—**तथाचेति**। तथाच सव्यभिचारोऽपि सव्यभिचारसामान्यलक्षणलक्ष्योऽपीत्यादिरीत्या मूलार्थः करणीय इति भावः। एतद् ग्रन्थस्य=सव्यभिचारोपीत्यादि ग्रन्थस्य। विभागपरत्वं=तादृशपरस्परविरुद्धधर्मेण धर्मिप्रतिपादनबोधेच्छयोच्चरितत्वं। सामान्यज्ञानसामान्याधीनः=सामान्यज्ञानत्वव्यापकप्रयोजकतानिरूपितप्रयोज्यतावान्। तेन न सव्यभिचारविषयकसमूहालम्बनघटसामान्यज्ञानमादाय सव्यभिचारविभागस्य घटसामान्यज्ञानाधीनत्वापत्तिर्नवा लक्षणाधीन सामान्यज्ञानस्यतादृशविभागप्रयोजकत्वानुपपत्तिः। सामान्यज्ञानप्रयोजनकं हि लक्षणाभिधानं; तादृशं ज्ञानं यदि लक्षणवाक्यभिन्नेन केनचित् कारणेनोत्पन्नं स्यात् तदा तदर्थं लक्षणाभिधानमयुक्तमेव, सामान्यज्ञानवतां शिष्याणामजिज्ञासिताभिधानस्य प्रेक्षावदुपेक्षाविषयत्वादित्येवं दीधितिकृतां कश्चिदित्यनेनाभिप्रेतमस्वरसं प्रदर्शयितुमाह—**अत्रचेति**। एतन्मतेचेत्यर्थः। विभागोपयुक्त सामान्य ज्ञानस्य=विभागप्रयोजकीभूतस्य सामान्यधर्मप्रकारकज्ञानस्य। उपायान्तरतः=लक्षणवाक्यातिरिक्तात् कुतश्चित् प्रत्यक्षादिप्रमाणतः। पश्चादपि=निरुक्तसामान्यज्ञाना-

❀ **मनोरमा** ❀

द्विविधत्वापत्तिः, तत्साधारणत्व, तदन्यसाधारणत्व, असाधारणत्व, अनुपसंहारित्वादिगतचतुष्ट्वादि-

❀ गादाधरी ❀

अथवा सामान्यज्ञानाधीनः=त्रितयसाधारणकिञ्चिद्धर्मावच्छिन्न-ज्ञानाधीनः। तल्लक्षणप्रत्ययं=सव्यभिचारपदार्थतावच्छेदकवक्ष्यमाण-लक्षणज्ञानमपेक्षते। **अत इति**। तादृशलक्षणाज्ञानेपि सव्यभिचारपदार्थ-त्वरूपसामान्यज्ञानस्य शिष्याणां स्वत एव सम्भवेन विशेषजिज्ञासा-सम्भवादिति भावः। अत्र च सव्यभिचारपदार्थत्वेन त्रयाणां ज्ञानेऽपि प्रथमं सव्यभिचार एव कीदृश इत्येवं जिज्ञासोदेति, न तु सव्यभिचार-पदार्थाः कतीति प्रथमं विभागोऽनुचित इत्यस्वरसबीजम्।

प्रसञ्जकपदस्यानुमापकापादकयोरेकतरमात्रपरत्वेऽसाधकत्वादित्यादि-

❀ विवृतिः ❀

नन्तरमपि। "लक्षणाभिधानं" सामान्यज्ञानसम्पादकमित्यादिः। अनाकाङ्क्षितत्वात्=अजिज्ञासितत्वात्। 'इत्युक्तं दीधितिकृते'तिशेषः। ननु यदि सामान्यज्ञानसामान्या-धीनो विभागस्तदा सामान्यज्ञानसामान्यान्तर्गतस्य लक्षणाधीनसामान्यज्ञानस्यापि विभागोपयुक्तत्वस्यावश्यकत्वात न तल्लक्षणतः प्रत्ययमपेक्षत इत्यादिकमसंगतमत आह **अथवेति**। **त्रितयेति**। साधारणासाधारणानुपसंहारिरूपे त्रितये वर्त्तमानो यः सव्यभिचारपदार्थत्वादिस्वरूपो यत्किंचिद्धर्मस्तदवच्छिन्नज्ञानाधीन इत्यर्थः। तल्लक्षणप्रत्ययं=तल्लक्षणज्ञानजन्य प्रत्ययं। **सव्यभिचारेति**। वक्ष्यमाणं यत् सव्यभिचारपदार्थतावच्छेदकीभूतमुभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वा-दिकं, तत्प्रकारकं लक्षणज्ञानजन्यज्ञानमपेक्षते इत्यर्थः। भावमाह—**तादृशेति**। निरुक्तसव्यभिचारपदार्थतावच्छेदकप्रकारकस्य लक्षणज्ञानजन्यज्ञानस्यासत्त्वेऽपी-त्यर्थः। **सव्यभिचारेति**। 'साधारणादयः सव्यभिचारपदार्थः' इत्याकारक सव्य-भिचारपदार्थत्वरूपसामान्यज्ञानस्येत्यर्थः। स्वत एव—वक्ष्यमाणलक्षणज्ञानं विना-पीत्यादिः। **विशेषेति**। सव्यभिचारत्वावान्तरधर्मप्रकारकज्ञानेच्छासम्भवा-दित्यर्थः। कश्चिदित्यभिधानस्य बीजमाह—**अत्रचेति**। निरुक्तरीत्या व्याख्यातमते चेत्यर्थः। प्रथमं विभागोऽनुचितः=लक्षणाभिधानात् पूर्वं विभागोऽसंगतः। इत्येव मस्वरसबीजं=इत्याकारकमस्वरसबीजं। कश्चिदित्युक्त्वा सूचितमितिशेषः।

**मूले तत्रेति**। निरुक्तविभागे इत्यर्थः। प्रयोजकत्वं सप्तम्यर्थः। अन्वयश्चास्य सव्यभिचार इत्यनेन। **साध्येति**। साध्यानुमितिजनकतावच्छेदकीभूता या व्याप्तिः, याचसाध्याभावानुमितिजनकतावच्छेदिका, अथवा साध्यापत्तिजनकतावच्छेदिका या

❀ मनोरमा ❀

संख्यामादाय सव्यभिचारस्य चतुर्विधत्वाद्यापत्तिश्च वारयितुमशक्यैवेति चेदत्र **केचित्**-साधारणत्वादिविशिष्टान्यत्वस्यापि संख्याविशेषणत्वोपगमेन तादृशापत्तेर्वारणसम्भवात्। वैशिष्ट्यञ्च स्वभिन्नस्वाधिकरणवृत्तिवृत्तित्व, स्वाभाववद्वृत्तिवृत्तित्वोभयसम्बन्धेनेत्याहुरिति संक्षेपः।

❀ दीधितिः ❀

**पेक्षतेऽतः प्रथमं विभागकरणेऽपि न दोष इत्याह—"प्रसक्ति"रनुमिति-**

❀ गादाधरी ❀

**दिदोषद्वयासङ्गतेस्तत्सङ्गमनाय प्रसक्तिपदार्थं वितर्कयति–प्रसक्तिरिति। प्रपूर्वकसञ्जधात्वर्थ इत्यर्थः। तत्कोटिव्याप्यस्यापि व्याप्तिभ्रमेण तद्विरुद्ध-**

❀ विवृतिः ❀

व्याप्तिर्याच साध्याभावापत्तिजनकतावच्छेदिका व्याप्तिस्तादृशोभयव्याप्तिमत्त्वं सव्यभिचारत्वमिति फलितं। इति न=इत्याकारकव्याप्तिद्वयवत्त्वरूपं न। त्रितयसाधारणं=साधारणासाधारणानुपसंहारित्रितये वर्त्तमानं। लक्षणं=लक्षणात्मकधर्मविशेषः। कथंतानिवृत्त्यर्थमाह **एकस्येति**। साधारणादेः कस्यापि हेतोरित्यर्थः। उभयंप्रति=साध्यसाध्याभावोभयंप्रति। असाधकत्वात्=तादृशव्याप्तिद्वयविरहवत्त्वात्। **अनापादकत्वादिति**। एकस्येतिपूर्वेणान्वयः। निरुक्तापत्तिजनकतावच्छेदकव्याप्तिद्वयविरहवत्त्वादित्यर्थः। तथाच एकहेतौ तादृशोभयव्याप्तिमत्त्वसत्त्व एवोभयं प्रति साधकत्वापादकत्वयोः सम्भवेनोभयव्याप्तिमत्त्वस्यैकहेतौ अभावान्नैकस्योभयसाधकत्वमापादकत्वञ्चेतिभावः। साध्यतदभावप्रसञ्जकत्वं हि—साध्यतदभावप्रसक्ति प्रयोजकत्वं। तत्र प्रसक्तिर्यद्यनुमितिस्तदा एकस्योभयं प्रत्यनापादकत्वादिति दूषणमसंगतं, आपत्तेर्निरुक्तलक्षणाऽघटकत्वात्। यदि चापत्तिस्तदोभयं प्रत्यसाधकत्वादिति दूषणस्यासंगतिरनुमितेरुक्तलक्षणाऽघटकत्वात्, अतो दोषद्वयसंगमनाय प्रसक्तिपदस्यानुमित्यापत्त्यन्यतरार्थकत्वं दीधितिकृता प्रदर्शितं सप्रयोजनकं स्पष्टयति टीकायां—**प्रसञ्जकेति**। लक्षणघटकीभूतस्य प्रसंजक शब्दस्येत्यर्थः। तेन प्रसंजक शब्दस्य वाक्यत्वेन पदत्वाभावेऽपि न क्षतिः। अनुमापकापादकयोः=अनुमितिप्रयोजकापत्तिप्रयोजकयोर्मध्ये। एकतरमात्रपरत्वे=अनुमितिप्रयोजकमात्रपरत्वे, आपत्तिप्रयोजकमात्रपरत्वे वा।

**दोषद्वयेति**। अनुमापकमात्रपरत्वे,अनापादकत्वादित्यस्य, आपादकमात्रपरत्वे च असाधकत्वादित्यस्य दूषणस्यासंगतेरित्यर्थः। तत्संगमनाय=निरुक्तदोषद्वयसंगमनाय। वितर्कयति=दोषद्वय संगमनप्रयोजक प्रसक्तिपदार्थं वितर्क्य दर्शयति। नन्वेतावता साध्यतदभावानुमित्यापत्त्यन्यतर प्रयोजकीभूतं यद्व्याप्तिज्ञानं तद्विशेष्यतावान् सव्यभिचार इत्यस्यैव लक्षणार्थतया पर्य्यवसितत्वे एकस्येत्यादि दूषणमसंगतमेव, साध्यादिव्याप्तिमतोहेतोरापादकस्य वा साध्याभावादिनिरूपितव्याप्तिभ्रमीयविशेष्यतावत्त्वे बाधकाभावादित्याह **तत्कोटीति**। साध्यादिनिरूपितव्याप्तिमतो हेतोरापादकस्य वेत्यर्थः। व्याप्तिभ्रमेण=साध्याभावादिव्याप्त्यभाववति साध्यादिव्याप्ये साध्याभावादिव्याप्तिप्रकारकज्ञानेन। तृतीयार्थो निरूपितत्वं, तस्य-

**नाप्युभयपक्षवृत्तित्वं उभयव्यावृत्तत्वं वा तत्त्वम् , अननुगमात् ।**

❀ दीधितिः ❀

**रापत्तिर्वा, तदुपधानमव्यापकमतिव्यापकञ्च तथाविधव्याप्तिभ्रमेण सङ्केतावतस्तद्योग्यता वाच्या, सा च तादृशव्याप्त्यादिरूपा, न च**

❀ गादाधरी ❀

कोटेरापादकत्वमनुमापकत्वञ्च सम्भवतीत्येकस्योभयं प्रति असाधकत्वादित्यादिदोषासङ्गतिरित्यत आशयं पूरयति–**तदुपधानमिति** । प्रसक्त्युपधायकत्वमित्यर्थः । **अव्यापकमिति** । येन हेतुना कदाचिदपि साध्यस्य तदभावस्य वानुमितिरापत्तिर्वा न जनिता प्रत्येकमपि तदसङ्ग्राहकमित्यर्थः । **तथाविधेति** । साध्याभावनिरूपितेत्यर्थः । तद्योग्यता = प्रसक्तियोग्यता । वाच्या = प्रसञ्जकपदेन विवक्षणीया । तद्योग्यतायास्तत्स्वरूपयोग्यज्ञानविषयतारूपत्वे व्याप्तिभ्रमविषयतामादाय पुनरुक्तदोषप्रसङ्ग

❀ विवृतिः ❀

चापादकत्वादि पदार्थे आपत्ति जनकज्ञानविशेष्यतात्मके अन्वयः । **तद्विरुद्धेति** । साध्यादिविरुद्धसाध्याभावादिरूपकोटेरित्यर्थः । आपादकत्वम्=आपत्तिजनकज्ञानविशेष्यत्वम् । अनुमापकत्वं=अनुमितिजनकज्ञानविशेष्यत्वं । **दोषासंगतेरिति** । तथाच साधारणादौ पूर्वोक्तरीत्या लक्षणसमन्वयसम्भवात्तत्राव्याप्त्यभिधानमसंगतमितिहृदयम् । **आशयमिति** । मूलकृतामित्यादिः । **प्रसक्त्युपधायकत्वमिति** । अव्यवहितपूर्वत्वसम्बन्धेनानुमित्यापत्त्यन्यतरविशिष्टज्ञानविशेष्यत्वमित्यर्थः । येन हेतुना=कारणान्तरविरहदशायां यद्धेतुविशेष्यकव्याप्त्यादिज्ञानेन । प्रत्येकमपि=प्रत्येकं लक्षणमपि । **तदसंग्राहकमिति** । तथाच यादृशस्थले यादृशसाधारणादिहेतुविशेष्यकव्याप्त्यादिज्ञानेन साध्याद्यनुमित्यादिकं नोत्पन्नं तादृशस्थलेऽव्यवहितपूर्वत्वसम्बन्धेन साध्याद्यनुमित्यादिविशिष्टव्याप्तिज्ञानस्याऽप्रसिद्ध्या तादृशसाधारणादिहेतावव्याप्तिरितिभावः । इदमुपलक्षणं, नव्यमते हेत्वादेरनुमित्यजनकतया यादृशसाधारणादिहेतौ साध्यादिव्याप्तिज्ञानमेव कदाचित् नोत्पन्नं तादृशसाधारणहेतावव्याप्तिरित्यपि द्रष्टव्यम् । लक्षणान्यथानुपपत्त्या यदि साध्याद्यनुमितेरितरसकलकारणसमवधानदशायामेव सर्वदा साध्यादिनिरूपितसाधारणादिहेतुकव्याप्तिज्ञानं कल्प्यते तदा न कुत्रापि साधारणादिहेतावव्याप्तिः । अव्यवहितपूर्वत्वसम्बन्धेन साध्याद्यनुमित्यादिविशिष्टस्य साधारणादिहेतुकव्याप्तिज्ञानस्य प्रसिद्धिसम्भवादित्याशयेनाऽव्याप्तिदोषं परित्यजतां दीधितिकृतामतिव्याप्तिदानं संगमयति–**तथाविधेतीति** । तथाच यादृशस्थलविशेषे वह्न्याद्यनुमितेरितरसकलकारणसमवधानदशायामेव धूमादौ वह्निव्याप्तिज्ञानं वह्न्यभावव्याप्तिज्ञानं च भ्रमात्मकं

❀ दीधितिः ❀

**विरुद्धमुभयव्याप्यत्वमेकस्य सम्भवतीत्याह–एकस्येति ।**

❀ गादाधरी ❀

इत्यतो योग्यतामाचष्टे–सा चेति । तत्कोटिप्रसक्तियोग्यता चेत्यर्थः । व्याप्त्यादिरूपा=तत्कोटिनिरूपितव्याप्त्यादिरूपा ॥

❀ विवृतिः ❀

जातं तादृशस्थले अव्यवहितपूर्वत्वसम्बन्धेन वह्न्याद्यनुमितिविशिष्टव्याप्तिज्ञान-विशेष्यतायाः धूमादौ सत्त्वात् वह्न्यादिसाध्यकधूमादिरूपसद्धेतौ निरुक्त सव्यभिचारलक्षणस्यातिव्याप्तिरितिभावः । दीधितौ–**अत इति** । निरुक्ताव्याप्त्य-तिव्याप्तिरूपदोषत इत्यर्थः । टीकायां–**प्रसक्तेति** । साध्यतदभावानुमित्यापत्त्यन्यतर योग्यतेत्यर्थः । **विवक्षणीयेति** । तथा च साध्यतदभावानुमित्यापत्त्यन्यतरयोग्यतावान् सव्यभिचार इति भावः । अनुमित्यादियोग्यत्वं यदि अनुमित्याद्यव्यवहितपूर्वक्ष-णावच्छेदेनानुमित्यादिसमवायिवृत्त्यभावप्रतियोगितानवच्छेदकधर्माश्रयीभूतज्ञानवि-शेष्यत्वं तदा यत्र यादृशसाधारणहेतुकं साध्यसाध्याभावादेर्व्याप्तिज्ञानं कदा-चिदपि नोत्पन्नं तादृशसाधारणहेतावव्याप्तिः । साध्याद्यनुमितियोग्यताया-स्तादृशव्याप्तिज्ञानविशेष्यतायाः तत्राऽसत्त्वात्, अतिव्याप्तिश्च वह्न्यादिसाध्यकधूमा-दिरूपसद्धेतौ, धूमादौ वह्न्यभावादिव्याप्तिभ्रमदशायां साध्यसाध्याभाव व्याप्तिज्ञान-विशेष्यतायास्तत्र सत्त्वादतो योग्यतापदार्थमन्यादृशं व्याचक्षाणानां दीधितिकृता-माशयं प्रदर्शयितुमाह–**योग्यतायाइति । तत्स्वरूपेति** । साध्यतदभावानुमित्या-द्यव्यवहितपूर्वक्षणावच्छेदेन तादृशानुमित्यादिसमवायिवृत्त्यभावप्रतियोगितानवच्छेद-कधर्माश्रयीभूत ज्ञानविशेष्यतारूपत्वे इत्यर्थः ।

पुनरुक्तदोषप्रसंगः=कदाचित् सद्धेतावतिव्याप्तिरूपदोषप्रसंगः । **तत्कोटि-निरूपितेति** । साध्यादिनिरूपितव्याप्त्यादिरूपेत्यर्थः । दीधितौ–**तादृशव्याप्त्या-दीति** । तथाच साध्यानुमितिजनकतावच्छेदकव्याप्तिमत्त्वे सति साध्याभावानु-मितिजनकतावच्छेदकव्याप्तिमान्; साध्यापत्तिजनकतावच्छेदकव्याप्तिमत्त्वे सति साध्याभावापत्तिजनकतावच्छेदकव्याप्तिमान् वा सव्यभिचार इति भावः ।

**न चेति** । सम्भवतीति परेणान्वयः । विरुद्धोभयव्याप्यत्वं=साध्यव्याप्यत्वं, साध्या-भावव्याप्यत्वं च । एकस्य=एकहेतोः । तथा च विशिष्टाप्रसिद्ध्या लक्षणमिदमसम्भ-वीति भावः । मूले–**नाप्युभयेति** । निश्चितसाध्यसाध्याभाववद्वृत्तित्वमित्यर्थः । **उभय-व्यावृत्तत्वमिति** । निश्चितसाध्यतदभाववद्व्यावृत्तत्वमित्यर्थः । तत्त्वं=सव्यभिचा-रत्वं । **अननुगमादिति** । तथा च तादृशवृत्तित्वमात्रस्य सव्यभिचारत्वेऽसाधारणे-ऽव्याप्तिः । तादृशव्यावृत्तत्वमात्रस्य सव्यभिचारत्वे च साधारणेऽनुपसंहारिणि

(चि० ) अथ साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मता-

(दी० ) साध्येति। कोटिद्वयोपस्थापकं सत् साध्यसन्देहजनकं,

❀ गादाधरी ❀

(गा० ) साध्यसन्देहेति यथाश्रुतग्रन्थात्पक्षधर्मताज्ञानस्य साध्य-

❀ विवृतिः ❀

चाऽव्याप्तिरितिभावः। मूले शंकते-**अथेति। साध्येति**। यत्किंचिद्विशेष्यक विरुद्धसाध्यसाध्याभावप्रकारकज्ञानात्मकसाध्यसंशयजनकीभूता या साध्योपस्थितिः, साध्याभावोपस्थितिश्च तादृशोपस्थितिद्वयजनकीभूतं यत्, पक्षे यत् किंचिद्धर्मिणि वा सव्यभिचारताघटकसम्बन्धेन सव्यभिचारत्वेनाऽभिमतहेतुप्रकारकं ज्ञानं तदीयप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधर्मवान् सव्यभिचार इत्यर्थः। भवतिहि 'पर्वतो धूमवान् वह्ने'रित्यादौ वह्निरूपसाधारणे धूमधूमाभावसहचरितवह्निमान् पर्वत इति ज्ञानमादाय लक्षणसमन्वयः। सम्बन्धिप्रकारकज्ञानस्य सम्बन्ध्यन्तरस्मारकतया निरुक्तज्ञानस्य धूमधूमाभावसहचरितत्वात्मकधूमधूमाभावसामानाधिकरण्यसम्बन्धविशिष्टवह्निप्रकारकज्ञानात्मकतया तेन जनितं यद्धूमधूमाभावस्मरणात्मकं धूमधूमाभावोपस्थितिद्वयं, तस्य पर्वतोधूमवान्नवेति संशयजनकतया तादृशसंशयजनक धूमधूमाभावोपस्थितिद्वयजनकीभूतं यन्निरुक्तज्ञानं तदीयप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधूमधूमाभावसहचरितत्ववह्नित्वो भयधर्मवत्त्वस्य निरुक्तवह्निहेतौ सत्त्वात्। 'पर्वतो वह्निमान् गगना'दित्यादौ गगनरूपासाधारणे वह्निवह्न्यभाववद्व्यावृत्तगगनवान् पर्वत इत्याकारकज्ञानमादायलक्षणसमन्वयः, निरुक्तज्ञानस्यापि वह्निवह्न्यभाववद्व्यावृत्तत्वात्मक वह्निवह्न्यभावसामानाधिकरण्याभावसम्बन्धविशिष्टगगनप्रकारकज्ञानात्मकतया तेन जनिता या वह्न्युपस्थितिर्वह्न्यभावोपस्थितिश्च तयोः पर्वतो वह्निमान्नवेति साध्यसंशयजनकतया तादृशसंशयजनकवह्निवह्न्यभावोपस्थितिद्वयजनकीभूतं यत् पूर्वोक्तज्ञानं तदीयप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणवह्निवह्न्यभाववद्व्यावृत्तत्वगगनत्वोभयधर्मवत्त्वस्य निरुक्तगगनहेतौ सत्त्वात्। निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्यासाधारण्यस्वरूपत्वे तु शब्दोऽनित्यः शब्दत्वादित्यत्र यदा पक्षेऽनित्यत्वस्य संशयस्तदा निरुक्तशब्दत्वहेतोरपि लक्ष्यतया तत्र निश्चिताऽनित्यत्ववद्घटनिश्चितानित्यत्वाऽभाववद्गगनव्यावृत्तत्वविशिष्टशब्दत्ववान् शब्द इत्याकारकज्ञानमादाय पूर्वोक्तरीत्या लक्षणसमन्वयोबोध्यः।

सर्वमनित्यं मेयत्वादित्यादौ मेयत्वरूपानुपसंहारिणि सर्वत्र साध्यसंशयदशायामनित्यत्वानित्यत्वाभावसहचरितमेयत्ववत् सर्वमित्याकारकनिश्चयस्य साध्यतदभावोपस्थापकस्य यत्रप्रसिद्धिस्तदा पक्षैकदेशे साध्यस्य साध्याभावस्य च

**ज्ञानविषयत्वे सति हेत्वभिमतः सः।**

---

❀ गादाधरी ❀

सन्देहजनकत्वं कोटिद्वयोपस्थितिजनकत्वञ्च लभ्यते। तत्र च नित्यत्वादि-साध्यकज्ञानादिहेतौ वक्ष्यमाणातिव्याप्तिर्वारयितुमशक्यैव, 'नित्यत्वतद-भावविषयकज्ञानवानय'मिति ज्ञानस्य नित्यत्वतदभावोपस्थापकत्वात्, धर्मितावच्छेदकप्रकारकज्ञानमुद्रया तादृशज्ञानवदिदन्त्वावच्छिन्नधर्मिक-

❀ विवृतिः ❀

यदा निश्चयस्तदानीन्तनाऽनित्यत्व तदभाववद्वृत्तित्वविशिष्टमेयत्ववत् सर्वमित्याकार-कनिश्चयीयप्रकारतावच्छेदकतापर्याप्त्यधिकरणाऽनित्यत्वतदभावसहचरितत्वमेयत्व-त्वोभयधर्मवत्त्वस्य सर्वत्र पक्षे साध्यसंशयदशायामपि निरुक्तमेयत्वहेतौ सत्त्वेन लक्षण-समन्वयः। साध्यसंशयजनककोटिद्वयोपस्थितिजनकनिरुक्तपक्षधर्मताज्ञानविरह-दशायां साधारणेऽव्याप्तिभिया निरुक्तप्रकारतायामुक्तज्ञाननिरूपितत्वस्योपलक्षण-विधयैवलक्षणे प्रवेशनीयत्वादिति ध्येयम्। पर्वतो वह्निमान् धूमादित्यादि सद्धेतौ वह्नि-वह्न्यभावसहचरितधूमवान् पर्वतइत्याकारकज्ञानस्य भ्रमात्मकस्य यद्यपि प्रसिद्धि-स्तथापि तदीयप्रकारतावच्छेदकतापर्याप्त्यधिकरण वह्निवह्न्यभाववद्वृत्तित्वधूमत्वो-भयवत्त्वस्य धूमहेतावसत्त्वान्नाऽतिव्याप्तिरित्यन्यत्र विस्तरः।

टीकायां—**यथेति**। शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यशाब्दबोधेच्छयोच्चारिता-त्साध्यसंशयजनकेत्यादिलक्षणात्मकग्रन्थादित्यर्थः। साध्यसंशयजनकत्वस्य कोटि-द्वयोपस्थितिजनकत्वस्य चैकस्मिन् पक्षधर्मताज्ञाने विशेषणत्वे दोषमाह—**तत्र चेति**। निरुक्तोभययोः पक्षधर्मताज्ञानविशेषणत्वे चेत्यर्थः। **नित्यत्वादीति**। 'अयम् नित्योज्ञाना दित्यादौ, नित्यत्वादिव्याप्यज्ञानादिहेतावित्यर्थः। आदिपदा-द्वह्न्यादिसाध्यकधूमादेरुपग्रहः। तत्रापि 'वह्निमद्वृत्तिवह्न्यभाववद्व्यावृत्तधूमवा-न्पर्वत' इत्याकारकज्ञानस्य तादृशधूमविशिष्टपर्वतधर्मिकवह्निसंशयजनकतया वह्नि-वह्न्यभावोपस्थितिजनकतया चातिव्याप्तिर्बोध्या। **वक्ष्यमाणेति**। नित्यत्वनित्यत्वा-भावयोर्विषयित्वादिसम्बन्धविशिष्टज्ञानप्रकारकज्ञानमादाय दीधितिकृता वक्ष्यमाणा-तिव्याप्तिरित्यर्थः। अतिव्याप्तेरवारणे हेतुमाह—**नित्यत्वेति**। इति ज्ञानस्य = इत्याकारकस्य नित्यत्वतदभावयोर्विषयित्वसम्बन्धविशिष्टज्ञानप्रकारक—इदंत्वावच्छि-न्नविशेष्यकज्ञानस्य। नित्यत्वतदभावोपस्थापकत्वात् = नित्यत्वनित्यत्वाभावयो-रुपस्थितिजनकत्वात्। सम्बन्धिप्रकारकज्ञानस्य सम्बन्ध्यन्तरस्मारकत्वादित्याशयः।

**धर्म्मितेति**—धर्म्मितावच्छेदकीभूतं यन्नित्यत्व तदभावविषयकज्ञानेदंत्वरूप-धर्मद्वयं तत्प्रकारकज्ञानत्वेनेत्यर्थः। **तादृशेति**। नित्यत्वतदभावविषयकज्ञानवानयं

❀ दीधितिः ❀

साध्यसन्देहजनककोटिद्वयोपस्थितिजनकमिति यावत् । आश्रयतया

❀ गादाधरी ❀

नित्यत्वसंशयहेतुत्वाच्च । न च फलीभूतसंशयधर्मितावच्छेदकता यादृश-धर्मे पर्याप्ता तादृशधर्मावच्छिन्नविशेष्यकयत्प्रकारकज्ञानत्वेन संशयं प्रति

❀ विवृतिः ❀

नित्यो नवेत्याकारकं, नित्यत्वतदभावविषयकज्ञानवदिदन्त्वावच्छिन्नविशेष्यकं नित्यत्वसंशयं प्रति जनकत्वादित्यर्थः । तथा च—एकत्र पक्षधर्मताज्ञाने यदि साध्यसंशयजनकत्वं, साध्यतदभावात्मककोटिद्वयोपस्थितिजनकत्वं च विशेषणतया विवक्षितं स्यात् तदा, अयंनित्यो ज्ञानादित्यादौ ज्ञानरूपसद्धेतावतिव्याप्त्यापत्तिः स्यात् । नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानस्य, नित्यत्वतदभावविषयकज्ञानवानयं नित्यो नवेत्याकारकसंशयधर्म्मितावच्छेदकतादृशज्ञानेदन्त्वप्रकारकज्ञानत्वेन तादृशसंशयजनकतया, नित्यत्वदभावयोर्विषयित्वसम्बन्धविशिष्टज्ञान प्रकारक ज्ञानत्वेन-नित्यत्वतदभावोपस्थितिजनकत्वेन च धर्त्तुं शक्यतया तदीयप्रकारताश्रयत्वस्य ज्ञाने हेतौ सत्त्वात् । न च पक्षतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नविशेष्यकत्वेन साध्यसंशयस्य विवक्षणान्नेयमतिव्याप्तिः । नित्यत्वतदभावविषयकज्ञानवानयं नित्यो नवेति संशयस्य पक्षतावच्छेदकेदन्त्वमात्रावच्छिन्नविशेष्यकत्वाऽभावेन तादृशधर्म्मावच्छिन्न विशेष्यकसाध्यसंशयपदेनोपादानासम्भवादितिवाच्यं, यदा पक्षताभिमतातिरिक्ते साध्यसंशयो वर्त्तते नतु पक्षताभिमते तदा साधारणहेतावव्याप्त्यापत्तेः । पक्षतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नविशेष्यकसाध्यसंशयस्याऽप्रसिद्धेः, साधारण्यस्य नित्यदोषतया तदानीं तस्याऽलक्ष्यतायां वक्तुमशक्यत्वात्, तादृशविशेष्यकत्वोपलक्षितसाध्यसंशयविवक्षणे तु नित्यत्वतदभावविषयकज्ञानवानयं नित्यो नवेति संशयस्यापि इदन्त्वमात्रावच्छिन्नविशेष्यकत्वोपलक्षिततया तादृशसंशयजनकतामादाय निरुक्तज्ञानहेतावतिव्याप्तेरवारणात् । अतएवाग्रे पक्षपदस्य धर्म्मिमात्रपरतया दीधितिकृतां वर्णनमपि साधु संगच्छते इति ध्येयम् । अतः साध्यसंशयजनकीभूता या साध्यतदभावोपस्थितिस्तज्जनकीभूतं यत् पक्षधर्म्मताज्ञानं तदीयप्रकारताश्रयत्वमेव सव्यभिचारत्वं वाच्यं, नित्यत्वतदभावविषयकज्ञानवानयमित्याकारक ज्ञानजन्यनित्यत्वतदभावोपस्थितेर्न-संशयजनकत्वं, साधारणादिधर्म्मवद्धर्म्मिज्ञानजन्यकोट्युपस्थितेरेव संशयजनकत्वादिति न नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानमादायेदन्त्वावच्छिन्नपक्षकनित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिरितिभावः । प्रकृतसाध्यसंशयधर्म्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालि-

❀ गादाधरी ❀

हेतुतेति विवक्षणे नाऽयं दोषः, तादृशज्ञानस्य धर्मितावच्छेदकप्रकारकज्ञानमुद्रया नित्यत्वतदभावविषयकज्ञानवदिदन्त्वपर्याप्तधर्मितावच्छेदकताकसंशयं प्रत्येव हेतुत्वात्। तादृशधर्मं धर्मितावच्छेदकीकृत्य च ज्ञानवत्त्वा-

❀ विवृतिः ❀

ज्ञानं तादृशसंशयजनकं तद्रूपवत्त्वं सव्यभिचारत्वमित्युक्तौ नायं नित्यो ज्ञानादित्यत्रातिव्याप्तिः। नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानीयेदन्त्वमात्रावच्छिन्नविशेष्यतानिरूपिततादृशज्ञानत्वावच्छिन्नप्रकारतायाः, नित्यत्वतदभावविषयक ज्ञानवानयं नित्योनवेत्याकारक प्रकृतसाध्यसंशय धर्म्मितावच्छेदकतापर्य्याप्त्यधिकरणीभूतनित्यत्वतदभावविषयकज्ञानेदन्त्वरूपधर्मद्वयावच्छिन्नविशेष्यताकत्वाभावेन यद्रूपपदेन नित्यत्वतदभावविषयक ज्ञानत्वस्य धर्तुमशक्यत्वात्। सम्भवति हि पर्वतो धूमवान् वह्नेरित्यादौ लक्षणसमन्वयः। धूमधूमाभावसहचरित वह्निमान् पर्वत इत्याकारकज्ञानीयपर्वतत्वमात्रावच्छिन्नविशेष्यतानिरूपितधूमधूमाभावसहचरितवह्नित्वावच्छिन्नप्रकारतायास्तादृशज्ञानोत्तरजायमानपर्वतोवह्निमान्नवेत्याकारक प्रकृतसाध्यसंशयधर्मितावच्छेदकतापर्य्याप्त्यधिकरणपर्वतत्वमात्रावच्छिन्नविशेष्यताकत्वेन धूमधूमाभावसहचरितवह्नित्वस्य यद्रूपपदेन धर्तुं शक्यत्वादतः साध्यसंशयजनकत्वं कोटिद्वयोपस्थितौ निवेश्य तादृशोपस्थितिजनकत्वेन पक्षधर्मताज्ञानविवक्षणमसंगतमेवेत्याशङ्कते— **नचेति**। वाच्यमिति परेणान्वयः। **फलीभूतेति**। कारणीभूततत्तज्ज्ञानाव्यवहितोत्तरजायमानप्रकृतसाध्यसंशयधर्मितावच्छेदकतेत्यर्थः। यादृशधर्मे पर्य्याप्ता = यद्रूपावच्छिन्नधर्मेपर्य्याप्ता यद्धर्मे च पर्य्याप्ता। तेन पर्वतत्वादेर्यादृशधर्मपदेन धर्त्तुमशक्यत्वेऽपि न पर्वतपक्षकधूमसाध्यक वह्न्यादावव्याप्तिः, न वा नित्यत्वतदभावविषयकज्ञानवानयं नित्योनवेति संशयस्य तादृशज्ञानेदंत्वरूप प्रमेयनिष्ठधर्मितावच्छेदककस्य स्वरूपयोग्यं प्रमेयवान् नित्यत्वतदभावविषयक ज्ञानवानित्याकारक ज्ञानमादाय नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः, यद्रूपावच्छिन्नसंशयधर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मपदेन प्रमेयस्योपादातुमशक्यत्वादितिध्येयम्। **तादृशेति**। पूर्ववत् तद्रूपावच्छिन्नधर्मावच्छिन्नविशेष्यकयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वेनेत्यर्थः। तेन तत्त्वस्य तद्द्वय

❀ मनोरमा ❀

**फलीभूतेति**। अथात्र यद्रूपावच्छिन्नप्रकारत्वनिष्ठं संशयजनकतावच्छेदकत्वं यदि स्वरूपसम्बन्धरूपं तदा धूमवत् पर्वतकालीनवह्निमान् द्रव्यत्वादित्यत्र धूमे सद्धेतावतिव्याप्तिः। धूमवत् पर्वतकालीनवह्नितदभावसहचरितद्रव्यत्ववान् पर्वत इत्याकारकज्ञानाधीनधूमवत् पर्वतकालीनवह्निमान्नवेत्याकारक संशयजनकतावच्छेदकतायाः निरुक्तसाध्यविषयतान्तःपातिधूमप्रकारतायामपि सत्त्वेन यद्रूपपदेन धूमत्वस्यापि धर्तुं शक्यत्वात्। नच यद्रूपावच्छिन्नप्रकारत्वं साध्यसंशयजनकता-

❀ गादाधरी ❀

नवगाहित्वात्, शुद्धेदन्त्वं धर्मितावच्छेदकीकृत्यैव तदवगाहित्वादिति वाच्यम्। तथासति वक्ष्यमाणधर्मितावच्छेदकातिव्याप्तेरप्रसक्त्या कोटि-

❀ विवृतिः ❀

क्ति निष्ठत्वेऽपि न वह्नितदभावसहचरितद्रव्यवान् पर्वत इत्याकारकज्ञानीयप्रकारतायाः वह्निसाध्यकधूमे सत्त्वेऽपि अतिव्याप्तिः। वह्निवह्न्यभावसहचरितत्वविशिष्टद्रव्यत्वस्यतादृशधूमेऽसत्त्वात्। विवक्षणे=निरुक्तरीत्या लक्षणार्थस्य निर्वचने। नायं दोषः=न पूर्वोक्तरीत्या नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिरूपदोषः। निरुक्तातिव्याप्तेर्वारणकारणमाह—**तादृशेति**। नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानस्येत्यर्थः। **धर्मितेति**। नित्यत्वतदभावविषयकज्ञानेदन्त्वरूपप्रकृतसंशयधर्मितावच्छेदकद्वयप्रकारकज्ञानत्वेनेत्यर्थः। **नित्यत्वेत्यादि**। नित्यत्वतदभावविषयकज्ञानवानयम् नित्योनवेत्याकारकसंशयं प्रत्येव जनकत्वादित्यर्थः। एवकारेण अयं नित्यो नवेत्याकारकसंशयं प्रति तादृशज्ञानस्यजनकत्वव्यवच्छेदः। तादृशधर्म=नित्यत्वतदभावविषयकज्ञानेदंत्वादिरूपधर्मद्वयं। तज्ज्ञानवत्त्वानवगाहित्वात्=नित्यत्वतदभावविषयकज्ञानवत्त्वानवगाहित्वात्। तादृशज्ञानस्येति पूर्वेणान्वयः। कथंतानिवृत्त्यर्थमाह—**शुद्धेति**। नित्यत्वतदभावविषयकं ज्ञानं परित्यज्येदंत्वमात्रमित्यर्थः। तदवगाहित्वात्=नित्यत्वतदभावविषयकज्ञानवत्त्वावगाहित्वात्। समाधत्ते—**तथा सतीति**। निरुक्तरीत्या लक्षणस्य निर्वचने सतीत्यर्थः। **वक्ष्यमाणेति**। पूरोवर्त्तिपर्वतो वह्निमान् धूमादित्यादौ पर्वतनिष्ठपुरोवर्त्तित्वरूपधर्मितावच्छेदके वह्निव्याप्ये

❀ मनोरमा ❀

वच्छेदकतापर्याप्त्यधिकरणं तद्रूपवत्त्वमित्युक्तौ न कोऽपि दोषः। भ्रमानुरोधेनाखण्डधूमत्वावच्छिन्नप्रकारतायाः संशयजनकतावच्छेदकतापर्याप्त्यनधिकरणत्वादिति वाच्यम्, तथासत्यसंभवापत्तेः। धूमधूमाभावसहचरितत्वादिना घटाद्यवगाहिभ्रमात्मकज्ञानस्यापिसंशयजनकतया निरूप्यनिरूपकभावापन्नसहचरितत्वादिविषयतानिरूपितवह्न्यादिविषयताया एव संशयजनकतावच्छेदकत्वेनाखण्डधूमधूमाभावसहचरितत्वविशिष्टवह्निप्रकारतायाः संशयजनकतानवच्छेदकत्वात्। न च यद्रूपावच्छिन्नतादृशप्रकारत्वव्यापकं साध्यसंशयजनकत्वं तद्रूपवत्त्वमिति विवक्षया नोक्तस्थलेऽतिव्याप्तिः, 'पर्वतविशेष्यतानिरूपितधूमत्वावच्छिन्नप्रकारतायाः धूमवान् पर्वत इत्याकारकज्ञानेऽपि सत्त्वेन तत्रोक्तसंशयजनकत्वविरहादिति वाच्यम्, तथासति नित्यत्वतदभावविषयकज्ञानवान् अयम् ज्ञानवानित्याकारकज्ञानमादायायं नित्यो ज्ञानादित्यत्र ज्ञानेऽतिव्याप्त्यापत्तेः, निरुक्तज्ञानीययथोक्तधर्मावच्छिन्नविशेष्यतानिरुपितशुद्धज्ञानप्रकारताव्यापकत्वस्य साध्यसंशयजनकतायां सत्त्वादितिचेन्न; फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारतासामान्यं संशयजनकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् तद्रूपवत्त्वस्य विवक्षितत्वात्। पूर्वोक्तस्थले पर्वतविशेष्यतानिरूपितधूमप्रकारतासामान्यान्तर्गतायाः पर्वतो धूमवानित्याकारकज्ञानीयधूमप्रकारतायः संशयजनकतानवच्छेदकत्वेनातिप्रसंगविरहादिति वदन्ति। अन्ये तु फलीभूतसंशय-

❀ दीधितिः ❀

द्वयोपस्थापकत्वनिवेशवैयर्थ्यप्रसङ्गादित्यतो मूलमन्यथा व्याचष्टे-साध्येतीति। कोटिद्वयोपस्थापकं सदिति। एतेन कोटिद्वयोपस्थापकत्वे साध्य-

❀ विवृतिः ❀

दीधितिकृता वक्ष्यमाणायाः अतिव्याप्तेरसम्भवेनेत्यर्थः। **कोटिद्वयेति**। यथाश्रुतलक्षणप्रविष्टपक्षधर्मताज्ञानविशेषणीभूतकोटिद्वयोपस्थितिजनकत्वनिवेशवैयर्थ्यप्रसंगादित्यर्थः। **अयमभिप्रायः**-कोटिद्वयोपस्थितिजनकत्वस्य पक्षधर्मताज्ञानाविशेषणत्वे पुरोवर्त्तिपर्वतो वह्निमान्धूमादित्यादौ वह्निव्याप्ये पर्वतनिष्ठपुरोवर्त्तित्वरूपधर्मितावच्छेदकेऽतिव्याप्तिः; पर्वतः पुरोवर्त्तितावानित्याकारकज्ञानस्य पुरोवर्त्तिपर्वतोवह्निमान्नवेतिसंशयं प्रति धर्मितावच्छेदकप्रकारकज्ञानत्वेन जनकतया तदीयप्रकारताश्रयत्वस्य पुरोवर्त्तित्वे सत्त्वादतः कोटिद्वयोपस्थितिजनकत्वेन पक्षधर्मताज्ञानं विशेषणीयं। पुरोवर्त्तितावान्पर्वत इत्याकारकज्ञानस्य कोटिद्वयोपस्थितिजनकत्वाऽभावेन न तादृशज्ञानमादाय निरुक्तधर्मितावच्छेदकेऽतिव्याप्तिरित्युक्तरीत्या कोटिद्वयोपस्थितिजनकत्वदलस्य व्यावृत्तिर्दीधितिकृताभिधास्यते। प्रकृतसाध्यसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानं तादृशसंशयजनकं तद्रूपवत्त्वस्य लक्षणार्थत्वे तु नोक्तव्यावृत्तिः संगच्छते; पुरोवर्तितावान् पर्वतइत्याकारकज्ञानीयपर्वतत्वमात्रावच्छिन्नविशेष्यतानिरूपितपुरोवर्त्तित्वनिष्ठप्रकारतायाः पुरोवर्त्तिपर्वतो वह्निमान्नवेति संशयधर्मितावच्छेदकपुरोवर्त्तित्वपर्वतत्वरूपधर्मद्वयावच्छिन्नविशेष्यताकत्वाऽभावेनयद्रूपपदेन पुरोवर्त्तित्वत्वस्य धर्तुमशक्यत्त्वादिति निरुक्तपुरोवर्त्तित्वे वक्ष्यमाणातिव्याप्त्यप्रसक्त्या कोटिद्वयोपस्थापकत्वेन पक्षधर्मताज्ञानविवक्षणमसंगतं स्यादिति। इत्यतः = नित्यत्वसाध्यकज्ञानादिहेतावतिव्याप्तिरूपदोषतः। मूलं = मूलोक्तलक्षणार्थं। अन्यथा = यथाश्रुतार्थंपरित्यज्य।

**एतेनेति**। कोटिद्वयोपस्थापकं सत् साध्यसंदेहजनकमित्यादिदीधितिग्रन्थेनेत्यर्थः। **साध्येति**। साध्यसंदेहोत्पत्तिनिष्ठा या स्वाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नविधेयता-

❀ मनोरमा ❀

धर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतानिरूपित यद्रूपावच्छिन्नप्रकारत्वं संशयजनकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्तद्रूपवत्त्वमिति विवक्षणे न कोऽपि दोषः इत्यप्याहुः।

ननु तथापि नित्यत्वतदभावविषयकज्ञानवानयं नित्यो न वा अयं च नित्यो न वेत्याकारकसमूहालम्बनसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणशुद्धेदन्त्वावच्छिन्नविशेष्यतानिरूपितायाः नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानीयतादृशज्ञानप्रकारताया निरुक्तसंशयजनकतावच्छेदकत्वेन तामादाय नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः, एवं नित्यत्वतदभावविषयकज्ञानवानयं नित्यो न वेति संशयधर्मितावच्छेदकतापर्याप्त्यधिकरणतादृशज्ञानेदंत्वावच्छिन्नविशेष्यतानिरूपितायाः नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्वतदभावविषयकज्ञानवान् इत्याकारकज्ञानीयज्ञान-

❀ गादाधरी ❀

सन्देहजननोद्देश्यतावच्छेदकता लभ्यते। एवञ्च धनवान्सुखीत्यादौ धनादेः सुखादिप्रयोजकताबोधस्यानुभविकतया उद्देश्यविधेयभावस्थलेऽसति बाधके उद्देश्यतावच्छेदकविधेययोः प्रयोज्यप्रयोजकभावबोधस्य व्युत्पत्तिसिद्धत्वात्, कोटिद्वयोपस्थितिजनकतायाः साध्यसन्देहजननिर्वाहकता-

❀ विवृतिः ❀

तन्निरूपितोद्देश्यतावच्छेदकतेत्यर्थः। **लभ्यत इति**। तथा च कोटिद्वयोपस्थितिजनकतावान् स्वाव्यवहितपूर्वत्वसम्बन्धेन साध्यसंदेहजननवान् इत्येवं दीधितिग्रन्थतात्पर्य्येण कोटिद्वयोपस्थितिजनकतायां साध्यसंदेहजननोदेश्यतावच्छेदकत्वस्य लाभ इति भावः। दृष्टान्तप्रदर्शनपूर्वकं निरुक्तावच्छेदकत्वलाभप्रयोजनं प्रदर्शयति-**एवं चेति**। कोटिद्वयोपस्थापकत्वे साध्यसंदेहजननोदेश्यतावच्छेदकत्वलाभेचेत्यर्थः। यद्यपि सुखप्रयोजकत्वस्य पदानुपस्थिततयोक्तवाक्यात् धनादौ सुखप्रयोजकता बोधो न संभवति। न च प्रात्यक्षिक एवायं बोध इति वाच्यम्, तथासति लक्षणाधीनबोधस्य शाब्दतया तत्तुल्यदृष्टान्ततानुपपत्तेरित्युच्यते तथापि धनपदस्य सुखप्रयोजकत्वावच्छिन्नधनलाक्षणिकत्वमभ्युपगम्य तथा बोधः सुसमाधेयः। यद्वा—असति बाधके शाब्दबोधीयं यद्यदुद्देश्यतावच्छेदकं भवति तत्तत्प्रयोजकं भवतीत्याकारकसामान्यव्याप्त्या शाब्दबोधोत्तरकालीन एव तथाबोध इतिध्येयम्। यत्तु प्रात्यक्षिक एव तथाबोधस्तस्य शाब्दत्वे सुखादेर्विधेयत्वमेव नसम्भवति निपातातिरिक्तनामार्थद्वयस्यभेदेनान्वयस्याव्युत्पन्नत्वात्। न च दृष्टान्तविरोधः, यथा प्रत्यक्षेउद्देश्यतावच्छेदकविधेययोः प्रयोज्यप्रयोजकभावोऽनुभवसिद्धस्तथा शाब्देऽपि इत्यर्थस्यैवाभ्युपगमादितिमतं,तत्तुच्छम्, मतुप्प्रकृतिनामार्थस्य भेदेनान्वयबोधतात्पर्य्यग्राहकतया मतुप्प्रत्ययस्य सार्थकत्वोपगमेन सुखादेर्विधेयत्वे बाधकाभावादितिध्येयम्। आनुभविकतया = अनुव्यवसीयमानतया। धनादौ सुखप्रजोकत्वाभावनिश्चयदशायां धनवान् सुखीत्यादि वाक्येन सुखप्रयोजकतया धनादिबोधस्य कथमप्यसम्भवेनाह—**असतिबाधके इति**। उद्देश्यता-

❀ मनोरमा ❀

प्रकारताया अपि तथात्वेन तामादायापि तत्रातिव्याप्तिरितिचेदत्र केचित्, साध्यतावच्छेदकावच्छिन्नकोटिताविशिष्टा या अवच्छेदकता तदाश्रयप्रकारतावत्त्वं सव्यभिचारत्वमित्यस्य विवक्षणे पूर्वोक्तदोषवारणसम्भवात्। वैशिष्ट्यञ्च स्वघटितसंशयजनकतावच्छेदकनिष्ठत्व, स्वनिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वोभयसम्बन्धेन। रूपवृत्तित्वं च स्वनिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपित—विशेष्यत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपित—अवच्छेदकत्वनिष्ठावच्छेदकतानिरूपित—निष्ठत्वसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेत्याहुः।

**गुरवस्तु**—संशयीयसाध्यतावच्छेदकावच्छिन्नकोटितानिरूपितविशेष्यताविशिष्टा या आधे-

❀ गादाधरी ❀

लाभेन व्यापारजनकतायाश्च फलजननिर्वाहकत्वात् कोटिद्वयोपस्थितेर्द्वारता लाभः, इति कोटिद्वयोपस्थितिद्वारा साध्यसन्देहजनकत्वं लभ्यते । दर्शितज्ञानवत्ताज्ञानस्य च धर्मितावच्छेदकप्रकारकज्ञानमुद्रया साक्षादेव साध्यसन्देहजनकतया नातिप्रसङ्गः । कोटिद्वयोपस्थितिद्वारा साध्यसन्देहजनकत्वञ्च, साध्यसन्देहजनककोटिद्वयोपस्थितिजनकत्वे सति साध्यसन्देहजनकत्वम् । तत्र विशेष्यांशनिवेशो निष्फलः, सत्यन्तदलमात्रनिवेशेनैव

❀ विवृतिः ❀

वच्छेदके विधेयप्रयोजकत्वबोधप्रतिबन्धकविरहदशायामित्यर्थः । कोटिद्वयोपस्थितिजनकतायां = उद्देश्यतावच्छेदकीभूतायां कोटिद्वयोपस्थितिजनकतायां । **साध्येति ।** साध्यसंदेहोत्पत्तिरूपविधेयप्रयोजकतालाभेनेत्यर्थः । व्यापा**रेति ।** यथा चक्षुःसंयोगादिरूपव्यापारजनकतया चक्षुरादेः चाक्षुषादिजनकत्वं तथा कोटिद्वयोपस्थितिरूपव्यापारजनकतया पक्षधर्मताज्ञानस्यापि संशयरूपफलजनकत्वं बोध्यमित्याशयः । द्वारता = व्यापारता—पक्षधर्मताज्ञानजन्यत्वे सति पक्षधर्मताज्ञानजन्यसंशयजनकतेतियावत् । कोटिद्वयोपस्थितिद्वारा = कोटिद्वयोपस्थितिजनकतया । **लभ्यते इति ।** पक्षधर्मताज्ञाने इत्यादिः । निरुक्तद्वारतालाभान्न नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिरित्याह—**दर्शितेति ।** नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानस्येत्यर्थः । साक्षादेव = कोटिद्वयोपस्थितिमद्वारीकृत्यैव । **साध्येति ।** नित्यत्वतदभावविषयकज्ञानवानयं नित्यो न वेतीत्याकारकसाध्यसंदेहजनकतया । **नातिप्रसंग इति ।** साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितेरेव संशयजनकतया नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानस्य संशयजनककोटिद्वयोपस्थितिजनकत्वाभावादिति भावः । **अत्रचेति ।** कोटिद्वयोपस्थितिद्वारा साध्यसंशयजनकत्वघटकयोर्विशेष्यविशेषणयोर्मध्येचेत्यर्थः । विशेष्यांशनिवेशः = साध्यसंशयजनक-

❀ मनोरमा ❀

यत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकताश्रयीभूता या प्रकारता तदवच्छेदकधर्मवत्त्वम् इति विवक्षया न कोऽपि दोषः, विशेष्यतावैशिष्ट्यञ्च स्वावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तिकत्व—स्वनिरूपकसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्वोभयसम्बन्धेनेति व्याचक्रुः ।

साध्यसंशयजनकतानियतत्वं न तादृशजनकताशून्यावृत्तित्वं अपि तु तादृशजनकताशून्यसाध्यतदभावविषयकोपस्थित्यवृत्तित्वमेव वक्तव्यम्, तेन साधारणादिधर्मवत्ताज्ञानजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्यावश्यकतया तादृशज्ञानजन्यतायाः साध्यसंशयाजनकतादृशज्ञानाव्यवहितोत्तरघटज्ञानादिसाधारणत्वेन साध्यसंशयव्यभिचारितया नासम्भवापत्तिः । साधारणधर्म-

❀ दीधितिः ❀

विषयितया वा नित्यत्वानित्यत्वोपस्थापकस्य नित्यत्वे साध्ये ज्ञानस्यानुवृत्तत्वव्यावृत्तत्वाभ्यां वह्नितदभावोपस्थापकस्य वह्नौ साध्ये धूमस्य

❀ गादाधरी ❀

सामञ्जस्यादतस्तं परित्यज्य निष्कृष्टार्थमाह—साध्यसन्देहजनकेति । जनकान्तनिवेशनप्रयोजनमाह–आश्रयतयेत्यादिना। आश्रयतया विषयतया वा नित्यत्वानित्यत्वोपस्थापकस्य—नित्यत्वानित्यत्वोपस्थितिजनकीभूताश्रयत्वादिरूपसम्बन्धज्ञानविषयस्य ज्ञानस्य । नित्यत्वे साध्ये, नित्यत्वसाध्यकस्थले । वारणाय–सव्यभिचारत्वाभावसम्पादनायेत्यर्थः । एकज्ञानस्य नित्यत्वतदभावोभयांश्रयताविरहादाश्रयतासम्बन्धमादाय यथाश्रुते नातिव्याप्तिसंभव इति आश्रयवृत्तिज्ञानवत्त्वसम्बन्धोऽनुसरणीयोऽतस्तदपेक्षया लघुसम्बन्धमादाय व्यावृत्तिमाह–विषयितया वेति । एकज्ञानस्य तदुभयविषयकत्वं निष्प्रत्यूहमेवेति वोध्यम् । समवायेन हेतावतिव्याप्तिमुक्त्वा संयोगेन हेतावपि तामाह अनुवृत्तत्वेति । अनुवृत्तत्वं सामानाधिकरण्यं, व्यावृत्तत्वं विरोधस्ताभ्यां । वह्नितदभावोपस्थापकस्य वह्नितदभावोपस्थितिजनकीभूततादृशसम्बन्धद्वयज्ञानविषयस्य । वह्नौ साध्ये–वह्निसाध्यकस्थले । वारणाय–सव्यभिचारत्वाभावसंपादनाये-

❀ विवृतिः ❀

त्वपर्य्यन्तनिवेशः । **सत्यन्तेति** । साध्यसंशयजनककोटिद्वयोपस्थितिजनकत्वमात्रनिवेशेनैवेत्यर्थः । **साध्यसंदेहजनकतेति** । तथा च साध्यसंशयजनकीभूता या कोटिद्वयोपस्थितिस्तज्जनकं यत् पक्षे यत्किंचिद्धर्मिणिवा सव्यभिचारताघटकसम्बन्धेनहेतुप्रकारकं ज्ञानं तदीयप्रकारताश्रयत्वं सव्यभिचारत्वमिति भावः । **जनकान्तेति** । कोटिद्वयोंपस्थितिजनकपक्षधर्मताज्ञानविषयत्वमात्रस्य लक्षणार्थत्वे दोषमाहेत्यर्थः । आश्रयत्वरूपसम्बन्धज्ञानस्य तादृशसंबन्धविशिष्टज्ञानप्रकारकज्ञानस्य । एवमग्रेऽपि । सम्बन्धिप्रकारकज्ञानस्यैव सम्बन्ध्यन्तरस्मारकतया यथाश्रुतासंगतेरित्यग्रे स्फुटीभविष्यति । विषयतया = विषयतानिरूपकत्वेन । विषयितयेतियावत् । विरोधः =सामा-

❀ मनोरमा ❀

वत्ताज्ञानजन्योपस्थितिमात्रस्यैव साध्यसंशयजनकतावत्त्वेन तादृशजनकताशून्यत्वस्य तादृशज्ञानजन्योपस्थितिभिन्नोपस्थितौ वर्त्तमानतया तत्र साधारणधर्मवत्ताज्ञानजन्यतया अक्षतत्वान्नासम्भवइति ध्येयम् ।

❀ दीधितिः ❀

चारणाय जनकान्तम्। तथोपस्थितेः साध्यसन्देहाजनकत्वात्।

❀ गादाधरी ❀

त्यर्थः। जनकान्तस्य वारकत्वे हेतुमाह-तथोपस्थितेरिति। तादृशसम्बन्धज्ञानजन्योपस्थितेरित्यर्थः। साध्यसन्देहाजनकत्वादिति। सन्देहं प्रति साधारणधर्मासाधारणधर्मविप्रतिपत्तिज्ञानजन्याया एव कोट्युपस्थितेर्हेतुत्वादिति भावः। जनकता च साध्यसंशयत्वावच्छिन्नजन्यतानिरूपिता ग्राह्या, अतः सम्बन्धान्तरज्ञानजन्यकोट्युपस्थितेर्विशेषणज्ञानादिमुद्रया साध्यसंशय-

❀ विवृतिः ❀

नाधिकरण्याभावः। **साधारणेति**। साधारणधर्मवद्धर्मिज्ञानजन्यायाः असाधारणधर्मवद्धर्मिज्ञानजन्यायाः विप्रतिपत्तिवाक्यज्ञानजन्यायाः एव कोटयुपस्थितेर्हेतुत्वादित्यर्थः। ननुसाध्यसंशयनिष्ठजन्यतानिरूपितजनकतावत्कोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वस्य सव्यभिचारत्वेपि नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिरस्त्येव नित्यत्वतदभावविषयकज्ञानवानयमित्यादिज्ञानजन्यायाः नित्यत्वतदभावोपस्थितेरपि नित्यत्वसंशयीयविशेषणीभूतस्य नित्यत्वादेर्ज्ञानात्मकतया विशेषणज्ञानत्वेन विशिष्टबुद्ध्यात्मकनित्यत्वसंशयजनकत्वात्तादृशोपस्थितिजनकनिरुक्तपक्षधर्मताज्ञानविषयत्वस्य ज्ञानहेतौ सत्त्वादत आह-**जनकताचेति**। कोटिद्वयोपस्थितिनिष्ठसाध्यसंशयजनकता चेत्यर्थः। **साध्येति**। साध्यसंशयत्वपर्य्याप्तावच्छेदकताकजन्यतानिरूपितेत्यर्थः। तेनैकधर्मिकतत्तदभावप्रकारकज्ञानत्वात्मकसंशयत्वनिष्ठावच्छेदकताकजन्यतायाःतत्प्रकारकत्वाद्यवच्छिन्नत्वेऽपि न तादृशजन्यतामादाय निरुक्तज्ञानहेतावतिव्याप्तितादवस्थ्यमितिध्येयम्। **ग्राह्येति**। न च तत्प्रकारकतदभावप्रकारकज्ञानयोः सामग्रीसमवलनस्यैव तत्तदभावप्रकारकज्ञानत्वरूपसंशयत्वप्रयोजकतया संशयत्वस्य कार्यतानवच्छेदकत्वादित्थमभिधानमसंगतमितिवाच्यम्। संशयत्वस्य जातिस्वरूपत्वमङ्गीकृत्यैव तथाभिधानसम्भवात्। अतः संशयत्वावच्छिन्नजन्यतानिरूपितजनकतायाः प्रवेशात्। **सम्बन्धेति**। साधारण्यादिसम्बन्धभिन्नविषयित्वादिसम्बन्धविशिष्टज्ञानादिप्रकारकज्ञानजन्यनित्यत्वाद्युपस्थितेरित्यर्थः। **विशेषणेति**। नित्यत्वादिरूपविशेषणज्ञानत्वेन। नक्षतिः=न नित्यत्वादिसाध्यकज्ञानादिहेतावतिव्याप्तिः। तथा च यद्रूपावच्छिन्नप्रकारताशालिज्ञानजन्यकोटिद्वयोपस्थितिः साध्यसंशयत्वावच्छिन्नजनिका तद्रूपवत्त्वस्यैव लक्षणार्थत्वेन न निरुक्तज्ञानहेतावतिव्याप्तिः, नित्यत्वतदभावविषयकज्ञानत्वावच्छिन्नप्रकारताशालिज्ञानजन्यकोटयुपस्थितेर्विशेषणज्ञानत्वेन संशयात्मकविशिष्टबुद्धित्वावच्छिन्नं प्रति जनकत्वेऽपि संशयत्वावच्छिन्नं प्रत्यजनकतया यद्रूपपदेन तादृ-

❀ दीधितिः ❀

**धर्म्मितावच्छेदकपुरोवर्त्तित्वादिविशिष्टधर्म्मिज्ञानस्य संशयजनकतया**

❀ गादाधरी ❀

हेतुत्वेऽपि न क्षतिः। यदि चासाधारणधर्मज्ञानादिजन्यसंशये व्यभिचारवारणाय साधारणधर्मादिज्ञानजन्योपस्थितिजन्यतावच्छेदककोटौ तादृशाव्यवहितोत्तरत्वनिवेशस्यावश्यकतया साध्यसंशयत्वं तत्र प्रयोजनविरहेण न निवेश्यत इत्युच्यते, तदा साध्यसंशयत्वावच्छिन्नत्वं परित्यज्य साध्यसंशयत्वन्यूनवृत्तित्वमेव निवेशनीयं, विशेषणज्ञानादिजन्यता च न

❀ विवृतिः ❀

शज्ञानत्वस्य धर्तुमशक्यत्वादितिभावः। संशयं प्रति साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन असाधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन च हेतुत्वस्यावश्यकत्वात्-असाधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितिविरहदशायामुत्पद्यमाने केवलसाधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितिजन्ये संशये वर्त्तमानस्यासाधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितिरूपकारणाभाववद्वृत्तित्वरूपव्यतिरेकव्यभिचारस्य वारणाय साधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थित्यव्यवहितोत्तरजायमानसंशयंप्रत्येव तादृशोपस्थितेर्हेतुत्वं वाच्यम्, एवं च तादृशोपस्थित्यव्यवहितोत्तरं संशयभिन्नस्यानुत्पादात् प्रयोजनविरहेण संशयत्वमनिवेश्य तादृशोपस्थित्यव्यवहितोत्तरत्वावच्छिन्नं प्रत्येव तादृशोपस्थितित्वेन जनकत्वं विवक्षणीयं; तथा च संशयत्वावच्छिन्नजन्यतानिरूपितजनकतावदुपस्थितिपदेन साधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितेरुपादातुमशक्यतया कुत्रापि साध्यसंशयत्वावच्छिन्नजन्यताघटितलक्षणसमन्वयाऽसम्भवादसंभवः। अथवा संशयत्वस्य तादृशकोट्युपस्थितिजन्यतावच्छेदकत्वेऽपि तादृशोपस्थित्यव्यवहितोत्तरत्वादेरपि पूर्वोक्तव्यभिचारवारणाय तादृशकोट्युपस्थितिजन्यतावच्छेदकत्वस्यावश्यकतया संशयत्वपर्य्याप्तावच्छेदकताकजन्यताघटितलक्षणेऽसंभवइत्याशयेन शंकते—**यदीति**। **असाधारणेति**। असाधारणधर्मवद्धर्मिज्ञानादिजन्ये संशये इत्यर्थः। आदिपदात् साधारणधर्मवद्धर्मिज्ञानपरिग्रहः। व्यभिचारवारणाय=यथोक्तव्यतिरेकव्यभिचारवारणाय। असाधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितिजन्यसंशयस्य साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थित्यजन्यत्वादित्याशयः। **प्रयोजनविरहेणेति**। संशयभिन्नस्य तादृशोपस्थित्युत्तरमनुत्पादादित्याशयः। **इत्युच्यतइति**। तथा च संशयत्वावच्छिन्नजन्यताघटितलक्षणेऽसंभवइतिभावः। उत्तरयति—**तदेति**। संशयत्वावच्छिन्नत्वं=संशयत्वपर्य्याप्तावच्छेदकताकत्वम्। साध्यसंशयत्वन्यूनवृत्तित्वं=साध्यसंशयत्वाव्याप-

❀ दीधितिः ❀

**तद्वारणाय कोटिद्वयोपस्थापकेति ।**

❀ गादाधरी ❀

तन्न्यूनवृत्तिरिति नातिप्रसङ्गः । न चैवमपि यत्र नित्यत्वनित्यत्वाभावसहचरितप्रमेयत्ववानयं नित्यत्वतदभावविषयकज्ञानवांश्चायमित्याकारकज्ञाना-

❀ विवृतिः ❀

कत्वं । तादृशसंशयत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमिति यावत् । **निवेशनीयमिति** । लक्षणघटकीभूतजन्यतायामित्यादिः । नन्वेवं नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानजन्यकोट्युपस्थितेरपि विशेषणज्ञानत्वेन साध्यसंशयजनकतया तादृशोपस्थितिमादाय नित्यत्वसाध्यकज्ञानंहेतौ कथं नातिव्याप्तिरतआह-**विशेषणज्ञानादीति** । नित्यत्वतदभावविषयकज्ञानजन्यनित्यत्वतदभावोपस्थित्यात्मकविशेषणादिज्ञानजन्यता चेत्यर्थः । आदिपदान्नित्यत्वाद्यभावत्वरूपविशेषणतावच्छेदकप्रकारकज्ञानपरिग्रहः, संशयस्य नित्यत्वाद्यभावत्वविशिष्टवैशिष्ट्यावगाहित्वादितिभावः । न संशयत्वन्यूनवृत्ति = न संशयत्वाव्यापिका, अपि तु तद्व्यापिकैव, संशयस्य विशिष्टबुद्धित्वेन सर्वत्रैव संशये विशेषणज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतायाः सत्त्वादित्याशयः । इति=संशयत्वन्यूनवृत्तिजन्यतायाः विवक्षणीयत्वात् । नातिप्रसंगः—न नित्यत्वादिसाध्यकज्ञानादिहेतावतिव्याप्तिः । इदमुपलक्षणम् साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितिजन्यतायाः असाधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितिजन्ये संशये विरहात् । तत्तत्कोट्युपस्थितिजन्यतायाः संशयत्वाव्यापकत्वस्याक्षततया तत्तदुपस्थितिमादायैव सर्वत्र लक्षणसमन्वयसम्भवान्न पूर्वोक्तरीत्या असंभवोऽपि सम्भवतीत्यपि द्रष्टव्यम् । एवं = साधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितेरेव संशयजनकत्वे । यादृशस्थले प्रथमं नित्यत्वदभावसहचरितप्रमेयत्ववानयमित्येकं ज्ञानं ततो नित्यत्वतदभावविषयकज्ञानवाँश्चायमित्यपरंज्ञानं तादृशज्ञानद्वयाच्चैकैव नित्यत्वतदभावविषयिणी उपस्थितिरुत्पद्यते न तु तादृशी उपस्थितिद्वयी तादृशस्थले नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिर्दुर्वारैव निरुक्तोपस्थितेर्नित्यत्वतदभावसहचरितप्रमेयत्ववान् इत्याकारकसाधारणधर्मवद्धर्मिज्ञानजन्यत्वेन संशयजनकत्वस्याक्षततया संशयजनकतादृशोपस्थितिजनकीभूतं यन्नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानात्मकं पक्षधर्मताज्ञानं तद्विषयत्वस्य निरुक्तज्ञानहेतौ सत्त्वादित्याह **यत्रेत्यादि । नित्यत्वेति** । स्वाधिकरणक्षणावच्छिन्नतादृशकोट्युपस्थितिजनकपक्षधर्मताज्ञानविषयत्वविवक्षणे—प्रथमं नित्यत्वतदभावविषयकज्ञानवानयमितिज्ञानोत्पादेऽतिव्याप्तिरेव न सम्भवति, निरुक्तज्ञानस्य कोट्युपस्थित्यधिकरण-

❀ गादाधरी ❀

भ्यां नित्यत्वतदभावविषयिणी एकैवोपस्थितिर्जनिता तत्र तादृशोपस्थिति-जनकपक्षधर्मताज्ञानविषयत्वमादाय ज्ञानेऽतिव्याप्तिर्दुर्वारा, तादृशोप-स्थितिव्यक्तेः साधारणधर्मवत्ताज्ञानजन्यतया साध्यसंशयत्वावच्छिन्नं प्रति जनकत्वादिति वाच्यम् । साध्यसंशयत्वावच्छिन्ननिरूपितजनकतानियत-जन्यतानिरूपकीभूतजनकताया एव पक्षधर्मताज्ञानविशेषणत्वोपगमा-

❀ विवृतिः ❀

क्षणानवच्छिन्नत्वादतो नित्यत्वतदभावसहचरितप्रमेयत्ववानयमितिज्ञानस्य प्रथम-मुत्पादोऽभिहितः । मुख्यविशेष्यताद्वयशून्यत्वेन पक्षधर्मताज्ञानविवक्षणे तादृशप्रमेय-त्वतादृशज्ञानविषयकं समूहालम्बनात्मकमेकज्ञानमादायातिव्याप्त्यसम्भवादित्याकारक-ज्ञानाभ्यां इत्युक्तं, क्रमिकोत्पन्नाभ्यां तादृशज्ञानाभ्यामित्यर्थः । तथा चोक्तद्विवचनेन ज्ञानद्वयमादायैवातिव्याप्तिः सम्भवतीति सूचितम् , निरुक्तज्ञानद्वयाद्यदि नित्यत्व-तदभावविषयिणी उपस्थितिद्वयी जायते तदा यस्यामुपस्थितौ संशयजनकत्वं तादृशो-पस्थितिजनकत्वस्य नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञाने विरहात् उक्तज्ञानद्वयमादायाप्यतिव्याप्त्यसम्भवात् एकैवेत्युक्तम्, एवकारेणोपस्थितिद्वयोत्पाद-व्यवच्छेदः । **तादृशेति** । संशयजनककोटिद्वयोपस्थितिजनकनित्यत्वतदभावविष-यकज्ञानवानयमित्याकारकपक्षधर्मताज्ञानविषयत्वमादायेत्यर्थः ।

**साधारणेति** । नित्यत्वतदभावसहचरितप्रमेयत्ववानयमित्याकारकसाधा-रणधर्मवद्धर्मिज्ञानजन्यत्वेनेत्यर्थः । यद्यपि साधारणधर्मवद्धर्मिज्ञानादिमात्रजन्य-कोटिद्वयोपस्थितित्वेन संशयजनकत्वविवक्षणे नेयमतिव्याप्तिर्निरुक्तज्ञानद्वयाधीनैको-पस्थितेस्तादृशज्ञानमात्राजन्यत्वेन संशयाजनकत्वात् । न चैवं तादृशज्ञानद्वयाधी-नैकोपस्थितिकाले नित्यत्वसाध्यकप्रमेयत्वरूपसाधारणहेतावव्याप्तिर्निरुक्तोपस्थितेः साधारणज्ञानमात्रानधीनत्वेन संशयाजनकत्वादिति वाच्यम् । कालान्तरीणकेवल-नित्यत्वतदभावसहचरितप्रमेयत्वज्ञानमात्राधीनकोट्युपस्थितिजनकज्ञानविषयत्वोपल-क्षितत्वस्य निरुक्तज्ञानद्वयकालेऽपि प्रमेयत्वे सत्त्वेन तदानीं लक्षणसमन्वयसम्भ-वेनाव्याप्तिविरहादित्युच्यते तथापि साधारणज्ञानमात्रजन्यत्वनिवेशे असाधारण-ज्ञानजन्यकोट्युपस्थितेः संशयजनकत्वानुपपत्तिः, असाधारणज्ञानमात्रजन्यत्वनि-वेशे च साधारणज्ञानाधीनकोट्युपस्थितेः संशयजनकत्वानुपपत्तिः, तादृशज्ञानान्यतम-मात्रजन्यत्वनिवेशे तु अन्यतमत्वस्य भेदगर्भतया विनिगमनाविरहेण विशेष्यविशेषण-भेदेन कार्यकारणभावस्यानन्त्यापत्तिः स्यादित्यालोच्य प्रकारान्तरेणातिव्याप्तिं वार-यितुमाह—**साध्येति** । साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकतानियता व्याप्या-तादृशजनकत्वाभाववत्यवर्तमाना या जन्यता तन्निरूपकीभूताया जनकतायाः इत्यर्थः ।

साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकतानियतजन्यतानिरूपित जनकतावत्पक्षधर्मताज्ञानविषयत्वं सव्यभिचारत्वमिति निष्कर्षः ।

❀ गादाधरी ❀

न्नित्यत्वानित्यत्वविषयकज्ञानवत्ताज्ञानजन्यतायाः संशयाजनकसाधारण-धर्मवत्ताज्ञानाजन्यतदुभयोपस्थितिसाधारणतया संशयत्वावच्छिन्ननिरूपितजनकताव्यभिचारित्वेनातिप्रसङ्गविरहात्। साधारण्यादिविशिष्टपक्ष-धर्मवत्ताज्ञानजन्यतदुभयोपस्थितीनां च सर्वासां तादृशोपस्थितित्वेन संशयत्वावच्छिन्नं प्रति हेतुतया तादृशज्ञाननिरूपितकोट्युपस्थितिनिष्ठ-जन्यतायाः संशयत्वावच्छिन्ननिरूपितजनकतानियतत्वमक्षतमेव।

❀ विवृतिः ❀

**संशयाजनकेति**। संशयं प्रत्यजनकीभूता या नित्यत्वानित्यत्वसहचरितप्रमेयत्ववान-यमित्याकारकज्ञानाजन्या नित्यत्वतदभावविषयकोपस्थितिस्तत्रवर्तमानतयेत्यर्थः। **संशयत्वेति**। संशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकत्वाभाववद्वृत्तित्वेनेत्यर्थः। **अतिप्रसंगविरहादिति**। तथा च नित्वत्वतदभावसहचरितप्रमेयत्ववानयमि-त्याकारकज्ञानाजन्यायां केवलनित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञान-जन्यायां संशयजनकत्वशून्यायामपि नित्यत्वतदभावविषयकोपस्थितौ तादृश-ज्ञानजन्यतायाः वर्त्तमानतया साध्यसंशयजनकताव्याप्यजन्यतापदेन नित्यत्वतद-भावविषयकज्ञानजन्यतायाः धर्तुमशक्यत्वात्, संशयजनकताव्याप्यजन्यतानिरू-पितजनकतावत्पक्षधर्मताज्ञानविषयत्वस्यज्ञानहेतावसत्त्वेन न नित्यत्वसाध्यकज्ञान-हेतावतिव्याप्तिरिति भावः। निरुक्तविवक्षणे नित्यत्वसाध्यकप्रमेयत्वादिसाधारणादौ कुत्रापि नाव्याप्तिरित्याह **साधारण्यादीति**। आदिना असाधारण्यपरिग्रहः। नित्यत्वानित्यत्वसहचरितत्वरूपसाधारण्यादिविशिष्टप्रमेयत्वादिधर्मवत्ताज्ञानजन्यानां-नित्यत्वतदभावोपस्थितिव्यक्तीनामित्यर्थः। सर्वासां=नित्यत्वतदभावविषयकज्ञान-जन्यानाँ तदजन्यानां वा सर्वासां। तादृशोपस्थितित्वेन = साधारण्यादिविशिष्टधर्म-वत्ताज्ञानजन्योपस्थितित्वेन। **तादृशेति**। साधारण्यादिविशिष्टधर्मवत्ताज्ञाननिरू-पितकोट्युपस्थितिनिष्ठजन्यताया इत्यर्थः। **संशयत्वेति**। संशयत्वन्यूनवृत्तिजन्यता-निरूपितजनकताव्याप्यत्वमक्षतमेवेत्यर्थः। तथा च नित्यत्वानित्यत्यसहचरितप्रमे-यत्ववानयमित्याकारकज्ञानाद्यधीनकोट्युपस्थितेरेव संशयजनकतया निरुक्तज्ञानानि-रूपितकोट्युपस्थितिनिष्ठजन्यतायां संशयजनकत्वाभाववदवृत्तित्वरूपसंशयजनकता-नियतत्वस्य वर्तमानत्वात् संशयजनकतानियतकोटिद्वयोपस्थितिनिष्ठजन्यतानिरूपित-जनकतावत्साधारण्यादिविशिष्टधर्मवत्ताज्ञानादिविषयत्वस्य सर्वत्र साधारणादिहेतौ सत्त्वेन लक्षणसमन्वयः सम्भवत्येवेतिभावः।

ननूक्तजनकतानियतत्वं न तादृशजनकतासामानाधिकरण्यं निरुक्तज्ञानद्वया-

❀ गादाधरी ❀

अथवा उक्तातिप्रसङ्गवारणाय तादृशजनकतावच्छेदकावच्छिन्नत्वमेव जन्यतायां निवेशनीयम्। अव्यवहितोत्तरत्वसम्बन्धेन साधारण्यादि-विशिष्टधर्मवत्ताज्ञानविशिष्टतत्तकोट्युपस्थितित्वरूपतादृशज्ञानजन्यताव-च्छेदकधर्म एव च संशयजनकतावच्छेदकः न तु तादृशज्ञानजन्य-

❀ विवृतिः ❀

धीनैकोपस्थितिनिष्ठनित्यत्वतदभावविषयकज्ञानजन्यताया अपि संशयजनकता-समानाधिकरणतया अतिव्याप्त्यापत्तेः। नापि तादृशजनकताव्यापकत्वं कस्या अपि साधारणादिज्ञानजन्यकोट्युपस्थितिनिष्ठजन्यतायास्तादृशजनकत्वाऽव्यापकत्वेनासंभवा-पत्तेः। स्वव्यापकतादृशजनकताकत्वविवक्षणेऽपि स्वत्वघटितत्वेन व्यापकता-घटितत्वेन च गौरवापत्तेरतस्तादृशजनकतात्वावच्छिन्नाभाववदवृत्तित्वरूपमेव तद् वाच्यम्, तथा च तस्यापि अभावद्वयघटितत्वेन पर्याप्तिसमालोचनया गौरवात्, लघुभूतनिवेशेन पूर्वोक्तामतिव्याप्तिं वारयितुमाहा**ऽथवेति**। यद्वा ननुयादृशस्थल-विशेषे नित्यत्वतदभावविषयकज्ञानवानयमितिज्ञानं नियमतो नित्यत्वतदभावसह-चरितप्रमेयत्ववानयमितिज्ञानसमानकालीनमेव भवति नतु तादृशज्ञानाऽसमानका-लीनं तादृशोभयज्ञानाधीना चैकैव नित्यत्वतदभावविषयिणी उपस्थितिर्जायते तादृ-शस्थले निरुक्तजनकतानियतत्वेन कोट्युपस्थितिनिष्ठजन्यताया विवक्षणेऽपि नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिवारणमशक्यमेव, नित्यत्वतदभावविषयकज्ञान-प्रकारकज्ञानजन्यतायाः अपि संशयजनकताशून्यावृत्तित्वेन तन्निरूपितजनकता-वन्निरुक्तज्ञानविषयत्वस्य ज्ञानहेतौ सत्त्वादत **आहाऽथवेति**। उक्तातिप्रसंगवा-रणाय पूर्वोक्तरीत्या नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिवारणाय। **तादृशेति**। संशयत्वन्यूनवृत्तिजन्यतानिरूपिता या जनकता तदवच्छेदकावच्छिन्नत्वमित्यर्थः। जन्यतायां=पक्षधर्मताज्ञाननिरूपितायां जन्यतायां। ननु संशयजनकतावच्छेदकं यदि साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यकोट्युपस्थितित्वं तदा निरुक्तज्ञानद्वय-कालीनैकोपस्थितित्वस्यापि तथात्वेन तदवच्छिन्नजन्यतानिरूपितजनकतावतः नित्य-त्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानात्मकस्य पक्षधर्मताज्ञानस्य विषय-तायाः ज्ञानहेतौ सत्त्वात् नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिर्दुर्वारैवेत्यत आहाव्यवहि-**तेति**। **साधारण्यादीति**। तत्तदभावसहचरितत्वादिविशिष्टधर्मवद्धर्मिज्ञान-विशिष्टतत्तत्कोट्युपस्थितित्वरूपो यस्तादृशसाधारण्यादिविशिष्टधर्मवद्धर्मिज्ञाननिरूपि-तजन्यतावच्छेदको धर्मः स एवेत्यर्थः। एवकारव्यवच्छेद्यमाह-**नत्विति**। **तादृशेति**। साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानजन्यताविशिष्टतत्कोट्युपस्थितित्वं जन्यतासम्ब-

❀ गादाधरी ❀

तत्कोट्युपस्थितित्वं, जन्यतापेक्षया तद्घटकस्याव्यवहितोत्तरत्वस्य लघु-

❀ विवृतिः ❀

न्धेन तादृशज्ञानविशिष्टतत्कोट्युपस्थितित्ववेत्यर्थः। निरुक्तजन्यत्वस्य प्रकारविधया संशयजनकतानवच्छेदकत्वे संसर्गविधया च संशयजनकतावच्छेदकतानवच्छेदकत्वे हेतुमाह–जन्यतेति। तद्घटकस्य जन्यताघटकस्य। लघुत्वादिति। तन्निष्ठान्यथासिद्ध्यनिरूपकत्वे सति तदव्यवहितोत्तरत्वरूपस्य तज्जन्यत्वस्य तद्घटकाव्यवहितोत्तरत्वापेक्षया गुरुत्वात् संशयजनकतावच्छेदकगर्भे प्रकारतया संसर्गतया च जन्यत्वप्रवेशो नसंभवतीति हृदयम्। अत्राऽव्यवहितोत्तरत्वं तृतीयक्षणसाधारणं स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपं नतु स्वाधिकरणक्षणध्वंसानधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपं द्वितीयक्षणमात्रवृत्ति ग्राह्यं तथा सति यादृशस्थलविशेषे निश्चितनित्यत्वतदभाववद्व्यावृत्तशब्दत्ववान् शब्द इत्याकारकासाधारणधर्मज्ञानतृतीयक्षणे कोट्युपस्थितिर्जनिता तादृशस्थले निरुक्ताव्यवहितोत्तरत्वसम्बन्धेना साधारणधर्मज्ञानविशिष्टत्वस्य कोट्युपस्थितावसम्भवेन तादृशज्ञानविशिष्टकोट्युपस्थितित्वावच्छिन्नसंशयजनकत्वाऽप्रसिद्ध्या पक्षेऽनित्यत्वसंदेहदशायां अनित्यत्वसाध्यकशब्दत्वरूपासाधारणहेतावव्याप्त्यापत्तेरितिध्येयम्। तथा च साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतावत्पक्षधर्मताज्ञानविषयत्वस्यैव सव्यभिचारत्वस्वरूपतया न निरुक्तज्ञानद्वयाधीनैकोपस्थितिमादाय नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः। संशयजनकतावच्छेदकीभूतस्याऽव्यवहितोत्तरत्वसम्बन्धेन नित्यत्वतदभावसहचरितप्रमेयत्वज्ञानविशिष्टकोट्युपस्थिति त्वस्य नित्यत्वतदभावविषयकज्ञानप्रकारकज्ञानजन्यतानवच्छेदकतया तदवच्छिन्नजन्यतानिरूपितजनकत्वस्य नित्यत्वतदभावविषयकज्ञानप्रकारकज्ञाने विरहादितिभावः वस्तुतोऽव्यवहितोत्तरत्वसम्बन्धेन यद्रूपावच्छिन्नप्रकारताशालिज्ञानविशिष्टकोट्युपस्थितित्वं तादृशज्ञानजन्यतावच्छेदकीभूतं साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकताया अवच्छेदकं भवति तद्रूपवत्त्वमेव फलितं; नित्यत्वतदभावविषयंकत्वावच्छिन्नज्ञानप्रकारकज्ञानविशिष्टकोट्युपस्थितित्वस्य तादृशज्ञानजन्यतावच्छेदकस्य संशयजनकतानवच्छेदकतया यद्रूपपदेन तादृशज्ञानत्वस्योपादानासम्भवान्न तादृशज्ञानद्वयाधीनैकोपस्थितिमादाय नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः। अतएव नित्यत्वतदभावविषयकज्ञानवानयम् नित्यत्वतदभावसहचरितप्रमेयत्ववांश्चायमित्याकारकसमूहालम्बनज्ञानाधीनैकोपस्थितिमादायापि न तत्रातिव्याप्तिः; नित्यत्वतदभावविषयकज्ञानत्वावच्छिन्नप्रकारकज्ञानविशिष्टकोट्युपस्थितित्वस्यसंशयजनकतानवच्छेदकत्वादिति तु तत्त्वं युक्तमुत्पश्यामः।

❀ गादाधरी ❀

त्वात्। अत आत्माश्रयेण साधारणादिधर्मवत्ताज्ञानजन्यत्वस्य तादृश-ज्ञानजन्यतानवच्छेदकत्वेऽपि न क्षतिः। जनकतावच्छेदकावच्छिन्नत्वञ्च

❀ विवृतिः ❀

ननु जन्यत्वं यदि नाव्यवहितोत्तरत्वघटितं किन्त्वखण्डोपाधिस्वरूपमेव, तदा-लाघवात् अव्यवहितोत्तरत्वसम्बन्धेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानविशिष्ट कोट्युपस्थितित्वस्य संशयजनकतावच्छेदकत्वकल्पनापेक्षया साधारण्यादिविशिष्टधर्म-वत्ताज्ञानजन्यताविशिष्टकोट्युपस्थितित्वस्य तथात्वकल्पनमेव युक्तमत आह **तइति**। यतस्तादृशज्ञानजन्यताविशिष्टकोट्युपस्थितित्वं न संशयजनकतावच्छेदकमतइत्यर्थः। आत्माश्रयेण = स्वं यदि स्वावच्छेदकंस्यात् स्वभिन्नं स्यादित्याकारकापत्तिरूपदोषेण। **तादृशेति**। साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यतानवच्छेदकत्वेत्यर्थः। नक्षतिः= नासम्भवः। **इदं तु तत्त्वम्**—साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यताविशिष्टको-ट्युपस्थितित्वं यदि संशयजनकतावच्छेदकं तदा तादृशोपस्थितित्वं 'तादृशज्ञानजन्यता-वच्छेदकमपिवाच्यम्; तादृशज्ञानजन्यतावच्छेदकधर्म एव संशयजनकतावच्छेद-कइत्यस्यैव पूर्वमभिहितत्वात् एवं च स्वं यदि स्वावच्छेदकं स्यात् स्वभिन्नं स्यादि-त्याकारकापत्तिरूपात्माश्रयभयेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यतायाः तादृश-ज्ञानजन्यतावच्छेदकत्वाऽसम्भवेन सर्वत्रासम्भवः स्यात्। संशयजनकतावच्छेदकी-भूतं यत् साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यताविशिष्टकोट्युपस्थितित्वं तदवच्छि-न्नायाः तादृशज्ञानजन्यताया अप्रसिद्धेरतोऽव्यवहितोत्तरत्वसम्बन्धेन तादृशज्ञानवि-शिष्टकोट्युपस्थितित्वरूपस्तादृशज्ञानजन्यतावच्छेदकधर्म एव संशयजनकतावच्छेदको वाच्यइति। ननु संशयजनकतावच्छेदकावच्छिन्नत्वं यदि संशयजनकतावच्छेदक-निष्ठावच्छेदकताकत्वं तदा साधारण्यादिविशिष्टधर्मवत्ताज्ञानविशिष्टकोट्युपस्थिति-त्वस्य संशयजनकतावच्छेदकत्वेऽपि नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः दुर्वारैव नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानस्याव्यवहितोत्तरत्वसम्बन्धेनतादृ-शज्ञानविशिष्टकोट्युपस्थितित्वावच्छिन्नं प्रति जनकतया संशयजनकतावच्छे-दककेवलोपस्थितित्वरूपज्ञानत्वस्यापि तज्ज्ञानजन्यतावच्छेदकघटकत्वेन तादृश-केवलोपस्थितित्वनिष्ठावच्छेदकताकजन्यतानिरूपितजनकतावन्नित्यत्वतदभावविषय-कज्ञानप्रकारकज्ञानविषयतायाः ज्ञानहेतौ सत्त्वादतआह जन**कतेति**। संशयत्व-न्यूनवृत्तिजन्यतानिरूपितजनकतावच्छेदकावच्छिन्नत्वञ्चेत्यर्थः। जन**कतावच्छेद-केति**। तादृशजनकतावच्छेदकपर्य्याप्तावच्छेदकतानिरूपकत्वं, तादृशजनकता-वच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नत्वञ्चेत्यर्थः। तथा च साध्यसंशयजनक

❀ गादाधरी ❀

जनकतावच्छेदकपर्याप्तावच्छेदकताकत्वं, तेन साध्यसन्देहजनकतावच्छेदकघटकज्ञानत्वादेर्नित्यत्वतदभावविषयकज्ञानवत्ताज्ञानादिजन्यतावच्छेदकघटकत्वेऽपि न क्षतिः। जनकतावच्छेदकतायाश्चपर्याप्तिर्न निवेश्यते प्रयोजनविरहात्। तेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यतावच्छेदककोटौ आवश्यक तद्वैशिष्ट्यमात्रनिवेशेनैवोपपत्तौ प्रयोजनविरहेण संशयजनकतावच्छेदकघटकस्य साध्योपस्थितित्वादेरनिवेशेपि न क्षतिः। न चैवं

❀ विवृतिः ❀

तावच्छेदकीभूतसाधारणादिधर्मवद्धर्मिज्ञानवैशिष्ट्यकोट्युपस्थितित्वरूपधर्मद्वयनिष्ठावच्छेदकताकत्वस्य नित्यत्वतदभावविषयकज्ञानवानयम् इत्याकारकज्ञाननिरूपितायां जन्यतायामभावान्न तादृशज्ञानजन्यतामादाय नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिरिति भावः॥ तेन = जनकतावच्छेदकपर्य्याप्तावच्छेदकताकत्वविवक्षणेन। **साध्येति** साध्यसंशयजनकतावच्छेदकीभूतं यत् साधारण्यादिविशिष्टधर्मप्रकारकज्ञानविशिष्टकोट्युपस्थितित्वं तद्घटकोपस्थितित्वरूपज्ञानत्वादेरित्यर्थः। आदिपदात् तत्तत्कोटिविषयकत्वादेरुपग्रहः। नक्षतिः = न नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः।

नन्वेवमसम्भवः साधारणादिधर्मवद्धर्मिज्ञानस्याव्यवहितोत्तरत्वसम्बन्धेन तादृशज्ञानवैशिष्ट्यावच्छिन्नं प्रत्येव जनकतया संशयजनकतावच्छेदकसाधारणादिधर्मवद्धर्मिज्ञानवैशिष्ट्यकोट्युपस्थितित्वरूपधर्मद्वयपर्य्याप्तावच्छेदकताकत्वस्य तादृशज्ञानजन्यतायामभावेन संशयजनकतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नजन्यतानिरूपितजनकतावत्पक्षधर्मताज्ञानपदेन साधारणादिधर्मवद्धर्मिज्ञानस्यधर्तुमशक्यत्वादित्यत आह **जनकतेति**। जनकतावच्छेदकताप्रतियोगिकेतरवारकपर्य्याप्तिर्न निवेश्यते इत्यर्थः। **प्रयोजनेति**। तादृशपर्य्याप्तेरव्याप्त्यादिदोषवारणाप्रयोजकत्वादिति हृदयम्।

न केवलं प्रयोजनविरहादेवतादृशपर्याप्तिर्ननिवेश्यतेऽपि त्वसम्भवरूपदोषतोऽपि तादृशीपर्य्याप्तिर्ननिवेशनीयेत्याह **तेनेति**। निरुक्तायाः पर्य्याप्तेरनिवेशेनेत्यर्थः। तद्वैशिष्ट्यनिवेशेनैवोपपत्तौ = साधारणधर्मवद्धर्मिज्ञानवैशिष्ट्यमात्रनिवेशेनैवोपपत्तौ। प्रयोजनविरहेण = अव्याप्त्यादिदोषस्याऽसम्भवेन। **संशयेति**। अव्यवहितोत्तरत्वसम्बन्धेन संशयजनकतावच्छेदकीभूतस्य साधारण्यादिविशिष्टधर्मवत्ताज्ञानवैशिष्ट्यकोटिद्वयोपस्थितित्वघटकस्येत्यर्थः। साध्योपस्थितित्वादेः=साध्यादिविषयकत्वोपस्थितित्वादेः। आदिना साध्याभावविषयकोपस्थितित्व परिग्रहः। अनिवेशेऽपि=साधारणादिज्ञानजन्यतानवच्छेदकत्वेऽपि। नक्षतिः = नासम्भवः। अयमभिप्रायः—इतरवार-

❀ मनोरमा ❀

**साध्यसंशयनिवेशनं व्यर्थमिति**। ननु साध्यसंशयपदोपादानेऽपि रासभतदभावसहचरित-

❀ गादाधरी ❀

साध्यसंशयनिवेशनं व्यर्थं यत्किञ्चिज्जनकतावच्छेदकावच्छिन्नजन्यतानि-

❀ विवृतिः ❀

कपर्य्याप्तिनिवेशे स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन संशयजनकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तियजन्यत्वं तन्निरूपितजनकतावत्पक्षधर्मताज्ञानविषयत्वस्यैव सव्यभिचारत्वस्वरूपतायां पर्य्यवसितायां भवेदेवासम्भवः। साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानवैशिष्ट्यमात्रावच्छिन्नायास्तादृशज्ञानजन्यतायाः स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तादृशज्ञानवैशिष्ट्यगतैकत्वादिमात्रनिष्ठत्वेन संशयजनकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकसाधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानवैशिष्ट्यकोऽस्त्युपस्थितित्वगतद्वित्वादाववर्त्तमानतया तादृशसम्बन्धेन तादृशद्वित्वपर्य्याप्तिकावच्छेदकरूपवृत्तिजन्यतापदेन साधारणादिज्ञानजन्यतायाः उपादातुमशक्यत्वादत इतरवारिका पर्य्याप्तिर्ननिवेशनीया—तथासति स्वावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन संशयजनकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकरूपवृत्तिजन्यताघटितस्यैव लक्षणार्थताया आवश्यकतया नासम्भवः सम्भवति साधारणादिज्ञानवैशिष्ट्यकोऽस्त्युपस्थितित्वद्वयनिष्ठावच्छेदकताकपर्य्याप्तेरपि साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानजन्यतावच्छेदकताप्रतियोगिकपर्य्याप्तित्वेन तादृशज्ञानवैशिष्ट्यकोऽस्त्युपस्थितित्वगतद्वित्वे वर्तमानस्य स्वावच्छेदकताप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वस्य संशयजनकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसाधारण्यादिविशिष्टधर्मवत्ताज्ञानवैशिष्ट्यकोऽस्त्युपस्थितित्वगतद्वित्वेऽपि वर्त्तमानतया तादृशद्वित्ववृत्तिजन्यतापदेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानजन्यतायाः धर्तुं शक्यत्वात् इति ।

साध्यसंशयजनकतावच्छेदकावच्छिन्नत्वेन पक्षधर्मताज्ञानजन्यतायाः विवक्षणे 'साध्यसंशयपदं व्यर्थं' यत्किञ्चित्कार्यनिरूपितजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतायाः लक्षणघटकत्वेऽपि न नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः'। अव्यवहितोत्तरत्वसम्बन्धेन नित्यत्वतदभावविषयकज्ञानप्रकारकज्ञानविशिष्टकोऽस्त्युपस्थितित्वावच्छिन्नस्य कार्यमात्रं प्रत्येवाजनकत्वात्' इत्याशंकते **नचैवमिति** । वाच्यमितिपरेणान्वयः' एवं = संशयजनकतावच्छेदकावच्छिन्नत्वेन जन्यतायाः विवक्षणे ।

❀ मनोरमा ❀

धूमवानिति ज्ञानमादाय वह्निसाध्यकधूमेऽतिव्याप्तिर्दुर्वारैव; रासभसंशयनिष्ठनिरुक्तज्ञानजन्यताया अपि वह्निसंशयत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतया समूहालम्बनवह्निरासभसंशयात्मक-

❀ गादाधरी ❀

वेशेनैवोपपत्तेः,नित्यत्वतदभावविषयकज्ञानवत्ताज्ञानजन्यतावच्छेदकस्या-व्यवहितोत्तरत्वसम्बन्धेन तादृशज्ञानविशिष्टनित्यत्वादिविषयकोपस्थिति-त्वस्य किञ्चिदपि कार्यं प्रति जनकतावच्छेदकत्वाभावेनातिप्रसङ्गविरहा-दिति वाच्यम्। तथासति वह्न्यादौ साध्ये रासभतदभावसाहचर्यादि-प्रकारकज्ञानमादाय धूमादावतिप्रसङ्गापातात्, प्रकृतसाध्यसन्देहजनक

❀ विवृतिः ❀

साध्यसंशयत्वादेः = साध्यविषयकत्वसहितस्य तदसहितस्य वा संशयत्वादेः। अति-प्रसंगविरहादिति। नित्यत्वतदभावविषयकज्ञानवान् अयमित्याकारकज्ञानजन्यतायाः अव्यवहितोत्तरत्वसम्बन्धेन तादृशज्ञानविशिष्टकोटयुपस्थितित्वावच्छिन्नाया यत्किञ्चित्-कार्यनिरूपितजनकतावच्छेदकावच्छिन्नत्वेनोपादानासम्भवादितिहृदयम्। न चाव्यव-हितोत्तरत्वसम्बन्धेन नित्यत्वतदभावविषयकज्ञानप्रकारकज्ञानविशिष्टनित्यत्वाद्युपस्थि-तित्वेन तादृशोपस्थितिविषयकप्रत्यक्षे अनुमितावपि ज्ञायमानलिङ्गविधया तादृशोपस्थि-तित्वेन, तादृशोपस्थितिध्वंसं प्रत्यपि तत्त्वेन, तादृशोपस्थितिरूपसामान्यलक्षणाधीन तादृशोपस्थित्याश्रयप्रत्यक्षे तादृशोपस्थितित्वेनापि जनकतया तत्तत् कार्यमादाय नित्य-त्वसाध्यकज्ञानहेतावतिव्याप्तिवारणार्थमेव साध्यसंशयपदं सार्थकमितिवाच्यम्। प्रत्यक्षे विषयस्य विषयत्वेन, अनुमितौ व्याप्तिमल्लिङ्गज्ञानस्य, ध्वंसं प्रत्यपि प्रतियोगिनः प्रतियो-गित्वेन, तदाश्रयप्रत्यक्षे च तज्ज्ञानरूपसामान्यस्यैव जनकत्वमभ्युपेत्यैव साध्यसंशय-त्वादेर्निवेशस्य निरर्थकताया आशंकितत्वादितिभावः। समाधत्ते-तथासतीति। सा-ध्यसंशयत्वादेरनिवेशे सतीत्यर्थः। वह्न्यादाविति। पर्वतादिपक्षकेत्यादि। आदिना द्रव्यादेरुपग्रहः। रासभेति। रासभतदभावसहचरितधूमवान् पर्वतइत्याकारकज्ञान-मादायेत्यर्थः। साहचर्यादीत्यत्रादिना धूमाव्यापकधूमासमानाधिकरणवस्त्वन्तरसाहच-र्यपरिग्रहः। धूमादाविति आदिपदात् आलोकपरिग्रहः। अतिप्रसंगापातादिति। तथा च साध्यसंशयपदानुपादाने पर्वतोवह्निमान् धूमादित्यत्रवह्निव्याप्येधूमहेतावतिव्याप्तिः, यत्किंचित् कार्यपदेन रासभसंशयमादाय तज्जनकतावच्छेदकीभूतं यत् अव्यवहि-तोत्तरत्वसम्बन्धेन रासभतदभावसहचरितधूमप्रकारकज्ञान विशिष्टरासभाद्युपस्थितित्वं

❀ मनोरमा ❀

वह्निसंशयत्वसमानाधिकरणतया च साध्यसंशयत्वन्यूनवृत्तित्वादितिचेन्न, साध्यसंशयत्वन्यूनवृत्ति त्वस्य तादृशसंशयत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति मुख्यविशेष्यताद्वयशून्यसाध्य संशयनिष्ठत्वरूपस्य विवक्षितत्वात्। रासभसंशयत्वावच्छिन्नजन्यतायाश्चमुख्यविशेष्यताद्वयशून्य साध्यसंशयनिष्ठत्वाभावेन अतिप्रसंगविरहात्। अथवा साध्यसंशयत्वन्यूनवृत्तित्वं साध्यसंशयत्वा भाववदवृत्तित्वरूपमेव वाच्यमिति नातिप्रसंग इति ध्येयम्।

❀ गादाधरी ❀

ताया अवश्यं निवेशनीयत्वात्। न च कोटिद्वयपदस्य प्रकृतसाध्यतावच्छेदकावच्छिन्न-तदभावपरतया-प्रकृतसाध्यतावच्छेदकावच्छिन्नविषयकोपस्थितित्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिवेशान्नेयमतिव्याप्तिरिति वाच्यम्, एवंसति एतल्लाभायैव संशयपदोपादानात्।

❀ विवृतिः ❀

तदवच्छिन्नजन्यतानिरूपितजनकतावन्निरुक्तज्ञानविषयतायाः धूमे सत्त्वादितिभावः। इदमुपलक्षणं साध्यसंशयपदानुपादाने द्रव्यत्वसाध्यकगुणत्वरूपविरुद्धहेतावपिरूपत्वतदभावसहचरितगुणवत्ताज्ञानमादायातिव्याप्तिरित्यपि द्रष्टव्यम्। न च साध्यसंशयत्वादेर्निवेशेऽपि वह्न्यादिसाध्यकधूमादावतिव्याप्तितादवस्थ्यमेव विशेषणज्ञानजन्यतामादायातिव्याप्तिवारणाय साध्यसंशयत्वन्यूनवृत्तित्वेन जन्यतायाः विवक्षणीयतया तस्य च साध्यसंशयत्वसामानाधिकरण्यसहितस्य तदसहितस्य वा साध्यसंशयत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपस्य रासभसंशयनिष्ठायां रासभाद्युपस्थितिजन्यतायामपि सत्त्वादितिवाच्यम्। साध्यसंशयत्वाभाववदवृत्तित्वस्य साध्यसंशयत्वव्याप्यत्वरूपस्य साध्यसंशयत्वन्यूनवृत्तित्वपदेनविवक्षितत्वात् रासभसंशयनिष्ठायाः रासभाद्युपस्थितिजन्यतायाः वह्निसंशयत्वाभाववद्वृत्तित्वेन साध्यसंशयत्वाऽव्याप्यत्वादितिध्येयम्। ननुयत्किञ्चित्कार्यनिरूपितजनकतावच्छेदकसाध्यादिविषयकोपस्थितित्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतायाः लक्षणघटकत्वेऽव्यवहितोत्तरत्वसम्बन्धेन यद्रूपावच्छिन्नप्रकारताशालिज्ञानविशिष्टसाध्यादिविषयकोपस्थितित्वघटितधर्मो यत्किञ्चित्कार्यनिरूपितजनकतावच्छेदकस्तद्रूपवत्त्वस्य लक्षणार्थत्वे वा न वह्निमान् धूमादित्यादौ रासभतदभावसहचरितधूमवत्ताज्ञानमादायातिव्याप्तिः। तादृशज्ञानजन्यरासभसंशयजनकतावच्छेदककोटौ तज्ज्ञानजन्यतावच्छेदकतज्ज्ञानविशिष्टरासभाद्युपस्थितित्वादेरेव निवेशनीयतया वह्न्याद्युपस्थितित्वरूपसाध्याद्युपस्थितित्वादेरप्रवेशात् साध्याद्युपस्थितित्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतायाः रासभतदभावसहचरितधूमप्रकारकज्ञाने विरहादित्याशंकते **न चेति**। वाच्यमितिपरेणान्वयः। **प्रकृतेति**। साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाभावबोधेच्छयोच्चरिततयेत्यर्थः। द्रव्यसाध्यकधूमहेतौ रासभतदभावसहचरितधूमवत्ताज्ञानमादायाऽतिव्याप्तिवारणाय साध्यतावच्छेदकपर्य्यन्तानुसरणम्। उत्तरयति—**एवंसतीति** कोटिद्वयपदस्य साध्यतदभावपरत्वे सति। एतल्लाभाय = कोटिद्वयपदस्य

❀ मनोरमा ❀

**एवं सति एतल्लाभायेत्यादि।** ननु कोटिद्वयपदस्य साध्यसाध्याभावपरत्वेऽपिसाध्योपस्थितिनि-

❀ गादाधरी ❀

ननु साध्यसन्देहजनकपक्षधर्मताज्ञानविषयत्वनिवेशेनैव सामञ्जस्ये कोटिद्वयोपस्थापकत्वांशनिवेशोऽनतिप्रयोजनक इत्याशङ्कामपनेतुं तत्प्रयो-

❀ विवृतिः ❀

साध्यतदभावपरत्वलाभाय । साध्यसंशयपदोपादानादिति । तथा च साध्यसंशयपदं कोटिद्वयपदस्य साध्यतदभावबोधकत्वतात्पर्यग्राहकमिति भावः । साध्यसंशयजनककोटिद्वयोपस्थितिजनकत्वस्य पक्षधर्मताज्ञानविशेषणत्वे साध्यसंशयजनकपक्षधर्मताज्ञानीयप्रकारताश्रयत्वस्य यद्रूपावच्छिन्नप्रकारताशालिज्ञानं साध्यसंशयजनकं तद्रूपवत्त्वस्य वा सव्यभिचारत्वस्वरूपतया पुरोवर्त्तिपर्वतो वह्निमान् धूमादित्यादौ पर्वतनिष्ठायाः धर्मितायाः अवच्छेदकीभूते पर्वतनिष्ठे पुरोवर्त्तित्वे वह्निव्याप्ये; तादृशे च ह्रदादिनिष्ठे पुरोवर्त्तित्वे वह्निविरुद्धे चातिव्याप्तिः । पुरोवर्तितावान् पर्वत इत्याकारकपक्षधर्मताज्ञानस्य पुरोवर्तिपर्वतो वह्निमान्न वेत्याकारकसंशयं प्रति धर्मितावच्छेदकप्रकारकज्ञानत्वेन जनकतया तादृशज्ञानीयप्रकारताश्रयत्वस्य,यद्रूपपदेन पुरोवर्त्तितात्वमुपादाय तद्रूपवत्त्वस्य च तादृशधर्मितावच्छेदके पुरोवर्तित्वे सत्त्वादतस्तादृशकोटिद्वयोपस्थितिजनकत्वेन पक्षधर्मताज्ञानं विशेषणीयम्, तथासति न तत्राऽतिव्याप्तिः। पुरोवर्त्तितावान्पर्वतइत्याकारकज्ञानस्य कोटिद्वयोपस्थित्यजनकत्वेन संशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानपदेन तादृशज्ञानस्योपादानाऽसम्भवात् इत्यादिरीत्या कोटिद्वयोपस्थापकत्वदलव्यावृत्तिमभिदधानानां दीधितिकृतांधर्मितावच्छेदकेत्यादि ग्रन्थमवतारयति नन्वि**त्यादि**। तत्प्रयोजनमाह = कोटिद्वयोपस्थापकत्वांशनिवेशनप्रयोजन-

❀ मनोरमा ❀

निष्ठजनकता साध्याभावोपस्थितिनिष्ठा च या जनकता प्रकृतसाध्यसंशयनिरूपितत्वेनावश्यं विशेषणीया, अन्यथा साध्योपस्थितिनिष्ठजनकतायां प्रकृतसाध्यसंशयनिरूपितत्वाऽविवक्षणे कालिकेन गोत्ववद्वृत्तिसमवायावच्छिन्नप्रतियोगिताकगोत्वाभाववद्वृत्त्यश्वत्ववानयमित्याकारकज्ञानमादाय अयं गोत्ववान् अश्वत्वादित्यादिविरुद्धेऽतिव्याप्तिः, निरुक्तज्ञानीयाऽश्वत्वप्रकारतायां गोत्वोपस्थितिजनकतावच्छेदकतायाः गोत्वाभावोपस्थितिजनकतावच्छेदकतायाश्च सत्त्वात्, एवं साध्याभावोपस्थितिनिष्ठजनकतायां साध्यसंशयनिरूपितत्वाऽनिवेशे संयोगेन वह्निमद्वृत्तिकालिकेन–वह्न्यभाववद्वृत्तिधूमवान् इत्याकारकज्ञानमादाय वह्निमान् धूमादित्यत्र व्याप्येऽतिव्याप्तिः । निरुक्तज्ञानीयधूमप्रकारतायाः अपि साध्यसाध्याभावोपस्थितिजनकतावच्छेदकत्वात् । तादृशजनकतायां साध्यसंशयनिरूपितत्वनिवेशे तु न तत्र तत्रातिव्याप्तिः, कालिकेन गोत्ववद्वृत्त्यश्वत्वप्रकारकज्ञानजन्यगोत्वोपस्थितेः कालिकेन वन्ह्यभाववद्वृत्तिधूमप्रकारकज्ञानजन्य वन्ह्यभावोपस्थितेश्च प्रकृतसाध्यसंशयाजनकत्वादिति कोटिद्वयपदस्य साध्यसाध्याभावपरत्वलाभायैव साध्यसंशयपदोपादानमित्यभिधानमसंगतमितिचेन्न, सहकारितावच्छेदकत्वघटितवक्ष्यमाणकल्पे साध्यसंशयनिवेशस्य प्रयोजनविरहेण तत्कल्पमभिप्रेत्यैव कोटिद्वयपदस्य साध्यसाध्याभावपरत्वे साध्यसंशयपदोपादानं निष्प्रयोजनमित्यस्यैवाभिहितत्वात् ॥ **केचित्त**–उभयकोटिसहचरितत्वावच्छिन्नैकप्रकारताशालिज्ञानमेव संशयजनकं न तु तत्तत्कोटिसह-

❀ गादाधरी ❀

जनमाह धर्मितावच्छेदकेति। तद्वारणाय=वह्न्यादिव्याप्ये तद्विरुद्धे वा पुरोवर्त्तित्वादौ वह्न्यादिव्यभिचारित्ववारणाय। कोटिद्वयेति। न च साध्यसन्देहजनकोपस्थितिजनकत्वमेव निवेश्यतां किमुपस्थितौ कोटिद्वयविषयकत्वनिवेशनेनेति वाच्यम्। तथासति व्याप्यविरुद्धयोरतिव्याप्तिः। तथाहि—

❀ विवृत्तिः ❀

माह। पर्वतनिष्ठपुरोवर्त्तित्वस्य वह्न्यादिव्याप्यतयाह्रदादिनिष्ठपुरोवर्त्तित्वस्य वह्न्यादिविरुद्धतया आह वह्न्यादिव्याप्ये विरुद्धे वेति। इदमुपलक्षणम्—कोटिद्वयोपस्थापकत्वांशस्याऽनिवेशे धूमवान् पर्वतोवह्निमानालोकादित्यत्र धूमवान्पर्वतइतिज्ञानमादाय वह्निव्याप्ये धूमे, जलत्ववानयं वह्निमान् द्रव्यत्वादित्यत्रापि जलत्ववानयमित्याकारकज्ञानमादायवह्निविरुद्धे जलत्वे चातिव्याप्तिरित्यपि द्रष्टव्यम्। उपस्थितौ कोटिद्वयविषयकत्वोपादानप्रयोजनमभिधातुं शंकते नचेति। वाच्यम् इतिपरेणान्वयः। धर्मितावच्छेदकपुरोवर्त्तित्वप्रकारकज्ञानस्योपस्थितिंप्रत्यप्यजनकत्वेन धर्मितावच्छेदकेऽतिव्याप्त्यभावात् उपस्थितौकोटिद्वयविषयकत्वोपादानमनर्थकमित्याशयः। उत्तरयति तथा सतीति। उपस्थितौ कोटिद्वयविषयकत्वस्यानुपादाने सतीत्यर्थः। व्याप्यविरुद्धयोः वह्निसाध्यकधूमवह्निसाध्यकजलत्वयोः। उपस्थितौ कोटिद्वयविषयकत्वानुपादाने यत्र प्रथमं वह्न्यभावसहचरितधूमवानितिज्ञानं ततो वह्निसहचरितधूमवान्इत्याकारकज्ञानं तदनन्तरं पूर्वज्ञानजन्या वह्न्यभावोपस्थितिस्ततो द्वितीयज्ञानजन्या वह्न्युपस्थितिस्तत्र निरुक्तवह्न्युपस्थितेरपि तादृशवह्न्यभावोपस्थितिसहकारेण साध्यसंशयजनकतया संशयजनकोपस्थितिपदेन वह्न्युपस्थितिमात्रमादाय तज्जनकीभूतं यत् वह्निसहचरितधूमवानिति ज्ञानं तद्विषयत्वस्य धूमे सत्त्वात्—वह्निमान् धूमादित्यादौवह्निव्याप्ये धूमेऽति व्याप्तिः। एवं यत्र प्रथमं वह्निसहचरितजलत्ववान् इतिज्ञानं ततो वह्न्यभावसहचरितजलत्ववानितिज्ञानं तदनन्तरं प्रथमज्ञानाधीना वह्न्युवस्थितिः ततो द्वितीयज्ञानाधीना वह्न्यभावोपस्थितिः तत्र निरुक्तवह्न्यभावोपस्थितेरपि तादृशवह्न्युपस्थितिसहकृतत्वेन साध्यसंशयजनकतया संशयजनकोपस्थितिपदेन वह्न्यभावोपस्थितिमात्रमादाय तज्जनकीभूतं यत् वह्न्यभावसहचरितजलत्ववानयमितिज्ञानं तद्विषयत्वस्य जलत्वे सत्त्वात् वह्निमान्जलत्वादित्यादौ वह्निविरुद्धे जलत्वे चातिव्याप्तिरतः कोटिद्वयविषयकत्वेनोपस्थितिरवश्यं विवक्षणीया, तथासति न तत्र तत्रातिव्याप्तिः। पूर्वोक्तप्रथमद्वितीयज्ञानयोः कस्यापि कोटिद्वयोपास्थितिजनकत्वाभावेन संशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानपदेन वह्निसहचरितधूमप्रकारकज्ञानस्य, वह्न्यभावसह-

❀ मनोरमा ❀

चरितत्वावच्छिन्नप्रकारताशालिज्ञानं तथा, इति मतेऽतिप्रसंगासम्भवेन तन्मतमवलम्ब्यैवैतल्लाभाये त्यादिकमभिहितमित्यप्याहुः॥

❀ गादाधरी ❀

संशयं प्रति तत्कोटिसहचरितधर्मवत्ताज्ञानजन्यतदुपस्थितित्वेन, तदभावकोटिसहचरितधर्मवत्ताज्ञानजन्यतदभावोपस्थितित्वेन च पृथगेव तत्तत्साहचर्यविषयतामन्तर्भाव्य हेतुता कल्प्यते। एवं तत्तत्कोट्युपस्थितिं प्रत्यपि तथैव तत्तत्कोटिसहचरितधर्मवत्ताज्ञानत्वेन हेतुता। इत्थञ्च वह्न्यभावसहचरितधूमवानितिज्ञानजन्यवह्न्यभावोपस्थितिसहकारेण वह्निसंशयजनकवह्न्युपस्थितिजनकीभूतं वह्निसहचरितधूमवानिति ज्ञानमादाय धूमे, वह्निसहचरितजलत्ववानितिज्ञानजन्यवह्न्युपस्थितिसहकारेण वह्निसंशयजनकवह्न्यभावोपस्थितिजनकीभूतं वह्न्यभावसहचरितजलत्ववानितिज्ञानमादाय च जलत्वेऽतिव्याप्तिः। कोटिद्वयोपस्थितिनिवेशे च तथाविधज्ञानयोः प्रत्येकं कोटिद्वयोपस्थापकत्वाभावान्नातिप्रसङ्गः। न च वह्नि-

❀ विवृतिः ❀

चरितजलत्वप्रकारकज्ञानस्य च उपादातुमशक्यत्वादित्यभिप्रेत्यातिव्याप्त्यादिसंगमनप्रकारं प्रदर्शयितुमाह-**तथाहीत्यादि**। **तत्कोटीति**। अव्यवहितोत्तरत्वसम्बन्धेन तत्कोटिसहचरितधर्मवत्ताज्ञानविशिष्टकोट्युपस्थितित्वेनेत्यर्थः। आत्माश्रयभयेन यथाश्रुतार्थाऽसंगतेः। एवमग्रेऽपि। **पृथगेवेति**। एवकारेण तत्तदभावसहचरितधर्मवत्ताज्ञानजन्योपस्थितित्वेन संशयजनकत्वव्यवच्छेदः। नन्वव्यवहितोत्तरत्वसम्बन्धेनोभयकोटिसाहचर्यावच्छिन्नैकप्रकारताशालिज्ञानविशिष्टकोट्युपस्थितित्वस्यैव तादृशज्ञानात्मकसाधारणज्ञानजन्यतावच्छेदकतया तस्यैव संशयजनकतावच्छेदकत्वमावश्यकम्, प्रत्येकसाहचर्यावच्छिन्नप्रकारताशालिज्ञानजन्यकोट्युपस्थितित्वस्य तथात्वाभिधानमसंगतमित्यत आह**एवमिति**। तथा च साधारणधर्मवत्ताज्ञानं प्रत्येककोटिसहचरितधर्मवत्ताज्ञानमेव परस्परज्ञानजन्यकोट्युपस्थितेः सहकारित्वोपगमाच्च नैकज्ञानाधीनकोट्युपस्थितितः संशयापत्तिरितिभावः। **तथाविधज्ञानयोरिति**। वह्न्यभावसहचरितधूमवान् वह्निसहचरितधूमवान्-इत्याद्याकारकयोर्ज्ञानयोरित्यर्थः। **प्रत्येकमिति**। केवलवह्निसहचरितधूमवानित्यादिज्ञानस्य, वह्निवह्न्यभावात्मककोटिद्वयविषयकोपस्थित्यजनकत्वादितिभावः। अत्रकोटिद्वयोपस्थापकत्वं तत्कोट्युपस्थितिजनकत्वे सति तदभावकोट्युपस्थितिजनकत्वरूपं बोद्धव्यम्, न तु कोटिद्वयविषयकैकोपस्थितिजनकत्वरूपं, तथा सति यादृशसाधारणज्ञानात् समूहालम्बनात्मिका विभिन्नकोटिद्वयोपस्थितिस्तादृशसाधारणेऽव्याप्तिप्रसंगः स्यादितिध्येयम्। ननु वह्न्यभावसहचरितधूमवान् वह्निसहचरितधूमवानित्याकारकयोर्विभिन्नज्ञानयोः प्रत्येकं साध्योपस्थितिजनकत्वसाध्याभावोपस्थितिजनकत्वरूपकोटिद्वयोपस्थितिजनकत्वाभावेऽपि यत्र वह्निसहचरितधूमवान्पर्वतः, वन्ह्यभावसहचरित-

❀ गादाधरी ❀

सहचरितधूमवान्वह्न्यभावसहचरितधूमवांश्च पर्वत इत्येतादृशसमूहालम्बनज्ञानस्य कोटिद्वयोपस्थापकत्वेन तद्दोषतादवस्थ्यमिति वाच्यम् । साध्योपस्थितिजनकतावच्छेदकीभूता या साध्याभावोपस्थितिजनकतावच्छेदकीभूतप्रकारता तदाश्रयत्वनिवेशात्तादृशसमूहालम्बनज्ञाननिरूपितयोः वह्नितदभावसाहचर्यावच्छिन्नप्रकारतयोः प्रत्येकन्तादृशजनकताद्वया-

❀ विवृतिः ❀

धूमवांश्च पर्वत इत्याकारकं समूहालम्बनात्मकमेकं ज्ञानं जातं तत्रैतादृशज्ञानस्य वह्न्युपस्थितिजनकत्वेन वह्न्यभावोपस्थितिजनकत्वेन च कोटिद्वयोपस्थापकतया तदीयविषयताश्रयत्वमादाय वह्निसाध्यकधूमेऽतिव्याप्तिर्दुर्वारैवेत्याशंक्य समाधत्ते-**साध्यविति।** प्रकृतसाध्यसंशयजनकसाध्योपस्थितिनिरूपितायाः जनकतायाः अवच्छेदकीभूता सती,प्रकृतसाध्यसंशयजनकसाध्याभावोपस्थितिनिरूपितायाः जनकताया अवच्छेदकीभूता या प्रकारता तदाश्रयत्वस्य निवेशादित्यर्थः। **अतिप्रसङ्गविरहादिति** । तथा च वह्निसहचरितधूमवान् वह्न्यभावसहचरितधूमवांश्चेत्याकारकसमूहालम्बनज्ञानीयवह्निसाहचर्य्यावच्छिन्नैका प्रकारता अपराच वह्न्यभावसाहचर्य्यावच्छिन्ना वह्निसाहचर्यावच्छिन्ना प्रकारता वह्न्युपस्थितिजनकतावच्छेदिका, वह्न्यभावसाहचर्यावच्छिन्ना प्रकारता वह्न्यभावोपस्थितिजनकताच्छेदिका तादृशोभयोपस्थितिजनकतावच्छेदिका च नैकापीति न तादृशसमूहालम्बनज्ञानमादाय वह्निसाध्यकधूमेऽतिव्याप्तिरितिभावः। धूमसहचरितवह्निमान् धूमाभावसहचरितवह्निमांश्च पर्वतइत्याकारकसमूहालम्बनज्ञानीयवह्निनिष्ठायाः प्रकारतायाः प्रकारतावच्छेदकधूमसहचरितत्वादिविशेष्यताभेदेन भिन्नतया धूमसहचरितत्वावच्छिन्नवह्निप्रकारतायाः धूमोपस्थितिजनकतावच्छेदकतया धूमाभावसहचरितत्वावच्छिन्नवह्निप्रकारतायाश्चधूमाभावोपस्थितिजनकतावच्छेदकतया कस्यामपि प्रकारतायां तादृशोपस्थितिद्वयजनकतावच्छेदकत्वविरहात् तादृशज्ञानमादाय यद्यपि पर्वतो धूमवान् वह्नेरित्यादौ वह्निरूपसाधारणे लक्षणसमन्वयो न सम्भवति तथापि समूहालम्बनानात्मकधूमधूमाभावोभयसहचरितत्वविशिष्टवह्निनिष्ठैकप्रकारताशालिधूमधूमाभावसहचरितवह्निमान्पर्वत इत्याकारकज्ञानमादाय तत्र लक्षणसमन्वयः सुघट एव । पूर्वोक्तसमूहालम्बनज्ञाने तत्तत्साहचर्य्यविशेष्यतया वह्न्यादेर्द्विधा भानांगीकारेण तन्निष्ठायाः प्रकारतायाः भेदेऽपि निरुक्तसमूहालम्बनानात्मकज्ञानीयोभयसाहचर्य्यनिरूपितैकविशेष्यतापन्नवह्न्यादिनिष्ठप्रकारतायाः भेदे मानाभावेन तादृशधूमधूमाभावोपस्थितिद्वयनिरूपितजनकतावच्छेदकतायास्तत्राप्यक्षतत्वादित्याह—**धूमेत्यादिलक्षणसमन्वयइत्यन्तेन** । नचैवं धूमसहचरितवह्निमान् धूमाभावसहचरितवह्निमांश्च पर्वतइत्याकारकंसमूहालम्बनज्ञानमेव यदा भवति नत्वन्यत् तदा धूमसाध्यकवह्निहेतौव्याप्तिरितिवाच्यम्

❀ गादाधरी ❀

वच्छेदकत्वविरहेणातिप्रसङ्गविरहात्। धूमसहचरितवह्निमान् धूमाभावसहचरितवह्निमांश्च पर्वत इत्यादिसमूहालम्बनज्ञाने प्रकारतावच्छेदकभेदेन वह्नयादिप्रकारताभेदात्प्रत्येकं कस्याश्चिदपि प्रकारतायास्तादृशजनकताद्वयावच्छेदकत्वासम्भवेऽपि धूमधूमाभावसहचरितवह्निमान्पर्वत इत्यादिज्ञानीयोभयसाहचर्यावच्छिन्नविलक्षणैकप्रकारतायास्तथात्वेन वह्नयादौ लक्षणसमन्वयः। वह्नितदभावसहचरितधूमवान्पर्वत इत्याकारकोभयसाहचर्यावच्छिन्नप्रकारताशालिज्ञानमादायातिप्रसङ्गस्तु तादृशप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वविवक्षया स्वयमेव निराकरिष्यते।

❀ विवृतिः ❀

कालान्तरीयसमूहालम्बनानात्मकोभयसाहचर्यावच्छिन्नवह्निनिष्ठैकप्रकारताशालिज्ञानीयप्रकारतामादाय तदानीमपि लक्षणसमन्वयसम्भवात् साधारणस्य नित्यदोषतया तदानीमुक्तहेतोरलक्ष्यताया वक्तुमशक्यत्वात् तादृशोपस्थितिद्वयजनकतावच्छेदकप्रकारताया उपलक्षणतयैव लक्षणे प्रवेशनीयत्वादितिभावः। नन्वेवमुभयसाहचर्यावच्छिन्नैकप्रकारताशालिज्ञानमादायैव चेल्लक्षणसमन्वयस्तदाऽव्याप्यविरूद्धयोरतिव्याप्तिः समूहालम्बनानात्मकवह्निवह्नयभावसहचरितधूमवान्जलत्ववान् वेत्याकारकभ्रमात्मकज्ञानीयोभयोपस्थितिजनकतावच्छेदकप्रकारतायाः धूमादौ सत्त्वादित्याशंक्य समाधत्ते **तादृशेति**। प्रकृतसाध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकतावच्छेदकसाध्योपस्थितित्वावच्छिन्नजन्यतानिरूपितायां जनकतायामवच्छेदकीभूता सती तादृशसाध्याभावोपस्थितित्वावच्छिन्नजन्यतानिरूपितायाम् जनकतायामवच्छेदकीभूता या प्रकारता तदवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वविवक्षयेत्यर्थः। स्वयमेव = दीधितिकृतैव। निराकरिष्यते = अतिप्रसंगइति योजना। तथा च तादृशप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणीभूतं यत् वह्नयभाववद्वृत्तित्वं तस्य वह्निव्याप्ये धूमे यच्च वह्निमद्वृत्तित्वं तस्य वह्निविरुद्धे जलत्वे विरहान्नातिव्याप्तिरितिभावः।

ननु साध्यसंशयजनकसाध्यविषयकोपस्थितिजनकतावच्छेदिका सती तादृशसाध्याभावविषयकोपस्थितिजनकतावच्छेदकीभूता या प्रकारतातदवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वस्य विवक्षणेऽपि यादृशस्थले वह्निमद्वृत्तिधूमवान् पर्वतइत्याकारकज्ञानमात्रतोवह्नयुपस्थितिः उद्बोधकान्तराधीनवह्नयभावविषयकोपस्थित्यात्मिकासमूहालम्बनरूपा जनिता तादृशस्थले निरुक्तोपस्थितेर्वह्निविषयकतयावह्नयुपस्थितित्वेन वह्नयभावविषयकतया वह्नयभावोपस्थितित्वेन च धर्तुं शक्यतया वह्नयुपस्थितिजनकतावच्छेदिकीभूतायाः वह्निमद्वृत्तिधूमवान् इत्याकारकज्ञानीयवह्निमद्वृत्तित्वावच्छिन्न धूमप्रकारतायाः वह्नयुपस्थित्यात्मकवह्नयभावविषयकोपस्थितेरपि जनकतावच्छेदकतया

❀ गादाधरी ❀

अथ वह्निसाहचर्यमात्रेण वह्न्यभावसाहचर्यमात्रेण वाऽवच्छिन्ना या व्याप्यस्य विरुद्धस्य वा प्रकारता तस्याः उद्बोधकान्तरवशात्साध्यतदभावोभयविषयकसमूहालम्बनोपस्थितिजनकज्ञानीयतया प्रत्येकं साध्योपस्थितिजनकतायां साध्याभावोपस्थितिजनकतायाञ्चावच्छेदकत्वेनातिप्रसङ्गः। यदि च साध्याविशेषणकोपस्थितिवृत्तिसाध्यसन्देहजनकतानियतं

❀ विवृतिः ❀

तदवच्छेदकतापर्य्याप्त्यधिकरणवह्निमद्वृत्तित्वमादाय वह्निव्याप्ये धूमे, यादृशस्थले च वह्न्यभाववद्वृत्तिजलत्ववानयमित्याकारकज्ञानमात्रात् वह्न्यभावोपस्थितिः उद्बोधकान्तराधीनवह्न्युपस्थित्यात्मिका समूहालम्बनरूपा जाता तादृशस्थलेऽपि वह्न्यभावोपस्थितिजनकतावच्छेदिकायास्तादृशज्ञानीयवह्न्यभाववद्वृत्तित्वावच्छिन्नजलत्वप्रकारतायाः वह्न्यभावोपस्थित्यात्मकवह्न्युपस्थितेरपि जनकतावच्छेदकतया तादृशप्रकारतावच्छेदकतापर्याप्त्यधिकरणवह्न्यभाववद्वृत्तित्वमादाय वह्निसाध्यकजलत्वे वह्निविरुद्धेचातिव्याप्तिर्दुर्वारैवेत्यांशकते **अथेति। वह्नीत्यादि।** वह्निमद्वृत्तित्वमात्रावच्छिन्ना या वह्निसहचरितधूमवान्पर्वतइत्याकारकज्ञानीयवह्निव्याप्यस्य धूमस्य प्रकारता या च वह्न्यभाववद्वृत्तित्वमात्रावच्छिन्नावह्न्यभावसहचरितजलत्ववानयमित्याकारकज्ञानीया वह्निविरुद्धस्य जलत्वस्य प्रकारता तस्या इति समुदितार्थः। **उद्बोधकेति।** व्याप्यस्थले वह्न्यभाववद्वृत्तिधूमप्रकारकज्ञानातिरिक्तोद्बोधकवशात् विरुद्धस्थले च वह्निमद्वृत्तिजलत्वप्रकारकज्ञानातिरिक्तोद्बोधकवशादित्यर्थः। **साध्येति।** साध्यसाध्याभावविषयिणी या समूहालम्बनरूपोपस्थितिस्तज्जनकीभूतं यत् वह्निसहचरितधूमवानित्याकारकं ज्ञानं यच्च वह्न्यभावसहचरितजलत्ववानित्याकारक ज्ञानं तन्निरूपितत्वेनेत्यर्थः। केवलवह्निमद्वृत्तित्वावच्छिन्नप्रकारकज्ञानाधीनोपस्थितेरपि संशयजनकतायाः पूर्वं व्यवस्थापितत्वादित्याशयः। अव**च्छेदकत्वेनेति।** साध्योपस्थित्यादिजनकतावच्छेदकप्रकारताया एव साध्योपस्थित्यात्मक समूहालम्बनरूप साध्याभावोपस्थित्यादिजनकतावच्छेदकत्वेन कोटिद्वयोपस्थितिजनकतावच्छेदकतायाः केवलैककोटिमत्वृत्तित्वाद्यवच्छिन्नप्रकारतायामक्षतत्वादितिभावः। **अतिप्रसङ्गइति** न च कोटिद्वयोपस्थितौ प्रकृतपक्षधर्मताज्ञानभिन्नाजन्यत्वविवक्षणान्नायमतिप्रसंग इति वाच्यम्। यादृशासाधारणधर्मवद्धर्मिज्ञानजन्यकोटिद्वयोपस्थितिरवश्यमुद्बोधकान्तराधीनैव भवति तादृशासाधारणेऽव्याप्त्यापत्तेः। असाधारणधर्मवद्धर्मिज्ञानभिन्नाजन्यकोटिद्वयोपस्थितेरप्रसिद्धेः। कोटिद्वयोपस्थितौ प्रकृतपक्षधर्मताज्ञानजन्यतानवच्छेदकोद्बोधकान्तरजन्यतावच्छेदकविषयताशून्यत्वं निवेश्यातिव्याप्तिवारणं तु सुधीभिर्विवेचनीयम्। उक्तातिव्याप्तिं वारयितुं शकते **यदिचेति।** उच्यतेइतिपरेणा-

❀ गादाधरी ❀

यज्जन्यत्वं तन्निरूपितायां साध्याविशेषणकोपस्थित्यवृत्तिसाध्यसन्देहजन-

❀ विवृतिः ❀

न्वयः । समूहालम्बनोपस्थितेर्लक्षणाघटकत्वसम्पादनायाह **साध्येत्यादि** । साध्यमविशेषणं यत्रोपस्थितौ तादृशी या साध्याविशेषणिका साध्याभावाविषयिणी साध्यमित्याकारिकोपस्थितिस्तत्र वर्त्तमानं यत् साध्यसंशयत्वन्यूनवृत्ति-जन्यतानिरूपितजनकताव्याप्यं जन्यत्वं तन्निरूपितायां जनकतायामवच्छेदकीभूता सती तादृशी साध्यमित्याकारिका या उपस्थितिस्तत्रावर्तमानं यत् साध्यसंशयत्वन्यूनवृत्ति-जन्यतानिरूपितजनकताव्याप्यंजन्यत्वं तन्निरूपितायां जनकतायामवच्छेदकीभूता या-प्रकारता तदवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचारत्वमिति साध्यसंशयजनकतानियतत्वनिवेशपक्षे समुदितार्थः पर्य्यवसितः । विरुद्धवारणायसत्यन्तं । अन्यथाकेवलवह्न्यभाववद्वृत्तिजलत्ववानयमित्याकारकज्ञानजन्यतायाः असमूहालम्बनात्मिकायामपि वह्न्यभावोपस्थितौ वर्तमानतया साध्याऽविशेषणकसाध्योपस्थिताववर्तमानत्वात् साध्यसंशयजनकतानियततादृशजन्यतानिरूपितजनकतावच्छेदकताया निरुक्तज्ञानीयजलत्वप्रकारतायांसत्वेन विशेष्यदलाक्रान्ततया तामादाय वह्निविरुद्धे-जलत्वेऽतिव्याप्तिः स्यात् । व्याप्यवारणाय-विशेष्यदलमन्यथा केवलवह्निमद्वृत्तिधूमवान् पर्वतइत्याकारकज्ञानजन्यतायाः असमूहालम्बनात्मिकायांसाध्याविशेषणकसा-

❀ मनोरमा ❀

**साध्याऽविशेषणकेत्यादि ।** साध्यतावच्छेदकावच्छिन्नविशेषणताशून्यैवात्रोपस्थितिर्वक्तव्या, तेन समवायेन प्रमेयसाध्यके साध्यनिष्ठविशेषणताशून्योपस्थित्यप्रसिद्धावपि भावत्वादिहेतौ व्यभिचारिणि नाव्याप्तिः । न चैवं द्रव्यं सत्त्वादित्यत्र साध्यतावच्छेदकस्याप्रसिद्ध्याऽव्यप्तिप्रसङ्ग इति वाच्यम् । तादृशस्थले साध्यनिष्ठविशेषणताशून्यत्वस्यैव विवक्षणीयत्वादिति वदन्ति ।

**केचित्तु ।** साध्यसाध्याभाववद्वृत्तित्वेन हेतुज्ञानस्येव साध्यवत्तदन्यवृत्तित्वेन हेतुज्ञानस्यापि संशयजनकत्वस्यावश्यकतया तादृशस्थले साध्यावच्छिन्नविशेषणताशून्यैवोपस्थितिर्वक्तव्या, तथा च द्रव्यतदन्यवृत्तिसत्ताप्रकारकज्ञानमादायैव तत्र लक्षणसमन्वय इत्यप्याहुस्तच्चिन्त्यम् ।

वस्तुतो वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वमते अवच्छेदकत्वसम्बन्धावच्छिन्न-प्रतियोगिताकसाध्यत्वाभाववद्धर्मानवच्छिन्नविशेषणताशून्यैवोपस्थितिरत्र लक्षणे विवक्षणीया तेन न प्रमेयसाध्यकेऽव्याप्तिर्न वा द्रव्यं सत्त्वादित्यत्राप्यव्याप्तिरिति तु युक्तमुत्पश्यामः ।

ननु साध्याविशेषणकोपस्थितिवृत्तियत्किंचिज्जनकतानियतं जन्यत्वं तादृशोपस्थित्यवृत्तियत्किंचिज्जनकतानियतं यज्जन्यत्वमित्यादिरीत्या निवेशनेनैव सामञ्जस्ये उभयत्र साध्यसंशयनिरूपितत्वेन जनकताविवक्षणं व्यर्थमितिचेन्न । यादृशस्थले रासभतदभावसहचरितधूमवान् इत्याकारकज्ञानादेका रासभोपस्थितिरपरोद्बोधकान्तराधीनवन्ह्यभावविषयकोपस्थित्यात्मिका समूहालम्बनरूपैव रासभाभावोपस्थितिर्जनिता न तु वन्ह्यभावमविषयीकृत्य कदापि जाता तादृशस्थले निरुक्तज्ञानमादाय वह्निसाध्यकधूमेऽतिव्याप्त्यापत्तेः । साध्याविशेषणकरासभोपस्थितिनिष्ठयत्किंचिद्रासभ-

❀ विवृतिः ❀

ध्योपस्थितावपि वर्त्तमानतया साध्यसंशयजनकतानियतताद्दशजन्यतानिरूपितजनकतावच्छेदकत्वस्य निरुक्तज्ञानीयधूमप्रकारतायां सत्त्वेन सत्यन्तदलाक्रान्ततया तामादाय वह्निव्याप्ये धूमेऽतिप्रसंगःस्यात्। विशेष्यदले नञ्द्वयमपहाय साध्यविशेषणकोपस्थितिवृत्तित्वमात्रस्य साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकतानियतजन्यतायां विवक्षणे वह्निव्याप्येधूमेऽतिव्याप्तिः,केवलवह्निसहचरितधूमवान् पर्वतइत्याकारकज्ञानजन्यताया उद्बोधकान्तराधीन वह्न्यभावविषयकवह्निविषयकसमूहालम्बनरूपायां साध्यविशेषणकोपस्थितौ वर्तमानतया ताद्दशजन्यतानिरूपितजनकतावच्छेदकत्वस्य निरुक्तज्ञानीयधूमप्रकारतायां सत्त्वादतो नञ्द्वयोपादानं। एवञ्च न वह्निव्याप्ये न वा वह्निविरुद्धेचातिव्याप्तिः। केवलवह्निमद्वृत्तिधूमवान् पर्वतइत्याकारकज्ञानजन्यतायाः साध्यसंशयजनकीभूतायां वह्न्यविशेषणकासमूहालम्बनवह्निविषयकोपस्थितौ वर्त्तमानत्वेऽपि साध्यसंशयजनकीभूतायां वह्न्युपस्थित्यनात्मकवह्न्यभावविषयकोपस्थितौ अवर्तमानत्वेन साध्याविशेषणकोपस्थित्यवृत्तिसाध्यसंशयजनकताव्याप्यजन्यतापदेन ताद्दशज्ञानजन्यताया धर्तुमशक्यत्वात्। केवलवह्न्यभाववद्वृत्तिजलत्ववानयमित्याकारकज्ञानजन्यतायाः साध्यसंशयजनकीभूतायां साध्योपस्थित्यनात्मकासमूहालम्बनवह्न्यभावोपस्थितौ वर्त्तमानतया साध्याविशेषणकासमूहालम्बनात्मकसाध्यविषयकोपस्थित्यवृत्तित्वेऽपि वह्निसंशयजनकीभूतायां वह्न्यविशेषणकासमूहालम्बनात्मकवह्न्युपस्थितावर्त्तमानत्वात् साध्याऽविशेषणकोपस्थितिवृत्तिसाध्यसंशयजनकतानियतजन्यतापदेननि-

❀ मनोरमा ❀

संशयजनकतानियतजन्यतानिरूपितजनकतावच्छेदकतायास्ताद्दशोपस्थित्यवृत्तिनिरुक्तसमूहालम्बनोपस्थितिनिष्ठनिरुक्तजनकतानियतजन्यतानिरूपितजनकतावच्छेदकतायाश्च निरुक्तज्ञानीयधूमप्रकारतायां सत्त्वात्। साध्यसंशयनिरूपितजनकतानिवेशे तु न ताद्दशज्ञानमादायातिव्याप्तिः निरुक्तज्ञानाधीनाया कस्याऽपि रासभाद्युपस्थितेर्वह्निसंशयाजनकत्वेन साध्याविशेषणकसाध्यसंशयजनकोपस्थितिपदेन रासभाद्युपस्थितेर्धर्तुमशक्यत्वादिति ध्येयम्। साध्याविशेषणकोपस्थितिवृत्तिजनकतायां साध्यसंशयनिरूपितत्वानिवेशे गोत्ववान् अश्वत्वादित्यत्र विरुद्धेऽतिव्याप्तिः गोत्ववद्वृत्तिद्रव्यत्ववद्वृत्तिगोत्वाभाववद्वृत्त्यअश्वत्ववान् अयमित्याकारकज्ञानाधीनगोत्वोपस्थितेरपि विशिष्टबुद्धिजनकतया ताद्दशोपस्थितिवृत्तियत्किंचिज्जनकतानियतजन्यतानिरूपितजनकतावच्छेदकीभूतायास्ताद्दशोपस्थित्यवृत्तिगोत्वाभावोपस्थितिनिष्ठगोत्वसंशयजनकतानियतजन्यतानिरूपितजनकतावच्छेदकीभूतायाश्चाश्वत्वप्रकारतायाः अश्वत्वे सत्त्वादतः प्रथमसाध्यसंशयपदोपादानं, तदुपादाने तु न तत्रातिव्याप्तिः, निरुक्तज्ञानजन्यगोत्वोपस्थितेः साध्यीभूतगोत्वसंशयाजनकत्वात्। साध्याविशेषणकोपस्थित्यवृत्तिजनकतायां साध्यसंशयनिरूपितत्वाविवक्षणे वह्निमान् धूमादित्यत्र व्याप्येऽतिव्याप्तिः। वह्निमद्वृत्तिवह्न्यभावद्वृत्तिप्रमेयत्ववद्वृत्तिधूमवानयमित्याकारकज्ञानजन्यवह्न्यभावोपस्थितेरपि यत्किंचिद्विशिष्टबुद्धिजनकतया साध्याविशेषणकसाध्यसंशयजनकवह्न्युपस्थितिजनकतावच्छेदकत्वस्य ताद्दशोपस्थित्यवृत्तियत्किंचिज्जनकवह्न्यभावोपस्थितिजनकतावच्छेदकत्वस्य च निरुक्तज्ञानीयधूमप्रकारतायां सत्त्वात्। अतो द्वितीयसाध्य-

❀ विवृतिः ❀

रुक्तज्ञानीयजन्यतायाः धर्तुमशक्यत्वात्। पर्वतोधूमवान्वह्नेरित्यादौ धूमधूमाभावसहचरितवह्निमान्पर्वतइत्याकारकज्ञानाधीनां असमूहालम्बनात्मिकां विभिन्नां धूमोपस्थितिं धूमाभावोपस्थितिञ्चादाय लक्षणसमन्वयः, धूमधूमाभावसहचरितवह्निमान् इत्याकारकज्ञानजन्यतायाः धूमसंशयजनकीभूतायां धूमाविशेषणकधूमोपस्थितौवर्त्तमानतया तादृशोपस्थितिवृत्तित्वेन तादृश्यांकेवलधूमाभावोपस्थितौ वर्त्तमानत्वेनधूमाविशेषणकधूमोपस्थित्यवृत्तित्वेनच धर्तुं शक्यत्वात्। अन्यत्सर्वमूस्वयमूहनीयम्। वस्तुतोयद्रूपावच्छिन्नप्रकारताशालिज्ञाननिरूपितंजन्यत्वं साध्याभावाविषयकसाध्यविषयकोपस्थितौवर्त्तमानं तादृशोपस्थितिभिन्नायां साध्याभावोपस्थितौचवर्त्तमानंसाध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकताव्याप्यं भवति तद्रूपवत्त्वमितिफलितम्। केवलवह्निमद्वृत्तिधूमत्वावच्छिन्नप्रकारताकज्ञानजन्यतायाः वह्न्यभावाविषयकवह्न्युपस्थितौवर्त्तमानत्वेऽपि तादृशोपस्थितिभिन्नायां केवलवह्न्यभावोपस्थिताववर्त्तमानत्वेन यद्रूपदेनवह्निमद्वृत्तित्वविशिष्टधूमत्वस्योपादानासम्भवात् न वह्निव्याप्येधूमे, वह्न्यभाववद्वृत्तिजलत्वत्वावच्छिन्नप्रकारताकज्ञानजन्यतायाश्च वह्न्यभावाविषयकवह्न्युपस्थितिभिन्नायां केवलवह्न्यभावोपस्थितौ वर्त्तमानत्वेऽपि वह्न्यभावाविषयकवह्न्युप-

❀ मनोरमा ❀

संशयपदोपादानम्। तदुपादाने तु न तत्रातिव्याप्तिः, पूर्वोक्तज्ञानाधीनवह्न्यभावोपस्थितेः साध्यीभूतवह्निसंशयाजनकत्वादिति साम्प्रदायिका वदन्ति॥

केचित्तु कालिकेन गोत्ववद्वृत्तिगोत्वाभाववद्वृत्त्यश्वत्ववानयमित्याकारकज्ञानमादाय समवायेन गोत्वसाध्यकविरुद्धेऽश्वत्वेऽतिव्याप्तिवारणाय प्रथमं साध्यसंशयपदं, वह्निमद्वृत्तिकालिकेन–वह्न्यभाववद्वृत्तिधूमवानयमित्याकारकज्ञानमादाय संयोगेन वह्निसाध्यकव्याप्ये धूमेऽतिव्याप्तिवारणाय द्वितीयमपि साध्यसंशयपदोपादानं सार्थकमित्यप्याहुः॥

ननूद्बोधकान्तराधीनसाध्याभावादिविषयकसमूहालम्बनोपस्थितिमादायातिव्याप्तिवारणार्थं साध्याविशेषणकेत्यादिगुरुतरनिवेशो निरर्थकः साध्यसंशयत्वावाच्छिन्नजन्यतानिरूपितजनकताविशिष्टप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वविवक्षणेनैव तादृशोपस्थितिमादायातिव्याप्तेर्वारणसम्भवात्। जनकतावैशिष्ट्यं च प्रकारतायां स्वनियतजन्यतानिरूपितजनकतावच्छेदकत्व–स्वभिन्नसाध्यसंशयजनकतानियतजन्यतानिरूपितजनकतावच्छेदकत्वोभयसम्बन्धेनेतिचेन्न, निरुक्तपरम्परायाः संसर्गत्वमनभ्युपगम्यैव साध्याविशेषणकेत्यादेरभिहितत्वात्। जनकतायाः प्रतिव्यक्तिभिन्नत्वमते निरुक्तोद्बोधकान्तराधीनसमूहालम्बनोपस्थितिमादाय तथाविवक्षणेऽतिव्याप्तेरवारणाच्च॥

अथ साध्याविशेषणकोपस्थितिवृत्तिसाध्यसंशयजनकतासमानाधिकरणं यज्जन्यत्वमित्यादिरीत्या निवेशेनैव सामञ्जस्ये जन्यतायां तादृशजनकतानियतत्वविशेषणं निरर्थकमिति चेन्न। यादृशस्थले नित्यत्वतदभावसहचरितप्रमेयत्ववानयं––नित्यत्वतदभावविषयकज्ञानवांश्चायमित्याकारकज्ञानाभ्याम् एकैव समूहालम्बनात्मिका नित्यत्वोपस्थितिर्नित्यत्वाभावोपस्थितिश्च जनिता तादृशस्थले नित्यत्वसाध्यकज्ञानहेतावतिव्याप्तिः, साध्याविशेषणकनिरुक्तनित्यत्वाद्युपस्थितिवृत्तिसाध्यसंशयजनकता-

## ❀ विवृतिः ❀

स्थितावर्त्तमानत्वेन यद्रूपपदेन वन्ह्यभाववद्वृत्तित्वविशिष्टजलत्वत्वस्योपादानासंभवात् न वह्निविरुद्धेजलत्वेचातिव्याप्तिः। धूमवान् वह्नेरित्यादौ धूमाभावसहचरितवह्नित्वावच्छिन्नप्रकारताकज्ञानाधीनायां असमूहालम्बनात्मिकायां धूमाभावाविषयकधूमोपस्थितौताद्दशोपस्थितिभिन्नायां धूमाभावोपस्थितौच निरुक्तज्ञानजन्यतायाः वर्त्तमानत्वेन यद्रूपपदेन धूमधूमाभावसहचरितत्वविशिष्ठवह्नित्वस्य धर्तुं शक्यतया निरुक्तयैव रीत्याअन्यत्रसर्वत्रलक्षणसमन्वयइत्यन्यत्रविस्तरः। ननु याद्दशसाधारणादिधर्मवद्धर्मिज्ञानजन्या साध्यसाध्याभावोपस्थितिः साध्यविषयकसाध्याभावविषयकसमूहालम्बनरूपैवभवति नतु कदाचिदपि असमूहालम्बनात्मिका ताद्दशसाधारणादिहेतावव्याप्तिः साध्याविशेषणकोपस्थितेरप्रसिद्धत्वात् इत्याशयेनसंशयजनकतावच्छेदकावच्छिन्नत्वेन जन्यतानिवेशपक्षेऽपिनिरुक्तामतिव्याप्तिं वारयितुमाह**साध्याभावेत्यादि**। साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितायां जनकतायामवच्छेदकीभूतो यः साध्याभावविषयकत्वघटितः साध्याभावविषयकोपस्थितित्वरूपोधर्मस्तदवच्छिन्नजन्यतानिरूपितायांजनकतायामवच्छेदकीभूता सती साध्यसंशयजनकसाध्याभावविषयकत्वानवच्छिन्ना या साध्यसंशयजनकता तदवच्छेदकीभूतोयः साध्यविषयकोपस्थितित्वरूपोधर्मस्तदवच्छिन्नायाजन्यताः अथवासाध्यसंशयजनकतावच्छेदकीभूतोयः साध्याभावविषयकोपस्थितित्वभिन्नः साध्यविषयकोपस्थितित्वरूपोधर्मस्तदवच्छिन्नायाजन्यतातन्निरूपितायां जनकतायाञ्चावच्छेदकीभूतायाप्रकारतातदवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वमिति समुदितार्थः। केवलवह्निसहचरितधूमवान् पर्वतइत्याकारकज्ञानीयवह्निमद्वृत्तित्वावच्छिन्नधूमप्रकारतायाः साध्याभावविषयकोपस्थितित्वानवच्छिन्नसाध्यसंशयजनकतावच्छेदकसाध्यविषयकोपस्थितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वेनविशेष्यदलाक्रान्ततया ताद्दशीं धूमप्रकारतामादाय वह्निव्याप्ये धूमेऽतिव्याप्तिरतः सत्यन्तोपादानं

## ❀ मनोरमा ❀

सामानाधिकरण्यस्य नित्यत्वतदभावविषयकज्ञानप्रकारकज्ञानजन्यतायां सत्त्वात् नियतपदोपादाने तु न तत्रातिव्याप्तिः। संशयजनकताशून्यायामपि केवलनित्यत्वतदभावविषयकज्ञानप्रकारकज्ञानाधीननित्यत्वाद्युपस्थितौ निरुक्तज्ञानजन्यतायाः सत्त्वेन नित्यत्वतदभावविषयकज्ञानजन्यतायां साध्यसंशयजनकतानियतत्वविरहात्।

न च साध्याविशेषणकोपस्थितिवृत्तिसाध्यसंशयजनकतानियतजन्यत्वमात्रस्य ताद्दशोपस्थित्यवृत्तिताद्दशजनकतानियतजन्यत्वमात्रस्य वा विवक्षणेनैवोक्तज्ञानद्वयाधीनोपस्थितिमादायातिप्रसंगवारणसम्भवे उभयत्र जन्यतायां नियतत्वविशेषणोपादानं व्यर्थमिति वाच्यम्। प्रथमजन्यतायो ताद्दशजनकतानियतत्वविशेषणानुपादाने याद्दशस्थले नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानजन्यैकैव नित्यत्वाभावोपस्थितिर्नियमतो नित्यत्वाभावसहचरितप्रमेयत्वज्ञानजन्यैव भवति न तु कदाचिदपि ताद्दशज्ञानानधीना जायते, नित्यत्वसहचरितप्रमेयत्वज्ञानजन्या नित्यत्वोपस्थितिस्तु नित्यत्वतदभाव-

❀ विवृतिः ❀

केवलवह्न्यभावसहचरितजलत्ववानयमित्याकारकज्ञानीय वन्ह्यभाववद्वृत्तित्वावच्छिन्नजलत्वप्रकारतायाः साध्यसंशयजनकतावच्छेदकसाध्याभावविषयकत्वघटितसाध्याभावविषयकोपस्थितित्वावच्छिन्नजन्यतानिरूपित जनकतावच्छेदकत्वेन सत्यन्तदलाक्रान्ततया तादृशीं जलत्वप्रकारतामादाय वह्निविरुद्धे जलत्वेचातिव्याप्तिरतोविशेष्यदलोपादानमित्यवधेयं, एवं चोक्तोद्बोधकाधीनसमूहालम्बनोपस्थितिमादाय न व्याप्यविरुद्धयोरतिव्याप्तिः । वह्निसहचरितधूमवान् पर्वतइत्याकारकज्ञानीयधूमप्रकारतायाः संशयजनकतावच्छेदकवह्न्यभावरूपसाध्याभावोपस्थितित्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वात् तादृशज्ञानजन्यतावच्छेदककोटौ साध्याभावविषयकत्वस्याप्रवेशात्—वह्न्यभावसहचरितजलत्ववानयमित्याकारकज्ञानीयजलत्वप्रकारतायाश्चसाध्यसंशयजनकतावच्छेदकवह्न्युपस्थितित्वरूपसाध्यविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वात् निरुक्तज्ञानजन्यतावच्छेदककोटौसाध्योपस्थितित्वस्याप्रवेशात् । धूमधूमाभावसहचरितवह्निमान्पर्वतइत्याकारकज्ञानीयधूमधूमाभाववद्वृत्तित्वावच्छिन्नवह्निप्रकारतायाः संशयजनकतावच्छेदकधूमाभावविषयकत्वघटितधूमाभावविषयकोपस्थितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वेन, धूमाभावविषयकत्वानवच्छिन्नधूमविषयकत्वघटितधूमोपस्थितित्वरूपसाध्यसंशयजनकताव-

❀ मनोरमा ❀

विषयकज्ञानतादृशज्ञानद्वयाधीनाकदाचित्केवलनित्यत्वतदभावविषयकज्ञानजन्यापि भवति तादृशस्थले नित्यत्वसाध्यकज्ञानेऽतिव्याप्त्यापत्तेः । साध्याविशेषणकनित्यत्वोपस्थितिवृत्तिसाध्यसंशयजनकतासामानाधिकरण्यस्य तादृशोपस्थित्यवृत्तिसाध्यसंशयजनकतानियतत्वस्य च नित्यत्वतदभावविषयकज्ञानजन्यतायां वर्त्तमानत्वात् । द्वितीयजन्यतायां तादृशजनकतानियतत्वविशेषणानुपादाने यादृशस्थले नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानजन्या नित्यत्वोपस्थितिर्नियमतो नित्यत्वसहचरितप्रमेयत्वज्ञानजन्यैव भवति न तु तादृशज्ञानानधीना कदापि जायते, नित्यत्वाभावसहचरितप्रमेयत्वज्ञानाधीना नित्यत्वाभावोपस्थितिस्तु कदाचिन्नित्यत्वतदभावविषयकज्ञानप्रकारकज्ञानतादृशज्ञानद्वयजन्या कदाचिच्च केवलनित्यत्वतदभावविषयकज्ञानजन्यापि भवति तादृशस्थले नित्यो ज्ञानादित्यत्र ज्ञानेऽतिव्याप्त्यापत्तेः । साध्याविशेषणकतादृशनित्यत्वोपस्थितिवृत्तिसाध्यसंशयजनकतानियतत्वस्य साध्याविशेषणकोपस्थित्यवृत्तिनिरुक्तनित्यत्वाभावोपस्थितिवृत्तिसाध्यसंशयजनकतासामानाधिकरण्यस्य च नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानजन्यतायां सत्त्वात् । न चैवं यादृशस्थले नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानजन्यनित्यत्वाद्युपस्थितिः सर्वदैव नित्यत्वतदभावसहचरितप्रमेयत्वप्रकारकज्ञानजन्यैव भवति तादृशस्थले नित्यत्वसाध्यकज्ञानेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् । तादृशस्थलस्याप्रामाणिकत्वात् , प्रामाणिकत्वे तु तथा चेति कल्पान्तरानुसरणस्य कृतत्वादिति तु विभावनीयम् ॥

न च साध्याविशेषणकवृत्तिसाध्यसंशयजनकतेत्यादिरीत्या निवेशेनैव सामञ्जस्ये प्रथमोपस्थितिपदं व्यर्थमिति वाच्यम् । वह्निमान् जलत्वादित्यत्र विरुद्धेऽतिव्याप्त्यापत्तेः, वह्न्यभावसहचरितद्र-

❀ गादाधरी ❀

कतानियतञ्च यज्जन्यत्वं तन्निरूपितायाञ्च जनकतायामवच्छेदिका या

❀ विवृतिः ❀

च्छेदकावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वेन च लक्षणघटकत्वात्तामादायैव धूमादिसाध्यकवह्न्यादौ लक्षणसमन्वयः। यादृशस्थले यादृशसाधारणधर्मवद्धर्मिज्ञानाधीनासमूहालम्बनरूपैव कोटिद्वयोपस्थितिस्तादृशस्थलेऽपितादृशज्ञानीयसाधारणप्रकारतायाः साध्यसंशयजनकतावच्छेदकसाध्याभावविषयकोपस्थितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वेन साध्याभावविषयकत्वानवच्छिन्नसाध्यसंशयजनकतावच्छेदकसाध्योपस्थितित्वावच्छिन्नजन्यतानिरुपितजनकतावच्छेदकत्वेन च धत्तुं शक्यत्वात् तामादायैवतादृशसाधारणेलक्षणसंगतिर्बोद्धव्या। साध्याभावविषयकत्वघटितधर्मे संशयजनकतावच्छेदकत्वाऽनिवेशे वह्न्यभावकालीनवह्निसहचररितधूमवान् इत्याकारकज्ञानमादाय वह्निव्याप्यधूमेऽतिप्रसंगः। साध्यविषयकत्वघटितधर्मे साध्यसंशयजनकतावच्छेदकत्वानिवेशे च वह्निकालीनवह्न्यभावसहचरितजलत्ववान् इत्याकारकज्ञानमादाय वह्निविरुद्धेजलत्वेऽतिप्रसङ्गः; अतस्तादृशतादृशधर्मः साध्यसंशयजनकतावच्छेदकत्वेनविशेषणीय इति ध्येयम्। न च साध्यसंशयजनकतावच्छेदकसाध्याभावविषयकोपस्थितित्वावच्छिन्नजन्यतयाः स्तादृशसाध्यविषयकोपस्थितित्वावच्छिन्नजन्यतायाश्च प्रवेशेनैवोपपत्तौ घटितत्वांशनिवेशनं व्यर्थमितिवाच्यम्। तथा सति उद्बोधकान्तराधीनसमूहालम्बनोपस्थितेरपि साध्याभाव-

❀ मनोरमा ❀

व्यत्वसहचरितजलत्ववान् इत्याकारकज्ञानजन्यवह्न्यभावोपस्थितित्वावच्छिन्नसाध्यसंशयजनकतायाः साध्याविशेषणकोपस्थित्यवर्त्तमानतया तादृशजनकतानियतजन्यतानिरूपितजनकतावच्छेदकत्वस्य द्रव्यत्वसहचरितजलत्ववत्वान् वह्निमान्न वेत्याकारकसंशयजनकधर्मिज्ञानात्मकद्रव्यत्वसहचरित जलत्ववानित्याकारकज्ञाननिष्ठनिरुक्तसाध्यसंशयजनकतायाः साध्याविशेषणके वर्त्तमानतया तादृशजनकतानियतं यद् द्रव्यत्वसहचरितजलत्वविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं जन्यत्वं तन्निरूपितायां च जनकतायामवच्छेदकत्वस्य पूर्वोक्तज्ञानीयजलत्वप्रकारतायां सत्त्वात् ॥

न च तथापि साध्याविशेषणकावृत्तिसाध्यसंशयजनकतानियतत्वमेव जन्यतायां विवक्ष्यतां किं द्वितीयोपस्थितिपदेनेति वाच्यम्। तथासति वह्निसहचरितवह्निमत्कालीनद्रव्यत्वसहचरितधूमवान्-पर्वत इत्याकारकज्ञानमादाय वह्निव्याप्ये धूमेऽतिव्याप्त्यापत्तेः; निरुक्तज्ञानीयधूमप्रकारतायां साध्याविशेषणकवह्न्युपस्थितिनिष्ठसाध्यसंदेहजनकतानियतजन्यतानिरूपितजनकतावच्छेदकत्वस्य, साध्यविशेषणकावृत्तियद्वह्निमत्कालीनद्रव्यत्वसहचरितधूमवत्पर्वतवान् वह्निमान्नवेत्याकारकसंशयजनकधर्मिज्ञानात्मकवह्निमत्कालीनद्रव्यत्वसहचरितधूमवान् पर्वतइत्याकारकज्ञाननिष्ठं निरुक्तसाध्यसंशयजनकत्वं तन्नियतं यत् तादृशधूमविशिष्टपर्वतवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं जन्यत्वं तन्निरूपितायां जनकतायामवच्छेदकत्वस्य च सत्त्वात् उपस्थितिपदोपादाने तु साध्याविशेषणकोपस्थित्यवृत्त्युपस्थितित्वावच्छिन्नजनकतालाभान्न निरुक्तज्ञानमादायातिव्याप्तिः। धर्मिज्ञाननिष्ठजनकतायाः उपस्थितित्वानवच्छिन्नत्वादितिध्येयम्।

## ❀ गादाधरी ❀

प्रकारता तस्याः, साध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायां तादृशधर्मानवच्छिन्नसाध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायाञ्च जनकतायामवच्छेदिका या प्रकारता तस्या वा निवेशान्नोक्तदोषः। साध्याभावोपस्थितित्वावच्छिन्नाया अपि जनकतायाः साध्यविषयकत्वघटितधर्मावच्छिन्नतया विरुद्धातिव्याप्तेर्दुर्वारतया साध्यविषयकत्वघटितधर्मावच्छि-

## ❀ विवृतिः ❀

विषयकोपस्थितित्वेन साध्यविषयकोपस्थितित्वेनचोपादातुंशक्यतया तादृशीमुपस्थितिमादाय व्याप्येऽतिव्याप्त्यापत्तेरिति दिक् ॥

विशेष्यदले साध्यसंशयजनकतायां साध्याभावविषयकत्वघटितधर्मानवच्छिन्नत्वविवक्षायाः प्रयोजनमाहसाध्याभाववि**ति**। साध्याभावविषयकत्वघटितसाध्याभावविषयकोपस्थितित्वावच्छिन्नायाइत्यर्थः। जनकतायाः = साध्यसंशयजनकतायाः। साध्याभावस्यापि साध्यघटितत्वादाह**साध्येति**। विरुद्धातिव्याप्तेः = वह्न्यादिसाध्यकजलत्वादिरूपविरुद्धातिव्याप्तेः। **साध्येति**। साध्यविषयकत्वघटितधर्मावच्छिन्नसाध्यसंशयजनकतायामित्यर्थः। तथा च वह्न्यभावसहचरितजलत्ववानयमित्याकारकज्ञानीयजलत्वप्रकारतायाः साध्यसंशयजनकतावच्छेदकवह्न्यभावविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतायामवच्छेदकत्वेन साध्यसंशयजनकतावच्छेदक

## ❀ मनोरमा ❀

अनुगमस्तु साध्याविशेषणकोपस्थितिविशिष्टधर्मवत्त्वं सव्यभिचारत्वं। वै० स्वनिष्ठसाध्यसंशयजनकतानियतजन्यतानिरूपितजनकतावच्छेदकप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणत्व,-स्वावृत्तिसाध्यसंशयजनकतानियतजन्यतानिरूपितजनकतावच्छेदकप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणत्वोभयसम्बन्धेनेति यथाश्रुतग्रन्थानुयायिनः।

साध्याभाव**विषयकत्वेत्यादि**। संशयपदद्वयोपादानप्रयोजनं पूर्ववत्।

अत्र कल्पे साध्याभावविषयकत्वघटितधर्मावच्छिन्नत्वं साध्यतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नविषयताकत्वघटितधर्मावच्छिन्नत्वरूपमेव वाच्यम्, अन्यथा महानसीयवह्निमान् पर्वतीयधूमादित्यत्र विरुद्धेऽतिव्याप्तिः स्यात्, महानसीयवह्निमद्व्यावृत्तवह्न्यभाववद्व्यावृत्तपर्वतीयधूमवान्—इत्याकारकज्ञानजन्यमहानसीयवह्न्युपस्थितेर्वह्न्यभावोपस्थितेश्च महानसीयवह्निमान् वह्निसामान्याभाववान् वा इत्याकारकसंशयजनकतया तादृशोपस्थितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकतायाः निरुक्तज्ञानीयपर्वतीयधूमप्रकारतायां सत्त्वात्। पूर्वोक्तरीत्या निवेशे तु तादृशज्ञानमादाय न तत्रातिव्याप्तिः, वह्न्यभावोपस्थितेः साध्यनिष्ठप्रतियोगिताकाभावविषयताकत्वेऽपि साध्यतावच्छेदकतापर्य्याप्त्यधिकरणमहानसीयत्ववह्नित्वरूपधर्मद्वयावच्छिन्नप्रतियोगिताकाभावविषयताकत्वाभावेन साध्याभावविषयकत्वघटितधर्मपदेन वह्न्यभावोपस्थितित्वस्य धर्तुमशक्यत्वात्

❀ गादाधरी ❀

न्नजनकतायां साध्याभावविषयकत्वानवच्छिन्नत्वप्रवेशः। साध्यमुख्य-

❀ विवृतिः ❀

वह्निरूपसाध्यविषयकत्वघटितोयोधर्मः वह्न्यभावविषयकोपस्थितित्वरूपस्तदवच्छिन्न जन्यतानिरूपित जनकतायांचावच्छेदकत्वेन चोक्तप्रकारतामादाय वह्निविरुद्धेजलत्वेऽतिव्याप्तिः यदिसाध्यविषयकत्वघटितधर्मावच्छिन्नसाध्यसंशयजनकतायां साध्याभावविषयकत्वघटितधर्मानवच्छिन्नत्वप्रवेशो न स्यात्। तथा प्रवेशे च न तत्रातिव्याप्तिः वह्न्यभावविषयकोपस्थितित्वस्य वह्निविषयकत्वघटितधर्मत्वेऽपि तदवच्छिन्नसंशयजनकतायां वन्ह्यभावरूपसाध्याभावविषयकत्वघटितधर्मानवच्छिन्नत्वविरहेण तादृशजनकतावच्छेदकसाध्याभावोपस्थितित्वावच्छिन्नजन्यत्वस्योपादातुमशक्यत्वादिति भावः। न च साध्याभावविषयकत्वघटितधर्मानवच्छिन्नत्वमात्रमेव जन्यतायांनिवेश्यताम् किं तादृशधर्मानवच्छिन्नसंशयजनकतावच्छेदकसाध्यविषयकत्वघटितधर्मावच्छिन्नत्वस्यजन्यतायां विवक्षणेनेति वाच्यम्। घटकालीनवह्न्यभावसहचरितजलत्ववानित्याकारकज्ञानमादाय विरुद्धेऽतिव्याप्त्यापत्तेः—घटोपस्थितित्वावच्छिन्नजन्यतायाः साध्याभावोपस्थितित्वानवच्छिन्नत्वात्। न च तथापिसाध्याभावविषयकत्वघटितधर्मानवच्छिन्न साध्यसंशयजनकतावच्छेदकधर्मावच्छिन्नजन्यत्वविवक्षणेनेयमतिव्याप्तिः, घटोपस्थितित्वस्यसाध्यसंशयजनकतानवच्छेदकत्वादितिव्यर्थं साध्यविषयकत्वघटितत्वादिनिवेशनमिति वाच्यम् वह्न्यभाववान्धूमादित्यादौ वह्न्यभावाभावमहानसीयवह्निसहचरितधूमवानयमित्याकारकज्ञानमादाय वह्न्यभावविरुद्धेधूमेऽतिव्याप्त्यापत्तेः। वह्न्यभावाभाववत् महानसीयवह्निमद्वृत्तिधूमप्रकारकज्ञानजन्यतायाः वह्न्यभाववान् महानसीय वह्निमान् वेत्याकारकसाध्यसंशयजनकतावच्छेदकं महानसीयवन्ह्युपस्थितित्वरूपधर्मावच्छिन्नत्वात्। न च साध्याभावनिष्ठविषयताकत्वघटितधर्मानवच्छिन्नत्वविवक्षणान्नकोऽपिदोषइति वाच्यम्। अभावाभावस्यातिरिक्तत्वमते महानसीयवह्नादेर्वह्न्यभावाभावानात्मकत्वादिति तु विभावनीयम्। केचित्तुनिरुक्तास्वरसभयेनैव साध्यमुख्यविशेष्यतेत्यादिनाकल्पान्तरानुसरणंकृतमित्याहुः। साध्याभावविषयकत्वघटितधर्मानवच्छिन्नसाध्यसंशयजनकताविवक्षणे गौरवमाशंक्यप्रकारान्तरेणविरुद्धेऽति व्याप्तिं वारयितुमाह साध्य**मुख्येति**। प्रकारत्वानवच्छिन्नसाध्यविशेष्यताघटितधर्मावच्छिन्नत्वमित्यर्थः। साध्याभावविषयकोपस्थितित्वस्य साध्यविशेष्यताघटितत्वेऽपि साध्य-

❀ मनोरमा ❀

द्वितीयजनकतायां साध्यविषयकत्वघटितधर्मावच्छिन्नत्वं परित्यज्य साध्याभावविषयकत्वघटितधर्मानवच्छिन्नत्वमात्रनिवेशे वह्निमान् पर्वतीयधूमादित्यत्र व्याप्येऽतिव्याप्तिः महानसीयवह्निमद्वृत्तवह्न्यभाववद्वृत्तपर्वतीयधूमवान् अयमित्याकारकज्ञानजन्यमहानसीयवह्न्युपस्थितेः वह्न्यभावोपस्थितेश्च

❀ गादाधरी ❀

विशेष्यताघटितधर्मावच्छिन्नत्वं निवेश्यैव वा तादृशातिव्याप्तिर्वारणीये-त्युच्यते, तथापि वह्निमद्वृत्तिवह्न्यभाववव्द्यावृत्तधूमवानयं वह्निमद्व्यावृत्त-

❀ विवृतिः ❀

मुख्य विशेष्यता घटितत्वा भावस्तत्रास्तीति भावः। **निवेश्यैवेति**। साध्यसंशय-जनकतायामित्यादिः। तादृशातिव्याप्तिः=विरुद्धातिव्याप्तिः।

**वारणीयेति**। तथा च साध्याभावविषयकत्वघटितधर्मावच्छिन्नसाध्यसंशय जनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायां जनकतायामवच्छेदकीभूतासतीसाध्य-मुख्यविशेष्यताघटितधर्मावच्छिन्नसाध्यसंशयजनकतावच्छेदकावच्छिन्नजन्यतानिरूपि-तायां जनकतायाञ्चावच्छेदकीभूतायाप्रकारतातदवच्छेदकतापर्य्याप्त्यधिकरणधर्म-वान् सव्यभिचारइति भावः। वस्तुतोऽत्रापियद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वा-वच्छिन्नजनकतानिरूपितं जन्यत्वं साध्याभावविषयकत्वघटितसंशयजनकतावच्छेदक धर्मावच्छिन्नं साध्यमुख्यविशेष्यताघटिततादृशधर्मावच्छिन्नं च तद्रूपत्वं सव्यभि-चारत्वमितिबोद्धव्यम्। वह्निमद्वृत्तिधूमत्वावच्छिन्नप्रकारताकज्ञानजन्यतायास्तादृश साध्याभावविषयकत्वघटितधर्मानवच्छिन्नत्वात् वह्न्यभाववद्वृत्तिजलत्वत्वावच्छिन्नप्रका-रताकज्ञानजन्यतायाश्च तादृशसाध्यमुख्यविशेष्यताघटितधर्मानवच्छिन्नत्वात् यद्रूपपदेन तादृश धूमत्वजलत्वत्वयोरुपादानासंभवात् नव्याप्यविरुद्धयोरतिव्याप्तिः। अन्यत् सर्वमन्यत्रानुसंधेयमिति संक्षेपः।

यदिचेत्यादेरुत्तरं **तथापीति**। निरुक्तरीत्योद्बोधकान्तराधीनसमूहालम्बन-रूपां साध्यतदभावविषयिणीमुपस्थितिमादाय सम्भवदतिव्याप्तेर्वारणेऽपीत्यर्थः। यथा च दण्डचक्रसलिलसूत्रादीनां परस्परसहकारेणघटजनकत्वमनुभवसिद्धम् न तु तेषां कुत्रापि घटजनकत्वव्याघातः तथावह्निमद्वृत्तिधूमवान्इत्याकारकज्ञानजन्यव-न्ह्युपस्थितेर्वन्ह्यभावद्वृत्तिधूमवत्ताज्ञानजन्यवन्ह्यभावोपस्थितेरपि परस्परसहकारेण संशयजनकत्वस्यवह्निमद्व्यावृत्तधूमवत्ताज्ञानजन्यवह्न्युपस्थितेर्वह्न्यभाववद्व्यावृत्तधूम-वत्ताज्ञानजन्यवह्न्यभावोपस्थितेश्च परस्परसहकारेण संशयजनकत्वस्यानुभव-सिद्धतयातासुकुत्रापिसंशयजनकत्वव्याघातोनशंकनीयः एवञ्च यादृशस्थलेपर्वतो-वह्निमान्धूमादित्यादौ वह्निमद्वृत्तिवह्न्यभाववदवृत्तिधूमवान् इत्याकारकज्ञानाद्-समूहालम्बनानात्मिकावह्न्युपस्थितिः वह्न्यभावोपस्थितिश्च जनिता इदं वह्निमद्ज-

❀ मनोरमा ❀

पर्वतो महानसीयवह्निमान् वह्निसामान्याभाववान् वा इत्याकारकसंशयजनकतया निरुक्तज्ञानजन्य-तादृशोपस्थितिजनकतावच्छेदकप्रकारतायाः पर्वतीयधूमे सत्त्वादतः साध्यतावच्छेदकतापर्य्याप्त्यधि-करणधर्मावच्छिन्नविषयताकत्वघटितधर्मावच्छिन्नत्वार्थकं साध्याभावविषयकत्वघटितधर्मानवच्छिन्नजन-कतायां साध्यविषयकत्वघटितधर्मावच्छिन्नत्वं निवेशितम्। तथा च महानसीयवन्ह्युपस्थितेर्वह्नि

❀ गादाधरी ❀

वह्न्यभाववद्वृत्तिजलत्ववानिति ज्ञानीयधूमादिप्रकारतामादायातिप्रसङ्गो दुर्वार एव । वह्निमद्वृत्तिधूमवत्ताज्ञानजन्यवह्न्युपस्थितेर्वह्न्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्यवह्न्यभावोपस्थितिसहकारेण संशयजनकतावत् वह्न्यभाववद्व्यावृत्तधर्मवत्ताज्ञानजन्यवह्न्यभावोपस्थितेरपि वह्निमद्व्यावृत्तधर्मवत्ताज्ञानजन्यवह्न्यभावोपस्थितिसहकारेण संशयजनकत्वात्, तादृशज्ञानीयधू-

❀ विवृतिः ❀

लत्वादित्यादौ च वह्न्यभाववद्वृत्तिवह्निमद्व्यावृत्तजलत्ववदिदमित्याकारकज्ञानाद-समूहालम्बनानात्मकवन्ह्युपस्थितिः वन्ह्यभावोपस्थितिश्चोत्पद्यते तादृशस्थले वह्नि-व्याप्ये धूमे वह्निविरुद्धे च जलत्वेऽतिव्याप्त्यापत्तिः ।

वह्निमद्वृत्तिवन्ह्यभाववद्व्यावृत्तधूमवानित्याकारकज्ञानाधीनकोटिद्वयोपस्थितेः वह्निमद्वृत्तिधूमवत्ताज्ञानजन्यत्वेन वन्ह्यभाववद्व्यावृत्तधूमवत्ताज्ञानजन्यत्वेन च संशयजनकतया साध्यसंशयजनकतानियतसाध्याविशेषणकसाध्योपस्थितिवृत्ति जन्यतानिरूपितायां जनकतायां साध्यसंशयजनकतानियतसाध्याविशेषणकसाध्योपस्थित्यवृत्तिसाध्याभावविषयकोपस्थितिवृत्तिजन्यतानिरूपितायां जनकतायाञ्च साध्यमुख्यविशेष्यताघटितसाध्योपस्थितित्वावच्छिन्नसाध्यसंशयजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायांजनकतायां साध्याभावविषयकत्वघटितसाध्याभावविषयकोपस्थितित्वावच्छिन्नसाध्यसंशयजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायां जनकतायां वा अवच्छेदकीभूतायानिरुक्तज्ञानीयधूमप्रकारतातदवच्छेदकतापर्य्याप्त्यधिकरणवह्निमद्वृत्तित्ववन्ह्यभाववद्व्यावृत्तत्वयोःधूमे, वह्न्यभाववद्वृत्तिवह्निमद्व्यावृत्तजलत्ववत्ताज्ञानाधीन वह्निवन्ह्यभावोपस्थितेरपि वन्ह्यभाववद्वृत्तिजलत्ववत्ताज्ञानजन्यत्वेन वह्निमद्व्यावृत्तजलत्ववत्ताज्ञानजन्यत्वेन च संशयजनकतायथोक्तरीत्या 'वह्निरूपसाध्योपस्थितिनिष्ठजन्यतानिरूपितायां साध्याभावरूपवह्न्यभावोपस्थितिनिष्ठजन्यतानिरूपितायां च जनकतायां अवच्छेदकीभूताया निरुक्तज्ञानीयजलत्वप्रकारता तदवच्छेदकतापर्य्याप्त्यधिकरणवह्न्यभाववद्वृत्तित्ववह्निमद्व्यावृत्तत्वयोश्च जलत्वेसत्त्वादित्याहवह्निमद्वृत्तीति । संशयजनकत्वात् = संशयजनकतायाः अनुभवसिद्धत्वात् । तादृशज्ञानीयेति । वह्निमद्वृत्तिवन्ह्यभाववद्व्यावृत्तधूमवान् पर्वतइत्याकारकज्ञानीयधूमप्रकारताया इत्यर्थः ।

❀ मनोरमा ❀

त्वमात्रावच्छिन्नविषयताकत्वविरहेण न तादृशोपस्थितिजनकज्ञानमादाय वह्निसाध्यकपर्वतीयधूमेऽतिव्याप्तिरिति केचित् ]।

साध्याभावविषयकत्वविशिष्टधर्मवत्त्वं सव्यभिचारत्वमिति रीत्या निरुक्तलक्षणमनुगमनीयम् वै० स्वघटितधर्मावच्छिन्नसाध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकतावत्त्व, स्वघटितधर्मानवच्छि-

❀ गादाधरी ❀

मप्रकारताया वह्निसाहचर्यावच्छिन्नत्वेन संशयजनकवह्न्युपस्थितिजनकतायां, वह्न्यभाववद्व्यावृत्तत्वावच्छिन्नत्वेन च तथाविधवह्न्यभावोपस्थितिजनकतायां; तादृशज्ञानीयजलत्वप्रकारतायाश्च वह्निमद्व्यावृत्तत्वावच्छिन्नत्वेन तथाविधवह्न्युपस्थितिजनकतायां, वह्न्यभाववद्वृत्तित्वावच्छिन्नत्वेन च तथाविधवह्न्यभावोपस्थितिजनकतायामवच्छेदकत्वात्।

मैवम्। साध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदको यो धर्मस्तदवच्छिन्नजन्यतानिरूपितायां तदवच्छिन्नसहकारितावच्छेदकसाध्या-

❀ विवृतिः ❀

वह्निसाहचर्यावच्छिन्नत्वेन=वन्हिमद्वृत्तित्वावच्छिन्नत्वेन। **संशयेति**। संशयजनकतानियतसाध्याविशेषणकोपस्थितिवृत्तिजन्यतानिरूपितायां जनकतायां साध्यमुख्यविशेष्यताघटितधर्मावच्छिन्नसंशयजनकतावच्छेदकसाध्योपस्थितित्वावच्छिन्नजन्यतानिरूपितायां जनकतायां चेत्यर्थः। तथा**विधेति**। साध्यसंशयजनकतानियतसाध्याविशेषणकोपस्थित्यवृत्तिसाध्याभावविषयकोपस्थितिवृत्तिजन्यतानिरूपितायां जनकतायां साध्याभावविषयकत्वघटितधर्मावच्छिन्नसंशयजनकतावच्छेदकसाध्याभावविषयकोपस्थितित्वावच्छिन्नजन्यतानिरूपितायां जनकतायांवेत्यर्थः। अवच्छेदकत्वादितिपरेणान्वयः। तादृ**शेति**। वह्निमद्व्यावृत्तवन्ह्यभाववद्वृत्तिजलत्ववान् इत्याकारकज्ञानीयजलत्वप्रकारतायाश्चेत्यर्थः। तथा**विधेति**। पूर्ववत् साध्यसंशयजनकवन्ह्युपस्थितिनिष्ठजन्यतानिरूपितायां जनकतायामित्यर्थः। एवमुत्तरत्रापि अवच्छेदकत्वात् अवच्छेदकताया सत्त्वात्॥ अथेत्यादेः समाधानम् मैव**मिति**। साध्येत्यादि। साध्यमुख्यविशेष्यताघटितधर्मावच्छिन्नायां साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितायां जनकतायामवच्छेदकीभूतो यः साध्यविषयकोपस्थितित्वरूपो धर्मस्तदवच्छिन्नजन्यतानिरूपितायाम् सह**कारितेति**। तादृशसाध्यविषयकोपस्थितित्वरूपधर्मावच्छिन्नस्य सहकारिता-

❀ मनोरमा ❀

न्नसाध्यविषयकत्वघटितधर्मावच्छिन्नसाध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकतावत्त्वोभयसम्बन्धेन, सम्बन्धघटकजनकतावत्त्वं च सर्वत्र स्वावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणत्वसम्बन्धेनबोध्यम्। अन्यत् सर्वं विवृतौ द्रष्टव्यम्।

**मैवमित्यादि**। अत्र कल्पे साध्यविषयकत्वघटितेत्यादिनिवेशनं साध्यतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नविषयताकत्वघटिधर्मावच्छिन्नजनकतालाभार्थम्। अन्यथा वह्निमान् पर्वतीयधूमादित्यत्र वह्निव्याप्ये पर्वतीयधूमेऽतिव्याप्तिः स्यात्। महानसीयवह्निमद्व्यावृत्तवह्न्यभाववद्व्यावृत्तपर्वतीयधूमवान् अयमित्याकारकज्ञानजन्यमहानसीयवह्न्युपस्थितेः वन्ह्यभावोपस्थितेरपि महानसीयवन्हिमान् वन्हिसामान्याभाववान् वेत्याकारकसंशयनिष्ठसाध्यसंशयत्वन्यूनवृत्तिजन्यता-

❀ गादाधरी ❀

**भावविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायाञ्च जनकतायामवच्छेदकीभूतप्रकारतानिवेशे नातिप्रसङ्गः। तद-**

❀ विवृतिः ❀

वच्छेदकीभूतोयः साध्याभावविषयकत्वघटितधर्मावच्छिन्नायां साध्यसंशयत्वन्यूनवृत्ति-जन्यतानिरूपितायां जनकतायामवच्छेदकीभूतः साध्याभावविषयकोपस्थितित्वरूपोधर्मस्तदवच्छिन्नजन्यतानिरूपितायाञ्चेत्यर्थः। **जनकतायां** पक्षधर्मताज्ञाननिष्ठायामित्यादिः। अवच्छेदकीभूतप्रकारतानिवेशे = तादृशजनकतावच्छेदकीभूतप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्वनिवेशे। **नातिप्रसंगइति**। वह्निमद्वृत्तिधूमवत्ताज्ञानजन्यायाः वन्ह्युपस्थितेर्वक्ष्यमाणं सहकारितावच्छेदकत्वं वन्ह्यभाववद्वृत्तिधूमवत्ताज्ञानजन्यवन्ह्यभावोपस्थितित्वे न तु वन्ह्यभाववद्व्यावृत्तधर्मवत्ताज्ञानजन्यवन्ह्यभावोपस्थितित्वे एवं वन्हिमद्व्यावृत्तधर्मवत्ताज्ञानजन्यायाः वन्ह्युपस्थितेरपि वक्ष्यमाणं सहकारितावच्छेदकत्वं वन्ह्यभाववद्व्यावृत्तधर्मवत्ताज्ञानजन्यवन्ह्यभावोपस्थितित्वे एव न तु वन्ह्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्यवन्ह्यभावोपस्थितित्वे एवञ्च न वह्निव्याप्ये धूमे वह्निविरुद्धे वा जलत्वेऽतिप्रसंगः। वह्निमद्वृत्तिवन्ह्यभाववद्व्यावृत्तधूमवान् पर्वतइत्याकारकज्ञानीयधूमप्रकारतायाः साध्यसंशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकत्वेऽपि निरुक्तज्ञानाधीनस्य वन्ह्यभावोपस्थितित्वावच्छिन्नस्य वन्ह्यभाववद्वृत्तिधर्मवत्ताज्ञानाजन्यत्वेन तादृशोपस्थितित्वस्य संशयजनकवन्ह्युपस्थितिसहकारितानवच्छेदकत्वात् निरुक्तवन्ह्युपस्थितिसहकारितावच्छेदकवन्ह्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्य-

❀ मनोरमा ❀

निरूपितजनकतावत्त्वेन तादृशजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतायाः निरुक्तज्ञानीयप्रकारतायाः पर्वतीयधूमे सत्त्वात्।

एवं साध्याभावविषयकत्वेत्यादिनिवेशनमपि साध्यतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नविषयताकत्वघटितधर्मावच्छिन्नजनकतालाभार्थम्। अन्यथा महानसीयवह्निमान् पर्वतीयधूमादित्यत्रमहानसीयवन्हिविरुद्धे पर्वतीयधूमेऽतिव्याप्तिः स्यात्; महानसीयवन्हिमद्व्यावृत्तवह्निमद्व्यावृत्तपर्वतीयधूमवान् इत्याकारकज्ञानजन्यमहानसीयवह्न्याद्युपस्थितेरपि पूर्वोक्तयुक्त्या संशयजनकतया निरुक्तोपस्थितिजनकीभूतनिरुक्तज्ञानीयप्रकारतायाः धूमे सत्त्वादिति ध्येयम्॥

सहकारित्वस्य फलविशेषघटिततया अत्र कल्पे साध्यसंशयजनकत्वनिवेशस्य निष्प्रयोजनकत्वात् साध्यसंशयपदोपादानं नास्तीति सूचयितुं जनकतावच्छेदकावच्छिन्नं जन्यत्वमात्रमभिहितम्। कुत्रचित् पुस्तके साध्यसंशयजनकतावच्छेदकावच्छिन्नजन्यतेत्यादिपाठस्तु यथाश्रुतमूलानुरोधेनैवेति मन्तव्यम्॥

साध्यविषयकत्वघटितधर्मावच्छिन्नत्वं साध्यमुख्यविशेष्यताकोपस्थितित्वावच्छिन्नत्वमेव वक्तव्यम्, तेन वन्हिकालीनमहानसीयवन्हिमान् वन्हिसामान्याभाववान् वेत्याकारकसंशयजनकवन्हिका-

❀ गादाधरी ❀

वच्छिन्नसहकारितावच्छेदकत्वञ्च तदवच्छिन्नासमवधानप्रयुक्तफलोपधा-

❀ विवृतिः ❀

वन्ह्यभावोपस्थितित्वावच्छिन्न जन्यतानिरूपितजनकतानवच्छेदकत्वात् वह्निमद्व्यावृत्तवह्न्यभाववद्वृत्ति जलत्ववदिदमित्याकारकज्ञानीयजलत्वप्रकारतायाः अपि संशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकत्वेऽपि तदधीनवह्न्यभावोपस्थितेर्वह्न्यभाववद्व्यावृत्तधर्मवत्ताज्ञानाजन्यत्वेन तादृशोपस्थितित्वस्यसंशयजनकवन्ह्युपस्थितिसहकारितानवच्छेदकत्वेन संशयजनकनिरुक्तवह्न्युपस्थितिसहकारितावच्छेदकवह्न्यभाववद्व्यावृत्तधर्मवत्ताज्ञानजन्य वह्न्यभावोपस्थितित्वावच्छिन्नजन्यतानिरुपितजनकतायामनवच्छेदकत्वात् निरूक्तज्ञानयोः धूमादिप्रकारतायाः लक्षणाघटकत्वादितिभावः।

ननु तद्धर्मावच्छिन्नस्यसहकारितावच्छेदकत्वंहि तद्धर्मभिन्नत्वेसति तद्धर्मावच्छिन्नप्रयुक्त कार्य्यजनकतावच्छेदकत्वं, तच्चवह्निमद्वृत्तिवह्न्यभाववद्व्यावृत्तधर्मवत्ताज्ञानादिजन्यवह्न्यभावोपस्थितित्वसाधारणम् तादृशवह्न्याभावोपस्थितित्वस्यापि संशयरूप कार्य्यजनकतावच्छेदकत्वात्। तथा च नोक्तज्ञानव्यावृत्तिरतस्तद्धर्मावच्छिन्नसहकारितावच्छेदकत्वमन्यथानिर्वक्तितद**वच्छिन्नेति**। असमवधानं=सामानाधिकरण्याभावः। तथा च यद्धर्मावच्छिन्नसामानाधिकरण्याभावप्रयुक्तोयः फलोपधायकत्वाभावस्तदवत्स्वावच्छिन्नं यस्यस्वस्य एवंभूतंयत् स्वं तदेव तद्धर्मावच्छिन्नस्यसहकारितावच्छेदकमिति समुदिततात्पर्य्यम्। यादृशधर्मावच्छिन्नेयद्धर्मावच्छिन्नस्य सामानाधिकरण्याभावप्रयुक्तः फलोपधायकत्वाभावस्तादृशधर्मस्तद्धर्मावच्छिन्नस्य सहकारितावच्छेदक इतितुफलितम्। वह्निमद्वृत्तिवह्न्यभाववद्व्यावृत्तधूमवत्ताज्ञानादिजन्य वह्न्यभावोपस्थितित्वं न तादृशवह्न्युपस्थितित्वावच्छिन्नस्य सहकारितावच्छेदकम्। निरूक्तवह्न्यभावोपस्थितौ निरूक्तवह्न्युपस्थितिसामानाधिकरण्याभावसत्त्वेऽपि वह्निमद्व्यावृत्तधर्मवत्ताज्ञानजन्यवह्न्युपस्थितिसहकारेण तस्याः

❀ मनोरमा ❀

लीनमहानसीयवह्निमद्व्यावृत्तवन्ह्यभाववद्व्यावृत्तपर्वतीयधूमवानयमित्याकारकज्ञानमादाय न वह्निमान् पर्वतीयधूमादित्यत्रातिव्याप्तिरिति केचित्।

अनुगमस्तु=साध्यविषयकत्वविशिष्टधर्मवत्त्वं सव्यभिचारत्वम्, वै. च. स्वघटितधर्मावच्छिन्नजनकतावत्त्व,-स्वघटितधर्मावच्छिन्नसहकारितावच्छेदकसाध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतावत्त्वोभयसम्बन्धेन, उभयत्र जनकतावत्त्वं च स्वावच्छेदकधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकतापर्य्याप्त्यधिकरणत्वसम्बन्धेन॥

**तदवच्छिन्नासमवधानेति**। न चात्र नञ्द्वयोपादानं व्यर्थं; तदवच्छिन्नसमवधानप्रयुक्तफलोपधायकत्ववत्स्वावच्छिन्नकत्वमित्यस्यैव सम्यक्त्वादिति वाच्यम्। यादृशस्थले धूमधूमाभावसद्-

❀ गादाधरी ❀

यकत्वाभाववत्स्वावच्छिन्नकत्वमित्यलं पल्लवितेन ॥

❀ विवृतिः ❀

संशयरूपफलोपधायकतया तादृशफलोपधायकत्वाभाववत्स्वावच्छिन्नकत्वस्य निरुक्त वह्न्यभावोपस्थितित्वेविरहादितिनतादृशज्ञानादिकमादायव्याप्यं,विरुद्धेचाऽतिव्याप्तिः। धूमधूमाभावसहचरितवह्निमान् इत्याकारकज्ञानाधीन धूमाभावोपस्थितित्वस्य तज्ज्ञानाधीनधूमोपस्थितित्वावच्छिन्नस्यसहकारितावच्छेदकत्वं तु सम्भवत्येव, निरुक्त-धूमाभावोपस्थितौनिरुक्तधूमोपस्थितिसामानाधिकरण्याभावसत्वेतत्रधूमसंशयरूपफलो-पधायकत्वाभावस्यापिसत्त्वेन स्वपदेन धूमाभावोपस्थितित्वस्यधर्तुंशक्यत्वादिति तादृ-शज्ञानमादायैव धूमसाध्यकवह्न्यादौलक्षणसमन्वयः। अन्यत् सर्वंस्वयमूहनीयम्।

न च तदवच्छिन्नस्य सामानाधिकरण्य प्रयुक्तंयत् फलोपधायकत्वं तद्वत् स्वावच्छिन्नकधर्मस्यैवसहकारितावच्छेदकत्वसम्भवेन नञ्द्वयोपादानं निरर्थकमिति-वाच्यम्, यादृशस्थलेनिश्चितानित्यत्वतदभाववद्व्यावृत्तशब्दत्ववान् शब्दइत्याकारक-ज्ञानजन्यकोटिद्वयोपस्थितिसत्त्वेऽपिदोषादिरूप संशयजनककारणान्तरविरहेण संश-योनजनितस्तादृशस्थलेशब्दोऽनित्यःशब्दत्वादित्यादौशब्दत्वरूपासाधारणेऽव्याप्त्या-पत्तेः। निरुक्तज्ञानाधीनानित्यत्वोपस्थितिसामानाधिकरण्यप्रयुक्त फलोपधायकत्वस्य तादृशानित्यत्वाभावोपस्थितित्वावच्छिन्नेविरहेणनिरुक्तानित्यत्वाभावोपस्थितित्वस्य नि-रुक्तानित्यत्वोपस्थितिसहकारितानवच्छेदकत्वात् ॥

फल प्रयोजकयावत्कारणसमवधानकालावच्छिन्नफलोपधायकत्वविवक्षणेतु महा-गौरवमित्यस्मद्गुरुचरणाः।

केचित्तु यत्र वह्निमत् व्यावृत्तधूमवान् वह्निमद्वृत्तिधूमवान् इत्याकारक-ज्ञानाभ्यामेकैववह्न्युपस्थितिर्जनिता, वन्ह्यभाववद्व्यावृत्तधूमवानित्याकारकज्ञानाच्च एकावन्ह्यभावोपस्थितिर्जनितातत्रनिरुक्तवन्ह्यभावोपस्थितित्वस्य वन्हिमद्व्यावृत्त-धूमवत्ताज्ञानजन्य वह्न्युपस्थितिसामानाधिकरण्यप्रयुक्तफलोपधायकत्ववत् वह्न्य-

❀ मनोरमा ❀

चरितवह्निमान् इत्याकारकज्ञानात् धूमोपस्थितिः धूमाभावोपस्थितिश्च जनिता किन्तु दोषादिरूप-कारणान्तरविरहेण संशयो न जनितस्तादृशस्थले धूमाभावोपस्थितित्वस्य धूमोपस्थितित्वावच्छिन्न-सहकारितावच्छेदकत्वानुपपत्तेः। धूमोपस्थितित्वावच्छिन्नसमवधानप्रयुक्तफलोपधायकत्ववत्स्वाव-च्छिन्नकत्वस्य धूमाभावोपस्थितित्वे विरहात्। फलोत्पादप्रयोजकयावत्कारणसमवहितत्वस्य तद-वच्छिन्नविशेषणत्वे गौरवात्, अस्माकं तु तादृशस्थलेऽपि धूमाभावोपस्थितित्वावच्छिन्ने धूमोपस्थिति-त्वावच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभावस्याक्षततया धूमाभावोपस्थितित्वस्य धूमोपस्थिति-सहकारितावच्छेदकत्वानपायादिति ध्येयम् ॥

❀ दीधितिः ❀

**(दी०) न च तदसाधारणतया संग्राह्यमेवेति वाच्यम्। तथात्वेऽपि**

❀ गादाधरी ❀

(गा०) तत्=संशयधर्मितावच्छेदकेदन्त्वादिकम्। असाधारणतयेति। संशयविषयमात्रवृत्तित्वेन सपक्षविपक्षव्यावृत्तत्वादिति भावः। सङ्ग्राह्य-

❀ विवृतिः ❀

भावोपस्थितित्वावच्छिन्नकत्वेन सहकारितावच्छेदकत्वापत्तिरतोनञ्द्वयगर्भतेत्युक्त-मित्याहुस्तच्चिन्त्यम्।

नच तथापितदवच्छिन्नस्यसामानाधिकरण्याभावप्रयुक्ताभाववत्त्वावच्छिन्नकत्व-मेव तदवच्छिन्नस्य सहकारितावच्छेदकत्वमुच्यताम् किं फलोपधायकत्वाभाव विव-क्षणेनेतिवाच्यम्। यादृशस्थलेप्रथमं वह्निसहचरितधूमवानितिज्ञानात् वह्न्युपस्थि-तिस्ततोवह्न्यभाववद्व्यावृत्तधूमवानितिज्ञानादवन्ह्यभावोपस्थितिस्तादृशस्थलेतृतीयक्ष-णोत्पन्नवह्न्यभावोपस्थितौवह्न्युपस्थितिसामानाधिकरण्याभावोवर्त्तते निरुक्त सामाना-धिकरण्याभाव प्रयुक्तश्चवन्ह्यभावोपस्थितिनिष्ठोवह्न्युपस्थितिसामानाधिकरण्य वह्न्य-भावोपस्थितिव्यक्तित्वोभयाभावोऽवश्यं भवितुमर्हति उभयाभावस्यैकाभावप्रयुक्तत्वादि-तिनिरुक्तवह्न्यभावोपस्थितित्वस्य तादृश वह्न्युपस्थितिसहकारितावच्छेदकत्वापत्त्या-तादृशज्ञानमादाय वह्निमान् धूमादित्यत्रातिव्याप्त्यापत्तेरितिवदन्ति॥

लक्षणघटकीभूतं संशयजनकत्वं संशयफलोपधायकत्वं॥

कोटिद्वयोपस्थितिपदानुपादानेतु संशयफलोपधायक पक्षधर्मताज्ञानविषयत्वमे-वलक्षणार्थः पर्य्यवस्यति। एवञ्च—पुरोवर्त्तिपर्वतोवह्निमान् धूमादित्यादौपर्वतेवह्नि-संशयदशायां धर्मितावच्छेदकीभूतं पुरोवर्त्तित्वं असाधारणतयालक्ष्यमेव। निश्चिते वह्निमतिमहानसादौनिश्चितेवह्न्यभाववतिजलादौ च पर्वतनिष्ठपुरोवर्त्तित्वस्यावर्त-मानतयानिश्चित्साध्यतदभाववद्व्यावृत्तत्वस्य निरुक्तपुरोवर्त्तितायामक्षतत्त्वात्। तथाच तस्यलक्ष्यतयातद्वारणार्थं कोटिद्वयोपस्थितिपदोपादानंनिरर्थकमेवेत्याशंकते-दीधितौ **नचेति**। वाच्यमितिपरेणान्वयः। तदित्यस्यव्याख्यानमाहटीकायां **संश-येति**। इदंत्वादिकमित्यत्रादिना धूमादेः संग्रहः। **सपक्षेति**। सपक्षोमहानसादिः, विपक्षोजलादिः, तदुभयनिरूपितवृत्तित्वाभावस्यपुरोवर्त्तित्वादौसत्त्वादित्यर्थः।

❀ मनोरमा ❀

केचित्तु नञ्द्वयानुपादाने यादृशस्थले वह्निमद्वृत्तिधूमवान् वह्निमद्व्यावृत्तधूमवान् इत्याकारक-समूहलम्बनज्ञानात् एकैव वह्न्युपस्थितिः वह्न्यभाववद्वृत्तिधूमवान् इत्याकारकज्ञानाच वह्न्यभावो-पस्थितिर्जाता तादृशस्थले वह्निमद्व्यावृत्तधर्मवत्ताज्ञानजन्यायाः निरुक्तवन्ह्युपस्थितेः सहकारितावच्छे-दकत्वस्य वह्न्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्यवह्न्यभावोपस्थितित्वादावापत्तिः स्यात्, निरुक्तवह्न्युपस्थि-

❀ गादाधरी ❀

मेव = संशयदशायां सव्यभिचारसामान्यलक्षणलक्ष्यमेव। तथाच संशयदशायां लक्ष्यतयैव नातिव्याप्तिसंभवः। तदवच्छिन्ने साध्यादिनिश्चयदशायाञ्च तत्प्रकारकज्ञानस्य संशयाजनकतया संशयजनकताघटितस्य लक्षणस्य तत्साधारण्यन्न संभवतीति हृदयम्।

तादृशनिश्चयदशायामेवातिव्याप्तिं सङ्गमयति—तथात्वेऽपीति। तथात्वेऽपि = तदवच्छिन्नविशेष्यकसंशयदशायान्तस्य लक्ष्यत्वेऽपि। तदुत्तीर्णता-

❀ विवृतिः ❀

ननुयदापुरोवर्त्तिपर्वतादौवह्न्यादेर्निश्चयस्तदा पुरोवर्त्तित्वेसाध्यादिनिश्चय विषयीभूत पर्वतादिव्यावृत्तत्वस्यासत्त्वात्, तदानीमेव पुरोवर्त्तित्वादावतिव्याप्तिवारणाय कोटिद्वयोपस्थापकत्वदलंसार्थकंभवितुमर्हतीत्यत आह—**तदवच्छिन्नेइत्यादि**। पुरोवर्त्तित्वाद्यवच्छिन्नपर्वतादावित्यर्थः। **साध्यादीति**—आदिनासाध्याभावपरिग्रहः। पुरोवर्त्तिपर्वतेवह्निनिश्चयदशायां पुरोवर्त्तिह्रदादौवह्न्यभावनिश्चयदशायामित्यर्थः। तत्प्रकारकज्ञानस्य = पुरोवर्त्तित्वादिप्रकारकज्ञानस्य। संशयाजनकतया = संशयानुपधायकतया। संशयजनकताघटितस्य = संशयफलोपधायकताघटितस्य। एतत् साधारण्यं = पुरोवर्त्तित्वादिसाधारण्यं, पुरोवर्त्तित्वादिवृत्तित्वमितियावत्। **नसम्भवतीति**। तथा च पुरोवर्त्तित्वविशिष्टपर्वतेयदावन्ह्यादेःनिश्चयस्तदा पुरोवर्त्तितावान्पर्वत इत्याकारकज्ञानस्य संशयफलोयधायकत्वाभावेन संशयफलोपधायकपक्षधर्मताज्ञानीयप्रकारताश्रयत्वस्य पुरोवर्त्तित्वेविरहात्तत्रातिव्याप्तिवारणप्रयोजनकं कोटिद्वयोपस्थापकत्वदलं व्यर्थमेवेत्याशयः। अग्रेसाध्यादिनिश्चय दशायामेवातिव्याप्तेः संगमनीयतयाहृदयमित्युक्तम। साध्यसंशयजनकत्वं साध्यसंशयस्वरूपयोग्यत्वमेव तथा च पुरोवर्त्तिपर्वतादौ यदा वह्न्यादेर्निश्चयस्तदानीमपिपुरोवर्त्तितावान् पर्वतइत्याकारकज्ञानस्य तादृशेधर्मिणि साध्यसंशयस्वरूपयोग्यतया संशयस्वरूपयोग्यपक्षधर्मताज्ञानात्मक निरूक्तज्ञानविषयेपुरोवर्त्तित्वादावतिव्याप्तिरतः कोटिद्वयोपस्थापकत्वेनपक्षधर्मताज्ञानं विशेषणीयमित्याशयवतांदीधितिकृतां तथात्वेऽपीत्यादि ग्रन्थं व्याख्यातुमाह **तदवच्छिन्नेति**। पुरोवर्त्तित्वावच्छिन्नपर्वतादिवि-

❀ मनोरमा ❀

तिसमवधानप्रयुक्तत्वस्य निरुक्तवह्न्यभावोपस्थितिनिष्ठफलोपधायकत्वेसत्त्वात्तादृशफलोपधायकत्ववत्स्वावच्छिन्नसामान्यकत्वनिवेशे गौरवादित्याहुस्तच्चिन्त्यम्॥

ननु तदवच्छिन्नासमवधानप्रयुक्ताभाववत्स्वावच्छिन्नकत्वविवक्षणेनैव सामञ्जस्ये फलोपधायकत्वाभावपर्य्यन्तनिवेशो व्यर्थ इति चेन्न। यादृशस्थले वह्न्यभाववद्व्यावृत्तधूमवान् इत्याकारज्ञानाधीनायां वह्न्यभावोपस्थितौ वह्निमद्वृत्तिधूमवान्-इत्याकारकज्ञानजन्यवह्न्युपस्थितिसामानाधिकरण्यस्या-

❀ दीधितिः ❀

**तदुत्तीर्णतादशायां विशेषदर्शनात् संशयानुपधायकत्वेऽपि तज्जनन-योग्यताया अनिवृत्तेः । अन्यथा यथायथं पक्षे साध्यतदभावनिश्चय-**

❀ गादाधरी ❀

दशायाम्=असाधारण्योत्तीर्णतादशयाम्; तादृशधर्मवति साध्यस्य तद-भावस्य वा निश्चयदशायामिति यावत्। विशेषदर्शनात्=विपरीतनिश्चयात्। तज्जननयोग्यताया इति। तत्प्रकारकज्ञानस्येत्यादिः। अनिवृत्तेरिति। अति-व्याप्तिरिति शेषः। वक्ष्यमाणदोषेण संशयफलोपधायकतानिवेशासम्भवा-

❀ विवृतिः ❀

शेष्यक संशयदशायामित्यर्थः। तस्य=पुरोवर्त्तित्वादेः। तादृशधर्मवति=पुरोव-र्त्तित्वादिमतिपर्वतेह्रदेवा। साध्यस्यवह्न्यादेः पर्वतादौ। तदभावस्य वह्न्यभावस्य-ह्रदादौ। **विपरीतेति**। वह्न्यादिसंशयकोटितापन्नवह्न्यभावस्यविपरीतोयोवह्न्यादिः तादृशवह्निविपरीतोयोवह्न्यभावादिस्तस्यनिश्चयादित्यर्थः। निरुक्तनिश्चयस्य साध्य-संशयप्रतिबन्धकत्वादितिभावः। तत् प्रकारकज्ञानस्य=पुरोवर्त्तित्वादिप्रकारकज्ञानस्य।

ननुसंशयफलोपधायकत्वं निवेश्यैवोक्तातिव्याप्तिवरिणीयेत्यतोभावमाहवक्ष्यमा-णदोषेणेत्यादि। संशयफलोपधायकज्ञानीयप्रकारताश्रयत्वपर्य्यन्तविवक्षणेऽपिकोटि-द्वयोपस्थापकत्वदलस्यफलम् स्वयमाह **इदमुलक्षणमिति**। फलोपधायकतानिवेशे-ऽपि=संशयफलोपधायकज्ञान विषयत्वस्यसव्यभिचारत्वस्वरूपत्वेऽपि **संशयजन-केति**। धूमतदभाववद्वृत्तिवह्निमान्पर्वत इत्याकारकज्ञानविरहदशायामित्यर्थः। साधारणाव्याप्तिभयेन=धूमादिसाध्यकवह्न्यादिहेतावव्याप्तिभयेन। तादृशज्ञान-विरहकालेसंशयफलोपधायकज्ञानस्याप्रसिद्ध्यातद्विषयत्वस्यवह्न्यादावसत्वेनाव्याप्तिः, साधारणस्यनित्यदोषतया तदानीं तस्यालक्ष्यतायाः वक्तुमशक्यत्वादितिभावः। तादृशज्ञानस्य=संशयफलोपधायकज्ञानस्य। **उपलक्षणेति**। तादृशज्ञानीयप्रकारता-विशिष्टत्वस्थानेतादृशज्ञाननिरूपित प्रकारत्वोपलक्षितत्वस्यैवेत्यर्थः। लक्षणे=सव्यभि-चारसामान्यलक्षणे। **अतिव्याप्तिरिति**। तचा च पुरोवर्त्तित्व विशिष्टपर्वतादौयदा-वह्न्यादेर्निश्चयस्तदापुरोवर्त्तितावान् पर्वतइत्याकारकज्ञानस्य संशयफलोपधायकत्व-

❀ मनोरमा ❀

भावः तादृशस्थले निरुक्तवह्न्यभावोपस्थितौ यो वह्न्यभावोपस्थितिव्यक्तित्ववह्निसहचरितधूमवत्ताज्ञा-नाधीनवह्न्युपस्थिसामानाधिकरण्ययोरुभययोरभावः तत्र तादृशवह्न्युपस्थिति सामानाधिकरण्या-भावस्य प्रयोजकतया वह्निसहचरितधर्मवत्ताज्ञानजन्यवह्न्युपस्थितिसामानाधिकरण्याभावप्रयुक्तनि-रुक्तोभयाभाववत्स्वावच्छिन्नकत्वस्य वह्न्युभाववद्वृत्तधूमवत्ताज्ञानजन्यवन्ह्यभावोपस्थितित्वे सत्त्वात् वह्निमान् धूमादित्यत्र धूमेऽतिव्याप्त्यापत्तेः। फलोपधायकत्वाभावविवक्षणे तु न तत्रातिव्याप्तिः।

❀ दीधितिः ❀

**दशायां साधारणाव्याप्तिप्रसङ्गात्। प्रतिपक्षसम्वलनदशायां हेतुमत्ता-**

❀ गादाधरी ❀

दिति भावः। इदमुपलक्षणम्, फलोपधायकतानिवेशेपि संशयजनकज्ञान-शून्यतादशायां साधारणाव्याप्तिभयेन तादृशज्ञानस्योपलक्षणविधयैव लक्षणे निवेशनीयतया संशयोपधायककालान्तरीणज्ञानविषयतामादायातिव्याप्तिः सम्भवतीति बोध्यम्। अन्यथा = फलोपधायकज्ञानस्य विशेषणविधया लक्षणघटकत्वे। पक्षादाविति। पक्षे साध्यादिनिश्चयसत्त्वेऽपि धर्म्यन्तरविशेष्यकसाध्यसन्देहजनकतामादाय लक्षणगमनसम्भवादादिपदं हेतुमत्ताज्ञानविषयीभूतपक्षेतरयावद्धर्मिपरम्। इदमुपलक्षणम्। साधारण्यादिविशिष्ट-

❀ विवृतिः ❀

विरहेऽपि तादृशेधर्मिणि संशयफलोपधायक कालान्तरीणपुरोवर्त्तितावान्पर्वत इत्याकारकज्ञानीयप्रकारत्वोपलक्षितत्वस्य पुरोवर्त्तित्वविशिष्टपर्वतादौ वह्न्यादिनिश्चयदशायामपिपुरोवर्त्तित्वेसत्वेन तत्रातिव्याप्तिवारणायकोटिद्वयोपस्थापकत्वदलमितिभावः।

दीधितिस्थान्यथापदार्थंव्याचष्टे फलोपधायक**ज्ञानस्येति**। लक्षणघटकत्वे इति परेणान्वयः। स्वमतमाहविशेषण**विधयेति**। संशयफलोपधायकज्ञानीय प्रकारताविशिष्टत्वेनेत्यर्थः। ननुपर्वतोधूमवान् वह्नेरित्यत्रान्यत्रवासाधारणेहेतौ पक्षेसाध्यादिनिश्चयदशायामपिनाव्याप्तिः। तदानीमपिपक्षातिरिक्तेहेतुमति साध्यसंशयसम्भवात् तादृशहेतुमतिधूमधूमाभावसहचरितवह्निमदयोगोलकमित्याकारक संशयफलोपधायकज्ञानसम्भवेन तदीय विषयतायाः वह्नौसत्वात् अतः फलोपधायकज्ञानस्यविवक्षणेऽपिनकोऽपिदोषइत्यतःपक्षादावित्यत्रादिपदेन हेतुमद्धर्मिमात्रसंग्रहार्थमाह**पक्षेत्यादि**। **धर्म्यन्तरेति**। पक्षातिरिक्तहेतुमद्धर्मिविशेष्यकसाध्यसंशयजनकीभूतं पक्षधर्मताज्ञानमादायेत्यर्थः **हेतुमत्तेति**। साध्यतदभावसहचरितत्वविशिष्ट हेतुमत्ताज्ञानविषयीभूतपक्षेतरयावद्धर्मिपरमित्यर्थः। तथा चयादृशस्थलेपक्षेपक्षातिरिक्तेहेतुमति च साध्यस्यतदभावस्यवानिश्चयस्तदानीं साध्यतदभावसहचरितहेतुमत्ताज्ञानस्य संशयफलोपधायकत्वाभावेन फलोपधायकपक्षधर्मताज्ञानविषयत्वस्य तदानीं साधारणहेतावसत्त्वात् अव्याप्तिः साधारण्यस्यनित्यदोषतया तदानीमपिहेतोर्लक्ष्यत्वात्, एवं च संशयस्वरूपयोग्य पक्षधर्मताज्ञानविषयत्वस्यैवावश्यंनिवे-

❀ मनोरमा ❀

निरुक्तवह्न्युभावोपस्थितौ वर्त्तमाने संशयरूपफलोपधायकत्वाभावे तादृशवह्न्युपस्थितिसामानाधिकरण्याभावस्याप्रयोजकत्वादिति केचित्॥

अनुगमस्तु, तद्धर्मविशिष्टो धर्मः तद्धर्मावच्छिन्नस्य सहकारितावच्छेदकः वै० स्वभिन्नत्व—स्ववि-

❀ गादाधरी ❀

स्वप्रकारकधर्मिज्ञानशून्यतादशायामप्यव्याप्तिर्बोध्या। साधारणाव्याप्तीति। साधारण्यस्य नित्यदोषतया तदा तस्यालक्ष्यत्वोपगमासम्भवादिति भावः।

कोटिद्वयोपस्थापकत्वांशस्य प्रयोजनान्तरं वर्णयतो मतमाह-सत्प्रतिपक्षेति। स्वमते व्याप्यवत्तानिश्चयस्य संशयप्रतिबन्धकत्वमेव न तु कार-

❀ विवृतिः ❀

शनीयतया कोटिद्वयोपस्थितिजनकत्वपर्य्यन्तानुक्तौ पुरोवर्त्तिपर्वतेवह्न्यादिनिश्चयदशायां पुरोवर्त्तितावान् पर्वत इत्याकारकज्ञानस्य संशयस्वरूपयोग्यतयातदीयविषयत्वमादाय पुरोवर्त्तित्वेवह्निव्याप्येऽतिव्याप्तिरतः कोटिद्वयोपस्थितिजनकत्वेन पक्षधर्मताज्ञानं विशेषणीयमितिभावः।

फलोपधायक ज्ञानस्य लक्षणघटकत्वेस्वयंदोषमाहेदमिति। **साधारण्येति।** साध्यतदभाववद्वृत्तित्वविशिष्टहेतुप्रकारकधर्मिज्ञानविरहदशायामित्यर्थः। **अव्याप्तिरिति।** तदानीं संशयफलोपधायकसाध्यतदभाववद्वृत्तित्वविशिष्टहेतुप्रकारकज्ञाननिरूपितत्वविशिष्टप्रकारताविशिष्टत्वस्यहेतावसत्त्वदितिभावः। ननुतादृशज्ञानशून्यकालेपक्षादौसाध्यादिनिश्चय कालेवाहेतोः साधारण्यं नेष्टमेवेत्यतआह **साधारण्यस्येति।** तदा = पक्षादौसाध्यादिनिश्चयकाले। तस्य=साधारणस्यहेतोः। **रत्नकोषकार** मतेवह्निव्याप्यधूमवान् पर्वतः वह्न्यभावव्याप्यजलवान् पर्वतइत्याकारकज्ञानद्वयकालेपर्वतोवह्निमान्नवेतीत्याकारक संशयानुमितिर्भवतितन्मतेकोटिद्वयोपस्थापकत्वानुपादाने वह्निव्याप्येधूमेऽतिव्याप्तिः। अनुमित्यात्मकसाध्यसंशयजनकपक्षधर्मताज्ञानपदेनवह्निव्याप्यधूमवानपर्वतइत्याकारकज्ञानस्यापिधर्तुंशक्यतयातदीयप्रकारताश्रयत्वस्यधूमेसत्त्वादतः कोटिद्वयोपस्थापकत्वदलं तथा च नतत्रातिव्याप्तिः। वह्निव्याप्यधूमवान् पर्वतइत्याकारकज्ञानस्यवह्निमात्रोपस्थापकतयाकोटिद्वयोपस्थापकत्वाभावेनतादृशज्ञानस्य संशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानपदेनोपादातुमशक्यत्वादित्येवंकोटिद्वयोपस्थापकत्वदलस्यव्यावृत्तिमभिदधानस्यकस्यचिन्मतं प्रदर्शयतांदीधितिकृतां ग्रन्थंव्याख्यातुमाह**स्वमतेइति।** दीधितिकारस्यमतेइत्यर्थः। व्याप्यवत्तानिश्चयस्य=तदभावव्याप्यवत्तानिश्चयस्य। **संशयप्रतिबन्धकत्वमेवेति।** लौकिकसंन्निकर्षाऽजन्यदोषविशेषाऽजन्यतत्प्रकारकज्ञानसामान्यंप्रत्येवतदभावव्याप्यवत्तानिश्चयस्यप्रतिबन्धकतयासंशयानुमितेरपितादृशतत्प्रकारकज्ञानात्मकत्वेनतत्र त-

❀ मनोरमा ❀

शिष्टाभावत्ववत्त्वोभयसम्बन्धेन। स्ववै-च अभावत्वे स्वावच्छिन्नसामानाधिकरण्यत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन। तादृशाभावत्ववत्त्वं च स्ववृत्तित्व-स्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यता-

❀ दीधितिः ❀

**ज्ञानस्य साध्यसन्देहजनकत्वपक्षे हेतुवारणाय कोटीत्यादि। हेतुना साध्यस्य प्रतिहेतुना तदभावस्य उपस्थापनादुभयोपस्थापकत्वं न कस्यापीत्यपि कश्चित्।**

❀ गादाधरी ❀

णत्वम्। विरोधिपरामर्शयोरप्रामाण्यग्रहे तु साधारणधर्मादिज्ञानादेव संशय इत्यतो जनकत्वपक्ष इति। हेतुवारणाय=व्याप्यवारणाय। तस्यापि परामर्शात्मकसंशयजनकपक्षधर्मताज्ञानविषयत्वादिति भावः। ननु साधारण्यादिविशिष्टधर्मवत्ताज्ञानस्येव परामर्शयोरपि साध्यतदभावोपस्थिति-द्वारैव संशयजनकत्वात्कोट्युपस्थितिनिवेशेऽपि न प्रतीकार इत्यत आह हेतुनेति। उभयोपस्थापकत्वं=साध्योपस्थितिजनकतावच्छेदिका सती तदभावोपस्थितिजनकतावच्छेदकीभूता या प्रकारता तदाश्रयत्वम्॥

❀ विवृतिः ❀

स्यप्रतिबन्धकत्वमेवेत्याशयः। एवकारव्यवच्छेद्यमाह **नन्विति**। नन्वेवंपुरुषत्व-व्याप्यकरादिमान् पुरुषत्वाभावव्याप्यशाखादिमानयम् इत्याकारकव्याप्यवत्तानिश्चयात् अयं पुरुषोनवेतिप्रत्यक्षात्मकसंशयोऽपि न स्यात् पुरुषत्वाद्यभावव्याप्यवत्ता-निश्चयस्यपूर्वसत्त्वात्, तादृशसंशयस्योभयवादिसिद्धतया—

तदानीं संशयोनभवतीत्यस्यवक्तुमशक्यत्वादतआह **विरोधीति**। प्रतिबन्धका-भावसम्पादनार्थं उभयत्राप्रामाण्यज्ञानप्रदर्शनायाहाप्रामा**ण्यग्रहेइति**। अप्रामाण्य संशयेइत्यर्थः। साधारणधर्मा**दीति**। आदिनाव्याप्यसंशय परिग्रहः। पुरुषत्वव्याप्य-करादिमानयमिदंज्ञानमप्रमानवा इत्याकारकसंशयात् तादृशकरादेः संशयः करादि संशयस्यतुव्याप्यसंशयत्वेनसाधारणधर्मज्ञानत्वेन च पुरुषत्वसंशयेहेतुतेत्यग्रेस्फुटीभ-विष्यति। एवञ्चोभयत्रपरामर्शेऽप्रामाण्यज्ञानंविनादीधितिकारमतेसंशय एव न सम्भ-वतीत्याशयः। व्याप्य वारणाय=वह्निव्याप्यधूमस्य सव्यभिचारत्वाभाव सम्पादनाय। तस्यापि=व्याप्यस्यापि। नप्रतीकारः=नव्याप्येऽतिव्याप्तिवारणम्। **तदाश्रयत्व-मिति**। तथा च वह्निव्याप्यधूमवान् पर्वतइत्याकारकज्ञानीय धूमप्रकारतायाः साध्यीभूतवह्न्युपस्थितिजनकतावच्छेदकत्वेऽपि वह्न्यभावोपस्थितिजनकतावच्छेद-कत्वविरहेणनव्याप्येऽतिव्याप्तिरितिभावः।

❀ मनोरमा ❀

वत्फलोपधायकताभावाधिकरणतावच्छेदकत्वोभयसम्बन्धेन; स्ववृत्तित्वं च स्वाश्रयवृत्तितावच्छेदक-त्वसम्बन्धेन॥

❀ दीधितिः ❀

**( दी० ) इदं व्यणुकं नित्यमणुत्वादित्यादौ साधारणधर्म्मवद्धर्म्मिज्ञानस्य कोट्युपस्थितिं संशयञ्च प्रति हेतुतया तद्विषये धर्म्मिणि**

❀ गादाधरी ❀

(गा०) निश्चितसाध्याभाववद्वृत्तित्वस्य साधारण्यघटकतामते केषुचिद्व्यणुकेषु साध्याभावनिश्चयसत्त्व एव अणुत्वस्य तथात्वं सम्भवतीत्यभिप्रेत्य तादृशनिश्चयसत्त्वं सूचयितुं यत्किञ्चिद्द्व्यणुकस्य पक्षतालाभाय इदमिति। साधारणधर्मवद्धर्मिज्ञानस्य=नित्यत्वानित्यत्वसहचरिताणुत्ववद्व्यणुकरूपधर्मिज्ञानस्य। धर्मिणि=व्यणुके। नित्यत्वसाध्यकस्थले तस्यालक्ष्यत्व-

❀ विवृतिः ❀

ननुद्व्यणुकत्वावच्छिन्नमात्रस्यैव पक्षत्वेनापि पक्षधर्मतापदस्यव्यावृत्तिसम्भवे इदं पदं व्यर्थमतआह-**निश्चितेति**। साधारण्यघटक**तेति**। निश्चितसाध्यतदभाववद्वृत्तित्वस्यैवसाधारण्यत्वादित्याशयः। साध्याभाववद्वृत्तित्वमात्रस्यैव मणिकारमतेसाधारण्यत्वान्मतेइत्युक्तम्। तथात्वं = निश्चितसाध्याभाववद्वृत्तित्वं **इदमितीति**। तथा चेदंपदानुपादाने द्व्यणुकमात्रस्यैवपक्षत्वेन साध्यसंदेहविषयतयानित्यत्वाभावस्यनिश्चयोघटादावेव तत्रचाणुत्वरूपहेतोरसत्वात् तस्य सव्यभिचारित्वमेवनस्यात्। तदुपादानेतु तद्व्यणुकव्यक्तेरेव साध्यसंदेह विषयतयाद्व्यणुकान्तरे नित्यत्वाभावनिश्चयसत्वेन तत्रैवाणुत्वस्यवर्त्तमानतया भवति तस्यसव्यभिचारित्वमिति हृदयम्। तस्य = द्व्यणुकस्य। **अलक्ष्यत्वसूचनायेति**। द्व्यणुकस्यसमवायेन परमाण्वादौवर्त्तमानतया तत्रचनित्यत्वस्यसत्त्वेन द्व्यणुकस्यनित्यत्वव्याप्यतयाऽलक्ष्यत्वमेवेतिभावः।

सव्यभिचारत्वंयदि साध्यसंशयजनकोटिद्वयोपस्थितिजनकज्ञानविषयत्वमात्रं, तादृशपक्षधर्मताज्ञानविषयत्वमात्रंवा, तदानित्यत्वतदभावसहचरितअणुत्ववदिदंद्व्यणुकं घटश्चेत्याकारक समूहालम्बनज्ञानविषयतायाः घटेऽपिसत्वेन तत्रातिव्याप्तिः स्यादतःसाध्यसंशयजनक कोटिद्वयोपस्थितिजनकतावच्छेदकविषयताश्रयत्वमेव सव्यभिचारत्वं वाच्यम्। घटविषयकज्ञानत्वेन कोट्युपस्थितिजनकत्वविरहेण घटविषयतायाः तादृशोपस्थितिजनकतानवच्छेदकत्वान्नतत्रातिव्याप्तिः, एवञ्च पक्षधर्मतापदानुपादानेऽपि नधर्मिणिद्व्यणुकेऽतिव्याप्तिः। तत्सम्बन्धप्रकारकसम्बन्धिनिष्ठविशेष्यताकज्ञानस्यैवतत्स्मरणात्मकतदुपस्थितिजनकतयानित्यत्व तदभावसहचरिताणुत्ववद्व्यणुकमित्याकारकज्ञानीय निरुक्तसहचरितत्वसम्बन्धप्रकारतानिरुपित सम्बन्धिअणुत्वविषयतायाःकोट्युपस्थितिजनकतावच्छेदकतायाः, आवश्यकत्वेन तादृशाणुत्वप्रका-

❀ दीधितिः ❀

**सद्धेतौ अतिप्रसङ्गः स्यादतः पक्षधर्मतेति । पक्षपदं धर्मिमात्रपरम् ।**

❀ गादाधरी ❀

सूचनाय सद्धेताविति । अतिप्रसङ्गः = अतिव्याप्तिः । न च समूहालम्बन-ज्ञानविषयतामादायातिप्रसङ्गवारणाय कोटिद्वयोपस्थितिजनकतावच्छेद-कीभूतविषयताश्रयत्वनिवेशनमावश्यकम् ; तथाच कथं धर्मिण्यतिव्याप्तिः यतस्तत्तत्कोटिस्मृतौ तत्तत्साहचर्यादिविशिष्टविषयकज्ञानत्वेनैव हेतुता, न तु तद्विशिष्टवद्धर्मिज्ञानत्वेन सम्बन्धिविशेष्यकज्ञानादपि सम्बन्ध्यन्तर-स्मरणादन्यथा अयं हस्तिपकसम्बन्धी घटपदं घटे शक्तमित्याद्याकारक-ज्ञानाद् हस्तिघटादिस्मरणानुदयप्रसङ्गः, तथा च धर्मिविषयतायाः कोटिद्वयोपस्थापकतावच्छेदकत्वमेव नास्तीति वाच्यम् । सम्बन्धिविशिष्ट-

❀ विवृतिः ❀

रतानिरुपितद्व्यणुकविषयतायाः कोट्युपस्थितिजनकतानवच्छेदकत्वात् ।

तत्कोटि सहचरितत्वसम्बन्धविशिष्टाणुत्वसम्बन्धिप्रकारकधर्मिज्ञानस्य तत् कोट्युपस्थितावहेतुत्वादित्याशंकतेन**चेति** । वाच्यमितिपरेणान्वयः । अतिप्रसङ्ग-वारणाय = उदासीनघटपटादावतिव्याप्तिवारणाय । कोटिद्वय**विति** । साध्य-संशयजनकेत्यादिः । तत् कोटिस्मृतौ = तत् कोट्युपस्थितौ । तत साहचर्या**विति** । तत्तत्कोटिसहचरितत्वप्रकारकं तत्तत् कोटिव्यावृत्तत्वादिप्रकारकंचयत् साधारणादि-विशेष्यकज्ञानं तत्वेनैवेत्यर्थः । तद्विशिष्टधर्मिज्ञानत्वेन = तत्तत्कोटिसहचरितत्ववत् साधारणादिधर्मविशिष्ट धर्मिविशेष्यकज्ञानत्वेनेत्यर्थः ।

**सम्बन्धीति** । तत्सम्बन्धवन्निष्ठ विशेष्यताकज्ञानादपीत्यर्थः । सम्बन्ध्यन्त-**रेति** । तत्सम्बन्ध प्रतियोगिनस्तस्यस्मरणादित्यर्थः । **अन्यथेति** । तत्सम्बन्धप्रका-रकसम्बन्धिनिष्ठविशेष्यताकज्ञानस्यतत्स्मरणाहेतुत्वे इत्यर्थः । हस्तिसम्बन्धि = हस्ति-सम्बन्धवान् । घटपदंघटेशक्तं = घटनिरुपितशक्तिसम्बन्धवत् घटपदं । स्मरणानुदयप्र-**संगादिति** । सम्बन्धिप्रकारकज्ञानमात्रस्यहेतुत्वेतु निरुक्तज्ञानस्य शक्तिसम्बन्धवत् घटपदवत्तानवगाहितया सम्बन्धिप्रकारकत्वाभावेन स्मरणानुदयः स्यात् अतः सम्ब-न्धप्रकारकज्ञानमेव सम्बन्ध्यन्त्यन्तरस्मारकमित्याशयः । धर्मिविषयतायाः नित्यत्व-तदभावसहचरितअणुत्ववद्व्यणुकमित्याकारकज्ञानीयद्व्यणुकादिरूपधर्मिविषयतायाः । **कोटिद्वयेति** । नित्यत्वतदभावादिरूपकोटिद्वयोपस्थितिजनकतावच्छेदकत्वमेवे-त्यर्थः । समाधत्तेसम्ब**न्धीति** । तत्कोटिसहचरितत्वादिरूपसम्बन्धविशिष्टोयसम्बन्धी-तत् प्रकारकज्ञानत्वेनैवेत्यर्थः । अपरसम्बन्धिस्मारकता = तत्तत्कोटिस्मरणजनकता ।

❀ गादाधरी ❀

धर्मिज्ञानत्वेनैवापरसम्बन्धिस्मारकतेति मतानुसारेणैतल्लक्षणप्रणयनात् । एतन्मतस्य निर्युक्तिकतया पक्षधर्मतापदस्य निष्प्रयोजनकत्वमाकलय्यैतत्परित्यागेन सिद्धान्तलक्षणस्य वक्ष्यमाणत्वात् ।

वस्तुतस्तु साध्यसन्देहजनककोटिद्वयोपस्थितिजनकज्ञानविषयत्वमि-

❀ विवृतिः ❀

निरुक्तलक्षणप्रणयनात् = साध्यसंशयेत्यादिलक्षणप्रणयनात् । वक्ष्यमाणत्वात् = उच्यते इत्यादिनावक्ष्यमाणत्वात् ।

नन्वेवं तत्सम्बन्धप्रकारकज्ञानत्वेनतत्कोटिस्मरणहेतुत्वस्य सयुक्तिकत्वे पक्षधर्मतापदंविहायैव लक्षणार्थं निर्वचनंसमुचितमतआह–**वस्तुतस्त्विति** । यद्धर्मिकं साधारणादिधर्मप्रकारकं ज्ञानं तद्धर्मिक एव संशय इत्यनुभवस्य सर्ववादिसिद्धतया संशयंप्रतिसाधारणादिधर्मवद्धर्मिज्ञानत्वेन, अव्यवहितोत्तरत्वसम्बन्धेन तादृशधर्मिज्ञानविशिष्टकोट्युपस्थितित्वेन च हेतुत्वंवाच्यम् , तथा च पक्षधर्मतापदानुपादाने अव्यवहितोत्तरत्वसम्बन्धेन साधराणादिधर्मवद्धर्मिज्ञानविशिष्टकोटिद्वयोपस्थितिनिष्ठायासाध्यसंदेहजनकता तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नाया तादृशधर्मिज्ञाननिष्ठावच्छेदकतातन्निरूपितनिरूपकत्वसम्बन्धावच्छिन्नायावच्छेदकता तदाश्रयीभूत–विषयताश्रयत्वस्यैवसव्यभिचारत्वरूपतयाभवति इदं द्व्यणुकमित्यादौ-द्व्यणुकेऽतिव्याप्तिः। अव्यवहितोत्तरत्वसम्बन्धेननित्यत्वतदभावसहचरितअणुत्ववद्द्व्यणुकमित्याकारकनिरूक्तद्व्यणुकनिष्टविषयताकज्ञानविशिष्टनित्यत्वाद्युपस्थितिनिष्ठायासाध्यसन्देहजनकता।तन्निरूपितनिरुक्तद्व्यणुकज्ञाननिष्ठाया अवच्छेदकताया अवच्छेदकीभूतायाद्व्यणुकविषयतातदाश्रयत्वस्यद्व्णुकरूपेधर्मिणिसत्त्वात् । पक्षधर्मतापदोपाद।नेतुअव्यवहितोत्तरत्वसन्बन्धावच्छिन्नायानिरुक्तधर्मिज्ञाननिष्ठासंशयजनकतावच्छेदकतातन्निरूपितनिरूपकत्वसम्बन्धावच्छिन्नधर्मिविषयत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत् प्रकारताश्रयत्वस्यैवलक्षणार्थतया नद्व्यणुकेऽतिव्याप्तिः । नित्यत्वतदभावसहचरिताणुत्ववद्द्व्यणुकमित्याकारकधर्मिज्ञानीयाणुत्वप्रकारतायाएवतथात्वेनतदाश्रयत्वस्यद्व्यणुकेविरहादित्यादिरीत्यापक्षधर्मतापदंसार्थकयति **साध्यसंदेहेति** । जन्यत्वापेक्षयातद्घटकाव्यवहितोत्तरत्वस्यलघुत्वा-

❀ मनोरमा ❀

**वस्तुतस्तु साध्यसन्देह इति** । तथाच साध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपिताया जनकता तन्निरूपितायां अव्यवहितोत्तरत्वसंसर्गावच्छिन्नायां अवच्छेदकतायां अवच्छेदकीभूतासती तदवच्छेदकधर्मावच्छिन्न सहकारितावच्छेदकधर्मावच्छिन्न जनकतानिरूपितायां तादृशसंसर्गावच्छि-

❀ गादाधरी ❀

त्वस्य कोटिद्वयोपस्थितिनिष्ठा या साध्यसन्देहजनकता जन्यतासम्बन्धेनाव्यवहितोत्तरत्वसम्बन्धेन वाऽवच्छिन्नायान्तदवच्छेदकतायामवच्छेदिका या विषयता तदाश्रयत्वमर्थः। एवञ्च साधारणधर्मादिविशेष्यकज्ञानस्य कोटिद्वयस्मरणजनकत्वेऽपि संशये धर्मिभाननियमाय तत्तद्धर्मिकसंशयं प्रति साधारण्यादिविशिष्टधर्मवद्धर्मिज्ञानविशिष्टकोट्युपस्थितित्वेनहेतुतेति धर्मिविषयताया अपि तादृशसन्देहजनकतावच्छेदकतावच्छेदकत्वादतिव्याप्तिरतः पक्षधर्मतापदोपादानमावश्यकमिति पक्षधर्मतेति। न च पक्षधर्मतापदोपादानेऽपि तद्दोषतादवस्थ्यं धर्मिणोऽपि पक्षधर्मताज्ञानविषयत्वादिति वाच्यम्। तदुपादानबलेन निरुक्तायां जनकतायां परम्परया जन-

❀ विवृतिः ❀

दाहअव्यवहितोत्तरत्वसम्बन्धेनेति। अवच्छेदिकायाविषयता = निरूपकत्वसम्बन्धावच्छिन्नाधर्मिविषयता। **साधारणेति**। तत्तदभावसहचरितत्वरूपसम्बन्धप्रकारकहेत्वादिविशेष्यकस्यसाध्यतदभावसहचरितोहेतुरित्याकारकज्ञानस्येत्यर्थः। धर्मिभाननियमाय = तत्तद्धर्मिनिष्ठविषयतायाः किंचित् प्रयोज्यत्वव्यवस्थापनाय। जन्यधीविषयतायाः किञ्चित् प्रयोज्यत्वनियमादित्याशयः। **साधारण्यादीति**। अव्यवहितोत्तरत्वसम्बन्धेनेत्यादिः। तत्तदभावसहचरितत्वविशिष्टोयोधर्मस्तन्निष्ठप्रकारतानिरूपितधर्मिनिष्ठविषयताकज्ञानविशिष्टकोट्युपस्थितित्वेनेत्यर्थः। पक्षधर्मतापदोपादानेऽपिनिरूक्तस्थलेद्व्यणुकेऽतिव्याप्तिवारणमशक्यमेवेत्याशङ्क्यसमाधत्तेतदुपादान**बलेनेति**। पक्ष्यधर्मतापदोपादानबलेनेत्यर्थः। तथा च वक्ष्यमाणलक्षणार्थतात्पर्य्यग्राहकमेवपक्षधर्मतापदमितिभावः। निरूक्तायांजनकतायां = साधारणधर्मवद्धर्मिज्ञानविशिष्टकोट्युपस्थितिनिष्ठायां साध्यसंदेहजनकतायां। परम्परयेत्यस्यावच्छेदकीभूतायामित्यनेनसम्बन्धः। तथा च तादृशकोट्युपस्थितिनिष्ठजनकतानिरूपिततथाविधधर्मिज्ञाननिष्ठावव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतायामवच्छेदकीभूतेत्यर्थः। जनकतावच्छेदकतायां=अव्यवहितोत्तरत्वसम्बन्धाव-

❀ मनोरमा ❀

न्नायां अवच्छेदकतायां अवच्छेदकीभूताया विषयता तदाश्रयत्वं सव्यभिचारत्वमिति फलितम्।

तेन न पूर्वोक्तरीत्यावह्निमद्वृत्ति वह्न्यभाववद्व्यावृत्त धूमादिमानित्याकारकज्ञानमादायवह्निमान् धूमादित्यादावतिव्याप्तिः। साध्यविषयकोपस्थितित्वाद्यवच्छिन्नजनकतानिवेश पक्षे साध्यसंशयपदोपादानं न कर्त्तव्यमेवेतिध्येयम्।

नच धर्मिण्यतिव्याप्तिदानार्थं वस्तुतस्तुकल्पानुसरणमनुचितमितिवाच्यम्। पूर्वोक्तकल्पापेक्षयालाघवमभिप्रेत्यैवोक्तकल्पतया भिहितत्वात्।

❀ गादाधरी ❀

कतावच्छेदकतायां वाऽवच्छेदकीभूता या धर्मिविषयता निरूपितप्रकारतातदाश्रयत्वस्य लाभेनातिप्रसङ्गविरहात् । प्रकारतायाः प्रकारतात्वेनावच्छेदकत्वं विवक्षणीयम् । तेनसाधारणधर्मादेर्धर्मितावच्छेदकीभूत-

❀ विवृतिः ❀

च्छिन्नायांताद्दशधर्मिज्ञाननिष्ठायां साध्यसंदेहजनकतावच्छेदकतायाम् । अवच्छेदकीभूतेति । तथा च ताद्दशधर्मिज्ञाननिष्ठायाऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नासाध्यसंशयजनकतावच्छेदकतातन्निरूपिनिरूपकत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपित - निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत् प्रकारताश्रयत्वंसव्यभिचारत्वमितिफलितम् । तेननोत्तरग्रन्थविरोधइतिध्येयम् ।

नित्यत्वतदभावसहचरिताणुत्ववद्द्व्यणुकमित्याकारकज्ञानविशिष्टनित्यत्वाद्युपस्थितिनिष्ठसाध्यसंदेहजनकतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्ननिरूक्तद्व्यणुकज्ञाननिष्ठावच्छेदकतानिरूपितद्व्यणुकविषयत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्याणुत्वप्रकारतामात्रनिष्ठतयानद्व्यणुकेऽतिव्याप्तिर्नवाऽणुत्वे-लक्षणसमन्वयानुपपत्तिरिति तुतत्त्वम् ।

नन्वेवमपिधूमवान् पर्वतोवह्निमान् द्रव्यत्वादित्यादौधर्मितावच्छेदकधूमरूपसद्धेतावतिव्याप्तिः। वह्निवह्न्यभावसहचरितद्रव्यत्ववान् धूमवान् पर्वत इत्याकारकज्ञानविशिष्टवह्न्याद्युपस्थितिनिष्ठसाध्यसंशयजनकतानिरूपितायांअवच्छेदकतायांनिरुक्तज्ञाननिष्ठायामवच्छेदकीभूतायाधूमवत् पर्वतविषयतातन्निरूपितप्रकारताश्रयत्वस्यधर्मितावच्छेदकीभूतेधूमेऽपिसत्त्वात् । न च निरुक्त धर्मिविषयत्वनिष्ठाया संशयजनकतावच्छेदकतानिरूपकावच्छेदकतातन्निरुपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयात्रृत्तित्वेननिरुक्तप्रकारतायाः विवक्षणेनेयमतिव्याप्तिः ।

निरुक्त संशयजनकज्ञानीयधूम प्रकारतायाः धूमवत्पर्वतविषयत्वनिष्ठताद्दशावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकताश्रयीभूतधूमवृत्तित्वेनतस्याः लक्षणाऽघटकत्वादितिवाच्यम् । धर्मिविषयतायाः प्रकारावच्छिन्नत्वमते निरुक्तज्ञानीय द्रव्यत्वनिष्ठप्रकारतायाः अपिधर्मिविषयत्वनिष्ठावच्छेदकतायामवच्छिन्नत्वसम्बन्धेनावच्छेदकीभूतद्रव्यत्वनिष्ठतयालक्षणगमनासम्भवेनासम्भवापत्ते रत-आह **प्रकारताया इति** । लक्षणघटकीभूतायाः प्रकारताया इत्यर्थः । **विवक्षणीयमिति** । साधारणादिधर्मवद्धर्मिज्ञानविशिष्ट कोट्युपस्थितिनिष्ठसाध्य-

❀ मनोरमा ❀

यत्तु साधारणधर्मादिविशेष्यकज्ञानस्यापिकोट्युपस्थितिजनकत्वाभ्युपगमे साधारणधर्मवत् धर्मिज्ञानवैशिष्ट्यादिमात्रनिष्ठावच्छेदकताकत्वस्य जन्यतायामप्रसिद्धतया सर्वत्रासम्भवःस्यादतस्तद्वारणाय

❀ गादाधरी ❀

सद्धेतौ नातिप्रसङ्गः। धर्मितावच्छेदकीयविषयतायाः प्रकारतात्वव्याप्येन धर्मितावच्छेदकतात्वेनैव निवेशात्। प्रकृतपक्षस्य प्रकृतपक्षतायाश्च निवेशे प्रयोजनाभावात् पक्षपदं धर्मिमात्रपरतयाऽव्याचष्टे पक्षपदमिति।

❀ विवृतिः ❀

संशयजनकतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नतादृश धर्मिज्ञाननिष्ठावच्छेदकतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्नं धर्मिविषयत्वनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नायाप्रकारतात्वावच्छिनावच्छेदकता तद्वत्प्रकारतावत्वमेवलक्षणार्थतयाविवक्षणीयमित्यर्थः। तेन = प्रकारतात्वेनावच्छेदकतायाः विवक्षणेन। साधारणधर्मादेः = वह्नितदभावसहचरित द्रव्यत्वादेः। **धर्मितेति**। निरुक्तद्रव्यत्वादेर्याधूमवत्पर्वतनिष्ठाधर्मितातदवच्छेदकीभूते वह्निव्याप्येधूमेइत्यर्थः। **नातिप्रसंगइति**। तथा च वह्नितदभावसहचरितद्रव्यत्ववान् धूमवत्पर्वतइत्याकारक ज्ञानीय धूमवत् पर्वतविषयत्वनिष्ठतादृशावच्छेदकतायां निरूपितत्वसम्बन्धेन प्रकारतात्वेनावच्छेदकताया द्रव्यत्वप्रकारत्वनिष्ठतया तादृश धूमादावसत्त्वात् न धर्मितावच्छेदकीभूतेवह्निव्याप्येधूमेऽतिव्याप्तिरितिभावः। ननुधर्मितावच्छेदक प्रकारतानिष्ठापि तादृशावच्छेदकता प्रकारतात्वावच्छिन्नैवेतिकुतोधर्मितावच्छेदकेऽति व्याप्तिवारणमत **आह धर्मितावच्छेदकीयेति**। धर्मितावच्छेदकनिष्ठप्रकारतायाइत्यर्थः। **निवेशादिति**। निरुक्तलक्षणघटकीभूतधर्मितावच्छेदप्रकारत्वनिष्ठावच्छेदकतातु धर्मितावच्छेदकतात्वाच्छिन्नानतु प्रकारतात्वावच्छिन्नेतिनकोऽपि दोषइति हृदयम्।

प्रकृतपक्षस्य = पक्षतावच्छेदकावच्छिन्नस्य। प्रकृतपक्षतायाः = साध्यसंदेहरूपायाः, सिषाधयिषाविरहविशिष्ट सिद्ध्यभावरुपायाः संदेहस्य विशेष्यतासम्बन्धेन पक्षवृत्तित्वात् पक्षतात्वं, तादृशसिद्ध्यभावस्य च स्वप्रतियोगिज्ञानविशेष्यत्वसम्बन्धेन पक्षवृत्तितयापक्षतात्वं बोद्धव्यम्। प्रथमेपक्षीभूततद्व्यक्तिमात्रस्य लक्षणघटकत्वं, द्वितीयेतु संदेहादिविशेष्यीभूतानां सर्वेषांलक्षणघटकत्वं निष्प्रयोजनकमिति सूचितम्॥

❀ मनोरमा ❀

वस्तुतस्तु कल्पानुसरणमिति मतं तत्तुच्छम्, जनकतावच्छेदकतायां पर्याप्तिर्ननिवेश्यते इत्यादिना जन्यतायां संशयजनकतावच्छेदकेतरानवच्छिन्नत्वरूपेतरवारकपर्याप्तेरनिवेश्यस्यपूर्वंसूचिततया तादृश जनकतावच्छेदकमात्रनिष्ठत्वस्य जन्यतायां निवेशयितुमशक्यत्वात्। वस्तुतः पक्षधर्मतापदानुपादाने साध्योपस्थितित्व विशिष्ट विषयताश्रयत्वमेव सव्यभिचारत्वंवक्तव्यम्, वैशिष्ट्यं स्वावच्छिन्न जनकतानिरूपिताव्यहितोत्तरत्वसंसर्गावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावत्व, स्वावच्छिन्न सहकारितावच्छेदकसाध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतानिरूपितअव्यवहितोत्तरत्वसंसर्गावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावत्वोभयसम्बन्धेन।

❀ गादाधरी ❀

धर्मिमात्रेति। मात्रपदेन पक्षतानिवेशव्यवच्छेदः।

यत्तु धर्मिपदमत्र मुख्यविशेष्यपरम्। तेन वह्निवह्न्यभावसहचरितधूमवद्वृत्तिप्रमेयत्ववान्पक्ष इत्यादिज्ञानीयधूमादिविषयतामादाय नाति-

❀ विवृतिः ❀

पक्षतादिनिवेशव्यवच्छेदःप्रकृतपक्ष प्रकृतपक्षतयोर्लक्षणघटकत्वव्यवच्छेदः। प्राञ्चस्तु निरुक्तसंशयजनकतानिरूपितपरम्परया विशेष्यत्वनिष्ठंयदवच्छेदकत्वं तन्निरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकतावत् प्रकारताश्रयत्वमात्रस्यैवलक्षणार्थत्वसम्भवे लक्षणघटकतयाधर्मिपदोपादानमपिनिरर्थकंस्यादतः तादृशलक्षणार्थघटकीभूतायां विशेष्यतायां मुख्यत्वप्रवेशलाभार्थकमेवधर्मिमात्रपरम् इत्यत्रधर्मिपदं वक्तव्यम्, अन्यथापर्वतो वह्निमान्धूमादित्यत्रयदा भ्रमात्मकं बह्निवह्न्यभावसहचरितत्वेनधूमवद्वृत्तिप्रमेयत्वप्रकारताक पर्वतविशेष्यताकंज्ञानंजातं तदातादृशज्ञाननिष्ठवह्निसंशयजनकतानिरूपितपरम्परया यत् धूमवत् विशेष्यत्वनिष्ठमवच्छेदकत्वं तन्निरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावत् प्रकारतायाः धूमेवर्त्तमानतया तत्रातिव्याप्तिःस्यात्, विशेष्यतायांमुख्यत्वनिवेशेतुनतत्रातिव्याप्तिः। निरुक्तधूमवन्निष्ठविशेष्यतायाः वृत्तित्वनिष्ठविशेष्यतानिरूपित धूमवन्निष्ठप्रकारत्वावच्छिन्नतया प्रकारत्वानवच्छिन्नत्वरुपमुख्यत्वस्यतत्रासत्त्वेन मुख्यविशेष्यतापदेन धूमवन्निष्ठविशेष्यतायाः धर्तुमशक्यत्त्वादितिवदन्ति, तन्मतंदूषयितुमुपन्यस्यति **यत्त्विति**। अत्र = धर्मिमात्रपरमित्यत्र। मुख्यविशेष्यपरं = प्रकारत्वानवच्छिन्नविशेष्यत्वाश्रयपरं। तेन = धर्मिपदस्यमुख्यविशेष्यपरतोपवर्णनेन। पक्षः = पर्वतः। **इत्यादीति**। इत्याकारकज्ञाननिष्ठायां संशयजनकतायां परम्परयाअवच्छेदकीभूतायाधूमवन्निष्ठविशेष्यतानिरुपितधूमादिप्रकारता तामित्यर्थः। नच संशयजनकतावच्छेदकीभूतायायाप्रकारता प्रत्येकंतत्तदवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वविवक्षणेनेयमतिव्याप्तिरितिवाच्यम् वक्ष्यमाणदूषणगणग्रासेनप्रकारतायांयावत्त्वस्यनिवेशयितुमशक्यत्त्वादितिध्येयम्।

तत्तदभावसहचरितत्वप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारताशालिज्ञानत्वेनैव संशयजनकतायाः विवक्षणीयतया सहचरितत्वधर्मितायां साक्षात् परम्परयावाअवच्छेदकीभूतपदार्थविषयतायाः संशयजनकतानवच्छेदकत्वेन विशेष्यतायां मुख्यत्वाऽनिवेशेऽपिनोक्तस्थलेधूमेऽतिव्याप्तिः सम्भवति। वह्निवह्न्यभावसहचरित धूमवद्वृत्तिप्रमेयत्ववान् पर्वत इत्याकारकज्ञानीयधूमवन्निष्ठविशेष्यतानिरुपितधूम-

❀ मनोरमा ❀

पक्षधर्मतापदोपादानेतु तादृश्यावच्छेदकतानिरूपितनिरूपितत्वसंसर्गावच्छिन्नावच्छेदकतावत् प्रकारताश्रयत्वं लक्षणार्थ इतिध्येयम्।

❀ गादाधरी ❀

प्रसङ्ग इति। तन्न। साहचर्यधर्मितावच्छेदकीयविषयताया जनकतावच्छेदककोटौ प्रयोजनविरहेणानिवेशान्निवेशेऽपि वा धर्मितावच्छेदकतात्वनैव तस्या निवेशनीयतया प्रकारतात्वेनानिवेशात्साहचर्यस्य धर्मितावच्छेकविषयतान्तःपातिधूमादिविषयतामादायातिप्रसङ्गाभावात्।

❀ विवृति ❀

प्रकारतायाः वह्निसंशय जनकतानवच्छेदकत्वेन तस्या लक्षणाघटकत्वादित्याशयेन दूषयति **तन्नेति**। प्रयोजन विरहेण = अव्याप्त्यादिदोषासम्भवेन। अनिवेशा**दिति**। तथा च विशेष्यतायांमुख्यत्व निवेशनमयुक्तमितिभावः।

ननुप्रत्येककोटि साहचर्य्याद्यवच्छिन्नप्रकारताशालिज्ञानयोः परस्परसहकारेण संशयजनकत्वमते धर्मितावच्छेदकीयविषयतायांसंशयजनकतावच्छेदकत्वमावश्यकम् अन्यथाधूमसहचरितवह्निमान् धूमाभावसहचरितद्रव्यवान् इत्याकारकज्ञानाभ्यामपि धूमसंशयोत्पादः स्यात् अतस्तत्संशयंप्रतितत्कोटि सहचरितत्वावच्छिन्नतद्धर्मावच्छिन्न प्रकारताशालिज्ञानसहकारेण तदभावसहचरितत्वावच्छिन्नतद्धर्मावच्छिन्न प्रकारताशालिज्ञानमेवसंशयजनकंवाच्यमित्यकामेनापिसाहचर्य्यधर्मितावच्छेदकविषयतायाः संशयजनकतावच्छेदकत्वस्याप्यावश्यकतया कुतोधूमेऽतिव्याप्तिवारणमत आह **निवेशेऽपिवेति**। संशयजनकतावच्छेदकत्वेन = धर्मितावच्छेदकीय विषयतायाः निवेशेऽपिवेत्यर्थः। धर्मितावच्छेदकतात्वेनैवधर्मितावच्छेदकतात्वावच्छिन्न संशयजनकतावच्छेदकतावत्त्वेनैव। तस्याः = धर्मितावच्छेदकीयविषयतायाः। एवकारव्यवच्छेद्यमाह**प्रकारतात्वेनेति**। प्रकारतात्वावच्छिन्नावच्छेदकताश्रयत्वेनेत्यर्थः। अति**प्रसंगाभावादिति**। तथा च वह्निवह्न्यभावसहचरित धूमवद्वृत्तिप्रमेयत्ववान् पर्वतइत्याकारकज्ञानीय प्रमेयत्वनिष्ठसाहचर्य्य धर्मितानिरूपितपरम्परया अवच्छेदकतायाः धूमादौसत्वेनधूमप्रकारत्वनिष्ठ संशयजनकतावच्छेदकतायाः धर्मितावच्छेदतात्वावच्छिन्नतया प्रकारतात्वावच्छिन्नसंशयजनकतावच्छेदकताश्रयीभूतप्रकारतापदेनधूमनिष्ठप्रकारतायाः धर्तुमशक्यत्वान्नतत्रातिव्याप्तिरितिभावः।

प्रकृतपक्षविशेष्यत्वनिष्ठा पक्षताश्रयविशेष्यत्वनिष्ठावायासाध्यसंशयजनकतावच्छेदकतावच्छेदकतातन्निरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकतावत् प्रकारताश्रयत्वस्यलक्षणार्थत्वानभ्युपगमे धर्मिमात्रविशेष्यत्वनिष्ठतादृशावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताश्रयत्वस्यैवलक्षणार्थतया घटो नित्यःशब्दत्वादित्यादौ शब्दत्वाभाववान् घटइत्याकारकस्वरूपासिद्धिनिश्चयदशायां नित्यत्वाभाववान् घटइत्याकारकबाधनिश्चय[1] दशायामपि नित्यत्वतदभाववद्वृत्यावृत्तशब्दत्ववान्

❀ दीधितिः ❀

**न चैवं नित्यो घटः शब्दत्वादित्यत्र बाधाद्यवतारेऽसाधारण्यापत्तिः,**

❀ गादाधरी ❀

पक्षपदस्य पक्षताविशिष्टप्रकृतपक्षपरत्वमावश्यकम्, अन्यथा वटादिरूपपक्षे शब्दत्वादिना नित्यत्वसाधने बाधस्यासिद्धेर्वाऽवतारदशायामपि सपक्षविपक्षव्यावृत्तशब्दत्ववान् शब्द इत्यादिज्ञानविषयतामादाय सव्यभिचारत्वापत्तिः। न चेष्टापत्तिः, दोषान्तरसङ्करप्रसङ्गात्। अस्मन्मते च पक्षताविशिष्टप्रकृतपक्षवृत्तिताज्ञानस्य विशेषणविधया लक्षणघटकत्वान्नातिप्रसङ्गः। बाधग्रहस्थले पक्षताया असिद्धेरवतारे हेतौ प्रकृतपक्षधर्मताज्ञानस्याभावादित्याशङ्कते–न चैवमिति। एवं–पक्षपदस्य धर्मिमात्र-

❀ विवृतिः ❀

शब्दइत्याकारकज्ञानोत्पत्तौ बाधकाभावेन तादृशज्ञानीयतथाविधप्रकारताश्रयत्वरूपासाधारण्यमादाय तदानीमपि शब्दत्वादेः सव्यभिचारत्वापत्तिः। पूर्वोक्तरीत्या पक्षविशेष्यत्वादेर्लक्षणघटकत्वे, तु न शब्दत्वादेः सव्यभिचारित्वं सम्भवति स्वरूपासिद्धिनिश्चयदशायां नित्यत्वतदभाववद्व्यावृत्तशब्दत्ववान् घट इत्याकारकज्ञानोदय एव न सम्भवति, स्वरूपासिद्धिनिश्चयस्यैव तादृशज्ञानप्रतिबन्धकत्वात्, बाधनिश्चयदशायां तादृशज्ञानोत्पत्तिसम्भवेऽपि घटादेः संदिग्धसाध्यकत्वरूपपक्षत्वाऽसम्भवेन घटविशेष्यतायाः पक्षताश्रयनिष्ठविशेष्यतापदेन धर्तुमशक्यत्त्वादित्याशयवतां दीधितिकृतां 'न चैवमि'त्यादिग्रन्थावतरणं संगमयितुमाह–पक्षपद**स्येत्यादि**। दोषान्तरसंकरप्रसंगा**दिति**। बाधितत्वादिविशिष्टस्य शब्दत्वादेः सव्यभिचारित्वाभ्युपगमे हेत्वाभासानां पञ्चधा विभागो न स्यादिति हृदयम्। अस्मन्मते = पक्षपदस्य लक्षणघटकत्ववादिनां मते। प्रकृतपक्षताश्रयविशेष्यत्वनिष्ठसंशयजनकतावच्छेदकतानिरूपितावच्छेदकतावत्प्रकारताश्रयत्वस्योपलक्षणतया सव्यभिचारपदप्रतिपाद्यत्वे स्वरूपासिद्ध्यादिनिश्चयशून्यकालीननित्यत्वतदभाववद्व्यावृत्तशब्दत्ववान् घटइत्याकारकज्ञानीयतथाविधशब्दत्वप्रकारतामादाय स्वरूपासिद्ध्यादिनिश्चयकालेऽपि शब्दत्वादेः सव्यभिचारित्वापत्तिवारणं दुःशक्यं स्यादत आह—विशेषण**विधयेति**। संशयजनकज्ञानीयतथाविधपक्षविशेष्यतानिरूपितप्रकारताया विशेषणत्वेनेत्यर्थः। प्रकृतपक्षादेर्लक्षणघटकत्वमतेऽतिप्रसंगाभावे हेतुमाह–**बाधेति**। नित्यत्वाभाववान् घटइत्याकारकनिश्चयदशायामित्यर्थः। पक्षतायाः = साध्यसंदेहरूपपक्षतायाः। असिद्ध्यवतारे = शब्दत्वाभाववान् घटइत्याकारकनिश्चयदशायाम्। **प्रकृतेति**। नित्यत्वतदभाववद्व्यावृत्तशब्दत्ववान् घटइत्याकारकज्ञानस्य इत्यर्थः। **अभावादिति**। शब्दत्वाभाववान्घटइ-

❀ गादाधरी ❀

परत्वे। बाधसम्पादनायानित्यत्वमुपेक्ष्य नित्यत्वसाध्यतानुसरणम्। एवञ्च घटो नित्य इत्युक्तौ नञ्प्रश्लेषशङ्कया नित्यत्वसाध्यकत्वन्न स्फुटीभवतीति नित्यो घट इत्युक्तम्। बाधादीत्यादिना स्वरूपासिद्धिपरिग्रहः। असाधारण्यापत्तिः—असाधारण्यज्ञानमादाय सव्यभिचारत्वापत्तिः। एतेनास्य-सव्यभिचारसामान्यलक्षणतया एतदतिप्रसक्तेरसाधारण्यानापादकत्वाद-सङ्गतिरित्यपास्तम्। सपक्षावृत्तित्वेन साधारण्यस्य केवलान्वयिधर्मस्य पक्षतानवच्छेदकत्वादनुपसंहारित्वस्य वाऽसम्भवात्परिशेषेणासाधारण्यापत्तिरिति वार्थः। तदानीं सपक्षविपक्षव्यावृत्तत्वसत्त्वे दोषान्तरावतारेऽपि सव्यभिचारत्वमसाधारण्यंचेष्टमेव क्षतिविरहादित्याशयेनाह इष्टत्वादिति। अन्यथा—पक्षतायाः प्रकृतपक्षधर्मताज्ञानस्य वा विशेषणत्वे। बाधासिद्ध्योरिति। बाधस्यासिद्धेर्वाऽवतारदशायां ह्रदादौ धूमादि-

❀ विवृतिः ❀

त्याकारकनिश्चयस्यघटधर्मिकतादृशशब्दत्वप्रकारकबुद्धौ प्रतिबन्धकत्वादित्याशयः। घटो नित्यइत्यनुक्त्वा नित्यो घट इत्यभिधानस्य सयुक्तिकत्वमुपपादयितुमाह 'बाधेत्यादिना इत्युक्तमित्यन्तेन'। असाधारण्यापत्तिरित्यादियथाश्रुतदीधितिग्रन्थेन शब्दत्वं यदि बाधादिनिश्चयकालेऽपि निरुक्तलक्षणप्रतिपाद्यधर्मवत्स्यात्तदाऽसाधारण्यवत्स्यादित्येवमापत्तिः पर्य्यवसिता, सा च न सम्भवति, निरुक्तधर्मस्य साधारणेऽपि सत्त्वेन तत्रासाधारण्यस्य विरहेण व्यभिचारात् निरुक्तधर्मस्यापादकत्वानुपपत्तेरतः शब्दत्वयदि बाधादि-निश्चयकालेऽपि निरुक्तलक्षणाश्रयीभूतासाधारण्यवत्स्यात्तदा सव्यभिचारिस्यादित्येवमापादनीयमित्याशयेनासाधारण्यापत्तिरित्यस्यार्थमाहासा**धारण्येति**। असाधारण्यज्ञानीयप्रकारताश्रयत्वमादायेत्यर्थः। एतेन=सव्यभिचारित्वापादनप्रदर्शनेन, पराास्तमितिपरेणान्वयः। एतदतिप्रसक्तेः=बाधादिकालेऽपि शब्दत्वादौ प्रकृतपक्षाघटितनिरुक्तलक्षणसत्त्वरूपातिप्रसक्तेः। असाधारण्यानापादकत्वात्=व्यभिचारेणासाधारण्याव्याप्यत्वात्। असंगतिः=असाधारण्यापत्तिप्रदर्शनासंगतिः। यथाश्रुतार्थत्यागभयेनाह-**सपक्षेति**। इतिवार्थः=यथाश्रुतासाधारण्यापत्तिरेवार्थः। तथा च शब्दत्वं यदि बाधादिनिश्चयकालेऽपि साधारण्याद्यभाववत्त्वे सति प्रकृतपक्षपदाघटितयथोक्तलक्षणाश्रयीभूतं स्यात् असाधारण्यवत्स्यादित्यापत्तौ न कोऽपि दोष इति भावः।

**तदानीमिति**। बाधादिनिश्चयकालेऽपीत्यर्थः। **इष्टत्वादितीति**। तथा च पक्षपदं धिममात्रपरमेव वक्तव्यमित्याशयः। दीधितिस्थान्यथापदार्थं व्याचष्टे **पक्षतायाइति**।

❀ दीधितिः ❀

**इष्टत्वात्, अन्यथा बाधासिद्ध्योरन्यतरावतारदशायां साधारणासंग्रहापत्तेः। असिद्धिसङ्कीर्णत्वेन सव्यभिचारमध्याप्रवेशे सव्यभिचारसङ्कीर्णतया असिद्धेऽप्यनन्तर्भावापत्तौ तस्यातिरिक्तहेत्वाभासत्वापत्तेः। न**

❀ गादाधरी ❀

साधने वह्न्यादेरसङ्ग्रहापत्तेरित्यर्थः। साधारण्यस्य नित्यदोषतया तत्रेष्टापत्तिर्न सम्भवतीति भावः।

ननु दोषान्तरावतारदशायां सव्यभिचारत्वं क्वापि नेष्यत एव भवतु साधारण्यमप्यनित्यदोष इत्यत आह–असिद्धिरिति। साधार-

❀ विवृतिः ❀

असंग्रहाप**त्तेरिति**। तथा च प्रकृतपक्षादेर्लक्षणघटकत्वे ह्रदो धूमवान् वह्नेरित्यादौ यदा धूमाभाववान्ह्रदइत्याकारकबाधनिश्चयस्तदा संदिग्धसाध्यकत्वरूपपक्षताविरहेण, यदा वह्न्यभाववान्ह्रदइत्याकारकासिद्धिनिश्चयस्तदा धूमधूमाभाववद्वृत्तिवह्निमान् ह्रदइत्याकारकज्ञानोदयासम्भवेन च प्रकृतपक्षादिघटितनिरुक्तज्ञानप्रकारतामादाय धूमसाध्यकवह्निरूपसाधारणहेतौ लक्षणसमन्वय एव न सम्भवति। अस्मन्मते च पक्षपदस्य धर्मिमात्रपरतया तादृशबाधादिकालेऽपि धूमधूमाभावसहचरितवह्निमदयोगोलकमित्याकारकज्ञानोत्पत्तौ बाधकाभावात्तादृशज्ञानप्रकारतामादायैव तदानीं लक्षणसमन्वयो निराबाधएवेतिभावः। ननु निरुक्तबाधादिनिश्चयकाले धूमसाध्यकवह्निहेतोरपि साधारणत्वं नेष्यत एवेत्यत आह–**साधारण्यस्येति**। तत्र=बाधादिनिश्चयकाले। इष्टापत्तिः=लक्षणाऽसत्त्वं। **नन्विति**। दोषान्तरावतारदशायां=बाधादिनिश्चयकाले। नन्वेवं ह्रदो धूमवान् वह्नेरित्यत्रापि बाधादिनिश्चयकाले वह्न्यादेः साधारणत्वं न स्यादत आह **भवत्विति**। अनित्यदोषः=कादाचित्को दोषः। तथाच तदानीं पक्षधर्मताज्ञानविरहेण साधारण्यमपिनेष्टमेवेति भावः। **दीधितौ असिद्धीति**। धर्मिमात्र घटित निरुक्तलक्षणाश्रयीभूते ह्रदादिपक्षकधूमादिसाध्यक वह्निरूपहेतौ। हेत्वभाववत् पक्षत्वसत्त्वे इत्यर्थः। सव्यभिचारमध्याऽप्रवेशे=पक्षतादिघटितप्रकृतलक्षणाश्रयत्वाभावेनसव्यभिचारित्वाभावाभ्युपगमे। सव्यभिचार संकीर्णतया=निरुक्तबाधितस्य वह्न्यादिहेतोः बाधादिनिश्चयपूर्वकालोत्पन्न पक्षधर्मताज्ञानीय प्रकारताश्रयत्वेन सव्यभिचारितया। असिद्धेऽप्यनन्तर्भावापत्तौ=हेत्वभाववत् पक्षकत्वाभावस्यावश्यकत्वे। पक्षधर्मताज्ञानस्यैवासिद्धिनिश्चयविरोधित्वादिति हृदयम्। तस्य=बाधादि निश्चयकालीन धूमधूमाभावसहचरितवह्निमदयोगोलकमित्याकारक ज्ञानीय प्रकारताश्रयस्य वह्न्यादेः। अतिरिक्त हेत्वाभासतापत्तेः=

❀ दीधितिः ❀

**च व्याप्यविरुद्धयोः साधारण्यभ्रमदशायामतिप्रसङ्गः, धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसन्देहजनकं तद्रूपावच्छिन्नस्योक्तत्वात्। तच्च रूपं साधारणत्वादीति सिद्धान्ते स्फुटीभविष्यति ॥**

❀ गादाधरी ❀

ण्यभ्रममादायेति। यथायथं साध्याभाववद्वृत्तित्वसाध्यवद्वृत्तित्वांशे भ्रमात्मकं साधारण्यज्ञानमादायेत्यर्थः। धर्मिणि–फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्ने, यद्रूपावच्छिन्नवत्ताज्ञानं–यद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वावच्छिन्नम्। साध्यसन्देहजनकमिति। एतच्च संशयं प्रति कोट्युपस्थितिर्विशेषणज्ञानादिमुद्रयैव हेतुः साधारणधर्मवद्धर्मिज्ञानञ्च साक्षादेव तथेति निष्कृष्टमते कोट्युपस्थितिजनकत्वाघटितमेव लक्षणङ्कर्तव्यमित्यभिप्रायेण। यथाश्रुतमूलानुरोधे तु संशयजनककोटिद्वयोपस्थितिजनकत्वमेव निवेशनीयम्। साध्यसंशयजनककोटिद्वयोपस्थि-

❀ विवृतिः ❀

हेत्वाभासातिरिक्ततापत्तेः। नचेष्टापत्तिः, निरुक्तज्ञानस्यापि व्याप्तिधीविरोधितया तत्र हेत्वाभासातिरिक्तत्वस्यासत्त्वेनेष्टापत्तेरसम्भवादिति ध्येयम्। टीकायां यथायथमित्यादि वह्निव्याप्येधूमे साध्याभाववद्वृत्तित्वांशस्य तद्विरुद्धे च जलत्वे साध्यवद्वृत्तित्वांशस्य भ्रमात्मकमित्यर्थः॥ फलीभू**तेत्यादि**। तथाच फलीभूत संशयधमितावच्छेदकता पर्याप्त्यधिकरण धर्मावच्छिन्न विशेष्यता निरूपित यद्रूपावच्छिन्न प्रकारत्वं साध्यसंशयजनकतावच्छेदकं तद्रूपवत्वं सव्यभिचारत्वमित्यस्यैव सव्यभिचार सामान्यलक्षणतया नव्याप्यविरुद्धयोरतिव्याप्तिः, वह्निवह्न्यभाववद्वृत्ति धूमत्वस्य वह्निवह्न्यभाववद्वृत्तिजलत्वत्वस्य चाप्रसिद्धतया यद्रूपपदेन तयोर्धर्तुमशक्यत्वादितिभावः। यथाश्रुतमूलं परित्यज्यैवेतल्लक्षणाभिधानमित्याह **एतच्चेति**। एतादृश लक्षणाभिधानञ्चेत्यर्थः। विशेषण ज्ञानादि मुद्रयैव = विशेषण ज्ञानत्वादिनैव। आदिनाविशेषणतावच्छेदक प्रकारक ज्ञानत्वादेः परिग्रहः। एवकारेण साधारणादि धर्मवद्धर्मिज्ञान जन्यत्वेन हेतुत्वव्यवच्छेदः। **हेतुरिति**। संशयादीत्यादिः। साक्षादेव = उपस्थितिमद्वारीकृत्यैव। तथा = संशयहेतुः। निष्कृष्टमते = सिद्धान्तिमते। निवेशनीय**मिति**। धर्मिविशेष्यता निरूपित यद्रूपावच्छिन्न प्रकारता साध्यसंशय जनककोटिद्वयोपस्थिति जनकतावच्छेदकीभूता तद्रूपवत्त्वमेव निवेशनी-

---

(१) अत्र गादाधर्यनुसारेण–साधारण्यभ्रममादायातिप्रसङ्ग–इति पाठस्समुचितः किन्तु सर्वत्रेदृशस्यैव पाठस्योपलंभात्स एव धृत इति बोध्यम्।

❀ गादाधरी ❀

तिजनकमित्यपि व्याचक्षते । तन्मते धर्मिणीति प्रकारतात्वेन अवच्छेकतालाभायेति ध्येयम् ।

अथैवं साधारण्यादिघटककेवलसाध्यवद्वृत्तित्वत्वाद्यवच्छिन्नत्वमादायातिप्रसङ्गो दुर्वारः । न च धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकतानतिरिक्तवृत्ति तद्वत्त्वस्य साध्यसंशयजनकतावच्छेदकीभूता या धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वस्य वा निवेशान्नातिप्रसङ्गः, संशयं प्रतिकोटिद्वयसाहचर्यावच्छिन्नप्रकारताशालि-

❀ विवृतिः ❀

यमित्यर्थः । एतन्मते साधारणादि धर्मवद्धर्मिज्ञानजन्यैव कोटिद्वयोपस्थितिः संशयजनिकेत्यवध्येयम् । **व्याचक्षते** । केचित् दीधितिकारोक्तलक्षणमितिशेषः । नन्वेतन्मते धर्मिणीत्यभिधानमनर्थकम् । नित्यत्व तदभाव विषयक ज्ञानवानयमित्याकारक ज्ञानाधीनायाः कोस्त्युपस्थितेः साधारणादि धर्मवद्धर्मिज्ञानाजन्यतया संशयाजनकत्वादेव तादृशज्ञानमादाय ज्ञानहेतावतिव्याप्तिवारण सम्भवादित्याशङ्क्याह **तन्मते इति** । यथाश्रुतमूलानुरोधिनां मते इत्यर्थः । **लाभायेति** । तथा च साध्यसंशयत्व न्यूनवृत्तिजन्यता निरूपिता या कोटिद्वयोपस्थिति निष्ठाजनकता तन्निरूपिताव्यवहितोत्तरत्व सम्बन्धावच्छिन्न साधारणादिधर्मवद्धर्मिज्ञान निष्ठावच्छेदकता निरूपित निरूपकत्व सम्बन्धावच्छिन्न धर्मिविशेष्यत्वनिष्ठावच्छेदकतानिरूपिता या निरूपितत्त्वसम्बन्धावच्छिन्न प्रकारतात्वावच्छिन्नावच्छेदकता तद्वत् प्रकारताश्रयत्वमेव विवक्षणीयम् । तेन न धूमवान् पर्वतो वह्निमान् द्रव्यत्वादित्यादौ साधारणधर्मवद्धर्मिज्ञानीय धूमप्रकारतामादाय धूमेऽतिप्रसंगइत्याशयः । एतन्मतस्य निर्युक्तिकत्त्वात् ध्येयमित्युक्तम् । तत्कोटि सहचरितत्वाद्यवच्छिन्न प्रकारताशालि ज्ञानत्वेन तदभावकोटि सहचरितत्वाद्यवच्छिन्न प्रकारताशालिज्ञानत्वे नच पृथगेव संशय जनकतेतिमते व्याप्यविरुद्धयोरतिव्याप्तिमाशङ्कते अथैव**मिति** । एवं = फलीभूतेत्यादिना लक्षणार्थनिर्वचने । साधारण्या**दीति** । असाधारण्य घटक केवल साध्याभाववद्वृत्तित्वावच्छिन्न प्रकारतामादायाप्यतिव्याप्तिं सूचयितुं उभयत्रादिपदम् । अतिप्र**संगइति** । तथाच पर्वतत्वाद्यवच्छिन्न विशेष्यता निरूपित वह्निमद्वृत्तित्वादिविशिष्ट धूमत्वाद्यवच्छिन्न प्रकारता शालि ज्ञानस्यापि तत्र वह्निसंशय जनकतया तादृश वह्निमद्वृत्तित्वविशिष्ट धूमत्वस्य धूमेसत्त्वात् भवति पर्वतोवह्निमान् धूमादित्यादौ धूमेऽतिव्यप्ति रितिहृदयम् । ननुफलीभूत संशय धार्मतावच्छेदकावच्छिन्न

❀ गादाधरी ❀

ज्ञानत्वेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानस्यैकैकहेतुताकल्पनादेकैकको-टिसाहचर्यावच्छिन्नप्रकारताशालिज्ञानस्य संशयाजनकतया उभयकोटि-साहचर्यादेरेव तादृशधर्मत्वादिति वाच्यम्। उक्तरूपेणैकैकहेतुताकल्प-नेत्वेककोटिसाहचर्याद्यवच्छिन्नत्वविशिष्टापरकोटिसाहचर्याद्यवच्छिन्नत्वे—

❀ विवृतिः ❀

विशेष्यता निरूपित यद्रूपावच्छिन्न प्रकारत्वं साध्यसंशय जनकतावच्छेदकमित्य-त्रावच्छेदकत्वमवश्यं तादृश प्रकारत्वव्यापक साध्यसंशय जनकताकत्वरूपमनति-रिक्तवृत्तित्वात्मकं ग्राह्यमन्यथा धूमत्वादिना घटाद्यवगाहि धूमधूमाभाववद्वृत्ति वह्निमदयोगोलक मित्याकारकज्ञानादपि धूमसंशयोत्पादेन निरूप्यनिरूपकभावापन्न विषयताशालि ज्ञानत्वेनैव संशयजनकतायाः आवश्यकतया अखण्ड धूमतदभावव-द्वृत्तित्वविशिष्टवह्नित्वावच्छिन्न प्रकारतायाः संशयजनकतानवच्छेदकतयाऽसम्भ-वोऽव्याप्तिर्वास्यात्। एवञ्चोभयसाहचर्य्यावच्छिन्नैकप्रकारताशालिज्ञानमेव संशय-जनकं नतु प्रत्येककोटिसाहचर्य्यावच्छिन्न प्रकारताशालिज्ञानंत था। केवलवह्निमद्वृत्ति-त्वावच्छिन्न धूमप्रकारतायामुभयसाहचर्य्यावच्छिन्न प्रकारतात्वेन संशयजनकता निरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वसत्वेऽपि तादृशप्रकारतायाः केवलवह्निसहच-रितधूमवान् इत्याकारकज्ञानेऽपि वर्त्तमानतया तत्र संशयजनकताविरहेण तस्याः संशयजनकतातिरिक्तवृत्तित्वात् न तादृश प्रकारतामादाय व्याप्ये ऽतिव्याप्तिसम्भवः। यद्यपि यादृशस्थलविशेषे वह्निमद्वृत्तिधूमप्रकारताकं ज्ञानमुभयसाहचर्य्यावच्छिन्न धूम-प्रकारताक ज्ञानात्मकमेव समूहालम्बनं जायते नतु तद्भिन्नं, तादृशस्थले वह्निमद्वृत्ति-त्वावच्छिन्न धूमप्रकारतायाः संशयजनकता व्यापकतया तादृशप्रकारतामादाय व्याप्ये-ऽतिव्याप्तिः। अनतिरिक्तवृत्तित्वस्य व्यापकत्वघटितत्वेन गौरवञ्चेति विभाव्यते तथापि धर्मितावच्छेदकावच्छिन्न विशेष्यतानिरूपिताया साध्यसंशयजनकतावच्छेदकीभूता प्रकारता तदवच्छेदकता पर्य्याप्त्यधिकरण धर्मवत्त्वविवक्षणे न व्याप्येऽतिव्याप्तिः। केवल-वह्निमद्वृत्तित्वावच्छिन्न प्रकारतायाः संशयजनकतावच्छेदकत्वेऽपि तादृश संशयजन-कतावच्छेदक प्रकारतावच्छेदकतापर्य्याप्त्यधिकरणं वह्निवह्न्यभावोभयसहचरितत्व-मेव तस्य च वह्निव्याप्ये धूमे विरहादित्येवं नचेत्यादिना ऽशङ्क्य समाधत्ते उक्तरूपे-**णैकैकेति**। उभयसाहचर्य्यावच्छिन्न प्रकारताशालिज्ञानत्वेन संशयं प्रत्येक हैतुता-कल्पने इत्यर्थः। धूमधूमाभावोभयसहिचरितत्वावच्छिन्नत्वं हि प्रकारतायां धूमसह-चरितत्वावच्छिन्नत्व विशिष्टं यत् धूमाभावसहचरितत्वावच्छिन्नत्वं तद्वत्वं वाच्यम्। अन्यादृशस्य तस्य वक्तुमशक्यत्वादित्याह **तत्कोटीति**। विशेष्य विशेषणभावे

❀ गादाधरी ❀

नैव प्रकारताया निवेशनीयतया अवच्छिन्नतयोर्विशेष्यविशेषणभावे विनिगमनाविरहात्, व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानान्तर्भावानुपपत्तेश्च। तत्र व्याप्यतदभावयोः प्रत्येकमुभयकोटिसहचरितत्वाभावात्। न च व्याप्यसंशयस्य पृथक्कारणतामत एवेदं लक्षणमिति वाच्यम्। व्याप्यसंशयस्येत्यादिग्रन्थविरोधात्। न च यत् यद्रूपावच्छिन्नप्रकारकज्ञानत्वेन

❀ विवृतिः ❀

विशेष्यत्वे विशेषणत्वे च। विनिगमनाविरहा**दिति**। तथाच यथा धूमसहचरितत्वावच्छिन्नत्वविशिष्टधूमाभाव सहचरितत्वावच्छिन्नत्ववत् प्रकारताशालिज्ञानं संशयजनकं तथा धूमाभाव सहचरितत्वावच्छिन्नत्वविशिष्ट धूमसहचरितत्वावच्छिन्नत्ववत् प्रकारताशालिज्ञानस्यापि संशयजनकत्वस्यावश्यकतया गुरुरूपेण कारणताकल्पनद्वयमपेक्ष्य धूमादिप्रत्येकसहचरितत्वावच्छिन्नप्रकारताशालिज्ञानत्वादिना लघुरूपेण कारणताद्वयकपनमेव समीचीनम्। एवञ्च केवलवह्निमद्वृत्तिधूमवान् इत्याकारकज्ञानमादाय व्याप्येऽतिव्याप्तिवारणमशक्यमेवेति भावः। ननूक्तातिव्याप्तिवारणाय गुरुरूपेणापि कारणताद्वयं कल्पनीयम्, फलमुखगौरवस्याऽकिञ्चित्करत्वादत आह—व्याप्यसंशय**स्येति**। पर्वतो वह्निव्याप्यधूमवान्नवेतिसंशयस्येत्यर्थः। **अयं भावः**—व्याप्यसंशयस्य पृथक्कारणतापत्ते इत्याद्युत्तरग्रन्थघटितपृथक्पदेन तादृशसंशयस्य साधारणधर्मवत्ताज्ञानत्वेनापि एकं संशयजनकत्वमस्तीति सूचितम्। उभयसहचरितत्वावच्छिन्नप्रकारताशालिज्ञानत्वेन साधारणधर्मवत्ताज्ञानस्य संशयजनकत्वे तु व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानात्मकत्वं न सम्भवति, वह्निव्याप्ये वह्निवह्न्यभावसहचरितत्वस्य वह्निव्याप्याभावेऽपि तादृशसहचरितत्वस्यासत्त्वात्, प्रत्येककोटिसहचरितत्वावच्छिन्नप्रकारताशालिज्ञानत्वेन साधारणधर्मवत्ताज्ञानस्य संशयजनकत्वे तु तादृशसंशयस्यापि साधारणधर्मवत्ताज्ञानात्मकत्वे न किमपि बाधकम्, वह्निव्याप्ये वह्निसहचरितत्वस्य, वह्निव्याप्याभावे च वह्न्यभावसहचरितत्वस्याक्षतत्वात्, अतस्तादृशोत्तरग्रन्थविरोधभयेन प्रत्येककोटिसाहचर्यावच्छिन्नप्रकारताकज्ञानत्वेनैव-संशयजनकत्वं वाच्यम्, एवञ्च केवलवह्निमद्वृत्तित्वावच्छिन्नप्रकारतामादाय वह्निसाध्यकधूमेऽतिव्याप्तिर्वारयितुमशक्यैवेति। उक्तातिव्याप्तिं वारयितुं शंकते—**नचेति**। वाच्यमिति परेणान्वयः। **यद्यद्रूपेति**। फलीभूतसंशयधर्मितावच्छेदका-

❀ मनोरमा ❀

**नच यद्यद्रूपेति**। अत्रानतिरिक्तवृत्तित्वरूपावच्छेदकत्वं तृतीयार्थः तेन न परकल्पाभेदः। नच यत्त्वतत्त्वादिघटितत्वेनाननुगमः, प्रकृतसाध्यसंशयजनकतानतिरिक्तवृत्तिप्रकारतावच्छेदकतावद्धर्मत्वव्यापकरूपावच्छिन्नवत्त्वं सव्यभिचारत्वमित्यस्य विवक्षणीयत्वाद् व्यापकत्वञ्च,स्वव्यापक-

### ❀ गादाधरी ❀

संशयजनकता तत्तद्रूपवत्त्वस्य संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्तिमन्तो ये ये धर्मास्तद्धर्मवत्त्वस्य वा विवक्षया नातिप्रसङ्ग इति वाच्यम्। सत्तावत्समवेतजातिमान्सत्ताभाववत्समवेतजातिमानयमित्यादिभ्रमविषयतावच्छेदकसत्तावत्समवेतत्वाद्यादाय सत्तादिसाध्यके जात्यादावतिव्याप्तेः। सत्ताभाववत्समवेतत्वस्याप्रसिद्ध्या यत्पदेन तदुपादानासम्भवात्।

### ❀ विवृतिः ❀

वच्छिन्नविशेष्यतानिरूपितयादृशयादृशरूपावच्छिन्नप्रकारताशालिज्ञानं साध्यसंशयजनकं तादृशतादृशरूपवत्त्वं सव्यभिचारत्वं, तेन न धर्मितावच्छेदकनिष्ठप्रकारतामादाय धर्मितावच्छेदकानाश्रये साधारणादावव्याप्तिः, तथाच न व्याप्यादावतिव्याप्तिः, वह्निमद्वृत्तित्वादिनेववह्न्यभाववद्वृत्तित्वादिधर्मेणापि धूमप्रकारताकज्ञानस्य संशयजनकतया तादृशवह्निमद्वृत्तित्वस्य धूमे सत्त्वेऽपि तादृशयावद्रूपान्तर्गतवह्न्यभाववद्वृत्तित्वस्य धूमे विरहादिति हृदयम्। यद्यद्रूपमित्यनेन संशयजनकतावच्छेदकतापर्य्याप्तिमद्रूपस्यैव विवक्षणीयत्वादाह–**संशयेति**। फलीभूतसंशयधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपिताया साध्यसंशयजनकतावच्छेदकीभूता प्रकारता तदवच्छेदकतापर्य्याप्तिमन्त इत्यर्थः। तद्धर्मवत्वस्य=तादृशयावद्धर्मवत्त्वस्य-नाति**प्रसंगइति**। वह्न्यभावादिमद्वृत्तित्वादेरपि यावदन्तर्गततया तस्य धूमादिव्याप्यादाव सत्त्वादिति भावः। उक्तविवक्षणे सत्तासाध्यकजातिरूप सद्धेतावतिव्याप्तिः, सत्तावत्समवेतजातिमान् सत्ताभाववत्समवेतजातिमानयमित्याकारकज्ञानस्य भ्रमात्मकस्य प्रसिद्धावपि, सत्ताभाववत्समवेतत्वस्याप्रसिद्धतया यद्रूपपदेन सत्ताधिकरणवृत्तित्वस्यैवोपादातुं शक्यत्वेन तादृशसत्ताधिकरणनिरूपितसमवायावच्छिन्नवृत्तित्वस्य च जातिरूपहेतौ सत्त्वादित्याशयेन। समाधत्ते–सत्तावत्**समवेतेति**। सत्ताधिकरणनिरूपितसमवायावच्छिन्नवृत्तितावज्जातिमान् सत्ताभावाधिकरणनिरूपितसमवायावच्छिन्नवृत्तितावज्जातिमानयमित्यर्थः। इत्यादि**भ्रमेति**। इत्याकारकसमूहालम्बनस्य भ्रमात्मकज्ञानीयप्रकारतावच्छेदकसत्ताधिकरणनिरूपितसमवायावच्छिन्नवृत्तित्वाद्यादायेत्यर्थः। तदुपादानासंभवात् = सत्ताभाववत्समवेत-

### ❀ मनोरमा ❀

तादृशावच्छेदकतावत्वसम्बन्धेन। तादृशधर्मत्वव्यापकीभूतं रूपं साधारणादिस्थले साध्यवद्वृत्तित्वसाध्याभाववद्वृत्तित्वोभयत्वम्। अतएव तादृशोभयत्वस्याप्रसिद्धतयाऽग्रे केवलसत्तावत्समवेतत्वमादायातिव्याप्तिरभिधास्यते।

द्वितीयकल्पेतु अनतिरिक्तवृत्तित्वमनिवेश्य संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्त्यधि-

❀ गादाधरी ❀

वस्तुतस्त्वेवंविवक्षणेऽसाधारण्यादेरपि तादृशधर्मतया साधारणादेरपि तादृशयावद्धर्मवत्त्वाभावादसम्भव एव। न च स्वनिष्ठतादृशप्रका-

❀ विवृतिः ❀

त्वस्योपादानासंभवात्। ननु सत्ताधिकरणनिरूपितसमवायावच्छिन्नवृत्तित्वाभावरूपासाधारण्यादेरपि तादृशयावद्रूपान्तर्गततया तस्य च जातिरूप हेतावसत्त्वादेव न सत्तावान् जातेरित्यत्रातिव्याप्तिरित्यत आह-वस्तुत **इति**। एवंविवक्षणे यद्यद्रूपेत्यादिना लक्षणार्थस्य निर्वचने। असाधारण्यादेरपि = साध्यवद्व्यावृत्तत्वसाध्याभाववद्व्यावृत्तत्वादेरपि। तादृशधर्मतया = पूर्ववत् यद्यद्रूपान्तर्गतत्वेन धर्तुं शक्यतया। साधारणा**देरपीति**। आदिना असाधारणपरिग्रहः। **तादृशेति।** साध्यवद्व्यावृत्तत्वादिघटितयावद् धर्मवत्त्वाभावादित्यर्थः। **असम्भव इति**। तथा च यथा साध्यवद्व्यावृत्तत्वादेर्जातिहेतावसत्त्वेन सत्तावान् जातेरित्यत्रातिव्याप्तिवारणं तथा साध्यसंशयजनकतावच्छेदक प्रकारतावच्छेदकतापर्याप्त्यधिकरणीभूतानां साध्यवद्व्यावृत्तत्व-साध्याभाववद्व्यावृत्तत्व-साध्यवद्वृत्तित्व साध्याभाववद्वृत्तित्वादि-रूपचतुष्टयधर्माणां साधारणहेतौ असाधारण हेतौचा सत्त्वेन कुत्रापि लक्षणसमन्वयासम्भवात् भवत्यसम्भव इति भावः। ननु लक्षणत्वेनाभिमततत्तत्साधारणादौ वर्त्तमाना या संशयजनकतावच्छेदकप्रकारता तदवच्छेदकतापर्य्याप्त्यधिकरणीभूता यावन्तो धर्मास्तादृशयावद्धर्मवत्वमेव तत्तत्साधारणादौ सव्यभिचारित्वं वाच्यं तथा च नासम्भवः। तत्तत्साधारणादिवृत्तितादृशप्रकारतावच्छेदकयावद्धर्मपदेन साध्यवद्व्यावृत्तत्वादेर्धर्त्तुमशक्यत्वात् इत्याशंकते-**नचेति**। सम्भवतीति परेणान्वयः **स्वनिष्ठेति।** स्वपदं लक्षणत्वेनाभिमततत्तत्साधारणादिव्यक्तिपरम्। तथाच स्वनिष्ठा स्वस्मिन्वर्त्तमाना या संशयजनकतावच्छेदकप्रकारता तदवच्छेदकतापर्य्याप्त्यधिकरणीभूतयावद्धर्मवत्त्वस्य लक्षणार्थतया विवक्षणे **इत्यर्थः** पर्य्यवसितः। असाधारण्यादिवारणं=साध्यवद्व्यावृत्तत्वादिवारणम्। आदिपदात् साध्यवद्वृत्तित्वादिरूपसाधारण्यपरिग्रहः। तस्यापि असाधारणरूप स्वनिष्ठतादृशप्रकारतावच्छेदकयावद्धर्मानन्तर्गतत्वादित्याशयः। निरुक्तरीत्या लक्षणार्थनिर्वचने धूमवान्वह्नेरित्यत्र यदा धूमधूमाभाववद्व्यावृत्तत्वेन वह्निप्रकारताकं भ्रमात्मकं ज्ञानं जातं तदा तादृशज्ञानादपि धूमसंशयोत्पादात् निरुक्तधूमसंशयजनकताव-

❀ मनोरमा ❀

करणधर्मत्वव्यापकरूपावच्छिन्नवत्त्वं विवक्षणीयम्, व्यापकत्वञ्च पूर्वोक्तसम्बन्धेन। अग्रेऽसम्भवाभिधानन्तु तादृशधर्मत्वव्यापककूटत्वमादायेति वदन्ति।

❀ गादाधरी ❀

रतावच्छेदकयावद्धर्मवत्त्वविवक्षणेऽसाधारण्यादिवारणं सम्भवति। साधारणादेरप्यसाधारण्यादिप्रकारेण ज्ञानस्य संशायकत्वात्। एतेन संशयजनकतावच्छेदकीभूताया या प्रकारता तत्तदवच्छेदकतापर्याप्त्यधिकरण· धर्मवत्त्वनिवेशेपि न निस्तारः। धर्मिणि यद्रूपावच्छिन्नप्रकारकज्ञानस्य स्वनिष्ठयद्रूपावच्छिन्नप्रकारकज्ञानसहकारेण साध्यसंशयजनकत्वन्तदुभयरूपवत्त्वस्य विवक्षितत्वेपि व्याप्यसंशयस्येत्यादिग्रन्थासङ्गतिरशङ्क्य-

❀ विवृतिः ❀

च्छेदकप्रकारतावच्छेदकताद्दशव्यावृत्तत्वादेः स्वनिष्ठसंशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मतया तस्य निरुक्तवह्निहेतावभावात् तत्राव्याप्त्यापत्तिरि त्याशयेन समाधत्ते-साधारणादेरिति। धूमसाध्यकवह्न्यादिहेतोरित्यर्थः। साधारणस्य नित्यदोषतया कालान्तरीणज्ञानप्रकारीभूतसाध्यतदभाववद्वृत्तित्वमादाय साधारणे लक्षणसमन्वयसम्भवादादिपदम्। आदिनाऽसाधारणपरिग्रहः। तथा चा साधारणस्य साधारण्यप्रकारेण ज्ञानदशायां असाधारणे एवाव्याप्तिरिति तु परमार्थः। असाधारण्यप्रकारेण = साध्यतदभाववद्व्यावृत्तत्वादिप्रकारेण। संशायकत्वात् = संशयजनकत्वात्। **एतेनेति**। निरुक्तदत्तदोषेणेत्यर्थः। अस्य च न निस्तार इत्यनेन सम्बन्धः। **संशयेति**। फलीभूतसंशयधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपित साध्यसंशयजनकतावच्छेदकीभूता या या प्रकारता तत्तदच्छेदकता पर्याप्त्य· धिकरणधर्मवत्त्वस्य निवेशेपीत्यर्थः। **न निस्तारइति**। तथा च साधारणादेरसाधारण्यादिप्रकारेण ज्ञानस्य संशयजनकतया ताद्दशसंशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मस्य साधारणादौ विरहेणे पूर्वोक्तरीत्या असम्भव· वारणासम्भवेन निस्तराभावइति भावः। इदमुपलक्षणम्—अत्रकल्पे पूर्वकल्पेऽपि व्याप्संशयेत्याद्युत्तरग्रन्थासंगतिरस्त्येव। व्यापकसंशयजनकतावच्छेदकयावत्प्रकारतावच्छेदकधर्मान्तर्गतव्याप्याभावत्वस्य व्याप्ये विरहादित्यपि बोद्धव्यम्। ननु फलीभूतसंशयधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयाद्दशरूपावच्छिन्नप्रकारताशालिज्ञानं ताद्दशविशेष्यतानिरूपितस्वनिष्ठो यो धर्मस्तदवच्छिन्नप्रकारताशालिज्ञानसहकारेण साध्यसंशयजनकं भवति ताद्दशधर्मद्वयवत्वमेव सव्यभिचारत्वं वक्तव्यम्, तथा च न कोऽपि दोषः। साधारणादेरसाधारण्यप्रकारेण ज्ञानस्य संशयजनकत्वेऽपिताद्दशासाधारण्यघटकसाध्यवद्व्यावृत्तत्वादेः कस्यापि साधारणादिरूपस्वनिष्ठत्वाभावेन निरुक्तासाधारण्यादिप्रकारकज्ञानस्य लक्षणाघटकतया साध्यवद्वृत्तित्वादिघटितज्ञानमादायैवसाधारणादौ लक्षणसमन्वयसम्भवादित्येवं धर्मिणीत्यादितः विवक्षितत्वेपीत्यन्तेनाशङ्क्य

❀ गादाधरी ❀

समाधिरेव व्याप्यत्वावच्छिन्नप्रकारकज्ञानसहकारिणो धर्मिविशेष्यकस्व-निष्ठरूपान्तरावच्छिन्नप्रकारकज्ञानस्याप्रसिद्धे व्याप्यत्वमादाय व्याप्येऽति-प्रसङ्गाप्रसक्तेः ।

मैवम् । यत्किञ्चित्साध्यसन्देहनिरूपितायाञ्जनकतायामवच्छेदिका या या धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारता तत्तदवच्छेदक-तापर्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचारत्वम् । साधारण्यादिविशिष्टहेतुम-त्ताज्ञानजन्यसंशयजनकतावच्छेदकीभूता या तादृशी प्रकारता सा साध्या-

❀ विवृतिः ❀

समाधत्ते-व्याप्यसंशयेति । 'व्याप्यसंशयस्य व्यापकसंशयहेतुत्वपक्षे-इत्याद्युत्तर ग्रन्थासङ्गतिरित्यर्थः । व्याप्यत्वेति । पर्वतादिविशेष्यकवह्न्यादिव्याप्यत्वावच्छिन्नप्र-कारताकज्ञानसहकारिण इत्यर्थः । धर्मीति । पर्वतादिविशेष्यकवह्न्यादिव्याप्यधूमादि-निष्ठवह्न्यादिव्याप्याभावत्वादिरूपधर्मान्तरावच्छिन्नप्रकारताकज्ञानस्येत्यर्थः । अति-प्रसङ्गाऽप्रसक्तेरिति । तथा च वह्निव्याप्य–धूमवान्नवेत्याकारकसंशयस्य धूमव्यापकी-भूतवह्निसंशयजनकस्य लक्षणघटकत्वाऽप्रसिद्धिर्निरुक्तव्याप्यसंशयीयप्रकारतावच्छेद-कव्याप्याभावत्वस्यव्याप्यनिष्ठत्वासम्भवेन व्याप्यात्मकस्वनिष्ठयद्रूपपदेन व्याप्याभाव-त्वस्य धर्तुमशक्यत्वात् । केवलव्याप्यत्वमादाय व्याप्येऽतिव्याप्त्यभावेन निरुक्तकल्पे-ऽसम्भवादिदोषवारणेऽपि व्याप्यसंशयेत्याद्युत्तरग्रन्थासंगतिः सुदृढैवेतिभावः । अथै-वमित्यादेः समाधानं मैवमिति । यत् किञ्चिदिति । अत्र यत्किञ्चित्साध्यसन्देहपदं तत्तत्साधारणत्वाद्यवच्छिन्नप्रकारताकज्ञानाव्यवहितोत्तरजायमानतत्तत्सन्देहव्यक्तिपरं, तथाच तत्तत्साध्यसन्देहनिष्ठजन्यतानिरूपितायां जनकतायामवच्छेदकीभूता या या फलीभूतसंशयधर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपिता-प्रकारता तत्त दवच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचारत्वमिति समुदित-लक्षणार्थः । निरुक्तविवक्षायां वह्निसाध्यकव्याप्ये धूमादौ तद्विरुद्धे च जल-त्वादावतिव्याप्तिं वारयितुमाह-साधारण्यादीति । वह्नितदभाववद्वृत्तित्वाद्यवच्छिन्न-धूमप्रकारताकज्ञानजन्यपर्वतो वह्निमान्नवेत्याकारकसंशयजनकतावच्छेदकीभूता-तादृशधर्मावच्छिन्न जलत्वप्रकारकज्ञानजन्यवह्निसंशयजनकतावच्छेदकीभूता च येत्यर्थः । तादृशीप्रकारता = पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता धूमादिप्रकारता-

❀ मनोरमा ❀

मैवमिति । साध्यसंशयविशिष्टधर्मवत्त्वं सव्यभिचारत्वमित्यर्थः । धर्मे संशयवैशिष्ट्यं स्वविशिष्ट-प्रकारतात्वव्यापकत्वसम्बन्धेन । स्ववैशिष्ट्यं प्रकारतयां, स्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकस्व-

❀ गादाधरी ❀

भाववद्वृत्तित्वाद्यवच्छिन्नापि तदवच्छेदकवत्त्वाभावान्न व्याप्यादावतिप्रसङ्गः। यत्किञ्चित्संशयनिवेशादसाधारण्यादेस्साधारणादावसत्त्वेऽपि न क्षतिः। व्याप्यसंशयस्य च व्याप्यवत्ताज्ञानत्वेनैव हेतुता न तु व्या-

❀ विवृतिः ❀

जलत्वप्रकारताच। **साध्येति**। क्रमेण साध्यवद्वृत्तित्वावच्छिन्ना साध्याभाववद्वृत्तित्वावच्छिन्नापीत्यर्थः। **तदवच्छेदकेति**। तादृशप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणवह्न्याद्यभाववद्वृत्तित्वादिरूपधर्माभावादित्यर्थः। न **व्याप्यादेरिति**। तथाच तादृशयावत्प्रकारतान्तर्गतवह्न्यभाववद्वृत्तित्वाद्यवच्छिन्नप्रकारतावच्छेदकधर्मस्य वह्न्यभाववद्वृत्तित्वादेः धूमादौ विरहान्न व्याप्यत्रिरुद्धयोरतिव्याप्तिरिति हृदयम्। निरुक्तरीत्या लक्षणार्थनिर्वचने पूर्वोपदर्शितासम्भवोऽपि नास्तीत्यत आहयत्-**किञ्चिदिति**। साधारणत्वाद्यवच्छिन्नप्रकारकज्ञानोत्तरजायमानतत्तत्संशयस्य लक्षणघटकतया निवेशादित्यर्थः। असाधारण्यादेः = साध्यवद्व्यावृत्तत्वादेः साधारणादौ = साधारणहेतौ। नक्षतिः = नासम्भवः। तथाच धूमसाध्यकवह्न्यादिसाधारणहेतुकस्थले धूमधूमाभाववद्वृत्ति वह्निमानित्याकारकज्ञानोत्तरजायमानधूमसंशयजनकतावच्छेदकीभूतयावत्प्रकारतान्तर्गता धूमवद्वृत्तित्वावच्छिन्ना धूमाभाववद्वृत्तित्वावच्छिन्नैव प्रकारता नतु साध्यवद्व्यावृत्तत्वाद्यवच्छिन्नापि प्रकारता तस्यास्तादृशसंशयजनकतानवच्छेदकत्वेन यावदनन्तर्गतत्वात्। एवञ्चोक्तसाधारणहेतौ धूमवद्वृत्तित्वधर्मस्य धूमाभाववद्वृत्तित्वधर्मस्यच, असाधारणे चहेतौ निश्चित्साध्यवद्व्यावृत्तत्वधर्मस्य निश्चितसाध्याभाववद्व्यावृत्तत्वधर्मस्य च सत्त्वेन सर्वत्र लक्षणसमन्वयसम्भवान्न असम्भव इतिभावः। ननु तथाप्यत्रकल्पे व्याप्यसंशयस्येत्याद्युत्तरग्रन्थासंगतिरस्त्येव, पर्वतादिविशेष्यकधूमादिव्यापकवह्न्यादिसंशयं प्रति तद्विशेष्यकवह्निव्याप्यत्व वह्निव्याप्याभावत्वाद्यवच्छिन्नप्रकारताकज्ञानरूपवह्न्यादिव्याप्यसंशयत्वेनैव तादृशसंशयस्य जनकतया निरुक्तव्यापकसंशयनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतयावत्प्रकारतान्तर्गतायाः वह्न्यादिव्याप्याभावत्वावच्छिन्नप्रकारतायाः अवच्छेदकीभूतस्य वह्न्यादिव्याप्याभावत्वधर्मस्य व्याप्ये विरहेण व्याप्येऽतिप्रसंगाऽप्रसक्तेरित्यतआह-**व्याप्येति**। पर्वतादिधर्मिकवह्निव्याप्यतदभावप्रकारकज्ञानरूपसंशयस्ये-

❀ मनोरमा ❀

स्वीयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितत्वोभयसम्बन्धेन। व्यापकत्वञ्च स्वपर्याप्तावच्छेदकताकत्वसम्बन्धेन।

❀ गादाधरी ❀

प्याभावप्रकारकत्वमपि तत्र निवेश्यते, व्याप्यवत्तानिश्चयदशायान्तस्य प्रतिबन्धकत्वादेव संशयापत्त्यसम्भवात्। अतो व्याप्याभावत्वावच्छिन्नप्रकारतायाः संशयजनकतानवच्छेदकतया व्याप्याभावत्वस्य व्याप्येऽसत्त्वेपि न तत्र वक्ष्यमाणाया अतिव्याप्तेरप्रसक्तिः। न च व्याप्यसंशयहेतु-

❀ विवृतिः ❀

त्यर्थः। चोप्यर्थे। व्याप्यवत्ताज्ञानत्वेनैव = व्याप्यत्वावच्छिन्नप्रकारताकज्ञानत्वेनैव। एवकारव्यवच्छेद्यमाह-नत्विति। व्याप्याभावप्रकारकत्वमपि = व्याप्याभावत्वावच्छिन्नप्रकारताकत्वमपि। तत्र = हेतुतायां। निवेश्यतइति। अवच्छेदकतयेत्यादिः। **अयमाशयः**—व्यापकसंशयं प्रति व्याप्यसंशयस्य व्याप्यत्वावच्छिन्नप्रकारताकज्ञानत्वरूपसंशयनिश्चयसाधारणधर्मेणैव जनकता नतु व्याप्याभावत्वावच्छिन्नप्रकारताकत्वघटितव्याप्यसंशयत्वेन, एवंच व्याप्याभावत्वावच्छिन्नप्रकारतायाः व्यापकसंशयजनकतानवच्छेदकत्वेन तस्याः यावदनन्तर्गततया तादृशयावत्प्रकारतान्तर्गतव्याप्यत्वावच्छिन्नायाः प्रकारतायाः अवच्छेदकीभूतव्याप्यत्वस्य व्याप्ये सत्वेन व्याप्येऽतिव्याप्ति सम्भवान्न व्याप्यसंशयस्येत्यादिग्रन्थासंगतिरिति। ननुव्यापकसंशयं प्रति व्याप्यत्वावच्छिन्नप्रकारताकः ज्ञानत्वरूपसंशयनिश्चयसाधारण धर्मेण व्याप्यसंशयस्य जनकत्वाभ्युपगमे पर्वतोवह्निव्याप्यधूमवान् इत्याकारकनिश्चयस्यापि व्याप्यत्वावच्छिन्नप्रकारताकत्वेन व्यापकसंशयजनकतावच्छेदकधर्माक्रान्ततया तादृशनिश्चयोत्तरकाले पर्वतविशेष्यक धूमव्यापकीभूतवह्निसंशयापत्तिरतआह व्याप्यवत्वेति वह्न्यादिव्याप्यत्वाद्यवच्छिन्नप्रकारताकनिश्चयदशायामित्यर्थः। प्रतिबन्धकत्वादेवेति। व्यापकसंशयं प्रतीत्यादिः। संशयापत्त्यसम्भवात्=धूमादिव्यापकवह्न्यादिसंशयापत्त्यसम्भवात्। धूमादिव्यापकवह्न्यादिसंशयस्य वह्न्यादिप्रकारकवह्न्याद्यभावप्रकारकज्ञानात्मकतया तादृशवह्न्याद्यभावप्रकारकज्ञाने च वह्न्यादिव्याप्यधूमादिनिश्चयस्य तद्विशिष्टबुद्धौ तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकतया न वह्न्यादिव्याप्यधूमादिमत्तानिश्चयदशायां धूमादिव्यापकवह्न्यादिसंशयापत्तिरित्याशयः। उपसंहरति-अतइति। व्यप्यत्वावच्छिन्नप्रकारकज्ञानस्य व्यापकसंशयजनकत्वादित्यर्थः। **नेति**। अतिव्याप्तेरप्रसक्तिरितिपरेणान्वयः। तत्र = व्याप्ये। ननु यत्र निश्चयत्वेन प्रतिबन्धकत्वं कारणत्वं वा तत्र संशयनिश्चयसाधारणाऽप्रामाण्यज्ञानत्वावच्छिन्नाभावस्यैव निश्चयनिष्ठप्रतिबन्धकत्वाद्यवच्छेदकत्वं वक्तव्यम् निश्चयेऽप्रामाण्य संशयदशायां तस्याप्रतिबन्धकत्वादकारणत्वाच्च, यत्र च ज्ञानत्वेन कारणत्वं प्रतिबन्धकत्वं वा तत्राप्रामाण्यनिश्चयाभावस्यैव विशेषणतया ज्ञाननिष्ठ कारणत्वाद्यवच्छे-

❀ गादाधरी ❀

-तायामप्रामाण्यनिश्चयानास्कन्दितत्वस्यैव निवेशाद्व्याप्यवत्तानिश्चयादप्रा-माण्यशङ्कास्कन्दिताद्व्यापकसंशयापत्तिस्तस्याविरोधित्वादिति व्याप्यसंश-यत्वेनैव व्यापकसंशयहेतुत्वमावश्यकमिति वाच्यम्। यादृशविषये व्या-

❀ विवृतिः ❀

दकत्वं वाच्यम् संशयधर्मिकाप्रामाण्यसंशयस्य संशयनिष्ठकारणत्वाद्यविघटकत्वात्, एवञ्च यादृशस्थले वह्न्यादिव्याप्यप्रकारकनिश्चयः, अयं निश्चयो वह्न्यादिव्याप्या-भाववति वह्न्यादिव्याप्यप्रकारको नवेत्याकारकाप्रामाण्यज्ञानास्कन्दितो वर्त्तते तादृशस्थले व्यापकीभूतवह्न्यादिसंशयीयकोटितापन्नवह्न्यभावादिबुद्धिप्रतिबन्धक-स्याप्रामाण्यज्ञानानास्कंदितत्वविशिष्टवह्न्यादिव्याप्यनिश्चयस्य विरहेण निरुक्तव्या-कसंशयकारणतावच्छेदकीभूताप्रामाण्यनिश्चयानास्कंदितत्वविशिष्टवह्न्यादिव्याप्यत्वा-वच्छिन्नप्रकारताकज्ञानत्वावच्छिन्नस्य पूर्वोक्ताप्रामाण्यसंशयास्कंदितवह्न्यादिव्याप्य-निश्चयस्य अप्रामाण्यनिश्चयानास्कंदितस्य च सत्त्वेनतदुत्तरं व्यापकीभूतवह्न्यादि-संशयापत्तिरित्यकामेनापि व्याप्यसंशयत्वेनैव व्यापकसंशयहेतुत्वं वाच्यम्, तथा च न व्याप्यत्वमात्रमादाय व्याप्येऽतिप्रसंगसंगतिरित्याशं कते-**नचेति**। वाच्यमिति परेणान्वयः। व्याप्येति = व्यापत्वावच्छिन्नप्रकारताक ज्ञानत्वाक्रान्तव्याप्यसंशयहेतु-तायामित्यर्थः। **निवेशादिति**। हेतुतावच्छेदकत्वेनेत्यादिः। व्याप्यवत्त्वनिश्चयात् = पर्वतोवह्न्यादिव्याप्यधूमादिमान् इत्याकारकनिश्चयात्। अप्रामाण्यशंकास्कंदि-तात् = इदंज्ञानं तादृशव्याप्याभाववति व्याप्पप्रकारकं नवेत्याकारकाप्रामाण्यसंश-यास्कंदितात्। व्यापकसंशयापत्तिः = धूमादिव्यापकवह्न्यादिसंशयापत्तिः। आव-श्यक**मिति**। तथा च व्यापकसंशयं प्रति व्याायसंशयत्वेन हेतुत्वे तादृशसंशय-जनकतावच्छेदकयावत्प्रकारतान्तर्गतायाव्याप्याभावत्वावच्छिन्नप्रकारतायाः अवच्छेद-कीभूतधर्मस्य व्याप्याभावत्वस्य व्याप्येविरहात् तत्रातिव्यास्यसम्भवेन व्याप्यसंशये-त्यादिग्रन्थासंगतिः दुर्वारैवेति भावः। समाधत्तेया**दृशेति**। यादृशविशेष्ये पर्वतादा-वित्यर्थः। यादृशस्थले इत्यपि पूरणीयम्। व्याप्यवत्तानिश्चय दशायां = वह्न्यादि-व्याप्यधूमादिमत्तानिश्चय दशायां। व्यापकसंशयस्य = धूमादिव्यापक वह्न्यादि-संशयस्य। **इतरेति**। व्याप्यसंशयेतर तादृशसंशय जनकदोषादिघटित सकलकारण-सत्त्वदशायामित्यर्थ। तादृशनिश्चये = वह्न्यादिव्याप्यधूमादिमत्ता निश्चये। अप्रा-माण्यसंशय एवेत्यत्रैवकारेण तादृशनिश्चयेऽप्रामाण्यनिश्चय सत्त्वेऽपि व्यापकसंशया-पत्तिनिरासः सूचितः। तत्र = तादृशस्थले। उक्तातिप्रसंगासम्भवेन = उक्तव्यापक-संशयापत्ति रूपातिव्याप्त्यसम्भवेन। तादृशस्थले व्यापकसंशयप्रतिबन्धकस्या प्रामा-

❀ गादाधरी ❀

प्यवत्तानिश्चयदशायां व्यापकसंशयस्येतरसकलकारणसमवधाने तादृश-निश्चयेऽप्रामाण्यसंशय एव न जातस्तत्र उक्तातिप्रसङ्गासम्भवेन निश्चय-साधारणव्याप्यवत्ताज्ञानत्वेन हेतुताया निष्प्रत्यूहत्वात्तादृशस्थलीयाति-व्याप्त्यभिप्रायकतयैव तद्ग्रन्थस्य व्याख्येयत्वात्।

अथवा व्याप्यवत्ताज्ञानत्वेन या व्यापकसंशयहेतुता तदवच्छेदक-कोटिप्रविष्टाप्रामाण्यनिश्चयानास्कन्दितत्वघटकनिश्चयत्वं साध्यव्याप्यत्वा-वच्छिन्नाभावज्ञानविशिष्टाप्रामाण्यसंशयान्याप्रामाण्यज्ञानत्वम्। तथाच

❀ विवृतिः ❀

ण्यज्ञानानास्कंदितव्याप्यवत्तानिश्चयस्य सत्त्वादित्याशयः। **निश्चयेति**। निश्चये संशये च वर्त्तमानं यत् व्याप्यत्वावच्छिन्न प्रकारताकज्ञानत्वं तेन रूपेणेत्यर्थः। तद्ग्र-न्थस्य = व्याप्यसंशयेत्यादि ग्रन्थस्य।

**अयमाशयः**। यादृशस्थले व्याप्यसंशयातिरिक्तानां दोषादिघटित व्यापकसंशय समुदायकारणानां समवधानकालीने साध्यव्याप्य प्रकारकनिश्चये अप्रामाण्यसंशयः कदाऽपि नजनितस्तादृशस्थल व्यापकसंशयं प्रतिव्याप्यप्रकारकज्ञानत्वेनजनकत्वेऽपि नतादृश निश्चयोत्तरकाले व्यापकीभूतस्य साध्यस्य संशयापत्तिः; तदानींव्यापकसंशय कोटितापन्नव्यापकाभाव बुद्धिप्रतिबन्धकस्य अप्रामाण्यज्ञानानास्कन्दित व्यापकाभावा-भावरूपसाध्यव्याप्यवत्व निश्चयस्यसत्वात्। तादृशनिश्चयेऽप्रामाण्यनिश्चयस्योत्पादेऽपि नव्यापकसंशयापत्तिः, व्यापकसंशयकारणस्य अप्रामाण्यनिश्चयानास्कन्दित व्याप्य-प्रकारकज्ञानस्य तदानींविरहादिति तादृशस्थले व्याप्यप्रकारकज्ञानत्वेन व्यापक-संशय कारणातायानिर्विवादतया तादृशस्थलीय निरुक्तकार्यकारणभावमभिप्रेत्यैव-दीधितिकृता केवलव्याप्यत्वमादाय व्याप्येऽतिव्याप्तिरभिहितेति॥

निरुक्तस्थलविशेषस्य प्रामाणिकत्वेविवादा**हाथवेति**। क्वाचि कः पाठः सचसमाधिसौकर्यात् व्याख्येयः। व्याप्यवत्ताज्ञानत्वेन = व्याप्यत्वावच्छिन्न प्रकारता-कज्ञानत्वेन। **तदवच्छेदकेति**। व्यापकसंशयहेतुतावच्छेदककोटौप्रवृष्टं यत्अप्रा-माण्यनिश्चयानास्कन्दितत्वं तत्घटकीभूतं निश्चयत्वमित्यर्थः। **साध्येति**। साध्य-व्याप्यत्वावच्छिन्न प्रतियोगिताकाभाव प्रकारकज्ञानविशिष्टो योऽप्रामाण्यसंशयस्तद-न्याप्रामाण्यज्ञानत्वमित्यर्थः।

अप्रामाण्यसंशयविशिष्टव्याप्यप्रकारकनिश्चयात् व्यापकसंशयापत्तिं वारयितुमाह **तथाचेति**। अप्रामाण्यनिश्चयानास्कन्दितत्वघटक निश्चयत्वस्य निरुक्तरीत्याविव-

❀ गादाधरी ❀

व्याप्याभाववत्ताज्ञानशून्यकालीनाप्रामाण्यसंशयस्यापि यथोक्तनिश्चयत्वात् तद्विशिष्टव्याप्यवत्ताज्ञानकाले चापत्तेरभावात्। न च तथापि व्या-

❀ विवृतिः ❀

क्षणेचेत्यर्थः। **व्याप्येति**। व्याप्याभावप्रकारकज्ञानशून्यकालीनस्यपूर्वोक्त व्याप्य-प्रकारकनिश्चयधर्मिकाप्रामाण्यसंशयस्या पीत्यर्थः।

यथोक्तनिश्चयत्वात् = पूर्वोक्तपारिभाषिकनिश्चयरूपत्वात्। **तद्विशिष्टेति**। यथाविवक्षिताऽप्रामाण्यनिश्चयविशिष्टव्याप्य प्रकारकनिश्चयकाले इत्यर्थः। आपत्तेर भावात् = व्यापकसंशयापत्तेरसम्भवात्।

**इदन्तुतत्वम्**। व्यापकसंशयं प्रतिव्याप्यसंशयस्य व्याप्यत्वावच्छिन्नप्रकारता-कज्ञानत्वेन हेतुतायां अवच्छेदकीभूतं यत् अप्रामाण्यनिश्चयानास्कन्दितत्वं तत्घटकी-भूतं अप्रामाण्यनिश्चयत्वं न अप्रामाण्यसंशयान्याऽप्रामाण्यज्ञानत्वमात्रम्, किन्तु, व्याप्याभावप्रकारकज्ञानविशिष्टो योऽप्रामाण्यसंशयस्तदन्याप्रामाण्यज्ञानत्वरूपम्। एवञ्च पूर्वोक्ताप्रामाण्यसंशयास्कन्दितात् व्याप्यप्रकारकनिश्चयान्नव्यापकसंशयापत्तिः, निरुक्ताप्रामाण्यसंशयस्य व्याप्याभावप्रकारकज्ञानविशिष्टत्वाभावेन तादृशज्ञानविशिष्ट-कालान्तरीणाप्रामाण्यसंशयान्य अप्रामाण्यज्ञानत्वस्य निरुक्ताप्रामाण्यसंशये सत्वेन तादृशाप्रामाण्यसंशयस्यैव यथोक्ताप्रामाण्यनिश्चय रूपतया अप्रामाण्यनिश्चयानास्क-न्दितत्वविशिष्ट व्याप्यप्रकारकज्ञानत्वरूप व्यापकसंशय कारणतावच्छेदकधर्मस्य अप्रामाण्यसंशया स्कन्दितेऽपि व्याप्यप्रकारकनिश्चये विरहादिति।

नन्वेवमपि यादृशस्थले वह्निव्याप्यवान् पर्वत इत्याकारकोऽप्रामाण्यज्ञानानास्का-न्दितः पर्वतत्व सामामाधिकरण्येन तादृशव्याप्यावगाही निश्चयोवर्त्तते तादृशस्थले निरु-क्तनिश्चयोत्तरं पर्वतत्वावच्छेदेन धूमव्यापकवह्न्यवगाहिनः पर्वतत्व सामानाधिकरण्येनच तादृश वह्न्यभावावगाहिनः धूमव्यापक वह्निसंशयस्यापत्तिः, पर्वतत्व सामानाधिकरण्येन वह्न्यभाव प्रकारकबुद्धौ पर्वतत्व सामानाधिकरण्येन वह्निव्याप्य निश्चयस्या प्रतिबन्धक-तया निरुक्त व्याप्य निश्चयस्य यथोक्त व्यापक संशयप्रतिबन्धकतायावक्तुम शक्यत्वात्, अप्रामाण्य निश्चयानास्कन्दित त्वविशिष्टव्याप्य प्रकारक ज्ञानत्व रूप व्यापक संशयकारण तावच्छेदक धर्मस्यापि तत्रसत्वाच्च, अतो न व्यापक संशयं प्रति व्याप्यप्रकारक ज्ञान त्वेन जनकत्वं अपितु व्याप्य संशयत्वेनैवतथात्वं वाच्यमिति व्याप्येऽतिव्याप्त्य सम्भ-वात् व्याप्य संशयेत्याद्युत्तर ग्रन्थासंगति रस्त्येवेति पुनः शंकते **नचेति**। वाच्यमिति परेणान्वयः॥

तथापि = अप्रमाण्य शंकास्कन्दितात् व्यापप्रकारक निश्चयात् व्यापकसंशयापत्ति-

❀ गादाधरी ❀

प्यवत्ताज्ञानत्वेन व्यापकसंशयहेतुता न सम्भवति, तथासति धर्मितावच्छेदकसामानाधिकरण्यमात्रावगाहिव्याप्यवत्तानिश्चयात्तदवच्छेदेन व्यापकवत्तान्तत्सामानाधिकरण्यमात्रेण व्यापकाभावमवगाहमानस्य संशयस्यापत्तेस्तादृशसंशये तादृशनिश्चयस्याविरोधित्वादिति वाच्यम्। धर्मि-

❀ विवृतिः ❀

बारणेऽपि। तथासति=व्यापकसंशयंप्रतिव्याप्यप्रकारकज्ञानत्वेन जनकत्वे सति।

**धर्मितेति**। धर्मितावच्छेदकीभूतपर्वतत्वाद्यवच्छिन्नविशेष्यताकव्याप्यताघटकसंयोगत्वादिमात्रविशिष्टसंयोगाद्यवगाहिवह्न्यादिव्याप्यप्रकारकनिश्चयादित्यर्थः। मात्रपदात् पर्वतत्वाद्यवच्छेद्यत्वावगाहिव्याप्यनिश्चयविरहकालीनोक्तनिश्चयस्य लाभः।

तदवच्छेदेन=धर्मितावच्छेदकीभूतपर्वतत्वाद्यवच्छेदेन व्यापकवत्तां=धूमादिव्यापकवह्न्यादिमत्ताम्, अवगाहमानस्येतिपरेणान्वयः। वक्ष्यमाणसंशयस्य धर्मितावच्छेदकसामानाधिकरण्येनव्यापकाभावावगाहितया तत्सामानाधिकरण्येन व्यापकावगाहित्वे कोट्योः परस्परविरुद्धत्वासम्भवेन तादृश सामानाधिकरण्यावगाहिज्ञानस्य संशयत्वमेव नसम्भवतीत्याशयेन धर्मितावच्छेदकावच्छेदेन व्यापकावगाहित्वमुक्तम्।

तत्सामानाधिकरण्यमात्रेण = धर्मितावच्छेदकपर्वतत्वादिसामानाधिकरण्यमात्रेण। तृतीयाया व्यापकाभावान्वयिवैशिष्ट्यम्। मात्रपदात् पर्वतत्वाद्यवच्छेद्यव्यापकाभावावगाहित्वव्यवच्छेदः। अवगाहमानस्य = प्रकारत्वेन बिषयीकुर्वतः। **संशयस्येति**। धूमादिव्यापकवह्न्यादिसंशयस्येत्यर्थः। तादृशसंशये = पर्वतत्वादिसामानाधिकरण्येन व्यापकाभावावगाहिनि तदवच्छेदेन व्यापकावगाहिनि वह्न्यादिसंशये। तादृशनिश्चयस्य = पर्वतत्वादिसामानाधिकरण्येन वह्न्यादिव्याप्यनिश्चयस्य।

**अविरोधित्वादिति**। न चोक्तनिश्चयस्य व्यापकसंशयकोटितापन्नवह्न्याद्यभावबुद्धावप्रतिबन्धकत्वे तत् सत्वे व्यापकसंशयस्त्विष्ट एवेतिवाच्यम्, व्याप्यसंशयोत्तरमेव व्यापकसंशयोत्पादेन व्यापकसंशयाप्रतिबन्धकस्यापि व्याप्यनिश्चयस्य तादृशसंशयोत्पादकताया अनुभवविरुद्धत्वादिति भावः।

धर्मितावच्छेदकपर्वतत्वाद्यवच्छेदेन यदा वह्न्यादिव्याप्यसंशयस्तदैव तदव्यापकीभूतवह्न्यादिमत्तावगाही संशयो भवति न तु पर्वतत्वादिसामानाधिकरण्येन वह्न्यादिव्याप्यसंशयदशायां तदवच्छेदेन वह्न्यादिमत्तावगाही संशयस्तथाच फलदर्शनेन पर्वतत्वाद्यवच्छेदेन वह्न्याद्यवगाहिसंशयं प्रति तदवच्छेदेन वह्न्यादिव्याप्यप्रकारकज्ञानत्वेनैव हेतुत्वं वक्तव्यम् एवञ्चोक्तस्थले पर्वतत्वादिसामानाधिकरण्य-

❀ गादाधरी ❀

तावच्छेदकावच्छेदेन व्याप्यवत्तावगाहिनः संशयादेव तदवच्छेदेन व्यापकवत्तावगाहिसंशयोदयात्तादृशव्यापकवत्तासंशये तादृशव्याप्यवत्त्वावगाहिज्ञानत्वेनैव हेतुत्वोपगमादुक्तापत्तेरप्रसक्तेः ।

अथवा संशयजनकतावच्छेदकप्रकारतायां सव्यभिचारताघटकसम्बन्धावच्छिन्नत्वस्यावश्यकतया वह्निव्याप्यवान्नवेति संशयीयाभावप्रका-

❀ विवृतिः ❀

मात्रेण वह्न्यादिव्याप्यनिश्चयदशायां पर्वतत्वावच्छेदेन व्यापकीभूतवह्न्यादिसंशयकारणस्य तदवच्छेदेन वह्न्यादिव्याप्यप्रकारकज्ञानस्य विरहेण कारणबाधान्नतादृशसंशयापत्तिरित्याशयेन समाधत्ते-**धर्मितेति**। धर्मितावच्छेदकपर्वतत्वाद्यवच्छेदेनेत्यर्थः।

व्याप्यवत्तावगाहिनः = वह्न्यादिव्याप्यं विषयी कुर्वतः। तदवच्छेदेन=धर्मितावच्छेदकपर्वतत्वाद्यवच्छेदेन। तादृशव्यापकवत्तासंशये = धर्मितावच्छेदकपर्वतत्वाच्छेदेन धूमादिव्यापकवह्न्यादिमत्तावगाहिसंशये।

**तादृशेति**। पर्वतत्वाद्यवच्छेदेन वह्न्यादिव्याप्यत्वावच्छिन्नप्रकारताकज्ञानत्वेनैवेत्यर्थः। हेतुत्वोपगमात् = हेतुत्वस्वीकारात्। उक्तापत्तेः = पर्वतत्वसामानाधिकरण्यमात्रावगाहिवह्न्यादिव्याप्यनिश्चयोत्तरकाले पर्वतत्वाद्यवच्छेदेन वह्न्यादिमत्तां तत्सामानाधिकरण्यमात्रेण वह्न्याद्यभाववत्ताम् अवगाहमानस्य संशयस्यापत्तेः। अधिकमभिहितं प्राक्।

व्यापकसंशयं प्रति व्याप्यसंशयत्वेन हेतुत्वाभ्युपगमेऽपि न व्याप्यसंशयस्येत्यादिग्रन्थाऽसंगतिरित्याह**ाथवेति**। **संशयेति** तादृशधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितायामित्यादिः। **सव्यभिचारेति**। अन्यथा कालिकेन वह्निवह्न्यभावसहचरितधूमवान् पर्वत इत्याकारकज्ञानीयकालिकावच्छिन्नप्रकारतामादाय वह्निसाध्यकधूमेऽतिव्याप्तिः स्यादितिभावः।

व्यापकसंशयं प्रतिव्याप्यसंशयत्वेन हेतुत्वमुपपादयति। **वह्नीति**। तथाच वह्निव्याप्यवान्नवेतिसंशयस्य पर्वताद्येकधर्मिकव्याप्यतदभावप्रकारकज्ञानत्वरूपसंशयत्वेन वह्निसंशयं प्रति हेतुत्वेऽपि न व्याप्यसंशयस्येत्यादिग्रन्थासंगतिः, सव्यभिचारताघटकीभूतसंयोगसम्बन्धावच्छिन्नवह्निव्याप्यत्वावच्छिन्नप्रकारतावच्छेदकधर्मस्य वह्निव्याप्यत्वस्य धूमादिहेतौ सत्त्वेन धूमादावतिप्रसंगसम्भवादित्याशयः॥

ननु सव्यभिचारताघटकसम्बन्धावच्छिन्नतादृशयावत्प्रकारतावच्छेदकधर्मवत्त्वं यदि सव्यभिचारत्वं तदा अयमात्मा ज्ञानादित्यत्र आत्मत्वव्याप्ये ज्ञानहेतावति-

❀ गादाधरी ❀

रतायाः संयोगादिसम्बन्धानवच्छिन्नतया तत्सम्बन्धावच्छिन्नव्याप्यप्रकारतैव संशयजनकतावच्छेदिकेत्यतिव्याप्तिप्रसक्त्या न व्याप्यसंशयस्येत्यादेरसंगतिः ।

अथ साधारणधर्मवत्ताज्ञानस्य संशयजनकत्वे धर्मैक्यस्याप्रयोजकतामते तत्सम्बन्धस्याप्यप्रयोजकतया तादृशजनकतावच्छेदकयावत्प्रकारतासु प्रत्येकमवच्छेदकीभूतानि यानि रूपाणि तद्वत्त्वनिवेशे अयमात्मा ज्ञानादित्यादौ विषयतया आत्मत्वाभावसमानाधिकरणज्ञानवत्ताज्ञानस-

❀ विवृतिः ❀

व्याप्तिः, धूमसहचरितवह्निमानयं धूमाभावसहचरितद्रव्यवानयमित्याकारकविभिन्नसाधारणधर्मप्रकारकज्ञानात् धर्मिणिसंशयोत्पादमभ्युपगच्छतां मते विभिन्नसंसर्गकतादृशज्ञानादपि संशयोत्पादस्यावश्यकतया,समवायेनात्मत्वसहचरितज्ञानवानयमित्याकारकज्ञानात् विषयतया आत्मत्वाभावसहचरितज्ञानप्रकारकज्ञानसहितादपि आत्मत्व संशयजननात् । तादृशसंशयजनकतावच्छेदकसव्यभिचारताघटकसम्बन्धावच्छिन्नयावत्प्रकारतान्तर्गतायाः केवलसमवायावच्छिन्नात्मत्वसहचरितज्ञानप्रकारताया अवच्छेदकीभूतात्मसहचरितज्ञानत्ववत्त्वस्य निरुक्तज्ञानहेतौ सत्वादित्याशंकते **अथेति** ।

संशयजनकत्वेइत्यत्राग्रिमाप्रयोजकत्वप्रतियोगि प्रयोजकत्वान्वयि निरूपितत्वंसप्तम्यर्थः । धर्मैक्यस्य = एकधर्मप्रकारकत्वस्य । अप्रयोजकत्वमते = प्रयोजकत्वाभावमभ्युपगच्छतां मते । तत्सम्बन्धस्य=एकसम्बन्धविषयकत्वस्य ।

**तादृशेति** । धर्मिविशेष्यतानिरूपितयत्किञ्चित्संशयजनकतावच्छेदक सव्यभिचारताघटकसम्बन्धावच्छिन्नयावत्प्रकारतास्वित्यर्थः । तद्वत्त्वनिवेशे = तद्वत्त्वस्य लक्षणार्थत्वे **साध्येति** । आत्मत्वसहचरितज्ञानादिमत्ताज्ञानमित्यर्थः । तदीयप्रकारतामादाय = निरुक्तज्ञानीयस मवायावच्छिन्नज्ञानप्रकारतामादाय । अतिव्याप्तौ हेतुमाह विषयतेति । **अभावेति** । आत्मत्वाभावसहचरितज्ञानादिमत्ताज्ञानीयप्रकारताया इत्यर्थः ।

समाधत्ते **सत्यमित्यादि** । **यत्किञ्चिदिति** । यत्किञ्चित्संशयनिष्ठजन्यतानिरूपितायां जनकतायां अवच्छेदकीभूता यया धर्मितावच्छेदकावच्छिन्ना विशेष्यता तन्निरूपिता या सव्यभिचारताघटकसम्बन्धावच्छिन्ना प्रकारता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचारत्वमिति विवक्षणीयमित्यर्थः । पूर्वोक्तामतिव्याप्तिं वारयति **तथासतीति** । निरुक्तरीत्या लक्षणार्थस्य निर्वचने सतीत्यर्थः ।

उक्तस्थले = अयमात्मा ज्ञानादित्यादौ । **विषयतेति** । विषयतासम्बन्धावच्छि-

❀ गादाधरी ❀

हकारेण साध्यसन्देहजनकं यत्समवायेन साध्यसहचरितज्ञानादिमत्ताज्ञानन्तदीयप्रकारतामादाय समवायेन ज्ञानादेर्व्यभिचारितापत्तेः। विषयतासम्बन्धेनाभावकोटिसहचरिततद्वत्ताज्ञानीयप्रकारतायाः समवायसम्बन्धावच्छिन्नतया सव्यभिचारताघटकसम्बन्धावच्छिन्नयावत्प्रकारतानन्तर्गतत्वाद् इति चेत्।

सत्यम्। यत्किञ्चित्साध्यसंशयनिरूपितजनकतावच्छेदकीभूतधर्मितावच्छेदकावच्छिन्ना या या विशेष्यता तन्निरूपितसव्यभिचारताघटकसम्बन्धावच्छिन्ना या प्रकारता तदवच्छेदकधर्मवत्त्वमेव विवक्षणीयम्। तथासत्युक्तस्थले विषयतासम्बन्धावच्छिन्नज्ञानप्रकारतानिरूपितविशेष्यताया अपि निरुक्तयावद्विशेष्यतान्तर्गतत्वात्तन्निरूपितसव्यभिचारताघटकसम्बन्धावच्छिन्नप्रकारत्वाप्रसिद्ध्या नातिव्याप्तिः। एवं संशये समुच्च-

❀ विवृतिः ❀

न्नात्मत्वाभावसहचरितज्ञानप्रकारतानिरूपितविशेष्यतायाइत्यर्थः। **निरुक्तेति**। संशयजनकतावच्छेदकयावद्विशेष्यतान्तर्गतत्वादित्यर्थः।

**नातिव्याप्तिरिति**। तथा च समवायेनात्मत्वसहचरितज्ञानवानयं विषयतया आत्मत्वाभावसहचरितज्ञानवानयमित्याकारकज्ञानीयप्रकारताद्वयनिरूपिता विशेष्यताद्वयी एका समवायावच्छिन्नताहशज्ञानप्रकारतानिरूपिता, अपरा च विषयत्वसम्बन्धावच्छिन्नताहशज्ञानप्रकारतानिरूपित, एवञ्च विषयत्वसम्बन्धावच्छिन्नताहशज्ञानप्रकारतानिरूपित विशेष्यतायाअपि संशयजनकतावच्छेदकयावद्विशेष्यतान्तर्गततया तन्निरूपकसव्यभिचारताघटकीभूतसमवायावच्छिन्नप्रकारत्वाऽप्रसिद्ध्यैवायमात्मा ज्ञानादित्यादौ नातिव्याप्तिरितिभावः।

नन्वेवं व्याप्यसंशयस्येत्यादिग्रन्थासंगतिः, पर्वतो वह्निव्याप्यवान्नवेति संशयीयव्याप्याभावप्रकारतानिरूपितविशेष्यताया अपि संशयजनकतावच्छेदकयावद् विशेष्यतान्तर्गततया तन्निरूपकसव्यभिचारताघटकीभूतसंयोगावच्छिन्नप्रकारत्वाप्रसिद्ध्यैव व्याप्यसंशयमादाय व्याप्येऽतिव्याप्तेरप्रसक्तेरत आह **एवमिति**। संशये = संशयमात्रे। समुच्चयवैलक्षण्याय=आहार्यज्ञानभिन्नत्वसम्पादनाय।

❀ मनोरमा ❀

**याया विशेष्यतेति**। तथाच साध्यसंशयविशिष्टविशेष्यतात्वव्यापकसव्यभिचारताघटकसम्बन्धावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचारत्वमितिफलितम्। विशेष्यतायां संशयवैशिष्ट्यं, स्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्व,-स्वधर्मितावच्छेदकतापर्याप्त्यधिकरण-

❀ गादाधरी ❀

-यवैलक्षण्याय उभयप्रकारतानिरूपितैकविशेष्यतास्वीकर्तृमते व्याप्यसंशयीयकोटिद्वयप्रकारतानिरूपितविशेष्यतानिरूपितव्याप्यताघटकसम्बन्धावच्छिन्नप्रकारतावच्छेदकव्याप्यत्वमात्रमादायाप्यतिव्याप्तिः सम्भवतीत्याशङ्क्य व्याप्यसंशयेत्यादिकमभिहितम् ।

वस्तुतस्तु जनकतावच्छेदकयावत्प्रकारतावच्छेदकवत्त्वादिनिवेशे धूम-

❀ विवृतिः ❀

**उभयेति** । संशयीयकोटिद्वयप्रकारतानिरूपितैकविशेष्यतामभ्युपगच्छतां मते इत्यर्थः । स्वमते संशयीयप्रकारताविशेष्यतयोरवच्छेद्यावच्छेदकभावस्यैव समुच्चयवैलण्यप्रयोजकतया मतेइत्युक्तम्, पर्वतो वह्निमान्नवेति संशयीयवह्निवह्न्यभावप्रकारताद्वयनिरूपिता यदि पर्वतनिष्ठविशेष्यताद्वयी तदा वह्निमान्पर्वतोवह्न्यभाववानित्याकारकाहार्यज्ञानीयवह्न्यादिप्रकारताद्वयनिरूपितविशेष्यताया अपि विभिन्नतया ततः संशयस्य वैलक्षण्यं न स्यादतः संशयीयप्रकारताद्वयनिरूपितैकैव विशेष्यता वाच्या तथाच पर्वतो वह्निव्याप्यवान्नवेति व्याप्यसंशयीयप्रकारताद्वयनिरूपितपर्वतनिष्ठैकविशेषताया एव व्यापकसंशयजनकतावच्छेदकतया तादृशविशेष्यतानिरूपितसव्यभिचारताघटकीभूतसंयोगसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूतव्याप्यत्वस्य व्याप्येसत्वेनातिव्याप्तिसम्भवान्न व्याप्यसंशयस्येत्यादिग्रन्थासङ्गतिरित्याह—**व्याप्येति** ।

पर्वतोवह्निव्याप्यवान्नवेत्याकारकसंशयीयव्याप्यव्याप्याभावात्मककोटिद्वयप्रकारतानिरूपितपर्वतनिष्ठैकविशेष्यतानिरूपकीभूता या व्याप्यताघटकसंयोगसम्बन्धावच्छिन्ना प्रकारता तदवच्छेदकव्याप्यत्वमात्रमित्यर्थः । इत्याशंक्य = पूर्वोक्तरीत्या व्याप्येऽतिव्याप्तिमाशंक्य । **अभिहितमिति** । दीधितिकृतेतिशेषः ।

प्रकारतायां यावत्त्वनिवेशे दोषान्तरमुक्त्वा निर्दोषं लक्षणार्थप्रदर्शयितुमाह **वस्तुतस्त्वति । जनकतेति** । यत्किञ्चित्संशयेत्यादिः । तथाच फलीभूतसंशयधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयत्किञ्चित्संशयजनकतावच्छेदकसव्यभिचारताघटकसम्बन्धावच्छिन्नयावत्प्रकारतावच्छेदकवत्त्वादिनिवेशे इत्यर्थः पर्यवसितः । आदिपदात् तादृशप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वादिपरिग्रहः ।

❀ मनोरमा ❀

धर्मावच्छिन्नत्वोभयसम्बन्धेन । व्यापकतवच्च तादृशप्रकारतायां निरूपितत्वसम्बन्धावच्छिन्नं ग्राह्यमिति ध्येयम् ।

**वस्तुतस्त्वति** । साध्यसंशयविशिष्टजनकतात्वव्यापकसव्यभिचारताघटकसम्बन्धावच्छिन्नप्रकारतावच्छेदकधर्मवत्त्वं सव्यभिचारत्वमित्यर्थः । साध्यसंशयवैशिष्ट्यं जनकतायां, स्वनिष्ठजन्यता-

❀ गादाधरी ❀

तदभावसहचरितकाञ्चनमयवह्निमानित्यादिज्ञानीयप्रकारताया अपि निरुक्तयावत्प्रकारतान्तर्गततया तदवच्छेदकतापर्याप्त्यधिकरणकाञ्चनमयत्वादिघटितधर्मवत्ताया वह्न्यादौ दुरुपपादतया असम्भव इति यत्किञ्चित्संशयनिरूपिता धर्मितावच्छेदकावच्छिन्नविशेष्यताघटितधर्मावच्छिन्ना या या जनकता तदवच्छेदकीभूततादृशविशेष्यतानिरूपितप्रकारतावच्छेदकतापर्याप्तिमद्धर्मवत्त्वमेव विवक्षणोयम्। एवञ्च काञ्चनमयत्वाद्यवगाहितद-

❀ विवृतिः ❀

**निरुक्तेति**। पर्वतादौ धूमादिसंशयजनकतावच्छेदकसव्यभिचारताघटकसम्बन्धावच्छिन्नयावत्प्रकारतान्तर्गततयेत्यर्थः। **तदवच्छेदकेति**। धूमधूमाभावसहचरितकाञ्चनमयवह्नित्वावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणकाञ्चनमयत्वादिघटितं यत्काञ्चनमयत्ववह्नित्वादिरूपं धर्मद्वयं तद्वत्ताया इत्यर्थः। दुरुपपादतया = असत्त्वेनेतिभावः।

**असम्भवइति**। न सम्भव असम्भवइतिव्युत्पत्या धूमवान्वह्नेः काञ्चनमयवह्नेर्वेत्यादावव्याप्तिरेवेत्यर्थः। एतेन यादृशस्थलविशेषे साधारणादिप्रकारकं ज्ञानं नियमतः प्रमात्मकमेव भवति नतु भ्रमात्मकं तादृशस्थले प्रकारतायां यावत्त्वनिवेशेऽपि साधारणादिहेतौलक्षणसमन्वयसम्भवादसम्भवाभिधानमसंगतमित्यपि पूर्वपक्षोनिरस्तः। इदमुपलक्षणं विशेष्यतायांयावत्त्वनिवेशेऽपि उक्तदोषापत्तिः, धूमसहचरितकाञ्चनमयवह्निमान् धूमाभावसहचरितकाञ्चनमयवह्निमान् इत्यादिज्ञानीयतादृशकाञ्चनमयवह्नित्वावच्छिन्नप्रकारतानिरूपकपर्वतादिनिष्ठविशेष्यताया अपि संशयजनकतावच्छेदकयावद्विशेष्यतान्तर्गततया तन्निरूपितप्रकारतावच्छेदकतादृशकाञ्चनमयत्त्वादिघटितधर्मस्य वह्न्यादौ विरहादित्यपि द्रष्टव्यम्।

**इतीति**। अत इत्यर्थे निपातः। **यत्किञ्चिदिति**। यत्किञ्चित्संशयनिष्ठजन्यतानिरूपिता फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यताकत्वावच्छिनाया याजनकता तदवच्छेदकीभूता या फलीभूतसंशयधर्मितावच्छेदकावच्छिन्न विशेष्यतानिरूपिता प्रकारता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचारत्वमिति विवक्षणीयमित्यर्थः। निरुक्तस्य लक्षणार्थत्वे न धूमवान्वह्नेरित्यादावव्याप्तिरित्याहैवञ्चेति। यावत्जनकताघटितलक्षणार्थस्य निर्वचने चेत्यर्थः। **काञ्चन-**

❀ मनोरमा ❀

निरूपितत्व,—स्वीयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मनिष्ठावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितविशेष्यत्वनिष्ठावच्छेदकताकत्वोभयसम्बन्धेन। व्यापकत्वञ्च तादृशप्रकारतायाम् आधेयत्व-

❀ गादाधरी ❀

नवगाहिज्ञानसाधारणकारणताया ऐक्यात्तदवच्छेदकीभूतकाञ्चनमयत्वा-द्यनवगाहिज्ञानीयप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमादायैव धूमादिसाध्यकवह्न्यादौ लक्षणसमन्वयः। संशयं प्रति तत्तत्कोटिसाहच-र्यावच्छिन्नप्रकारताशालिज्ञानत्वेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानस्य

❀ विवृतिः ❀

**मयत्वेति ।** धूमधूमाभावसहचरितकाञ्चनमयवह्न्याद्यवगाहि तादृशकाञ्चनमयव-ह्न्याद्यनवगाहिकेवलधूमधूमाभावसहचरितवह्न्याद्यवगाहिज्ञानद्वयसाधारणकारणताया इत्यर्थः । **तदवच्छेदकेति ।** तादृशज्ञानद्वयसाधारणैककारणतावच्छेदकीभूतं यत् तादृशकाञ्चनमयवह्न्याद्यनवगाहिकेवलधूमधूमाभावसहचरितवह्निमानयमित्याकारक-ज्ञानीय प्रकारत्वं तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमादायैवेत्यर्थः ।

**लक्षणसमन्वयइति ।** तथाच धूमधूमाभावसहचरितकाञ्चनमयवह्निमानयं इत्याकारकज्ञाने धूमधूमाभावसहचरितवह्निमानयमित्याकारके च ज्ञाने एकैव धूमादिसंशयजनकता नतु ज्ञानभेदेऽपि तादृशी कारणताद्वयी एवञ्च यावत्कारण-तापदेन धूमधूमाभावसहचरितवह्निप्रकारकज्ञाननिष्ठैकजनकताया एवक्षणघटकतया तदवच्छेदकीभूतायाः केवलधूमधूमाभावसहचरितत्वाद्यवच्छिन्नवह्निप्रकारतायाः अवच्छेदकतापर्याप्त्यधिकरणतादृशसहचरितत्ववह्नित्वादि धर्मवत्त्वस्य वह्न्यादौ सत्वान्न धूमवान्वह्नेरित्यादौ कुत्राऽपि दोषः सम्भवतीति भावः ।

नचैवमयमात्मा ज्ञानादित्यत्रातिव्याप्तिः, तत्र समवायेनात्मत्वसहचरितज्ञान-वानयं विषयतया आत्मत्वाभावसहचरितज्ञानवानय मित्याकारकज्ञानद्वयनिष्ठायाः कारणताया विभिन्नतया तादृशयावत्कारणतान्तर्गतविषयत्वसम्बन्धावच्छिन्नज्ञानप्र-कारताकज्ञाननिष्ठजनकतावच्छेदकसव्यभिचारताघटकसमवायसम्बन्धावच्छिन्नप्रकार-त्वाप्रसिद्धयैवातिव्याप्तिवारणसम्भवादिति ध्येयम् ।

वह्निव्याप्ये धूमे तद्विरुद्धे जलत्वे चातिव्याप्तिं वारयति **संशयं प्रतीति ।** **तत्तदिति ।** तत्कोटिसाहचर्यावच्छिन्नप्रकारताशालिज्ञानत्वेन तदभावसाहचर्याव-च्छिन्नप्रकारताशालिज्ञानत्वेन चेत्यर्थः । **साधारण्यादीति ।** आदिना असाधार-ण्यपरिग्रहः, तत्रापि तत्तत्कोटिव्यावृत्तत्वावच्छिन्नप्रकारताशालिज्ञानत्वेन असाधा-

❀ मनोरमा ❀

सम्बन्धेन । आधेयत्वञ्च, स्वावच्छेदकत्व, स्वावच्छेदकीभूतविशेष्यतानिरूपितत्वोभयसम्बन्धावच्छिन्नम् ।

अत्र कल्पे धूमतदभावसहचरितवह्निमान् पर्वत इत्याद्याकारकज्ञानोत्तरजायमानधूमादिसंशय-निष्ठविशिष्टबुद्धित्वावच्छिन्नजन्यतानिरूपितयावज्जनकतान्तर्गताया धूमाद्युपस्थितिरूपविशेषणज्ञान-

❀ गादाधरी ❀

कारणताद्वयीति व्याप्यविरुद्धयोरतिव्याप्तिनिरासः। एवञ्च व्याप्यसंशयत्वावच्छिन्नाया उभयकोटिप्रकारत्वावच्छिन्नाया जनकताया ऐक्यात्तदवच्छेदकीभूतव्याप्यप्रकारतावच्छेदकव्याप्यत्वमादाय व्याप्येऽतिप्रसङ्गो दुर्वार एवेत्याशङ्क्य व्याप्यसंशयस्य पृथक्कारणतामते ज्ञानपदस्य निश्चयपरत्वमुपदर्शितम्। न च व्याप्यसंशयस्य उभयप्रकारत्वेन नैकहेतुता

❀ विवृतिः ❀

रण्यविशिष्टधर्मवत्ताज्ञानस्य कारणताया भिन्नत्वादित्याशयः। **अतिव्याप्तिनिरास इति**। तथा च वह्निमान् धूमादित्यादौ वह्निसंशयनिरूपिताया, यावत् जनकतान्तर्गतायावह्न्यभाववद्वृत्तित्वावच्छिन्नधूमप्रकारताक ज्ञाननिष्ठाया जनकताया वह्निमान् जलत्वादित्यादौ च तादृश्या वह्निसंशययावत्कारणतान्तर्गताया वह्निमद्वृत्तित्वावच्छिन्नजलत्वप्रकारकज्ञाननिष्ठायाः कारणताया अपि धर्तुंशक्यतया तादृशकारणतावच्छेदकप्रकारतावच्छेदकीभूतस्य वह्न्यभाववद्वृत्तित्वधर्मस्य धूमे, वह्निमद्वृत्तित्वधर्मस्य च जलत्वे विरहान्न व्याप्यविरुद्धयोरतिव्याप्तिरिति भावः।

नन्वेमपि पर्वतो वह्निव्याप्यवान्नवेत्याकारकसंशयनिष्ठा वह्निव्याप्यत्वावच्छिन्नप्रकारताकत्वावच्छिन्ना, वह्निव्याप्याभावत्वावच्छिन्नप्रकारताकत्वावच्छिन्ना च व्यापकसंशयकारणताद्वयीति व्यापकसंशययावत्कारणतान्तर्गताया वह्निव्याप्याभावत्वावच्छिन्नप्रकारताकत्वावच्छिन्नाया कारणताया अवच्छेदकीतधर्मस्य व्याप्याभावत्वस्य व्याप्ये विरहेण, तादृशकारणतावच्छेदकप्रकारतायां सव्यभिचारताघटकसंयोगावच्छिन्नत्वस्याऽप्रसिद्धयैव वा व्याप्येऽतिव्याप्तिवारणसम्भवादत्राऽपि व्याप्यसंशयस्येत्यादिग्रन्थासंगतिरस्त्येवेत्यत आहैवञ्चेति। जनकतायां यावत्वनिवेशे चेत्यर्थः।

**व्याप्येति**। वह्निव्याप्यवान्नवेत्याकारकसंशयत्वावच्छिन्नायाइत्यर्थः। **उभयेति**। व्याप्यव्याप्याभावप्रकारकत्वावच्छिन्नायाइत्यर्थः। **जनकतयेति**। व्यापकसंशयेत्यादिः। **ऐक्यादिति**। विभिन्नत्वे मानाभावादित्याशयः। **तदवच्छेदकेति**। निरुक्तजनकतावच्छेदकीभूतव्याप्यत्वावच्छिन्नप्रकारतावच्छेदकव्याप्यत्वमादायेत्यर्थः। **उपदर्शितमिति**। तथा च वह्निव्याप्यवान्नवेत्याकारकव्याप्यसंशयीयव्याप्यत्वाद्यवच्छिन्नप्रकारताया भेदेऽपि न तत्र व्यापकसंशयनिरूपिताया जनकताया भिन्नत्वमपि तु एकैव तत्र तादृशी जनकता इति तादृशैकजनकतावच्छेदकीभूतायाः

❀ मनोरमा ❀

निष्ठजनकताया अवच्छेदकीभूतप्रकारतायां तादृशसंशयधर्मितावच्छेदकपर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितत्वस्याप्रसिद्धया सर्वत्रासम्भवः स्यादतस्तादृशविशेष्यताघटितधर्मावच्छिन्नत्वं जनकतायां निवेशितम्।

❀ गादाधरी ❀

विशेष्यविशेषणभावे विनिगमनाविरहादपि तु प्रत्येकप्रकारतां निवेश्य हेतुताद्वयमेव कल्पनीयम् इति नातिव्याप्तिप्रसक्तिरिति वाच्यम्। हेतुता-

❀ विवृतिः ❀

सव्यभिचारताघटकसंयोगसम्बान्धावच्छिन्नाया यत् किञ्चिद्व्याप्यत्वावच्छिन्नायाः प्रकारताया अवच्छेदकस्य वह्निव्याप्यत्वधर्मस्य व्याप्ये सत्त्वेन व्याप्येऽतिव्याप्तिसम्भवान्न व्याप्यसंशयस्येत्यादिग्रन्थाऽसंगतिरिति तादृशातिव्याप्तिवारणायैव ज्ञानपदस्य निश्चयपरत्वमावश्यकमितिभावः॥

ननु व्यापकीभूतवह्न्यादिसंशयं प्रति वह्न्यादिव्याप्यसंशयस्यैककारणत्वकल्पनमयुक्तम् विनिगमनाविरहेण व्याप्यप्रकारकत्वविशिष्टव्याप्याभावप्रकारकत्वेनेव व्याप्याभावप्रकारकत्वविशिष्टव्याप्यप्रकारकत्वेनापि गुरुरूपेण कारणताद्वयकल्पनमपेक्ष्य व्याप्यप्रकारकज्ञानत्वेन, व्याप्याभावप्रकारकज्ञानत्वेन च लघुरूपेण कारणताद्वयकल्पनस्यैव सुवचत्वात्, एवञ्च व्याप्यसंशयेत्यादिग्रन्थासंगतिर्दुर्वारैव वह्न्यादिसंशयनिरूपितयावत्कारणतान्तर्गतव्याप्याभावप्रकारकत्वावच्छिन्नजनकतावच्छेदकीभूतव्याप्याभावप्रकारतायाः सव्यभिचारताघटकसम्बन्धानवच्छिन्नतया, तादृशप्रकारतावच्छेदकव्याप्याभावत्वस्य व्याप्ये विरहेण च, व्याप्येऽतिप्रसंगवारणसम्भवेन ज्ञानपदस्य निश्चयपरत्वाभिधानस्य निर्युक्तिकतापातादित्याशयेन शंकते **न चेति** वाच्यमितिपरेणान्वयः।

उभयप्रकारकत्वेन = व्याप्यव्याप्याभावोभयप्रकारकत्वेन। **नैकहेतुतेति**। व्यापकसंशयं प्रतीत्यादिः। विशेष्यविशेषणभावे = व्याप्यप्रकारकत्वनिष्ठविशेष्यत्वविशेषणत्वे, व्याप्याभावप्रकारकत्वनिष्ठविशेष्यत्वविशेषणत्वे च। **विनिगमनाविरहादिति**। अनयोरेकमात्रस्य विशेष्यत्वमपरमात्रस्य विशेषणत्वमित्यत्र युक्तिविरहादित्याशयः। प्रत्येकप्रकारतां = व्याप्यत्वावच्छिन्नप्रकारतां व्याप्याभावत्वावच्छिन्नाञ्च प्रकारताम्।

**कल्पनीयमिति**। व्याप्यवत्तानिश्चयोत्तरकाले लौकिकसन्निकर्षादिनाव्याप्याभावप्रकारकनिश्चयादेरुत्पत्तावपि व्याप्यवत्तानिश्चयेन प्रतिबन्धान्न तादृशज्ञानद्वयकाले व्यापकसंशयापत्तिरितिव्यभिचाराभावेन व्यापकसंशयं प्रति व्याप्यप्रकारकज्ञानत्वेन व्याप्याभावप्रकारकज्ञानत्वेन च कारणत्वद्वयकल्पने बाधकाभावात् तादृशकारणताद्वयकल्पनमेव समीचीनमिति भावः।

❀ मनोरमा ❀

ज्ञानवानयं नित्यः द्रव्यत्वादित्यादौ नित्यत्वतदभावसहचरितद्रव्यत्ववान् - ज्ञानवानयमित्याकारक-

❀ गादाधरी ❀

द्वयकल्पने यत्र व्याप्यवत्तानिश्चयस्य स्वांशेऽप्रामाण्यसंशयात्मकस्यानन्त-रक्षणे व्याप्याभाववत्तानिश्चयस्तदुत्तरक्षणे व्यापकसंशयापत्तेः। एतेन

❀ विवृतिः ❀

**नातिव्याप्तीति ।** व्याप्यत्वस्य व्याप्ये विरहादित्यादिः । तथा चोक्तकल्पेऽपि व्याप्यसंशयस्येत्यादिग्रन्थाऽसंगतिरस्त्येवेति भावः ।

निरुक्तरीत्या कारणताद्वयकल्पने यत्रादौ पर्वतो वह्निव्याप्यवानित्याकारकनिश्च-यस्तद्धर्मिकवह्निव्याप्याभाववति वह्निव्याप्यप्रकारकं न वेत्याकारकाप्रामाण्यसंशयश्च ततः पर्वतो वह्निव्याप्याभाववानित्याकारको निश्चयस्तदनन्तरं पर्वतो वह्निमान्नवेति व्यापकसंशयापत्तिः तत्राऽप्रामाण्यनिश्चयानास्कन्दितस्य व्याप्यप्रकारकज्ञानस्य व्याप्या-भावप्रकारकज्ञानस्य च सत्त्वेन व्यापकसंशयसकलकारणस्य विद्यमानत्वात् अतो-गुरुरूपेणापि व्याप्यप्रकारकत्वविशिष्टव्याप्याभावप्रकारकत्वादिना कारणताद्वयं कल्पनीयं तथासति न व्याप्यसंशयस्येत्यादिग्रन्थाऽसंगतिस्ताद्दशद्विविध कारणता-वच्छेदकताया एव व्याप्यप्रकारतायां वर्त्तमानतया यावत्कारणतावच्छेदकव्याप्य-प्रकारतावच्छेदकीभूतव्याप्यत्वस्य व्याप्ये सत्त्वादित्याशयेन समाधत्ते **हेतुतेति ।** निरुक्तरीत्या व्यापकसंशयं प्रतीत्यादिः ।

यत्र=स्थलविशेषे । स्वांशे=व्याप्यवत्त्वनिश्चयांशे । स्वांशेऽप्रामाण्यनिश्चयसत्त्वे अप्रामाण्यनिश्चयानास्कन्दितव्याप्यवत्वाज्ञानात्मककारणविरहेण व्यापकसंशयापत्त्यस-म्भवादप्रामाण्यसंशयात्मकस्येत्युक्तम् । अप्रामाण्यज्ञानानास्कन्दितव्याप्यवत्तानिश्च-यस्यैव व्यापकाभावबुद्धौ प्रतिबन्धकतया अप्रामाण्यसंशयात्मकव्याप्यवत्तानिश्च-यसत्त्वेऽपि न व्यापकाभावप्रकारकसंशयस्यानुपपत्तिरित्याशयः। न चैवं स्वांशे प्रामा-ण्यसंशयात्मकस्येत्युक्तावेव सामञ्जस्ये अप्रामाण्येत्याद्यभिधानमसंगतमिति वाच्यम् ! प्रामाण्यसंशयस्य विषयसंशायकतया प्रामाण्यसंशयास्कन्दितव्याप्यवत्तानिश्चयोत्तरक्षणे व्याप्यसंशयस्यैवोत्पादेन व्याप्याभावनिश्चयोत्पत्त्यसम्भवेन तथाभिधानस्यैव सम्य-क्त्वादिति वदन्ति ।

अनन्तरक्षणे=समूहालम्बनाप्रामाण्यसंशयास्कन्दितव्याप्यवत्तानिश्चयोत्तरक्षणे । व्याप्याभावबुद्धौ अप्रामाण्यज्ञानविरहविशेषितस्यैव व्याप्यनिश्चयस्य प्रतिबन्धकतया ताद्दशव्याप्यवत्तानिश्चयोत्तरक्षणे व्याप्याभावनिश्चयोत्पत्तौ बाधकाभाव इति भावः । तदुत्तरक्षणे=व्याप्याभावनिश्चयद्वितीयक्षणे । व्यापकसंशयापत्तेः=पर्वतादौ धूमादि-

❀ मनोरमा ❀

ज्ञाननिष्ठायाः साधारणधर्मप्रकारकनिश्चयत्वावच्छिन्नजनकताया धर्मितावच्छेदकप्रकारकनिश्चयत्वा-

❀ गादाधरी ❀

यावत्प्रकारतानिवेशपक्षेपि सव्यभिचारताघटकसम्बन्धावच्छिन्ननिरुक्त-जनकतावच्छेदकप्रकारतानां न यावत्त्वेन निवेशः, अपितु निरुक्तजनकता-वच्छेदकीभूता यावत्यः प्रकारताः सव्यभिचारताघटकसम्-न्धावच्छि-न्नानां तासां प्रत्येकावच्छेदकरूपवत्त्वं निवेश्यम्। एवं च अयमात्मा ज्ञानादित्यादौ नोक्तक्रमेणातिव्याप्तिसम्भवः विषयतासम्बन्धावच्छिन्न-

❀ विवृतिः ❀

व्यापकीभूतस्य वह्न्यादेः संशयापत्तेः। तथाच व्याप्यप्रकारकत्वविशिष्टव्याप्याभाव-प्रकारकत्वादिनैव व्याप्यसंशयस्य व्यापकसंशयं प्रति हेतुत्वं वाच्यमेवं चोक्तव्याप्या-दिनिश्चययोः कस्यापि व्याप्यव्याप्याभावोभयप्रकारकत्वाभावेन तादृशनिश्चययोः कार-णतावच्छेदकधर्मानाक्रान्ततया न पूर्वोक्तनिश्चयसत्त्वे व्यापकसंशयापत्तिरित्याशयः।

**एतेनेति**। पूर्वपक्षानवकाश इतिपरेणान्वयः। वस्तुतस्तु कल्पस्यावश्यकत्वे-नेत्यर्थः। **यावत्प्रकारतेति**। संशयजनकतावच्छेदकेत्यादिः। **सव्यभिचारेति** सव्यभिचारताघटकसम्बन्धावच्छिन्नयत्किञ्चित्संशयजनकतावच्छेदकप्रकारतानामि-त्यर्थः। **न यावत्त्वेनेति**। तथाच तादृशसंशयजनकतावच्छेदकयावत्प्रकारताव-च्छेदकधर्मवत्त्वं न लक्षणार्थइतिभावः। ननु तर्हि कीदृशरीत्या निवेशः कर्त्तव्य इत्या-कांक्षायामाह **अपित्वित्यादि**। यत्किञ्चित्संशयजनकतावच्छेदकीभूतेत्यर्थः। तासां = यावत्प्रकारतानां। **प्रत्येकेति**। प्रत्येकप्रकारतावच्छेदकरूपवत्त्वमित्यर्थः।

**निवेश्यमिति**। तथाच यत्किञ्चित्संशयजनकतावच्छेदकीभूता यावत्यः प्रकारताः सव्यभिचारताघटकसम्बन्धावच्छिन्नतत्तत्प्रत्येकावच्छेदकतापर्याप्त्यधिक-रणधर्मवत्त्वं सव्यभिचारत्वमिति फलितम्॥

ननूक्तरीत्या लक्षणार्थस्य निर्वचनेऽपि कथमयमात्माज्ञानादित्यादावतिव्याप्तिवा-रणमतआह**एवञ्चेति**। यावत्प्रकारतानिवेशपक्षे निरुक्तस्य लक्षणार्थत्वे चेत्यर्थः। उक्त-क्रमेण = समवायेनात्मत्वसहचरितज्ञानवान् विषयतयाऽत्मत्वाभावसहचरितज्ञानवा-नित्याद्याकारकज्ञानमादाय पूर्वोक्तक्रमेण। अतिव्याप्त्यसम्भवे हेतुमाह–**विषयतेति**। विषयतया आत्मत्वाभावसहचरितज्ञानवानित्याकारकज्ञानीयज्ञानादिप्रकारतानामपी-

❀ मनोरमा ❀

वच्छिन्नायाश्च जनकताया विशिष्टैकज्ञाननिष्ठतया धर्मितावच्छेदकप्रकारकनित्यत्वावच्छिन्नाया अपि जनकतायाः संशयधर्मितावच्छेदकावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्नत्वमते तादृशजनकतावच्छेदक-ज्ञानप्रकारताया अवच्छेदकीभूतज्ञानत्वमादाय नित्यत्वव्याप्ये ज्ञानेऽतिव्याप्तिरतः प्रकृतसंशयधर्मिता-वच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वं तादृशप्रकारतायां निवेशितमिति तु विभावनीयम्।

❀ गादाधरी ❀

ज्ञानादिप्रकारतानामपि निरुक्तयावत्प्रकारतान्तर्गततया सव्यभिचारता-घटकसम्बन्धावच्छिन्नत्वस्य तत्रासत्त्वेन तेन रूपेण तदुपादानासम्भवात् तथाच तावता व्याप्यसंशयहेतुतामादायाप्यतिव्याप्तिवारणसम्भवेन विशेष्यताया यावत्त्वेन निवेशनं ज्ञानापदस्य निश्चयपरत्वं च न युक्तमिति पूर्वपक्षानवकाशः ।

❀ विवृतिः ❀

त्यर्थः । **निरुक्तेति** । यत् किञ्चित् संशयजनकतावच्छेदकयावत्प्रकारतापदेन धर्त्तुंशक्यतयेत्यर्थः । **सव्यभिचारेति** । सव्यभिचारताघटकीभूतसमवायावच्छिन्नत्वस्येत्यर्थः ॥

तत्र = विषयत्वसम्बन्धावच्छिन्नात्मत्वाभावसहचरितज्ञानप्रकारतायाम् । तेन रूपेण=सव्यभिचारताघटकीभूतसमवायावच्छिन्नत्वेन रूपेण । तदुपादानासम्भवात्= विषयत्वसम्बन्धावच्छिन्नताद्दशज्ञानप्रकारताया उपादानासम्भवात् । तथाच विषयतयाआत्मत्वाभावसहचरितज्ञानवानयमित्याकारकज्ञानीयविषयत्वसम्बन्धावच्छिन्नप्रकारताया अपि संशयजनकतावच्छेदकयावत्प्रकारतान्तर्गततया तत्रच सव्यभिचारताघटकीभूतसमवायावच्छिन्नत्वस्याप्रसिद्ध्यैव नायमात्मा ज्ञानादित्यादावतिव्याप्तिः ताद्दशयावत्प्रकारतानां मध्ये सव्यभिचारताघटकसम्बन्धावच्छिन्नायाः प्रत्येकप्रकारताया एव लक्षणघटकत्वादित्याशयः ।

ताद्दशयावत्प्रकारतानां सव्यभिचारताघटकसम्बन्धावच्छिन्नप्रत्येकप्रकारतावच्छेदकधर्मवत्वविवक्षणे पूर्वोक्तरीत्या अयमात्मा ज्ञानादित्यत्रातिव्याप्तिवारणसम्भवेन विशेष्यतायां यावत्वनिवेशस्य यथा निर्युक्तिकत्वं तथा व्याप्यसंशयस्येत्यादिना ज्ञानपदस्य निश्चयपरत्वोपवर्णनमप्ययुक्तं स्यात् , वह्निव्याप्यवान्नवेत्याकारकसंशयीयव्याप्याभावप्रकारताया अपि व्यापकसंशयजनकतावच्छेदकयावत्प्रकारतान्तर्गततया तत्र च सव्यभिचारताघटकसंयोगावच्छिन्नत्वस्याप्रसिद्ध्यैव व्याप्येऽतिव्याप्तिवारणसम्भवादिति व्याप्यसंशयस्येत्यादि ग्रन्थासंगतिभयेनैवोक्तक्रमेण लक्षणार्थनिर्वचनमसंगतमित्याशयेनाह **तथाचेति** । ताद्दशप्रत्येकप्रकारतावच्छेदकधर्मवत्वविवक्षणे चेत्यर्थः ।

तावता=एवमपि । **व्याप्येति** । वह्निव्याप्यवान्नवेत्याकारकव्याप्यसंशयनिष्ठव्यापकसंशयकारणतामादायेत्यर्थः । **अतिव्याप्तीति** । व्याप्याभावप्रकारतायाः सव्यभिचारताघटकसंयोगावच्छिन्नत्वस्याप्रसिद्ध्यैवातिव्याप्तिवारणसम्भव इति भावः । विशेष्यताया इत्यादिकं दृष्टान्तविधयोक्तं, तथाच निरुक्तरीत्या व्याप्येऽतिव्याप्तिवारणसम्भवे यथा विशेष्यतायां यावत्वनिवेशनमयुक्तं तथेत्यर्थः पर्यवसितः । **ज्ञानपद-**

❀ गादाधरी ❀

अथवा व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानान्तर्भावमते एकैककोटिसामानाधिकरण्यमादाय सद्धेतावतिप्रसङ्गवारणाय यत्किञ्चित्संशयजनकतावच्छेदकयावत्प्रकारतापर्यन्तं निवेशनीयम् । व्याप्यसंशयस्य पृथक्कारणतामते नोक्तक्रमेण सद्धेतावतिप्रसङ्गशङ्कावकाशः तन्मते कोटि-

❀ विवृतिः ❀

**स्येति** । लक्षणघटकीभूतस्येत्यादिः । निश्चयपरत्वं=निश्चयबोधेच्छयोच्चरितत्वम् । **नयुक्तमिति** । तथाच निरुक्तरीत्या यावत्प्रकारतानिवेशपक्षेऽपि व्याप्यसंशयस्येत्यादिग्रन्थासंगतिर्दुर्वारैवेति भावः । इति पूर्वपक्षावकाशः=विशेष्यतायां यावत्वादिनिवेशस्य निरर्थकत्वापत्तिरूपपूर्वपक्षस्यनावकाशः ।

प्रकारत्वादौ यावत्वं संशये च यत्किञ्चित्वमनिवेश्याऽपि सद्धेतावतिव्याप्तिं वारयितुमाहाऽ**थवेति** । व्यायसंशयस्य=वह्न्यादिव्याप्यवान्नवेत्याद्याकारकसंशयस्य । **साधारणेति** । तत्कोटिसहचरितधर्मवत्ताज्ञानात्मकत्वमते तदभावकोटिसहचरितधर्मवत्ताज्ञानात्मकत्वमते चेत्यर्थः । व्याप्यसंशयस्य व्यापकसहचरितत्वेन व्याप्यप्रकारकज्ञानात्मकतया व्यापकाभावसहचरितत्वेन व्याप्याभावप्रकारकज्ञानात्मकतयाच साधारणधर्मवत्ताज्ञानरूपत्वादिति हृदयम् ॥

**एकैकेति** । केवलवह्न्यादिमद्वृत्तित्वमादायेत्यर्थः । सद्धेतौ=वह्न्यादिसाध्यक धूमादौ । **निवेशनीयमिति** । तथाच व्याप्यसंशयो यदि साधारधर्मवत्ताज्ञानात्मक स्तदातद्वद्वृत्तित्वावच्छिन्नप्रकारताशालिज्ञानत्वेन तदभाववद्वृत्तित्वावच्छिन्नप्रकारताशालिज्ञानत्वेनैव परस्परसहकारेण साधारणधर्मवत्ताज्ञानस्य संशयजनकत्वं वक्तव्यं अन्यथा तत्तदभाववद्वृत्तित्वावच्छिन्नप्रकारताशालिज्ञानत्वेन साधारणधर्मवत्ताज्ञानस्य संशयजनकत्वे व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानात्मकत्वानुपपत्तिः स्यात् तदीयप्रकारीभूते व्याप्ये व्याप्याभावे च कुत्राऽपि वह्नितदभाववद्वृत्तित्वस्यासत्त्वात् । एवञ्च वह्निमान् धूमादित्यादौ केवलवह्निमद्वृत्तित्वावच्छिन्नप्रकारताकज्ञानीयतादृशवृत्तित्वमादायातिव्याप्तिः, एवं वह्निमान् जलत्वादित्यादौच केवलवह्न्यभाववद्वृत्तित्वावच्छिन्नप्रकारताशालिज्ञानीयवह्न्यभाववद्वृत्तित्वमादायातिव्याप्तिरतस्तद्वारणाय संशयजनकतावच्छेदकप्रकारतायां यावत्वनिवेशस्यावश्यकत्वे पूर्वोक्तयुक्त्याऽसम्भववारणाय संशयेऽपि यत्किञ्चित्वमवश्यं निवेशनीयमिति भावः ।

**पृथगिति** । व्याप्यसंशयत्वेन व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानानात्मकतया व्यापकसंशयं प्रति जनकत्वाभ्युपगमेइत्यर्थः । उक्तक्रमेण=केवलसाध्यादिमद्वृत्तित्वमादाय कथितक्रमेण । कथं तादृशवृत्तित्वमादाय सद्धेतौ नातिव्याप्तिरित्याकांक्षायामाह

❀ गादाधरी ❀

द्वयसामानाधिकरण्यावच्छिन्नत्वेनैव प्रकारताया जनकतावच्छेदकत्वोपगमात्। एकैककोटिसाहचर्यावच्छिन्नत्वप्रकारतायाः संशयजनकतानवच्छेदकत्वात्। अतो यावत्प्रकारतानिवेशनं संशये यत्किञ्चित्त्वनिवेशनं च न कर्तव्यम्, अपि तु व्याप्यसंशयहेतुतामादायातिप्रसङ्गवारणाय ज्ञानपदमेव निश्चयपरमुपगन्तव्यम् इत्येव व्याप्यसंशयेत्यादिनाऽभिहि-

❀ विवृतिः ❀

**तन्मते इति**। व्याप्यसंशयस्य पृथक्कारणतावादिमते इत्यर्थः। **कोटिद्वयेति**। तत्तदभाववद्वृत्तित्वावच्छिन्नत्वेनेत्यर्थः। प्रकारतान्वयि वैशिष्ट्यं तृतीयार्थः। **जनकतेति**। संशयेत्यादिः। **एकैकेति**। तद्वद्वृत्तित्वावच्छिन्नप्रकारतायाः तदभाववद्वृत्तित्वावच्छिन्नायाश्च प्रकारतायाइत्यर्थः।

साधारणधर्मवत्ताज्ञानं यदि तत्तदभाववद्वृत्तित्वावच्छिन्नप्रकारताशालिज्ञानात्मकं तदा व्याप्यसंशयस्य साधारणधर्मवत्ताज्ञानात्मकत्वं न सम्भवत्येव व्याप्यादौ वह्निवह्न्यभावद्वृत्तित्वस्यासत्त्वात्, एवञ्च वह्निमान्धूमादित्यादौ केवलवह्निमद्वृत्तित्वावच्छिन्नधूमप्रकारताशालिज्ञानस्य साधारणधर्मवज्ज्ञानानात्मकतया न वह्निमद्वृत्तित्वमात्रमादाय तत्रातिव्याप्तिः, सद्धेतावतिव्याप्तिवारणे तु प्रकारतायां यावत्त्वनिवेशो निरर्थकः प्रकारतायां यावत्वानिवेशेअसाधारण्यादिकमादायाऽसम्भवस्याप्यसम्भवात् संशयेऽपि यत्किञ्चित्त्वनिवेशनमनर्थकमित्या**हातइति**। केवलवह्न्यादिमद्वृत्तित्वावच्छिन्नप्रकारतायाः संशयजनकतानवच्छेदकत्वादित्यर्थः।

**न कर्तव्यमिति**। प्रकारतायां यावत्त्वविशेषणस्यातिव्याप्तिवारणमात्रप्रयोजनकतया यावत्वाऽनिवेशेऽपि सद्धेतावतिव्याप्तिवारणसम्भवे तन्निवेशनं न कर्तव्यम्, तत्र यावत्त्वनिवेशे एव पूर्वोक्तक्रमेणासम्भवसम्भवात् यावत्वाऽनिवेशेऽसम्भवस्याप्यभावात् तद्वारकविशेषणस्य, संशये यत्किञ्चित्वस्याऽपि निवेशनं न कर्तव्यमित्याशयः।

व्याप्यसंशयहेतुतां = व्यापकीभूतवह्न्यादिसंशयं प्रति वह्न्यादिव्याप्यवान्न वेत्याकारकसंशयत्वावच्छिन्नकारणताम्। **अतिव्याप्तीति**। व्याप्येइत्यादिः। **ज्ञनपदमिति**। लक्षणघटकीभूतमित्यादिः। इत्येव=निरुक्तमतमवलम्ब्यतथोक्तक्रमेण व्याप्यदावतिव्याप्तिवारणमेव। अभिहितं दीधितिकृतेतिशेषः।

अयमभिप्रायः, उभयसाहचर्यावच्छिन्नप्रकारताया एव साधारणधर्मवत्ताज्ञाननिष्ठसंशयजनकतावच्छेदकत्वमते प्रकारतायां यावत्त्वनिवेशस्य निष्प्रयोजनकतया व्यापकीभूतवह्न्यादिसंशयजनकतावच्छेदकीभूतायाः व्याप्यसंशयीयव्याप्यत्वावच्छिन्नयत्किञ्चित्प्रकारतावच्छेदकव्याप्यत्वमादाय व्याप्येऽतिप्रसंगवारणाय पक्ष-

❀ गादाधरी ❀

तम्। न च धर्म्यैक्यस्य संशयजनकतायां तन्त्रतामते कोटिद्वयसामानाधिकरण्यावच्छिन्नत्वं नैकत्र निवेश्यते विशेष्यविशेषणभावे विनिगमनाविरहादपि तु प्रत्येकसामानाधिकरण्यावच्छिन्नत्वं प्रत्येकं निवेश्य कारणताद्वयमेव कल्प्यते। धूमसहचरितवह्निमत्ताज्ञानधूमाभावसहचरितवह्निमत्ताज्ञानयोः परस्परसहकारित्वान्न कोटिद्वयसहचरितविभिन्नधर्म-

❀ विवृतिः ❀

धर्मताज्ञानविषयत्वमित्यत्र ज्ञानपदं निश्चयपरमेव वक्तव्यम् तथाच व्याप्यसंशयस्य निश्चयानात्मकतया नतदीयप्रकारतामादायव्याप्येऽतिव्याप्तिरिति।

ननु धूमवान्वह्नेरित्यादौ यदि धूमधूमाभाववद्वृत्तित्वावच्छिन्नत्वविशिष्टवह्निरूपैकधर्मनिष्ठप्रकारताशालिज्ञानत्वेन साधारणधर्मवत्ताज्ञानस्य धूमादिसंशयजनकत्वं तदा धूमवद्वृत्तित्वावच्छिन्नत्वाविशिष्टं यद्धूमाभाववद्वृत्तित्वावच्छिन्नत्वं तद्विशिष्टप्रकारताकत्वेनैव तादृशजनकतायाः स्वीकरणीयतया विनिगमनाविरहेण धूमाभाववद्वृत्तित्वावच्छिन्नत्वविशिष्टं यद्धूमवद्वृत्तित्वावच्छिन्नत्वं तद्विशिष्टप्रकारताकत्वेनाऽपि संशयजनकताया आवश्यकत्वात् धूमवद्वृत्तित्वावच्छिन्नत्वादेर्विशेषणत्वं विशेष्यत्वञ्चेति विशेष्यविशेषणभावभेदेन संशयजनकताया आनन्त्यप्रसंगः अतो लाघवात् केवलधूमादिमद्वृत्तित्वावच्छिन्नत्वविशिष्टवह्न्यादिप्रकारताशालिज्ञानत्वेन धूमाभाववद्वृत्तित्वावच्छिन्नत्वविशिष्टवह्न्यादिप्रकारताशालिज्ञानत्वेन च कारणत्वं द्वयमेव कल्पनीयमेवञ्च सद्धेतौ केवलवह्न्यादिमद्वृत्तित्वावच्छिन्नप्रकारताकज्ञानीयकेवलवह्न्यादिमद्वृत्तित्वमादायातिव्याप्तिवारणाय प्रकारतायां यावत्त्वनिवेशस्यावश्यकत्वे असम्भववारणाय संशयेऽपि यत्किञ्चित्त्वनिवेशनं कर्त्तव्यमेवेत्याशंकते **न चेति**। वाच्यमितिपरेणान्वयः।

धर्म्यैक्यस्य = एकधर्मप्रकारकत्वस्य। तन्त्रतामते = प्रयोजकत्वमते। **कोटिद्वयेति**। तत्तदभाववद्वृत्तित्वावच्छिन्नत्वमित्यर्थः। नैकत्र = नैकधर्मनिष्ठप्रकारतायां कुतो न निवेश्यते इत्याकांक्षायामाह **विशेष्येति**। विशेष्यत्वे विशेषणत्वे चेत्यर्थः। **विनिगमनाविरहादिति**। तद्वद्वृत्तित्वावच्छिन्नत्वस्यैव विशेषणत्वं नतु तदभाववद्वृत्तित्वावच्छिन्नत्वस्येत्यत्रयुक्तिविरहादित्याशयः। **प्रत्येकेति**। तद्वद्वृत्तित्वाद्यवच्छिन्नत्वमित्यर्थः। प्रत्येकं निवेश्य = प्रत्येकप्रकारतायां निवेश्य।

नन्वेवं धूमादिमद्वृत्तिवह्निमानयं धूमाभावादिमद्वृत्तिद्रव्यत्ववानयमित्याकारकज्ञानद्वयादपि धूमादिसंशयापत्तिरत आह **धूमेति**। परस्परसहकारित्वात् = परस्परसहकारेण संशयजनकत्वाभ्युपगमात्। **कोटिद्वयेति**। धूमसहचरितवह्निमान् धूमाभाव-

❀ गादाधरी ❀

वत्ताज्ञानात् संशयप्रसङ्गः। धूमसहचरितवह्निमान् तदभावसहचरितवह्निमानितिज्ञानद्वयादितोऽपि संशयः स्वीक्रियते, तथाच सद्धेतावेतत्प्रसङ्गवारणाय यावत्प्रकारतानिवेशनं संशये यत्किञ्चित्त्वनिवेशनं चावश्यकमिति वाच्यम्। विभिन्नहेतुत्वे साहचर्यधर्मितावच्छेदकवह्नित्वद्रव्यत्वादिधर्माणां विशिष्यानिवेशे कोटिद्वयसहचरितधर्मवत्ताज्ञानयोः परस्पर-

❀ विवृतिः ❀

सहचरितद्रव्यवानित्याकारकज्ञानद्वयादित्यर्थः। **संशयप्रसंग इति**। नेति पूर्वेण सम्बन्धः।

तथा च धूमसहचरितवह्निमानयमित्याकारकज्ञानं धूमाभावसहचरितवह्निमानयमित्याकारकज्ञानसहकृतं सदेव धूमादिसंशयजनकं न तु धूमाभावसहचरितद्रव्यवानित्याकारकज्ञानसहकृतं सत् तथा, एवञ्च न तादृशद्रव्यादिमत्ताज्ञानकालीनधूमादिमद्वृत्तित्वावच्छिन्नवह्निप्रकारताकज्ञानात् धूमादिसंशयापत्तिरितिभावः।

ननु धूमादिमद्वृत्तित्वाद्यवच्छिन्नवह्निप्रकारताकज्ञानद्वयात् संशयो नेष्यत एवेत्यत आह **धूमेति**। तदभावेतिधूमाभाववद्वृत्तिवह्निमानयमित्याकारकज्ञानद्वयादितइत्यर्थः **स्वीक्रियतइति**। तथाच धूमवद्वृत्तिवह्निमान्धूमाभाववद्वृत्तिवह्निमानित्याकारकज्ञानद्वयात् संशयइष्टएवेतिभावः। उपसंहरति **तथाचेति**। प्रत्येककोटिसाहचर्यावच्छिन्नप्रकारताशालिज्ञानत्वेन संशयजनकत्वे चेत्यर्थः। **आवश्यकमिति**। अन्यथाऽसाधारण्यादिकमादाय सर्वत्राऽसम्भवः स्यादितिहृदयम्।

वह्निधर्मिकधूमवद्वृत्तित्वप्रकारकज्ञानस्य, तद्धर्मिकधूमाभाववद्वृत्तित्वप्रकारकज्ञानसहकारेण, संशयजनकत्वाभ्युपगमे, धूमसहचरितवह्निमान्धूमाभावसहचरितद्रव्यवानित्याकारकज्ञानद्वयादपि धूमादिसंशयापत्तिः, द्रव्यादेरपि वह्निस्वरूपत्वादतो वह्नित्वाद्यवच्छिन्नधर्मिकधूमादिमद्वृत्तित्वज्ञानमेव वह्नित्वाद्यवच्छिन्नधर्मिकधूमाभाववद्वृत्तित्वज्ञानसहकारेणधूमादिसंशयजनकं वाच्यमेवञ्च वह्नित्वद्रव्यत्वाद्यनन्तधर्मभेदेन कारणताया आनन्त्यापत्तिवारणाय धूमवद्वृत्तित्वावच्छिन्नत्वादिविशिष्टं यत् धूमाभाववद्वृत्तित्वावच्छिन्नत्वं तद्विशिष्टप्रकारताकज्ञानस्यैव संशयजनकत्वं युक्तं विशेष्यविशेषणभावभेदेन कारणताद्वयमात्रस्यैव कल्पनेन लाघवादिति प्रकारतायां यावत्त्वनिवेशनं, संशयेऽपि यत्किञ्चित्त्वनिवेशनं न कर्तव्यमित्याशयेन समाधत्ते—**विभिन्नेति**। पूर्वोक्तज्ञानद्वयस्य संशयजनकत्वेइत्यर्थः।

**साहचर्येति**। तद्वद्वृत्तित्वप्रकारतानिरूपितविशेष्यतावच्छेदकवह्नित्वादिधर्माणामित्यर्थः। विशिष्याऽनिवेशे=वह्नित्वादिधर्मावच्छिन्नधर्मिकत्वेन कारणताया

❀ गादाधरी ❀

सहकारित्वे विभिन्नधर्मवत्ताज्ञानात्संशयापत्तेर्दुर्वारतया तादृशधर्माणां विशिष्य निवेशनीयतया कारणतानन्त्यापतेरिति संक्षेपः ॥ × ६-८-५६

अथ द्रव्यं विशिष्टसत्त्वादित्यादेः सव्यभिचारत्वापत्तिः-विशिष्टसत्त्वस्यानतिरिक्ततया विशिष्टसत्त्वादौ साध्यतदभावसहचरितत्ववतद्वद्वृत्तित्वयोः सत्त्वादिति चेन्न। गुणकर्मान्यत्वसामानाधिकरण्यरूपं हि तद्वैशिष्ट्यं क्वचिदुपलक्षणतया हेतुतावच्छेदकं क्वचिद्विशेषणतया। आद्यं

❀ विवृतिः ❀

अविवक्षणे। कोटिद्वयेति। तद्वद्वृत्तित्वावच्छिन्नप्रकारताकज्ञान-तदभाववद्वृत्तित्वावच्छिन्नप्रकारताकज्ञानयोरित्यर्थः। परस्परसहकारित्वोपगमेऽपि=एकज्ञानस्यापरज्ञानसहकारेण संशयजनकत्वाभ्युपगमेऽपि। **विभिन्नेति**। धूमसहचरितवह्निमान् धूमाभावसहचरितद्रव्यवानित्याकारकज्ञानद्वयादित्यर्थः।

तादृशधर्माणां=वह्नित्वादिधर्माणाम्। विशिष्य निवेशनीयतया=तत्तद्धर्मावच्छिन्नतत्कोटिसाहचर्यावच्छिन्नप्रकारताकज्ञानत्वेन संशयजनकताया विवक्षणीयतया। **आनन्त्यापत्तेरिति**। तथा च तत्कोटिसाहचर्यावच्छिन्नत्वविशिष्टं यत् तदभावकोटिसाहचर्यावच्छिन्नत्वं तद्विशिष्टप्रकारताकज्ञानत्वेनैव संशयजनकत्वमुक्तमितिभाव इतिदिक्।

ननु सत्तायां गुणवृत्तित्वसत्त्वे विशिष्टसत्त्वस्यापि सत्ताऽनतिरिक्ततया तत्राऽपि गुणवृत्तित्वस्य वर्त्तमानतया द्रव्यं गुणकर्माण्यत्वविशिष्टसत्त्वादित्यादौ निरुक्तसव्यभिचारलक्षणस्यातिव्याप्तिः, द्रव्यत्ववद्वृत्तित्वस्य द्रव्यत्वाभाववद्गुणवृत्तित्वस्यापि विशिष्टसत्तायां सत्त्वेन द्रव्यत्वतदभाववद्वृत्तित्वावच्छिन्नविशिष्टसत्ताप्रकारताकज्ञानीयसंशयजनकतावच्छेदकप्रकारतावच्छेदकीभूतस्य द्रव्यत्वतदभाववद्वृत्तित्वविशिष्ट-विशिष्टसत्तात्वस्य विशिष्टसत्तायां सत्त्वादित्याशंकते—**अथेति**। विशिष्टस्य=गुणकर्माण्यत्वविशिष्टसत्त्वस्य। अनतिरिक्ततया=शुद्धसत्तानतिरिक्ततया। तद्वद्वृत्तित्वयोः=द्रव्यत्वसहचरितत्ववद्वृत्तित्वद्रव्यत्वाभावसहचरितत्ववद्वृत्तित्वयोः। **सत्त्वादिति**। तथा च साध्यतदभावसहचरितत्वविशिष्टहेतुतावच्छेदकावच्छिन्नप्रकारताकज्ञानस्य संशयजनकत्वाभ्युपगमेऽपि तत्राऽतिव्याप्तिरस्त्येवेति भावः॥

समाधत्ते—**इति चेन्नेति**। **गुणेति**। गुणकर्मभेदाधिकरणवृत्तित्वं हीत्यर्थः क्वचित्=कुत्रचित् स्थले। उपलक्षणतया = प्रतियोगिव्यधिकरणस्य तादृशवैशिष्ट्याभावस्याभाववत्त्वेन। विशेषणतया = इतरव्यावर्तकत्वेन। आद्यं=उपलक्षणीभूतवैशिष्ट्यात्मकं हेतुतावच्छेदकम्। अनुमितिलक्षणप्रविष्टम्—अनुमितिलक्षणघटकीभूतम्।

❀ गादाधारी ❀

यथाऽनुमित्यादिलक्षणप्रविष्टमितरभेदानुमापकतावच्छेदकं यत्तद्व्यक्तिसमवेतत्वादिकं तद्विशिष्टानुमितित्वादिजातेः व्यक्त्यन्तरेऽसत्त्वेन भागासिद्धेरतस्तस्य विशेषणत्वायोगात्। अत एव तादृशजातावनुभवत्वान्यत्वादि-विशेषणं व्यभिचारवारकतया सार्थकम्। द्वितीयं च यथा शब्दोऽनित्यो बाह्यकरणप्रत्यक्षविषयत्वे सति सत्त्वादित्यादौ सत्यन्तार्थः। तस्य तद्विशेषणत्वे एव सद्धेतुतानिर्वाहात्। तथाच दर्शितस्य वैशिष्टयस्यो-

❀ विवृतिः ❀

**इतरेति**। अनुमितीतरभेदानुमितौ हेतुतावच्छेदकमित्यर्थः। **तद्व्यक्तीति**। तदनुमितिव्यक्तिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वादिकमित्यर्थः। आदिपदात् प्रत्यक्षादिलक्षणप्रविष्टतत्प्रत्यक्षव्यक्तिसमवेतत्वस्य परिग्रहः। **तद्विशिष्टेति**। तदनुमितिव्यक्तिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वविशिष्टानुमितित्वजातेरित्यर्थः। व्यक्त्यन्तरे=तदनुमितिभिन्नानुमितिव्यक्तौ। **भागासिद्धेरिति**। हेत्वाभाववद्यत्किञ्चित्पक्षस्यैव भागासिद्धित्वादित्याशयः।

तस्य=तदनुमितिव्यक्तिसमवेतत्वस्य। विशेषणत्वायोगात्=तदनुमितीतरव्यावर्त्तकत्वाऽसम्भवात्। **अत एवेति**। तद्व्यक्तिसमवेतत्वस्योपलक्षणत्वादेवेत्यर्थः। तादृशजातौ तद्व्यक्तिसमवेतत्वोपलक्षितजातौ। **अनुभवत्वेति**। अनुभवत्वभिन्नत्वादिरूपविशेषणमित्यर्थः। व्यभिचारवारकतया=सद्धेतुत्वनिर्वाहकतया। **सार्थक्यमिति**। अन्यथा तद्व्यक्तिसमवेतत्वोपलक्षिताया अनुभवत्वजातेः प्रत्यक्षादावपि सत्त्वेन तत्राऽनुमितीतरभेदविरहेण निरुक्तहेतोर्व्यभिचारितापत्तिः स्यादितिभावः॥

द्वितीयं=विशेषणीभूतहेतुतावच्छेदकम्। **बाह्येति**। बहिरिन्द्रियकरणकप्रत्यक्षविषयत्वे सतीत्यर्थः। आत्मादौ व्यभिचारवारणाय सत्यन्तम्। घटात्यन्ताभावादौ घटत्वादौ वा व्यभिचारवारणाय विशेष्यदलम्। सत्यन्तघटक 'बहिः' पदमपि आत्मादौ व्यभिचारवारणाय बोध्यम्। **सत्यन्तार्थ इति**। द्वितीयं यथेतिपूर्वेणान्वयः।

तस्य = बाह्यकरणकप्रत्यक्षविषयत्वस्य। तद्विशेषणत्व एव=सत्ताविशेषणतया विवक्षितत्व एव। **सद्धेतुतानिर्वाहादिति**। बाह्यकरणकप्रत्यक्षविषयत्वोपलक्षितसत्ताया आत्मादावपि सत्त्वेन तत्राऽनित्यत्वरूपसाध्यविरहेण व्यभिचारात् हेतोः सद्धेतुत्वमेव न सम्भवति, अतः सत्यन्तार्थस्य विशेषणत्वमेव वक्तव्यमितिहृदयम्।

**अयं भावः**, हेतुतावच्छेदकं हि द्विविधं भवति, कुत्रचित् स्थले उपलक्षणीभूतं कुत्रचिच्च विशेषणीभूतं, उपलक्षणीभूतं यथा,–अनुमितिः अनुमितीतरभिन्ना, स्वेतर-

❀ गादाधरी ❀

**पलक्षणतया हेतुतावच्छेदकत्वे सव्यभिचारत्वमिष्टमेव, विशेषणत्वे च विशिष्टनिरूपितसमवायादिरेव हेतुतावच्छेदकसम्बन्धो वाच्यः, अन्यथा**

❀ विवृतिः ❀

भिन्ना वा, तदनुमितिव्यक्तिनिरूपितसमवायावच्छिन्नवृत्तितावत्त्वे सति अनुभवत्वान्यजातिमत्त्वादित्याद्यनुमितिलक्षणात्मकेतरभेदानुमापकहेतुघटकंतदनुमितिव्यक्तिसमवेतत्वंतस्योपलक्षणतयैव हेतुतावच्छेदकत्वं स्वीकर्त्तव्यम् । अन्यथा तस्य विशेषणविधयाहेतुतावच्छेदकत्वे तादृशतद्व्यक्तिसमवेतत्वविशिष्टानुभवत्वान्यजातेस्तदनुमितिव्यक्तावेव सत्त्वेन पक्षीभूतानुमितिव्यक्त्यन्तरे ,तादृशजातेरभावसत्त्वात् हेत्वभाववद्यत्किञ्चित्पक्षरूपभागासिद्ध्यापत्तिः स्यात्, अतस्तादृशसमवेतत्वस्योपलक्षणत्वमेव वक्तव्यम् । एवञ्च तद्व्यक्तिसमवेतत्वोपलक्षितजातिपदेनानुभवत्वस्यापि धर्त्तुं शक्यतया तादृशानुभवत्वस्य प्रत्यक्षादावपि सत्त्वेन तत्रानुमितीतरभेदरूपसाध्यस्याभावान्निरुक्तलक्षणात्मकहेतोर्व्यभिचारित्वं स्यादिति तद्व्यक्तिसमवेतत्वोपलक्षिता जातिरनुभवत्वान्यत्वेन विशेषणीया । तद्व्यक्तिसमवेतत्वस्य विशेषणत्वे तु तादृशविशेषणविशिष्टाया जातेरनुमितित्वरूपतया व्यभिचारासम्भवेन जातिविशेषणमनुभवत्वान्यत्वं व्यर्थं स्यात् ।

विशेषणीभूतं–यथा 'शब्दोऽनित्यः,बहिरिन्द्रियकरणकप्रत्यक्षविषयत्वे सति सत्तावत्त्वादित्यादौ बहिरिन्द्रियकरणकप्रत्यक्षविषयत्वं, तस्योपलक्षणतया हेतुतावच्छेदकत्वे तादृशविषयत्वोपलक्षितसत्ताया आत्मादावपि सत्त्वेन तत्राऽनित्यत्वरूपसाध्यस्य विरहात् हेतोर्व्यभिचारिताप्रसंगः स्यादतस्तस्य विशेषणत्वमेव वाच्यमेवञ्च बहिरिन्द्रियकरणकप्रत्यक्षविषयत्वविशिष्टसत्तायाः शब्दघटादावेव सत्त्वेन तत्राऽनित्यत्वस्यापि विद्यमानत्वान्न व्यभिचारइति ।

उपसंहरति-**तथाचेति**। निरुक्तरीत्या हेतुतावच्छेदके द्वैविध्यस्य व्यवस्थापनेचेत्यर्थः । दर्शितस्य वैशिष्ट्यस्य=गुणकर्माण्यत्वसामानाधिकरण्यस्य । **इष्टमेवेति** । गुणकर्माण्यत्वोपलक्षितसत्ताया गुणदावपि सत्त्वेन तत्र द्रव्यत्वविरहात् तादृशहेतौ व्यभिचारित्वस्याक्षतत्वादित्याशयः। **विशेषणत्वे इति** । दर्शितवैशिष्ट्यस्येति पूर्वेण सम्बन्धः ।

**विशिष्टेति**। गुणकर्माण्यत्ववैशिष्ट्यसत्तात्वावच्छिन्नप्रतियोगिकसमवायादिरेवेत्यर्थः **वाच्यइति**। तथाच तादृशसत्ताप्रतियोगिकसमवायसम्बन्धेन द्रव्यत्वाभाववद्गुणवृत्तित्वस्य विशिष्टसत्तायां, तेन सम्बन्धेन तादृशगुणवृत्तिवृत्तित्वस्य वा, विशिष्ट-

❀ गादाधरी ❀

यद्धर्मविशिष्टनिरूपितत्वानवच्छिन्नसमवायादिर्हेतुतावच्छेदकसम्बन्धस्त-स्य हेतुप्रकारस्योपलक्षणविधया हेतुतावच्छेदकत्वात् तस्य विशेषणत्वानुपपत्तिः। न च विशिष्टनिरूपितसमवायादेर्हेतुतावच्छेदकसम्बन्धत्वे तेन सम्बन्धेन शुद्धसत्तादेरव्यभिचारतया तद्विशेषणवैयर्थ्यमिति गुणकर्मान्यत्वे सति सत्त्वादिति हेतुप्रयोगे निग्रहप्रसङ्गादिति वाच्यम्। विशिष्टविशेषण-कबुद्धावेव विशिष्टनिरूपितत्वस्य सम्बन्धतावच्छेदकतया तद्रूपविशिष्टनिरू-

❀ विवृतिः ❀

सत्तात्वेविरहान्न द्रव्यं गुणकर्माण्यत्वविशिष्टसत्त्वादित्यादौ निरुक्तसव्यभिचारलक्षण-स्यातिव्याप्तिरिति भावः।

अन्यथा = विशिष्टनिरूपितसमवायादेर्हेतुतावच्छेदकसंसर्गत्वानभ्युपगमे। **यद्ध-र्मेति**। गुणकर्माण्यत्ववैशिष्ट्याद्यवच्छिन्ननिरूपितत्वानवच्छिन्नशुद्धसमवायादिरित्यर्थः। तस्य = गुणकर्माण्यत्ववैशिष्ट्यादेर्धर्मस्य। हेतुप्रकारस्य = हेतौ सत्तादौ प्रकारीभूतस्य तादृशधर्मस्य। उपलक्षणविधया = प्रतियोगिव्यधिकरणस्य तादृशधर्माभावस्या-भाववत्त्वेन। तस्य = तादृशवैशिष्ट्यादिधर्मस्य। **विशेषणत्वानुपपत्तिरिति**। कुत्रचिदपीतिशेषः। तथाच शुद्धसमवायेन गुणकर्माण्यत्वविशिष्टसत्त्वस्य हेतुत्वे गुणक-र्माण्यत्ववैशिष्ट्यादिकं सर्वत्रोपलक्षणीभूतं सदेव हेतुतावच्छेदकं भवितुमर्हति नतु विशेषणतया तस्य तथात्वमतो गुणकर्माण्यत्ववैशिट्यादेर्विशेषणत्वोपपत्तये गुण-कर्माण्यत्ववैशिष्ट्यसत्तात्वावच्छिन्नप्रतियोगिकसमवाय एव हेतुतावच्छेदकसम्बन्धो-वाच्यस्तथा सति न द्रव्यत्वसाध्यकतादृशहेतावतिव्याप्तिरितिभावः।

गुणकर्माण्यत्वविशिष्टसत्त्वस्य तादृशविशिष्टनिरूपितसमवायसम्बन्धेन हेतुत्वे तादृशसम्बन्धेन केवलसत्त्वस्याऽपि द्रव्यत्वाऽव्यभिचारितया सत्तादौ गुणकर्माण्यत्व-वैशिष्ट्यविशेषणं व्यर्थम्, परार्थानुमानस्थले तादृशव्यर्थविशेषणघटितहेतुप्रयोगे वादिनिग्रहप्रसंग इत्याशंकते-**नचेति**। वाच्यमितिपरेणान्वयः। तेन सम्बन्धेन = विशिष्टनिरूपितसमवायादिसम्बन्धेन। तद्विशेषणवैयर्थ्यम् = गुणकर्माण्यत्ववैशिष्ट्य-विशेषणस्य वैयर्थ्यम्। **निग्रहप्रसंगादिति**। अधिकनिग्रहस्थानान्तःपातित्वे-नेत्याशयः।

उत्तरयति-**विशिष्टेति**। गुणकर्माण्यत्वादिवैशिष्ट्यविशेषितसत्तादिप्रकारक-बुद्धावेवेत्यर्थः। विशिष्टनिरूपितत्वस्य=गुणकर्माण्यत्वादिवैशिष्ट्यसत्तात्वाद्यवच्छिन्न-प्रतियोगिकत्वस्य। **सम्बन्धतेति**। हेतुतावच्छेदकादिसंसर्गनिष्ठायाः संसर्गताया अवच्छेदकतयेत्यर्थः।

❀ गादाधरी ❀

पितसमवायादिना तद्रूपानवच्छिन्नस्य हेतुत्वासम्भवात् । एवं च विशिष्टनिरूपितसमवायादिना सम्बन्धेन सद्धेतोर्विशिष्टसत्त्वादेर्न तेन सम्बन्धेन सव्यभिचारताप्रसङ्गः । यादृशेन सम्बन्धेन पक्षधर्मताविषयकं यज्ज्ञानं तस्य तादृशेन सम्बन्धेन कोटिद्वयसहचरितावगाहितायाः संशायकताप्रयोजकत्वात्समवायसामान्यसम्बन्धेन द्रव्यत्वाद्यभावसाहचर्या-

❀ विवृतिः ❀

**तद्रूपेति** । गुणकर्मण्यत्ववैशिष्ट्यादिरूपधर्मावच्छिन्ननिरूपितसमवायादि-सम्बन्धेनेत्यर्थः । तद्रूपानवच्छिन्नस्य=तादृशवैशिष्ट्याद्यनवच्छिन्नस्य केवलसत्त्वस्य ।

**हेतुत्वासम्भवादिति** । शुद्धसत्त्वस्य विशिष्टसत्ताप्रतियोगिकसमवायादिना द्रव्यत्वाव्यभिचारित्वेऽपि तेन सम्बन्धेन सत्त्वस्य हेतुत्वं न सम्भवति, द्रव्यत्वव्याप्य-सत्तावानित्याकारकपरामर्शविषयहेतुतावच्छेदकसंसर्गतायां शिष्टसत्ताप्रतियोगिकत्व-स्यानवच्छेदकत्वात्, द्रव्यत्वव्याप्यविशिष्टसत्तावानित्याकारकपरामर्शविषयहेतुता-वच्छेदकसंसर्गतायामेव तादृशविशिष्टप्रतियोगिकत्वस्यावच्छेदकतया वैशिष्ट्यानव-च्छिन्नसत्त्वस्य विशिष्टप्रतियोगिकसमवायादिना हेतुत्वमप्रामाणिकमिति हृदयम् ।

**एवञ्चेति** । वैशिष्ट्यविशेषितसत्त्वस्य हेतुतास्थले विशिष्टनिरूपितसमवाये हेतु-तावच्छेदकसंसर्गत्वे चेत्यर्थः। न तेन सम्बन्धेन=न विशिष्टनिरूपितसमवायसम्बन्धेन । **सव्यभिचारताप्रसंग इति** । विशिष्टनिरूपितसमवायसम्बन्धेन द्रव्यत्वतद-भाववद्वृत्तित्वस्य विशिष्टसत्तायां विरहादिति भावः ।

ननु विशिष्टसत्तादौ शुद्धसमवायेन द्रव्यत्वतदभाववद्वृत्तित्वावगाहिविशिष्टनि-रूपितसमवायसम्बन्धेन पक्षधर्मतावगाहिज्ञानादपि द्रव्यत्वसंशयोदयस्यावश्यकतया तादृशसंशयजनकतावच्छेदकप्रकारतावच्छेदकवैशिष्ट्यसत्तात्वमादाय द्रव्यत्वसाध्यक-विशिष्टसत्तादिहेतावतिव्याप्तिर्दुर्वारैवेत्यत आह-**यादृशेति** । यद्धर्मावच्छिन्नसंसर्गे-णेत्यर्थः । पक्षधर्मताविषयकम्=हेतुमत्पक्षविषयकम् । तस्य =तादृशसम्बन्धेन पक्ष-धर्मताविषयकज्ञानस्य । तादृशसम्बन्धेन =तद्धर्मावच्छिन्नसम्बन्धेन ।

**कोटिद्वयेति** । तत्तदभाववद्वृत्तितावगाहिताया इत्यर्थः । संशायकता = संशय-जनकता । **प्रयोजकत्वादिति** । तत्सम्बन्धेन पक्षधर्मताविषयकज्ञाने यदि तत्स-म्बन्धेनैव कोटिद्वयसहचारावगाहिता वर्त्तते तदैव तादृशज्ञानस्य संशयजनकत्वं नान्यथेति भावः ।

समवायसामान्यसम्बन्धेन=समवायत्वमात्रावच्छिन्नसमवायसम्बन्धेन । साहच-

❀ गादाधरी ❀

वगाहिनो दर्शितविशेषसम्बन्धेन पक्षधर्मताज्ञानस्य संशायकताविरहात् । तादृशविशेषसम्बन्धेन च द्रव्यत्वाद्यभावसाहचर्यस्य सत्त्वादावभावात् तादृशसाहचर्यावगाहिभ्रममादायातिप्रसङ्गानवकाशात् ।

अथ यथा हेतुतावच्छेदकोपलक्षिते व्याप्तिज्ञानस्थलेपि पक्षे तद्विशिष्टवैशिष्ट्यज्ञानादनुमिति 'रधिकं त्वि' त्यादिन्यायात्, तथा विशिष्टसत्ता-

❀ विवृतिः ❀

र्यावगाहिनः=द्रव्यत्ववतदभाववद्वृत्तित्वावगाहिनः । दर्शितविशेषसम्बन्धेन = वैशिष्ट्यसत्तात्वावच्छिन्नप्रतियोगिकसमवायसम्बन्धेन । पक्षधर्मताज्ञानस्य = पक्षधर्मताविषयकज्ञानस्य समवायेन द्रव्यत्ववतदभाववद्वृत्तिताविशिष्टविशिष्टनिरूपितसमवायसम्बन्धेन विशिष्टसत्तावानित्याकारकज्ञानस्येति यावत् । संशायकताविरहात् = संशयजनकत्वाभावात् । **तादृशेति ।** वैशिष्ट्यसत्तात्वावच्छिन्नप्रतियोगिकसमवायादिसम्बन्धेनेत्यर्थः । द्रव्यत्वाद्यभावसाहचर्यस्य=द्रव्यत्वाभाववद्वृत्तित्वस्य । **सत्तादाविति ।** आदिना विशिष्टसत्तादिपरिग्रहः ।

ननु विशिष्टनिरूपितसमवायसम्बन्धेन द्रव्यत्वाद्यभाववद्वृत्तित्वावगाहिभ्रममादायातिव्याप्तिवारणन्त्वशक्यमेवेत्यत आह-**तादृशेति** । तादृशसम्बन्धेन द्रव्यत्वाभाववद्वृत्तित्वावगाहिभ्रममादायेत्यर्थः । **अतिप्रसंगानवकाशादिति** । तथाच संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वस्यैव लक्षणार्थतया तादृशधर्मस्य तेन सम्बन्धेन द्रव्यत्वाभाववद्वृत्तित्वस्य विशिष्टसत्तायामसत्त्वादेव नातिव्याप्तिरिति भावः ।

वैशिष्ट्योपलक्षिते सत्तादौ द्रव्यत्वाभाववद्वृत्तित्वावगाहिवैशिष्ट्यसत्तात्वाद्यवच्छिन्ने पक्षधर्मताविषयकज्ञानस्य संशयजनकत्वाभावे युक्तिं प्रदर्शयितुं दृष्टान्तप्रदर्शनपूर्वकं शंकते-**अथेति**। हेतुतावच्छेदकोपलक्षिते=पर्वतीयत्वाद्युपलक्षिते धूमादौ । व्याप्तिज्ञानस्थलेऽपि=वह्न्यादिनिरूपितव्याप्तिज्ञानस्थलेऽपि । तादृशज्ञानोत्तरकालेपीतियावत् । पक्षे = पर्वतादौ । **तद्विशिष्टेति** । पर्वतीयत्वविशिष्टधूमादिवैशिष्ट्यावगाहिज्ञानात् वह्न्यादिव्याप्यपर्वतीयत्वविशिष्टधूमवान् पर्वतइत्याकारकात् परामर्शादित्यर्थः । तेन न ज्ञानद्वयादनुमितिस्वीकारे मीमांसकमतानुप्रवेशः, नवा परामर्शस्य विशिष्टवैशिष्ट्यावगाहिताहानिरिति ध्येयम् ।

अधिकन्त्वित्यादिन्यायात्=अधिकन्तु न तद्धानिकरमित्यादिन्यायात् ।

द्राष्टान्तिकमाह **तथेत्यादि** । विशिष्टसत्तात्वोपलक्षिते = गुणकर्मण्यत्ववै-

❀ गादाधरी ❀

त्वोपक्षिते सहचारो यत्र गृह्यते तत्र तद्विशिष्टवैशिष्ट्यस्य धर्मिणि ज्ञानादपि संशयोत्पत्तिरुचितेति चेन्न। उभयोः स्थलयोर्विशेषात्। तथाहि-सामान्यरूपेण सामान्यसम्बन्धेन वा व्याप्तिग्रहे सामान्यघटितेन विषेशरूपेण विशेषसम्बन्धेन वा पक्षधर्मताज्ञानादनुमितिर्युज्यते हेतोः सम्बन्धस्य वा सङ्कोचे व्याप्तेरव्याघातात्। सामान्यरूपेण सामान्यसम्बन्धेन

❀ विवृतिः ❀

शिष्ट्योपलक्षिते सत्तादौ। सहचारः=द्रव्यत्वतदभाववद्वृत्तित्वम्। **यत्रेति**। आदावित्यादिः। यादृशस्थले इत्यर्थः। **तत्रेति**। तदुत्तरमित्यादिः। तादृशस्थलेइत्यर्थः तद्विशिष्टवैशिष्ट्यस्य=गुणकर्मान्यत्ववैशिष्ट्य विशेषितसत्त्वस्य। धर्मिणि = घटादिद्रव्ये। **ज्ञानादिति**। वैशिष्ट्योपलक्षितसत्तात्वावच्छिन्नद्रव्यत्वतदभाववद्वृत्तितावद्वैशिष्ट्यविशेषितसत्तावान् घटइत्याकारकज्ञानादित्यर्थः। **उचितेति**। तथाच वैशिष्ट्योपलक्षितसत्तादौ द्रव्यत्वाद्यभाववद्वृत्तित्वावगाहि वैशिष्ट्यविशेषितसत्तादौ पक्षधर्मताविषयकात् ज्ञानात् संशयोत्पादस्यौचित्ये द्रव्यं गुणकर्माण्यत्वविशिष्टसत्त्वादित्यादावतिव्याप्तिस्तदवस्थैव, संशयजनकतावच्छेदकप्रकारतावच्छेदकद्रव्यत्वाभाववद्वृत्तित्वादेः विशिष्टसत्तायां सत्त्वादिति तात्पर्यम्।

समाधत्ते **चेन्नेति**। उभयोः स्थलयोः=दृष्टान्तद्राष्टान्तिकयोः। **विशेषादिति**। दृष्टान्ततुल्यताया द्राष्टान्तिके विरहेण द्राष्टान्तिकतुल्यतायाश्च दृष्टान्ते विरहेण विशेषस्य सम्भव इति भावः। विशेषमेव वर्णयति-**तथाहीति**। सामान्यरूपेण=धूमत्वादिमात्रधर्मेण। सामान्यसम्बन्धेन=संयोगत्वादिमात्रावच्छिन्नसंयोगादिसम्बन्धेन। व्याप्तिग्रहे = वह्न्यादिनिरूपितव्याप्तिग्रहे। विशेषरूपेण=पर्वतीयत्वादिविशिष्टधूमत्वादिना। विशेषसम्बन्धेन=पर्वतानुयोगिकत्वादिविशिष्टसंयोगादिसम्बन्धेन। पक्षधर्मताज्ञानात्=पर्वतादौ पर्वतीयत्वादिविशेषितधूमादिप्रकारकात् पर्वतानुयोगिकत्वादिविशेषितसंयोगादिसम्बन्धेन वा शुद्धधूमप्रकारकात् परामर्शात्। अनुमितिर्युज्यते= अनुमितिरुत्पद्यते।

कथमित्याकांक्षायामाह-**हेतोरिति**। धूमादेरित्यर्थः। सम्बन्धस्य = संयोगादेः। संकोचे = धूमादौ पर्वतीयत्वादेः, संयोगादौ च पर्वतानुयोगिकत्वादेर्विशेषणतया विवक्षणे। **व्याप्तेरव्याघातादिति**। यथा धूमादेर्वह्न्यादिव्याप्यत्वं, तथा पर्वतीयधूमादेरपि तथात्वमव्याहतम्, यथावा संयोगमात्रेण धूमादेर्वह्न्यादिव्याप्यत्वं, तथा-पर्वतीयसंयोगेनापि तस्य तथात्वमित्याशयः।

द्राष्टान्तिकेवैषम्यमुपपादयति। **सामान्यरूपेणेति**। वह्नित्वादिमात्रधर्मेणेत्यर्थः

❀ गादाधरी ❀

वा सहचारग्रहे विशेषरूपेण विशेषसम्बन्धेन वा पक्षधर्मताज्ञाने तु न संशयः-सङ्कोचस्य साधारण्यव्याघातकत्वात्। अत एव वन्हित्वादिना धूमतदभावसाहचर्यग्रहे आर्न्द्रेन्धनप्रभववह्नित्वादिना धर्मिवृत्तित्वज्ञानान्न संशयः, न वा संयोगसामान्येन धूमतदभावसहचरितवह्न्यादेर्महानसाद्यनुयोगिकसंयोगेन धर्मिणि ज्ञानात्तत्संशयः, न वा तत्र साधारण्यप्रसङ्ग इति।

अथ द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र सद्धेतौ द्रव्यं गुणत्वे सति

❀ विवृतिः ❀

सामान्यसम्बन्धेन=संयोगत्वादिमात्रावच्छिन्नसंयोगादिसम्बन्धेन। सहचारग्रहे=धूमतदभावादिमद्वृत्तित्वग्रहे। विशेषरूपेण=महानसीयत्वादिविशेषितवह्नित्वादिधर्मेण। विशेषसम्बन्धेन वा=महानसानुयोगिकत्वविशिष्टसंयोगादिसम्बन्धेन वा। पक्षधर्मताज्ञाने=पक्षादौ तादृशवह्न्यादेः, तादृशसम्बन्धेन वा शुद्धवह्न्यादेर्ज्ञाने। न संशयः=न धूमादिसंशयः। संकोचस्य वह्न्यादौ महानसीयत्ववैशिष्ट्यस्य, संयोगादौ वा महानसानुयोगिकत्ववैशिष्ट्यस्य। **साधारण्यव्याघातकत्वादिति**। महानसीयवह्नित्वाद्यवच्छिन्ने, महानसीयसंयोगसम्बन्धेन वा शुद्धवह्नित्वाद्यवच्छिन्ने धूमाभावादिमद्वृत्तित्वस्यासत्त्वादित्याशयः।

संकोचस्य साधारण्यव्याघातकत्वं प्रदर्शयति-**अतएवेति**। संकोचस्य साधारण्यव्याघतकत्वादेवेत्यर्थः। वह्नित्वादिना वाह्नत्वादिसामान्यधर्मेण। **धूमेति**। धूमधूमाभाववद्वृत्तित्वज्ञाने इत्यर्थः। आर्द्रेन्धनप्रभववह्नित्वादिना=तादृशविशेषधर्मेण। धर्मिवृत्तिताज्ञानात्=आर्द्रेन्धनवप्रभववह्निप्रकारकपर्वतादिविशेष्यकज्ञानात्। न संशयः=न धूमादिसंशयोत्पत्तिः।

संयोगसामान्येन=संयोगत्वादिमात्रविशिष्टसंयोगसम्बन्धेन। **धूमेति**। धूमतदभाववद्वृत्तित्वविशिष्टवह्न्यादेरित्यर्थः। धर्मिणि=महानसादौ। संशयानुत्पादे तत्रतत्र साधारण्यमपि नेष्टमेवेत्याह-**नवेति**। तत्र=आर्द्रेन्धनप्रभववह्नौ। महानसीयसंयोगादिसम्बन्धेन वा वह्निमात्रे। येन रूपेण येन सन्बन्धेन धर्मिवृत्तित्वं ज्ञातं तेनैव रूपेण तेनैव सम्बन्धेन तत्तदभाववद्वृत्तित्वस्यैव साधारण्यरूपत्वादित्याशयः॥

द्रव्यत्वव्याप्ये गुणकर्मण्यत्वविशिष्टसत्त्वे तद्विरुद्धे च गुणत्वविशिष्टसत्त्वे प्रकारान्तरेणातिव्याप्तिं वारयितुं पुनः शंकते-**अथेति**। यद्वा गुणकर्मण्यत्वादिवैशिष्ट्यविशेषितसत्तादेर्हेतुतास्थलेऽपि शुद्धसमवाय एव हेतुतावच्छेदकसम्बन्धः। न तु विशिष्टनिरूपितसमवायसम्बन्धस्तथा, एवं सति, केवलसमवायसम्बन्धेन द्रव्यत्वा-

❀ गादाधरी ❀

सत्त्वादित्यत्र विरुद्धे चातिव्याप्तेः-विशेष्येऽपि साध्यतदभावोभयसामानाधिकरण्यसत्त्वेन विशिष्टेऽपि तत्सत्त्वादिति चेन्न। साध्यतदभाववद्वृत्तितावच्छेदकविशिष्टवत्ताज्ञानस्यैव साधारणधर्मदर्शनविधया साध्यसन्देहजनकत्वात्। यत्किञ्चित्साध्यसन्देहजनकतावच्छेदकीभूता या या प्रका-

❀ विवृतिः ❀

भाववद्वृत्तित्वस्य विशिष्टसत्तायां सत्त्वात् तत्राऽतिव्याप्तिवारणमशक्यमेव, न च तादृशविशिष्टसत्त्वस्य हेतुतास्थले यदि केवलसमवाय एव हेतुतावच्छेदकसंसर्गस्तदा तादृशवैशिष्ट्यस्य विशेषणत्वाऽनुपपत्तिः तद्धर्मावच्छिन्नाऽनिरूपितसमवायादेर्हेतुतावच्छेदकसंसर्गत्वे तद्धर्मस्योपलक्षणतायाः पूर्वमुक्तत्वादिति वाच्यम्। तादृशनियमे प्रमाणाभावादित्याशयेन विशिष्टसत्तादावतिव्याप्तिं वारयितुं पुनः शंकते-**अथेति।**

विशेष्ये=सत्तामात्रे। **साध्येति।** द्रव्यत्वतदभाववद्वृत्तित्वस्य सत्त्वेनेत्यर्थः। विशिष्टेऽपि = गुणकर्मान्यत्वविशिष्टसत्त्वे, गुणत्वविशिष्टसत्त्वेऽपि । तत्सत्त्वात्= द्रव्यत्वतदभाववद्वृत्तित्वस्य सत्त्वात्। विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाऽभावानभ्युपगमादिति हृदयम्।

समाधानमाह-**साध्येति।** साध्याधिकरणनिरूपितवृत्तितावच्छेदकताविशिष्टधर्मावच्छिन्नप्रकारताकज्ञानस्य, साध्याऽभावाधिकरणनिरूपितवृत्तितावच्छेदकतावद्धर्मावच्छिन्नप्रकारताकज्ञानस्येत्यर्थः। तेन न यत्किञ्चिदित्यादिना प्रकारतावच्छेदकतायां यावत्त्वविशेषणस्य, संशयेऽपि यत्किञ्चित्त्वविशेषणस्य, वैयर्थ्यम् यथाश्रुते साध्यतदभाववद्वृत्तितावच्छेदकतावदेकधर्मावच्छिन्नप्रकारताकज्ञानस्य संशयजनकत्वाभ्युपगमे प्रकारतावच्छेदकतायां यावत्त्वविशेषणस्य, संशये यत्किञ्चित्त्वविशेषणस्य च निरर्थकत्वं स्यादित्यग्रे स्फुटीभविष्यति।

साधारणधर्मदर्शनविधया = साधारणधर्मप्रकारकज्ञानत्वेन । **संशयजनकत्वादिति ।** इदमुपलक्षणम्-निश्चितसाध्यतदभाववद्वृत्तितानवच्छेदकतावद्धर्मावच्छिन्नप्रकारताकज्ञानस्याऽसाधारणधर्मदर्शनविधयापि संशयजनकत्वं वाच्यमित्यपि बोध्यम्।

ननूक्तक्रमेण साधारणधर्मज्ञानस्य संशयजनकत्वेऽपि कथं न द्रव्यं विशिष्टसत्त्वादित्यादौ अतिव्याप्तिरित्यत आह-**यत्किञ्चिदिति।** यत्किञ्चित्संशयनिष्ठज-

❀ मनोरमा ❀

साध्यतदभाववद्वृत्तितावच्छेदकतावद्धर्मावच्छिन्नप्रकारताकज्ञानस्य संशयजनकत्वमते त्वाह-**यत्किञ्चित्साध्यसन्देहेति।** साध्यसंशयविशिष्टावच्छेदकतात्वव्यापकावच्छेदकतापर्याप्त्यधिकरण-

❀ गादाधरी ❀

रतावच्छेदकता तदवच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टप्रकृतहेतुताव-

❀ विवृतिः ❀

न्यतानिरूपितजनकतावच्छेदकीभूतेत्यर्थः । **तदवच्छेदकेति** । तस्याः यावत्प्रकारतावच्छेदकतायाः तादृशवृत्तितावच्छेदकत्वनिष्ठं यद् अवच्छेदकत्वं तत्पर्याप्त्यधिकरणधर्मविशिष्टप्रकृतहेतुतावच्छेदकवत्त्वं सव्यभिचारत्वमित्यस्य विवक्षणेनेत्यर्थः ।

भवति हि धूमवान् वह्नेरित्यादौ धूमवद्वृत्तितावच्छेदकतावद्धूमाभाववद्वृत्तितावच्छेदकतावद्वह्नित्वावच्छिन्नवानयमित्याकारकज्ञानमादाय वह्निरूपे साधारणेलक्षणसमन्वयः, धूमादिसंशयजनकनिरुक्तज्ञानीयवह्नित्वनिष्ठं प्रकारताऽवच्छेदकत्वद्वयम्, एकं धूमवद्वृत्तितावच्छेदकत्वावच्छिन्नम्, अपरञ्च धूमाभाववद्वृत्तितावच्छेदकत्वावच्छिन्नं, तस्यैव संशयजनकतावच्छेदकतया तादृशसंशयजनकतावच्छेदकप्रकारतावच्छेदकताया अवच्छेदकत्वं यद् धूमवद्वृत्तितावच्छेदकत्वनिष्ठं धूमाभाववद्वृत्तितावच्छेदकत्वनिष्ठञ्च, तत्पर्याप्त्यधिकरणधूमादिमद्वृत्तितावच्छेदकत्वरूपधर्मविशिष्टहेतुतावच्छेदकीभूतवह्नित्वस्य वह्नौ सत्त्वात् ।

एवं शब्दोऽनित्यः शब्दत्वादित्यादौ निश्चिताऽनित्यत्व–तदभाववद्वृत्तितानवच्छेदकतावच्छब्दत्वत्वावच्छिन्नवान् शब्दइत्याकारकज्ञानमादाय शब्दत्वरूपेऽसाधारणे लक्षणसमन्वयः, निरुक्तज्ञाननिष्ठायाम् अनित्यत्वसंशयजनकतायाम् अवच्छेदकीभूता या निश्चिताऽनित्यत्वतदभाववद्वृत्तितानवच्छेदकतावच्छब्दत्वत्वनिष्ठप्रकारतावच्छेदकता तदवच्छेदकतापर्याप्त्यधिकरणतादृशवृत्तितानवच्छेदकतारूपधर्म विशिष्टहेतुतावच्छेदकशब्दत्वत्ववत्त्वस्य शब्दत्वे सत्त्वात् ।

वह्निमान् धूमादित्यादौ केवलवह्निमद्वृत्तितावच्छेदकतावद्धूमत्वावच्छिन्नवान् पर्वतइत्याकारकज्ञानस्यापि वह्न्यभाववद्वृत्तितावच्छेदकतावद्धूमत्वावच्छिन्नवत्ताज्ञानसहकारेण संशयजनकतया तदीयप्रकारतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणकेवलवह्निमद्वृत्तितावच्छेदकतारूपधर्मविशिष्टहेतुतावच्छेदकीभूतधूमत्वमादाय वह्निव्याप्ये धूमेऽतिप्रसंगवारणाय प्रकारकतावच्छेदकतायां यावत्त्वं निवेशितम्, तथाच तादृशयावत्प्रकारतावच्छेदकतावच्छेदकस्य वह्न्यभाववद्वृत्तितावच्छेदकत्वस्य धूमत्वे विरहान्न तत्राऽतिव्याप्तिः ।

एवं वह्निविरुद्धे जलत्वेऽपि केवलवह्न्यभाववद्वृत्तितावच्छेदकतावज्जलत्वत्वा-

❀ मनोरमा ❀

धर्मविशिष्टहेतुतावच्छेदकवत्वं सव्यभिचारत्वमित्यर्थः । संशयवैशिष्ट्यमवच्छेदकतायां स्वधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानिरूपितत्व, स्वनिष्ठजन्यतानिरूपित-

❀ गादाधरी ❀

च्छेदकवत्त्वविवक्षणेनातिप्रसङ्गविरहात्–विशिष्टसत्तात्वरूपप्रकृतहेतुताव-च्छेदकस्योभयवद्वृत्तितावच्छेदकत्वविरहात् । उभयसहचरितवृत्तित्वाव-

❀ विवृतिः ❀

वच्छिन्नवत्ताज्ञानमादाय अतिव्याप्तिवारणं स्वयमूहनीयम् । अतएव संशये यत्-किंचित्त्वविशेषणमपि सार्थकम् , अन्यथा प्रकारतावच्छेदकतायां यावत्त्वमात्रनिवेशे निश्चितसाध्यतदभाववद्वृत्तितानवच्छेदकताया अपि संशयजनकतावच्छेदकयावत्प्रका-रतावच्छेदकतावच्छेदकान्तर्गततया तद्विशिष्टहेतुतावच्छेदकस्य साधारणादौ विरहे-णाऽसम्भवापत्तिःस्यात् ।

नचैवं व्याप्यसंशयस्येत्यादिग्रन्थाऽसंगतिः, व्याप्यसंशयीयव्याप्याभावत्वनिष्ठ–प्रकारतावच्छेदकताया अपि व्यापकसंशयजनकतावच्छेदकतया तदवच्छेदकव्याप्या-भावत्वत्वविशिष्टव्याप्याभावत्वस्य व्याप्ये विरहेण व्याप्येऽतिव्याप्त्यनुपपत्तेरितिवाच्यम्, व्याप्यसंशयस्य व्यापकसंशयं प्रति व्याप्यत्वनिष्ठप्रकारतावच्छेदकताकज्ञानत्वेनैव जनकत्वस्याभ्युपगमेन तादृशकेवलव्याप्यत्वमादाय व्याप्येऽतिप्रसंगसम्भवात्, व्याप्या-भावत्वनिष्ठप्रकारतावच्छेदकताया तादृशसंशयजनकतानवच्छेदकत्वात् । व्याप्य-निश्चयोत्तरं व्यापकसंशयापत्तिस्तु तादृशनिश्चयस्य व्यापकाभावबुद्धौ प्रतिबन्धकत्वा-देव पूर्ववद्वारणीयेतिध्येयम् ।

व्याप्यसंशयस्य पृथक्कारणतामते तु प्रकारतावच्छेदकतायां यावत्त्वं संशयेऽपि यत्किञ्चित्त्वं न देयमेव, तन्मते साध्यतदभाववद्वृत्तितावच्छेदकतावदेकधर्मावच्छि-न्नप्रकारताशालिज्ञानस्यैव संशयजनकत्वादित्यन्यत्र विस्तरः ।

निरुक्तविवक्षायां विशिष्टसत्त्वेऽतिव्याप्तिं वारयति–**विशिष्टेति**। गुणकर्मान्यत्व-विशिष्टसत्तात्व-गुणत्वविशिष्टसत्तात्वरूपप्रकृतहेतुतावच्छेदकस्येत्यर्थः । **उभयेति** । द्रव्यत्वतदभाववद्वृत्तितावच्छेदकत्वरूपस्य संशयजनकतावच्छेदकप्रकारतावच्छेदक-तावच्छेदकतापर्याप्त्यधिकरणस्य विरहादित्यर्थः । गुणकर्मान्यत्वविशिष्टसत्तात्वे द्रव्यत्वाभाववद्वृत्तितावच्छेदकत्वस्य, गुणत्वविशिष्टसत्तात्वे च द्रव्यत्ववद्वृत्तिताव-च्छेदकत्वस्याभावसत्त्वेन तादृशपर्याप्त्यधिकरणस्य विरह इति भावः ।

वस्तुतः साध्यतदभावसहचरितवृत्तित्वावगाहिज्ञानत्वेन संशयजनकत्वेऽपि न विशिष्टसत्तादावतिव्याप्तिरित्याहो**भयेति** । साध्यतदभावाधिकरणवृत्तिवृत्तित्वा-

❀ मनोरमा ❀

जनकतावच्छेदकत्वोभयसम्बन्धेन । व्यापकत्वघावच्छेदकतायां स्वाश्रयावच्छिन्नत्वसम्बन्धेन । स्वं साध्यवद्वृत्तितावच्छेदकत्व,-साध्याभाववद्वृत्तितावच्छेदकत्वोभयनिष्ठमवच्छेदकत्वमितिध्येयम् ।

❀ गादाधरी ❀

च्छिन्नप्रकारतावच्छेदकताकज्ञानस्य संशायकत्वेपि नोक्तातिप्रसङ्गः, तथा सति यादृशयादृशधर्मावच्छिन्नप्रकृतहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन यत्किञ्चित्संशयजनकता तादृशतादृशरूपविशिष्टतद्वत्त्वस्य विवक्षणीयत्वात्। उभयसहचरितवृत्तित्वं प्रकारतावच्छेदके भासते यत्र

❀ विवृतिः ❀

वच्छिन्नं यत् प्रकारतावच्छेदकत्वं तन्निरूपकज्ञानस्येत्यर्थः। संशायकत्वेऽपि = संशयजनकत्वेऽपि। नोक्तातिप्रसंगः = न द्रव्यं गुणकर्मण्यत्वविशिष्टसत्त्वात् गुणत्वविशिष्टसत्त्वाद्वेत्यादावतिव्याप्तिः। कथमित्याकांक्षायामाह, **तथासतीति**। साध्यतदभाववद्वृत्तिवृत्तित्वावच्छिन्नप्रकारतावच्छेदकतावगाहिज्ञानस्य संशयजनकत्वे सतीत्यर्थः।

**यादृशेत्यादि**। यत्किञ्चित्संशयनिष्ठजन्यतानिरूपितजनकत्वं यादृशयादृशधर्मविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्न निरूपकताकाधिकरणतावगाहि ज्ञानत्वावच्छिन्नं तादृशतादृशधर्मविशिष्टप्रकृतहेतुतावच्छेदकत्वस्य विवक्षणीयत्वादित्यर्थः। तथाच पूर्ववत् साधारणस्थले साध्यवद्वृत्तितावच्छेदकत्वविशिष्टं साध्याभाववद्वृत्तितावच्छेदकत्वविशिष्टञ्च यत् हेतुतावच्छेदकं तदवच्छिन्नाधिकरणतावगाहिज्ञानमेव संशयजनकम्। असाधारणस्थले तु निश्चितसाध्यतदभाववद्वृत्तितानवच्छेदकत्वविशिष्टहेतुतावच्छेदकावच्छिन्नाधिकरणतावगाहिज्ञानं तथा। एवञ्च साधारणहेतौ यादृशयादृशधर्मपदेन साध्यादिमद्वृत्तितावच्छेदकत्वम्, असाधारणहेतौ च निश्चितसाध्यादिमद्वृत्तितानवच्छेदत्वमादायैव लक्षणसमन्वयः करणीय इतिभावः।

अत्र यादृशयादृशेतिवीप्सादरस्तु केवलवह्न्यादिमद्वृत्तितावच्छेदकत्वविशिष्टधूमत्वावच्छिन्नाधिकरणतावगाहिज्ञानमादाय वह्निमान् धूमादित्यादावतिव्याप्तिवारणाय, संशयेऽपि यत्किञ्चित्त्वनिवेशनं पूर्ववदसम्भववारणायैवेतिबोध्यम्। वस्तुतो यादृशयादृशरूपावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नावच्छेदकत्वावच्छिन्नं यत्किञ्चित्साध्यसंशयजनकत्वं, तादृशतादृशरूपविशिष्टतादृशावच्छेदकतावद्धेतुतावच्छेदकवत्त्वं सव्यभिचारत्वमित्येवं वक्तव्यमितिध्येयम्।

निरुक्तविवक्षायां विशिष्टसत्तादावतिव्याप्तिं वारयितु**माहोभयेति**। साध्यतदभाववद्वृत्तिवृत्तित्वमित्यर्थः। प्रकारतावच्छेदके = विशिष्टसत्तात्वादौ यत्रेतिपरेणान्वयः।

❀ मनोरमा ❀

**यादृशयादृशेति**। साध्यसंशयविशिष्टधर्मवत्त्वं सव्यभिचारत्वमिति फलितम्। संशयवैशिष्ट्यं धर्मे स्वविशिष्टजनकतावत्त्वसम्बन्धेन। स्ववैशिष्ट्यं जनकतायां, स्वनिष्ठजन्यतानिरूपितत्व,-स्वधर्मितावच्छेदकावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्नत्वोभयसम्बन्धेन। जनकतावत्त्वञ्च धर्मे स्ववृत्ति-

❀ गादाधरी ❀

तत्र तदुपलक्षितवत्ताज्ञानस्य हेतुतया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनाजनकत्वादुभयवद्वृत्तितावच्छेकत्वेन प्रकारतावच्छेदकस्य यत्र भानं तत्रोभयसहचारघटकतदवच्छिन्ननिरूपिताधिकरणतावगाहिज्ञानस्यैव हेतुतया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन हेतुत्वमावश्यकमिति । तादृशहेतुतामादायसाधारणे उभयवद्वृत्तितानवच्छेदकविशिष्टवैशिष्ट्यावगाहिबोध-

❀ विवृतिः ❀

भासते = ज्ञानविषयतावद् भवति । तत्र=तादृशप्रकारतावच्छेदके । तदुपलक्षितवत्ताज्ञानस्य=साध्यादिमद्वृत्तिवृत्तित्वोपलक्षितवत्ताज्ञानस्य । हेतुतया = संशयजनकतया। **तद्विशिष्टेति** । साध्यादिमद्वृत्तिवृत्तित्वविशिष्टहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनेत्यर्थः । **अजनकत्वादिति** । तथाच द्रव्यं विशिष्टसत्तादित्यादौ विशिष्टसत्तात्वे द्रव्यत्वाभाववद्वृत्तितावच्छेदकत्वस्यासत्त्वेन तत्र द्रव्यत्वाभाववद्वृत्तिवृत्तित्वस्यैव भानात् द्रव्यत्वतदभाववद्वृत्तिवृत्तित्वविशिष्टतादृशहेतुतावच्छेदकविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानत्वेन संशयजनकत्वाभावेन 'यादृशयादृशधर्मपदेन द्रव्यत्वतदभाववद्वृत्तिवृत्तित्वस्य धर्तुमशक्यत्वान्न द्रव्यत्वव्याप्ये तद्विरुद्धे च तादृशतादृशविशिष्टसत्तादावतिव्याप्तिर्लक्षणघटकीभूतसंशयजनकज्ञानस्याप्रसिद्धत्वादित्याशयः ।

लक्ष्ये लक्षणसमन्वयप्रकारं प्रदर्शयति–**उभयवेति** । साध्यतदभाववद्वृत्तितावच्छेदकत्वेनेत्यर्थः । प्रकारतावच्छेदकस्य = धूमसाध्यकवह्नित्वादेः । यत्र = यादृशस्थले । तत्र =तादृशस्थले । **उभयेति** । साध्यतदभाववद्वृत्तित्वघटकीभूतं यत् तादृशवृत्तितावच्छेदकताविशिष्टहेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्वं तदवगाहिज्ञानस्यैवेत्यर्थः । हेतुतया = संशयजनकतया ।

**तद्विशिष्टेति** । साध्यादिमद्वृत्तितावच्छेदकीभूतहेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनेत्यर्थः । तादृशहेतुतामादाय = साध्यतदभाववद्वृत्तितावच्छेदकतावद्धेतुतावच्छेदकावच्छिन्नाधिकरणतावगाहियत्किञ्चित्संशयजनकत्वमादाय । साधारणे=धूमादिसाध्यकवह्न्यादौ । **उभयेति** । निश्चितसाध्यतदभाववद्वृत्तितानवच्छेदकतावद्धेतुतावच्छेदकावच्छिन्नाधिकरणतावगाहिज्ञानत्वेनेत्यर्थः । हेतुतामादाय = तादृशसंशयजनकतामादाय । असाधारणे = शब्दपक्षकाऽनित्यत्वसाध्यकशब्दत्वादिहेतौ । अधिकमभिहितं प्रागिति संक्षेपः ।

❀ मनोरमा ❀

त्वसम्बन्धेन । वृत्तित्वं स्वावच्छिन्नाधिकरणत्वसम्बन्धावच्छिन्नप्रकारतात्वावच्छिन्नावच्छेदकताकत्व-

❀ गादाधरी ❀

त्वेन हेतुतामादाय चासाधारणे लक्षणं सङ्गमनीयम्। प्रकृतपक्षधर्मताज्ञानानिवेशे घटज्ञानं सविषयकं आत्मवृत्ति वा ज्ञानत्वादित्यादावतिव्याप्तिः। तथाहि—घटज्ञानं सविषयकमित्यादिनिश्चयकालीनघटज्ञानं सविषयकं न वेत्यादिसंशयं प्रति घटज्ञानधर्मिकसविषयकत्वज्ञानं प्रमा न वेत्याद्याकारकसंशयो हेतुः अर्थनिश्चयोत्तरार्थसंशये तद्धर्मिकप्रामाण्यसंशयस्य हेतुत्वात्। स च प्रामाण्यसंशयः सविषयकत्वदभावादिरूपकोटि-

❀ विवृतिः ❀

मूलोक्तलक्षणघटकीभूतस्य पक्षपदस्य व्यावृत्तिमभिदधानानां पक्षधरमिश्रानां मतं परिष्कर्त्तुमारभते–**प्रकृतेति**। यत्किञ्चित् धर्मावच्छिन्ननिरूपित साध्यसंशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारताकज्ञानं निवेश्य प्रकृतपक्षतावच्छेदकावच्छिन्न विशेष्यतानिरूपित तादृशप्रकारताकज्ञानाऽनिवेशे इत्यर्थः।

अतिव्याप्तिं संगमयति **तथाहीति**। इत्यादिनिश्चयकालीनं—इत्याकारकनिश्चयोत्तरकालीनम्। **घटज्ञानेति**। घटज्ञानं सविषयकमित्याकारक घटज्ञानविशेष्यक सविषयकत्वप्रकारकनिश्चय इत्यर्थः। कथन्तानिवृत्त्यर्थ**माहार्थेति**। घटज्ञानधर्मिक सविष्यकत्वप्रकारकोयोनिश्चयस्तदुत्तरकालीनघटज्ञानधर्मिक सविषयकत्वादिप्रकारकसंशये इत्यर्थः। **तद्धर्मिकेति**। अर्थनिश्चयधर्मिकप्रमात्वसंशयस्येत्यर्थः। सच प्रामाण्यसंशयः=घइज्ञानधर्मिकसविषयकत्व प्रकारकनिश्चयधर्मिकप्रमात्वसंशयः। **सविषयकत्वेति**। सविष्यकत्वरूपसाध्यसविषयकत्वाभावरूप साध्याभाव विषयकोपस्थितिस्वरूप इत्यर्थः॥

नच संशयजनिकास्मरणात्मिकैवोपस्थितिर्नत्वनुभवात्मिकेतिकथं अनुभवरूपस्यार्थनिश्चयधर्मिकप्रमात्वसंशयस्य संशयजनककोटिद्वयोपस्थित्यात्मकत्वमितिवाच्यम्। अग्रेस्मृत्यनुभवसाधारणकोटिद्वयोपस्थितित्वेन संशयजनकतायावक्ष्यमाणतया स्मरणात्मक कोट्युपस्थितेः सशयजनकत्वेप्रमाणाभावात्॥

**सविषयकत्वेनेति**। घटितत्वादितिपरेणान्वयः। तदभाववति=सविषयक-

❀ मनोरमा ❀

सम्बन्धेन। अत्र स्वपदं साध्यतदभावाधिकरणतानिरूपकावच्छेदकताविशिष्टहेतुतावच्छेदकपरमितिकेचित्।

**घटज्ञानमिति**। अत्र घटपदं अनुमानात् पूर्वं पक्षे साध्यनिश्चयसम्पादनार्थम्, अतएवाग्रेतादृशनिश्चयकालीनेत्यादिना प्रामाण्यसंशयमादायातिव्याप्त्यभिधानमपि संगच्छते। तथाचादौ घटज्ञाने सविषयकत्वनिश्चयस्तद्धर्मिकप्रामाण्यसंशयश्च ततो घटज्ञाने सविषयकत्वसंशयः ततोऽनुमितिरिति

❀ गादाधरी ❀

द्वयोपस्थित्यात्मकः सविषयकत्ववति सविषयकत्वरूपप्रामाण्यस्य सविषयकत्वेन तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यस्य च तदभावेन घटितत्वात् तादृशप्रामाण्यसंशये च सविषयकत्वादिज्ञानधर्मिकप्रामाण्याप्रामाण्यसहचरितज्ञानत्वादिमत्ताज्ञानं हेतुरिति सविषयकत्वादिरूपसाध्यसन्देहजनककोटिद्वयोपस्थितिजनकधर्मवृत्तिताज्ञानविषयत्वं ज्ञानत्वादावक्षतमेवेति प्रकृतपक्षधर्मताज्ञाननिवेश आवश्यकः, तन्निवेशे च सविषयक-

❀ विवृतिः ❀

त्वाभाववति। **तत्प्रकारकत्वेति।** सविषयकत्वप्रकारकत्वरूपाऽप्रमात्वस्येत्यर्थः। तदभावेन=सविषयकत्वाभावेन। **घटितत्वादिति।** प्रमात्वस्य सविषयकत्वरूपसाध्यघटितत्वात्, अप्रमात्वस्य च सविषयकत्वाभावरूप साध्याभावघटितत्वात् प्रमात्वाऽप्रमात्वविषयकसंशयस्यापि साध्यसाध्याभावविषयकत्वं निर्विवादमेवेतिभावः॥

ननु साध्यसंशयजनककोटिद्वयोपस्थितिजनकधर्मिवृत्तिताज्ञानविषयत्वमपि ज्ञानत्वेनास्तीतिकुतस्तत्रातिव्याप्तिरत आहतादृशेति। घटज्ञानं सविषयकमित्याकारक निश्चयधर्मिकेतादृशनिश्चयः प्रमानवेत्याकारके संशयेचेत्यर्थः। **सविषयकत्वेति।** घटज्ञानं सविषयकमित्याकारकनिश्चयधर्मिक प्रमात्वाऽप्रमात्ववद्वृत्तिज्ञानत्वादि प्रकारकज्ञानमित्यर्थः। हेतुः=साधारणधर्मदर्शनत्वेनकारणम। इति=एवं सति। **सविषयकत्वादिति।** सविषयकत्वादिरूप साध्यसन्देहजनकीभूताया अर्थनिश्चयधर्मिक प्रमात्वाऽप्रमात्वसंशयात्मिकाकोटिद्वयोपस्थितिस्तत् जनकीभूतं यत् अर्थनिश्चयधर्मिकं तादृश प्रमात्वाऽप्रमात्वसहचरित ज्ञानत्वादिप्रकारक ज्ञानंतद्विषयत्वमित्यर्थः। अक्षतमेव=अवश्यंवर्त्ततएव। इति=निरुक्तविषयत्वमादायज्ञानत्वादावतिव्याप्तिसम्भवात्।

**प्रकृतेति।** प्रकृतपक्षविशेष्यताक साध्यसन्देहजनककोटिद्वयोपस्थितिजनकतावच्छेदक प्रकारताकज्ञाननिवेश इत्यर्थः। **आवश्यक इति।** लक्षणघटकतयेत्यादिः॥

ननु पक्षधर्मताज्ञाननिवेशेवा कथं तत्र नातिव्याप्तिरित्याकांक्षायामाह **तन्निवेशेचेति।** लक्षणघटकतयाप्रकृतपक्षधर्मताज्ञानस्य निवेशेचेत्यर्थः। **सविषयकत्वेति।**

❀ मनोरमा ❀

तत्प्रतिबन्धकतयैवहेत्वाभासोद्भावनेनातिव्याप्त्यभिधानम्। अन्यथा ज्ञानमात्रस्य पक्षत्वे तत्र सविषयकत्वस्यासर्वज्ञदुर्ज्ञेयतया तादृशज्ञाने सविषयकत्वनिश्चयस्याप्रसिद्ध्या तद्धर्मिकप्रामाण्यसंशयमादायातिव्याप्त्यभिधानस्यासंगतत्वापत्तिः स्यात्।

नचानुमानात् पूर्वमनुमानान्तरेणैव ज्ञानमात्रे सविषयकत्वनिश्चयः सम्भवतीति वाच्यम्, तथा सत्यनवस्थापत्तेरितितु सुधीभिर्विवेचनीयम।

❀ गादाधरी ❀

त्वादिज्ञानधर्मिकज्ञानत्ववत्ताज्ञानस्य तादृशज्ञानविषयघटज्ञानादिरूपप्रकृतधर्मत्वाविषयत्वान्नातिव्याप्तिरिति ।

❀ विवृतिः ❀

घटज्ञानं सविषयकमित्यादिनिश्चयधर्मिकस्य प्रमात्वाप्रमात्वसहचरितज्ञानत्वप्रकारकज्ञानस्येत्यर्थः । **तादृशेति ।** निरुक्तज्ञानविशेष्यीभूतस्य निश्चयस्य विशेष्यीभूतं यत् घटज्ञानादि तत् स्वरूप प्रकृतपक्षविशेष्यतानिरूपित ज्ञानत्वादि प्रकारकत्वाभावादित्यर्थः । नातिव्याप्तिरिति । प्रकृतपक्षविशेष्यतानिरूपिता या साध्यसन्देहजनककोटिद्वयोपस्थिति जनकतावच्छेदिका प्रकारता तदाश्रयत्वस्यलक्षणार्थतया निरुक्तप्रकारताश्रयत्वस्य ज्ञानत्वे विरहादेव नातिव्याप्तिरितिभावः ॥

**इदन्तुतत्वम्** । प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या साध्य संशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकीभूता प्रकारता तदवच्छेदकतापर्याप्त्यधिकरण धर्मवत्वस्यलक्षणार्थत्वाभावे यत् किञ्चित् धर्मिविशेष्यतानिरूपित तादृश प्रकारतावच्छेदकतापर्याप्त्यधिकरण धर्मवत्वस्यलक्षणार्थत्वे घटज्ञानं सविषयकं ज्ञानत्वादित्यादौ सविषयकत्वव्याप्ये ज्ञानत्वेऽतिव्याप्तिः । यत्रादौ घटज्ञानं सविष्यकमित्याकारकोघटज्ञानधर्मिक सविषयकत्वप्रकारकोनिश्चयः तादृशनिश्चये च घटज्ञानं सविषयकमित्याकारकनिश्चयः सविषयकत्ववतिसविष्यकत्वप्रकारकः सविषयकत्वाभावति सविषयकत्वप्रकारकोवेत्याकारकप्रमात्वसंशयस्ततोघटज्ञानं सविषयकं न वेति सन्देहोभवतीतिसिधान्तः । एवञ्च निरुक्त प्रमात्वसंशयस्य सविषयकत्व सविषयकत्वा भावरूप साध्य साध्या भावविषयकतया घटज्ञानं सविषयकं नवेत्याकारक साध्यसन्देहजनककोटिद्वयो पास्थिस्वरूपत्वेन साध्यसंशयजनक कोटिद्वयोपस्थितिपदेन तादृश प्रमात्वसंशयमूपादाय तत् जनकतावच्छेदकीभूता या प्रमात्वाऽप्रमात्ववद्वृत्तिज्ञानत्ववान् घटज्ञान धर्मिक सविषयकत्व प्रकार कनिश्चय इत्याकारकज्ञानीया निरुक्तनिश्चयरूप यत् किञ्चित् धर्मिविशेष्यतानिरूपिता प्रमात्वाऽप्रमात्ववद्वृत्ति ज्ञानत्व प्रकारता तदवच्छेदकता पर्याप्त्यधिकरण धमस्य प्रमात्याऽप्रमात्ववद्वृत्तित्व विशिष्ट ज्ञानत्वत्वस्य निरुक्तज्ञानत्वहेतौ सत्वात् । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वस्वस्य तादृशोपस्थितिजनकतावच्छेदकप्रकारतायां विवक्षणेतुनतत्राऽतिव्याप्ति, घटज्ञानधर्मिक सविशयकत्वप्रका-

❀ मनोरमा ❀

यत्तु उपनये पक्षधर्मतामात्रभानमते उद्देश्यतावच्छेदकविधेययोरैक्येन शाब्दमतेरनुत्पत्त्या उपनयानुत्थानेन परार्थानुमानासम्भव इति ज्ञानत्वमुपेक्ष्य घटज्ञानत्वस्य पक्षतावच्छेदकत्वानुसरणमितिमतं तदत्यन्तमसत् , उपनये व्याप्तिविशिष्टपक्षधर्मताभानमादृत्यैवोक्तानुमानस्याभिधीयमान-

❀ दीधितिः ❀

**इदं सविषयकमात्मवृत्ति वा ज्ञानत्वात् इत्यादौ प्रामाण्याप्रामाण्य-संशयस्य तद्घटकीभूतसाध्यतदभावविषयकतया कोट्युपस्थितिरूपस्य जनकीभूतज्ञानविषये ज्ञानत्वे तु नातिप्रसङ्गशङ्कापि, साधारणधर्मव-**

❀ गादाधरी ❀

**मिश्रमतं दूषयति-इदं सविषयकमिति। सविषयकत्वस्य स्वरूप-सम्बन्धात्मकत्वेनाननुगततया तस्मिन्साध्ये ज्ञानत्वादिकं व्यभिचार्यैवे-त्याह-आत्मवृत्ति वेति। अप्रामाण्यं भ्रमत्वं न तु प्रमात्वाभावः-तस्य**

❀ विवृतिः ❀

रकनिश्चयः प्रमात्वाऽप्रमात्ववद्वृत्तिज्ञानत्ववानित्याकारकज्ञानीय प्रमात्वसंशयात्मक साध्याद्युपस्थितिं जनकतावच्छेदिकाया निरुक्तज्ञानत्व प्रकारतायां घटज्ञानधार्मिक सविषयकत्वप्रकारक निश्चयेनिष्ठविशेष्यतानिरूपितत्वस्यैव सत्त्वेन प्रकृतपक्षीभूत घटज्ञाननिष्ठविशेष्यतानिरूपितत्वस्य तत्राऽसत्त्वादिति ॥

इति मिश्रमतं = इत्यादिरीत्या परिष्कृतं मिश्रमतम्। **दूषयतीति**। दीधिति-कार इति शेषः। आत्मवृत्तित्वस्य साध्यान्तरत्वेनोपादानप्रयोजनमाह-**सविषयक-त्वस्येति**। साध्यीभूतस्येत्यादिः। स्वरूपसम्बन्धात्मकत्वेन = तत्तज्ज्ञानव्यक्ति-त्वस्वरूपत्वेन। अननुगततया=प्रतिव्यक्तिभिन्नतया। तस्मिन्साध्ये=सविषयकत्वे साध्ये। **ज्ञानत्वादिकमिति**। आदिना इच्छात्वादिपरिग्रहः। **व्यभिचार्यैवेति**। तथाच तत्तद्व्यक्तित्वरूपसाध्यीभूतसविषयकत्वाभाववति व्यक्त्यन्तरे ज्ञानत्वस्य वर्त्तमानतया व्यभिचारस्फुट एवेति भावः।

वस्तुतः सविषयकत्वं सविशेष्यकत्वं, तस्य च ज्ञानत्ववति निर्विकल्पकज्ञाने विर-हाद्भवति व्यभिचार इत्यत आत्मवृत्तीत्युक्तमिति ध्येयम्।

**आत्मवृत्तीति**। न चात्मवृत्तित्वस्याऽपि स्वरूपसम्बन्धात्मकत्वेन आत्मव्य-क्तिभेदेन भिन्नतया तदात्मवृत्तित्वाभाववति ज्ञानान्तरे ज्ञानत्वादेर्वर्त्तमानत्वात् आत्मवृत्तित्वस्य साध्यत्वेऽपि ज्ञानत्वादेर्व्यभिचारित्वं दुर्वारमेवेति वाच्यम्। आत्म-वृत्तितावच्छेदकजातिमत्त्वस्य साध्यान्तरत्वाभ्युपगमे व्यभिचाराभावात्।

दीधितिस्थाऽप्रामाण्यपदस्य, सविषयकत्ववति सविषयकत्वप्रकारकत्वाभाव-रूपप्रमात्वाऽभावार्थकत्वे निरुक्तप्रमात्वाभावविषयकस्य प्रमात्वसंशयस्य, सवि-

❀ मनोरमा ❀

त्वात्। अन्यथा विशेष्यांशेऽधिकावगाहिशाब्दबोधस्याप्यनभ्युपगमेन घटज्ञानस्य पक्षत्वेऽपि पक्षधर्म-तामात्रबोधकोपयानुत्थानस्य वज्रलेपतापत्तेरित्यास्तां विस्तरः॥

❀ दीधितिः ❀

त्ताज्ञानस्य तज्जन्यकोट्युपस्थितेर्वा संशयजनकतया तज्ज्ञानस्य तादृश-

❀ गादाधरी ❀

साध्याभावाघटितत्वात्। तज्जन्यकोटेर्वेति मतभेदेन। तज्ज्ञानस्य-प्रामा-
ण्याप्रामाण्यसहचरितज्ञानत्ववत्ताज्ञानस्य। तादृशसंशयाहेतुत्वात्-तादृश-
ज्ञानस्य प्रामाण्यसंशयात्मककोटिद्वयोपस्थितिजनकत्वेपि,प्रामाण्यसंशयस्य
कथितार्थसंशयहेतुतया अप्रामाणिकतया तादृशकोट्युपस्थितेः साध्यसंश-

❀ विवृतिः ❀

षयकत्वस-विषयकत्वाभावरूपसाध्यसाध्याभावाविषयकतया तस्य कोटिद्वयोपस्थि-
त्यात्मकत्वं न सम्भवतीत्यतोऽप्रामाण्यपदस्य प्रमात्वाभावार्थकत्वं निराकर्तुमाहाऽ-
**प्रामाण्यमिति।** दीधितिस्थाऽप्रामाण्यपदप्रतिपाद्यमित्यर्थः। भ्रमत्वम्=सविषय-
कत्वाद्यभाववति सविषयकत्वप्रकारकत्वरूपम्। नतु प्रमात्वाभावः=नतु सविषयक-
त्ववति सविषयकत्वप्रकारकत्वरूपस्य प्रमात्वस्याभावः। तस्य=निरुक्तप्रमात्वाभा-
वस्य। साध्याभावाऽघटितत्वात्=सविषयकत्वद्यभावाऽघटितत्वात्। सविषयक-
त्ववति सविषयकत्वप्रकारकत्वाभावरूपप्रमात्वाभावस्य साध्यमात्रघटितत्वमेवेत्याशयः।

साधारणधर्मवत्ताज्ञानं न साक्षात् संशयजनकमपि तु तज्जन्यकोटिद्वयोपस्थितिं
द्वारीकृत्यैव, दीधितिकारमते तु साक्षादेव साधारणधर्मवत्ताज्ञानं संशयजनकमित्या-
शयेनाह-**मतभेदेनेति।** प्रामाण्येति। सविषयकत्ववति सविषयकत्वप्रकारकत्व,-
सविषयकत्वाभाववति सविषयकत्वप्रकारकत्ववद्वृत्तिज्ञानत्वप्रकारकज्ञानस्येत्यर्थः।
**तादृशेति।** घटज्ञानादिधर्मिक सविषयकत्वरूपसाध्यसंशयजनकत्वादित्यर्थः।

**भावमाह-तादृशज्ञानस्येति।** निरुक्तप्रामाण्याऽप्रामाण्यसंशयजनकसाधारण-
धर्मवत्वाज्ञानस्येत्यर्थः। प्रामाण्यसंशयस्य=घटज्ञानं सविषयकमित्याकारक निश्चय-
धर्मिकप्रमात्वाऽप्रमात्वप्रकारकसंशयस्य। **कथितेति।** घटज्ञानं सविषयकं नवेत्या-
कारकघटज्ञानधर्मिकसविषयकत्वतदभावप्रकारकसंशयजनकताया इत्यर्थः। अप्रा-
माणिकतया=अन्वयव्यतिरेकज्ञानादिना निश्चेतुमशक्यतया। तादृशकोट्युपस्थितेः=
घटज्ञानधर्मिकसविषयकत्वप्रकारकनिश्चयधर्मिकप्रमात्वसंशयात्मककोटिद्वयोपस्थितेः।

**साध्येति।** सविषयकत्वादिरूपसाध्यसंशयाजनकत्वादित्यर्थः। नच प्रामा-
ण्यसंशयस्य तादृशसंशयत्वेनार्थसंशयजनकताया अप्रामाणिकत्वेऽपि साधारण-
धर्मवत्ताज्ञानजन्यकोट्युपस्थितित्वेन तस्य सविषयकत्वादिरूपार्थसंशयजनकत्वं
सम्भवत्येवेति वाच्यम्। सविषयकत्वतदभाववद्वृत्तिधर्मवत्ताज्ञानजन्यकोट्युपस्थिते-
रेव तादृशकोट्युपस्थितित्वेन सविषयकत्वसंशयजनकतया निरुक्तप्रमात्वसंशया-

❀ दीधितिः ❀

संशयाहेतुत्वात्। प्रामाण्यसंशयस्थले तु ज्ञानत्वलक्षणसाधारणधर्मदर्शनात् ज्ञाने प्रामाण्यस्य ज्ञानविषयतात्मकसाधारणधर्मदर्शनाच्च

❀ गादाधरी ❀

याहेतुत्वादिति भावः। ननु विनापि साधारणधर्मज्ञानं प्रामाण्यसंशयस्थले विषयसंशयोदयात् साधारणधर्मज्ञानवत्प्रामाण्यसंशयस्यापि संशयजनकत्वमावश्यकमित्यत आह–प्रामाण्यसंशयेति। ज्ञानत्वलक्षणसमानधर्मदर्शनात्–प्रामाण्याप्रामाण्यसहचरितज्ञानत्ववत्ताज्ञानात्, प्रामाण्यस्य सन्देह इति योजना। एतच्च दृष्टान्तविधयोक्तम्। ज्ञानविषयतात्मकसाधारणधर्मद-

❀ विवृतिः ❀

त्मककोट्युपस्थितेश्चातथात्वेन तस्यास्तादृशकोट्युपस्थितित्वेनाऽपि सविषयकत्वादि-संशयजनकतायां प्रमाणाभावादिति ध्येयम्॥

प्रामाण्यसंशयस्थले त्वित्यादि दीधितिग्रन्थोत्थितौ बीजं प्रदर्शयितुं शंकते-**नन्विति**। विनाऽपि साधारणधर्मवत्ताज्ञानं = वह्नितदभावसहचरितधर्मवत्ताज्ञानं विनाऽपि। प्रामाण्यसंशयस्थले=पर्वतो वह्निमानित्याकारकनिश्चयः प्रमा न वेत्याकारकसंशय-सत्त्वदशायाम्। विषयसंशयोदयात्=पर्वतो वह्निमान्नवेत्याकारक संशयस्य जननात्। **साधारणेति**। तथा च यथा वह्नितदभावादिमद्वृत्तिधर्मप्रकारकज्ञानरूप-साधारण धर्मज्ञानं पर्वतादौ वह्न्यादिसंशयजनकं तथा पर्वतादिधर्मिक वह्न्यादिनिश्चयधर्मिकप्रामाण्यसंशयस्य तादृशप्रामाण्यसंशयत्वेन पर्वतादौ वह्न्यादिसंशयजनकत्वमावश्यकम्, एवञ्च सविषयकत्वसंशयं प्रत्यपि सविषयकत्वप्रकारकनिश्चयधर्मिकप्रामाण्यसंशयस्य जनकतया पक्षधर्मताज्ञानपर्यन्ताऽनिवेशे निरुक्तज्ञानत्वहेतावतिव्याप्ति-र्दुर्वारैव स्यादिति भावः।

अत आह=निरुक्तामाशंकामपनेतुमाह। **प्रामाण्येति**। पूर्ववत्–प्रमात्वाऽप्रमात्ववद्वृत्तिज्ञानत्वप्रकारकसविषयकत्वादिप्रकारकनिश्चयधर्मिकज्ञानादित्यर्थः। प्रामाण्यस्यसन्देहः=घटज्ञानधर्मिकसविषयकत्वप्रकारकनिश्चयधर्मिकप्रमात्वस्य सन्देहः। निरुक्ताभिधानस्य पूर्वोक्ताशंकापनयनानुपयोगितयाऽह–**एतच्चेति**। प्रामाण्यसंशयस्य साधारणधर्मवत्ताज्ञानजन्यत्वप्रदर्शनञ्चेत्यर्थः। **दृष्टान्तविधयेति**। तथाच यथा प्रामाण्यसंशयोऽपि साधारणधर्मदर्शनादिजन्यः तथा संशयमात्रस्यैवोत्पादः साधारणधर्मदर्शनादित एवेति भावः।

वस्तुतः सकलसंशयस्यैव साधारणधर्मदर्शनादिजन्यत्वप्रदर्शनायैव तदभिहितमिति ध्येयम्॥

❀ दीधितिः ❀

**विषये तद्वत्त्वस्य सन्देहः। अप्रामाण्यशङ्काद्यन्वयानुविधानन्तु भ्रमत्व-ज्ञानशून्यविरोधिज्ञानस्य प्रतिबन्धकतया तदपसारणप्रयुक्तमित्यस्याकरे**

❀ गादाधरी ❀

र्शनात्–तत्प्रकारकज्ञानविशेष्यत्वरूपतत्तदभावसहचरितधर्मवत्ताज्ञानात्, विषये–घटज्ञानादौ, तद्वत्त्वस्य–सविषयकत्वादेः सन्देहः, तादृशधर्मवत्ता-ज्ञानासत्त्वे च संशयोऽसिद्ध एवेति भावः। नन्वेवमपि अर्थनिश्चयदशायां सत्यपि साधारणादिधर्मवत्ताज्ञाने प्रामाण्यसन्देहे सत्यर्थसन्देहः असति तु तस्मिन्नेत्यन्वयव्यतिरेकानुविधानं नोपपद्यत इत्यत आहाप्रामाण्यश-ङ्केति। तदपसारणप्रयुक्तं–तादृशविशिष्टप्रतिबन्धकाभावसंपादकत्वनिब-

❀ विवृतिः ❀

**तत्प्रकारकेति**। सविषयकत्वादिप्रकारकज्ञानविशेष्यत्वस्वरूपो यः सविषय-कत्वतदभाववद्वृत्तिधर्मस्तत्प्रकारकज्ञानादित्यर्थः। विषये=सविषयकत्वादिप्र-कारकनिश्चयविशेष्ये घटज्ञाने। **तादृशेति**। सविषयकत्वतदभावादिमद्वृत्ति विशे-ष्यताप्रकारकज्ञानरूपसाधारणधर्मज्ञानासत्त्वे चेत्यर्थः। संशयः=घटज्ञानादौ स-विषयकत्वादिसंशयः। **असिद्ध इति**। तथा च घटज्ञानधर्मिकसविषयकत्वप्रकारक-निश्चये प्रामाण्यसंशयसत्वे सविषयकत्वतदभावादिमद्वृत्तिसविषयकत्वप्रकारकज्ञान-विशेष्यतावद्घटज्ञानमित्याकारकसाधारणधर्मज्ञानस्यावश्यकतया सर्वत्रैव साधा-रणादिधर्मदर्शनं साध्यसंशयजनकं, नतु सविषयकत्वप्रकारकनिश्चयधर्मिकप्रमा-त्वसंशयस्य विषयसंशायकत्वमिति भावः।

ननु घटज्ञानधर्मिकसविषयकत्वप्रकारकनिश्चयः प्रमा न वेत्याकारकार्थनिश्चयध-र्मिकप्रमात्वसंशयसत्त्वेऽवश्यं घटज्ञानादौ सविषयकत्वादिरूपार्थसंशयो भवति, तादृशप्रमात्वसंशयविरहदशायान्तु न भवतीत्याकारकान्वयव्यतिरेकनिश्चयगम्यैवा-ऽर्थनिश्चयधर्मिकप्रामाण्यसंशयस्यार्थसंशयजनकतेत्याशंकानिराकरणपरस्याप्रामाण्य-शंकेत्यादिदीधितिग्रन्थस्यावतरणाय शंकते **नन्वेवमिति**। एवं=साधारणधर्मदर्शनादेः सर्वत्र संशयजनकत्वे। अर्थनिश्चयदशायां=सविषयकत्वादिनिश्चयदशायां। प्रामा-ण्यसन्देहे सति=तादृशनिश्चयधर्मिकप्रमात्वसन्देहे सति। अर्थसन्देहः=घटज्ञानादौ सविषयकत्वादिसन्देहः। तस्मिन्=अर्थनिश्चयधर्मिकप्रामाण्यसन्देहे। नेति अर्थ सन्देह इति पूर्वेणान्वयः।

इत्यन्वयव्यतिरेकानुविधानम्=इत्याकारकान्वयव्यतिरेकनिश्चयविषयताकत्वम्। **तादृशेति**। सविषयकत्वाभाववति सविषयकत्वप्रकारकत्वरूपाऽप्रामाण्यज्ञानविर-

❀ दीधितिः ❀

व्यक्तत्वात्। व्याप्यवत्तासंशयस्य पृथग्व्यापकवत्तासंशयहेतुत्वपक्षे

❀ गादाधरी ❀

न्धनम्। तथाच प्रयोजकत्वेनैवान्वयविधानोपपत्तेर्न तत्कारणतासाधकमिति भावः। व्याप्यवत्तासंशयस्येति। व्याप्यतदभावयोर्व्यापकतदभावसहचरितत्तया साधारणधर्मदर्शनविधयैव व्याप्यसंशयो व्यापकसंशये

❀ विवृतिः ❀

हविशिष्टसविषयकत्वादिप्रकारकनिश्चयाभावसम्पादकत्वनिबन्धनमित्यर्थः। भावमाह-**प्रयोजकत्वेनैवेति**। अप्रामाण्यसंशयस्येत्यादिः। **अन्वयेति**। अन्वयव्यतिरेकनिश्चयविषयताकत्वोपपत्तेरित्यर्थः। नतत्कारणतासाधकं=न तस्मिन् प्रामाण्यसन्देहे अर्थसंशयकारणतानिश्चायकमन्वयव्यतिरेकानुविधानमिति शेषः।

**यद्वा** न तत्कारणतासाधकं=न तदन्वयव्यतिरेकानुविधानं कारणतानुमितिप्रयोजकम्। तथाच यद् यदन्वयव्यतिरेकनिश्चयविषयीभूतं भवति तत् तत्कारणकं भवतीत्यस्याऽप्रयोजकत्वमितिभावः॥

**अयमभिप्रायः**–साधारणधर्मदर्शनमेव कोटिद्वयोपस्थितिं द्वारीकृत्य सर्वत्र संशयजनकं भवति, नतु कदाचिदपि अर्थनिश्चये प्रामाण्यसंशयः, अर्थीभूतसाध्यादिसंशयजनकः। घटज्ञानं सविषयकमित्यादि–निश्चये प्रामाण्यसंशयसत्वे यद्यपि सविषयकत्वादिसंशयोत्पादोऽनुभवसिद्धस्तथापि तादृशप्रामाण्यसंशयस्य न सविषयकत्वादिसंशयकारणत्वं। यतः सविषयकत्वादिसंशयस्य सविषयकत्वसविषयकत्वाभावप्रकारकबुद्धिस्वरूपतया तादृशसविषयकत्वाभावबुद्धौ अप्रामाण्यज्ञानविरहविशिष्टसविषयकत्वप्रकारकनिश्चयस्य प्रतिबन्धकतया आवश्यकतया प्रामाण्याऽप्रामाण्यसंशयदशायामुक्तसंशयोऽप्रामाण्यज्ञानविरहविशिष्टसविषयकत्वप्रकारक निश्चयाभावमात्रमेव सम्पादयतीति तादृशनिश्चयाभावसम्पादकतया प्रामाण्यसंशयस्यार्थसंशयप्रयोजकत्वमेवान्वयव्यतिरेकनिश्चयगम्यमिति॥

**व्याप्यतदभावयोरिति**। वह्न्यादिव्याप्यवह्न्यादिव्याप्याभावयोरित्यर्थः। **व्यापकेति**। वह्न्यादिव्याप्यस्य वह्न्यादिरूपव्यापकवद्वृत्तितया वह्न्यादिव्याप्याभावस्य वह्न्यभावादिरूपव्यापकाभाववद्वृत्तितयेत्यर्थः। **साधारणेति**। साधारणीभूतव्याप्यव्याप्याभावप्रकारकज्ञानत्वेनेत्यर्थः। व्याप्यसंशयः=वह्न्यादिव्याप्यवान्न वेत्याकारकः संशयः। व्यापकसंशये=व्यापकीभूतवह्न्यादिसंशये।

ननु तत्तदभाववद्वृत्तित्वेनैकधर्मप्रकारकनिश्चयस्यैव साधारणधर्मदर्शनतया, व्याप्यव्याप्याभावादिरूपविभिन्नधर्मादौ व्यापकतदभाववद्वृत्तित्वावगाहि व्याप्यसंशयस्यातथात्वेन तस्य साधारणधर्मदर्शनविधया व्यापकसंशयजनकत्वमप्रामाणिकमित्यत-

❀ दीधितिः ❀

**ज्ञानपदं निश्चयपरम्। हेतुत्वाभिमतविशेषणन्तु येन सम्बन्धेन तद्भ-**

❀ गादाधरी ❀

**हेतुः, धर्मस्यैकतायाः ज्ञानस्य निश्चयपरतायाश्चाप्रयोजकत्वात्। यदि च व्याप्याभावस्य व्यापकाभावसाहचर्यं न प्रतिसन्धत्ते तदा धर्मिणि तद्व्याप्यधर्मं संशयानोऽपि न तं सन्दिग्धे, इति। स्वीयमते साध्यसंशयजनकतावच्छेदकप्रकारतावच्छेदकसाध्याभाववद्वृत्तित्वस्य व्याप्ये असत्त्वेनाति-**

❀ विवृतिः ❀

आह—**धर्मस्येति**। तत्तदभाववद्वृत्तित्वेनेत्यादिः। **ज्ञानस्येति**। पक्षधर्मताविषयकस्येत्यादिः। निश्चयपरतायाः = निश्चयबोधेच्छयोच्चरितत्वस्य। **अप्रयोजकत्वादिति**। साधारणधर्मदर्शनस्य संशयजनकतायामित्यादिः। तथा च विभिन्नधर्मादौ तत्तदभाववद्वृत्तित्वावगाहिज्ञानस्यापि साधारणधर्मदर्शनत्वेन व्याप्यसंशयस्यापि तत्त्वेनैवव्यापकसंशयजनकत्वमिति हृदयम्।

ननु यादृशस्थले वह्न्यादिव्याप्याभावे व्यापकीभूतस्य वह्न्यादेरभावसामानाधिकरण्यज्ञानं नास्ति, किन्तु पर्वतो वह्न्यादिव्याप्यवान्न वेत्याकारक पर्वतादिधर्मिकवह्न्यादिव्याप्यसंशयो वर्त्तते तादृशस्थले निरुक्तसंशयोत्तरं व्यापकीभूतवह्न्यादिसंशयो न स्यात्, तदानीं वह्न्यादिव्याप्यसंशयस्य व्यापकीभूतवह्न्याद्यभाववद्वृत्तित्वेनव्याप्याभावानवगाहितयासाधारणधर्मदर्शनानात्मकत्वेन व्यापकसंशयं प्रति जनकत्वासम्भावादित्याशङ्कते **यदि चेति**। व्याप्यत्वस्य व्यापकसामानाधिकरण्यघटिततया व्याप्यसंशयदशायां तस्यैव व्याप्यनिष्ठव्यापकसामानाधिकरण्यावगाहिज्ञानात्मकतया तदानीं व्याप्ये व्यापकसामानाधिकरण्यावगाहिज्ञानाभावस्यासम्भवात् व्याप्यस्य व्यापकसाहचर्यं न प्रतिसन्धत्ते—इत्यनुक्त्वा व्याप्याभावस्य व्यापकाभावसाहचर्यं न प्रतिसन्धत्ते इत्युक्तम्।

व्याप्याभावस्य = वह्न्यादिव्याप्याभावस्य। व्यापकाभावसाहचर्यम् = वह्न्याद्यभावरूपव्यापकाभाववद्वृत्तित्वम्। न प्रतिसन्धत्ते = न ज्ञानविषयीभूतं भवति। तदा = व्याप्याभावे व्यापकाभाववद्वृत्तित्वग्रहविरहदशायाम्। धर्मिणि = पर्वतादौ। तद्व्याप्यधर्मम् = वह्न्यादिव्याप्यधर्मम्। संशयानोऽपि = निरुक्तसंशयवानपि। न तम् = न वह्न्यादिस्वरूपंव्यापकम्। **सन्दिग्धे इति**। तथा च व्याप्याभावे व्यापकाभाववद्वृत्तित्वानवगाहि व्याप्यसंशयदशायामेतन्मते व्यापकसंशयानुत्पाद इष्ट एवेतिभावः।

इति स्वीयमते = इत्याकारकदीधितिकारमते। **साध्येत्यादि**। यत्किञ्चित्साध्यसंशयजनकतावच्छेदकयावत्प्रकारतान्तर्गतसाध्याभाववद्वृत्तित्वविशिष्टव्याप्याभावप्रकारतावच्छेदकतापर्याप्त्यधिकरणसाध्याभाववद्वृत्तित्वविशिष्टव्याप्याभावत्वस्य व्याप्येऽसत्त्वेनेत्यर्थः। इदमुपलक्षणं-तादृशयावत्प्रकारतायाः सव्यभिचारताघटकसम्ब-

❀ दीधितिः ❀

**यत्साहचर्य्यं तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयादिजनकतासूचनार्थम्**

❀ गादाधरी ❀

व्याप्त्यनवकाशात् पृथगिति हेतुत्वे विशेषणम्। पृथक्कारणतामते व्याप्तिमादायातिव्याप्तिः प्रागेवोपपादिता। ज्ञानपदं निश्चयपरमिति। तादृशजनकतायां निश्चयत्वावच्छिन्नत्वं निश्चयत्वशून्यावृत्तित्वं वा विशेषणं

❀ विवृतिः ❀

न्धावच्छिन्नत्वेनावश्यं निवेशनीयतया व्यापकाभाववद्वृत्तिव्याप्याभावत्वावच्छिन्नप्रकारतायाश्चातथात्वेन यावत्प्रकारतायां सव्यभिचारताघटकसम्बन्धावच्छिन्नत्वस्याप्रसिद्धयैवोक्तमते न व्याप्येऽतिव्याप्तिरित्यपि द्रष्टव्यम्।

हेतुत्वे=कारणतायाम्। **विशेषणमिति**। तथा च व्याप्यसंशयत्वावच्छिन्नाया व्याप्यसंशयनिष्ठकारणतायाः साधारणधर्मदर्शनत्वावच्छिन्नकारणताभिन्नत्वमते ज्ञानपदं निश्चयपरमेव वक्तव्यमित्यर्थः पर्यवसितः। **प्रागेवोपपादितेति**। तथा च व्याप्यसंशयो यदि व्यापकसंशयं प्रति व्याप्यसंशयत्वेनैव हेतुर्न तु साधारणधर्मदर्शनत्वेन तदा प्रकारतायां यावत्वं संशयेऽपि यत्किञ्चित्त्वं न देयमेव तन्मते उभयसहचरितैकधर्मप्रकारकज्ञानस्यैव साधारणधर्मदर्शनविधया संशयजनकतया केवलसाध्यादिमद्वृत्तित्वज्ञानस्यातथात्वेन सद्धेतावतिव्याप्त्यसम्भवात् प्रकारतायां यावत्त्वादिनिवेशस्य प्रयोजनाभावेन संशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मवत्त्वमेव सव्यभिचारत्वंवक्तव्यम्। एवञ्च वह्न्यादिसंशयजनकतावच्छेदकवह्न्यादिव्याप्यसंशयीयव्याप्यत्वावच्छिन्नप्रकारतावच्छेदकव्याप्यत्वमादाय व्याप्येऽतिव्याप्तिरेवोपपादितेति भावः।

तादृशजनकतायाम्=साध्यसंशयनिष्ठजन्यतानिरूपितायां जनकतायाम्। **निश्चयत्वावच्छिन्नत्वमिति**। तथा च फलीभूतसंशयधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्ना साध्यसंशयजनकता तद्रूपवत्त्वं सव्यभिचारत्वमित्यस्यैव विवक्षणीयतया न व्याप्यसंशयमादाय व्याप्येऽतिव्याप्तिः, व्याप्यसंशयनिष्ठव्यापकसंशयजनकताया निश्चयत्वानवच्छिन्नत्वादित्याशयः।

ननु व्याप्यसंशयस्य व्यापकसंशयं प्रति पृथक्कारणतामतेऽपि न व्याप्यसंशयत्वेन तस्य तथात्वमपि तु पूर्वोक्तयुक्त्या व्याप्यत्वावच्छिन्नप्रकारताकज्ञानत्वेनैव तथा च व्याप्याभावाऽप्रकारकव्याप्यप्रकारकज्ञानत्वरूपनिश्चयत्वघटकव्याप्यप्रकारकज्ञानत्वावच्छिन्नाऽपि व्याप्यसंशयनिष्ठाकारणता निश्चयत्वावच्छिन्नैवेति तादृशकारणतामादाय व्याप्येऽतिव्याप्तिर्दुर्वारैव। न च निश्चयत्वपर्याप्तावच्छेदकताकत्वमेव जनकतायां

❀ गादाधरी ❀

देयमित्यर्थः। सद्धेतावतिव्याप्तेर्वास्तवसाधारण्यादिमत्त्वाभावेनाप्रसक्तेर्हेतुत्वाभिमतपदोपादानमनर्थकमित्याशङ्कायामाह-हेत्विति। तेन सम्बन्धेन-सव्यभिचारत्वघटकतयाऽभिमतसम्बन्धेन। जनकतासूचनार्थं—जनकताया लक्षणघटकतालाभार्थम्। तथाच तादृशपदोपादानस्वरसाद्यादृशरूपावच्छिन्ने यत्सम्बन्धावच्छिन्नप्रकारताशालिज्ञानं साध्यसन्देहजनकं तादृशरूपवान्तेन सम्बन्धेन सव्यभिचार इत्येव लक्षणं कर्त्तव्य-

❀ विवृतिः ❀

निवेश्यमिति न तादृशकारणतामादायातिव्याप्तिरिति वाच्यम्, तथासति गौरवादत आह—**निश्चयत्वेति**। निश्चयत्वाभाववद्वृत्तित्वमित्यर्थः।

**विशेषणमिति**। व्याप्यसंशयनिष्ठजनकतायामित्यादिः। तथाच व्याप्यसंशयनिष्ठाया व्यापकसंशयकारणताया व्याप्यप्रकारकज्ञानत्वावच्छिन्नत्वेपि तादृशकारणताया निश्चयशून्यसंशयवृत्तितया न तादृशकारणतामादायापि व्याप्येऽतिव्याप्तिरिति भावः।

नचैवं धूमवान्वह्नेरित्यादौ सर्वत्राऽसम्भवः, धूमतदभाववद्वृत्तित्वविशिष्टवह्नित्वावच्छिन्नप्रकारताकनिश्चयत्वाभाववति धूमत्वेन पदार्थान्तरावगाहितादृशभ्रमेऽपि धूमादिसंशयजनकताया वर्त्तमानतया यद्रूपपदेन तादृशविशिष्टवह्नित्वस्य धर्तुमशक्यत्वादिति वाच्यम्। यद्रूपावच्छिन्नप्रकारताकनिश्चयत्वशून्यसंशयावृत्तिप्रकृतसाध्यसंशयजनकता तद्रूपवत्त्वस्य विवक्षणीयत्वात्, तादृशप्रकारतायां संशयावृत्तित्व विवक्षणेन सामञ्जस्यसम्भवेऽपि यथासन्निवेशे वैयर्थ्याऽभावादिति ध्येयम्।

**वास्तवेति**। वास्तवसाध्यसाध्याभावाधिकरणनिरूपितवृत्तित्वादिमत्वाभावेनेत्यर्थः। आदिना वास्तवसाध्यसाध्याभाववद्व्यावृत्तत्वरूपाऽसाधारण्यपरिग्रहः। अप्रसक्तेः=असम्भवात् अतिव्याप्तेरितिपूर्वेणान्वयः।

**हेतुत्वेति**। मूलोक्तेत्यादिः। **अनर्थकमिति**। निष्प्रयोजनकमित्यर्थः। ननु व्यर्थम्, साध्यसंशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मवत्त्वस्य तादृशधर्मविशिष्टहेतुत्वाभिमतत्वाघटकतया तत्पदस्य व्यर्थत्वासम्भवादितिभावः।

**दीधितौ येनेत्यादि**। येन सम्बन्धेन सव्यभिचारित्वमिष्टं तादृशसव्यभिचारताघटकसम्बन्धावच्छिन्नं यत् तस्मिन् साधारणतयाऽभिमते धर्मे उभयसाहचर्यं साध्यतदभाववद्वृत्तित्वादिकं तदवच्छिन्नतादृशधर्मनिष्ठसव्यभिचारताघटकसम्बन्धावच्छिन्नप्रकारताशालिज्ञानस्येत्यर्थः। **संशयादीति**। आदिना साध्याद्युपस्थितिपरिग्रहः। संशयादिजनकताया लक्षणघटकत्वलाभार्थमित्यर्थः। तेन=निरुक्तजनकताया

❀ दीधितिः ❀

**तेनात्मत्वकपालत्वादिसाध्यके समवायसम्बन्धेन हेतौ ज्ञानघटादौ विषयत्वसंयोगादिना तत्सन्देहजनके नातिप्रसङ्ग इति ॥**

❀ गादाधरी ❀

मिति भावः। समवायेन हेतौ-समवायेन व्याप्ये। एतेनालक्ष्यत्वं सूचितम्। ज्ञानघटादौ नातिप्रसङ्ग इति योजना। समवायेन सव्यभिचारत्वप्रसङ्ग इत्यर्थः,। अतिप्रसङ्गप्रसञ्जकं विशेषणमाह-विषयत्वसंयोगत्वादिना। तत्सन्देहजनक इति। विषयत्वसंयोगादिघटितसाध्यतदभावसाहचर्यादिप्रकारेण तादृशसम्बन्धेन स्वप्रकारकं संशयजनकं यज्ज्ञानं तद्विषय

❀ विवृतिः ❀

लक्षणघटकत्वसूचनेन। ज्ञानघटादौ=क्रमात् आत्मत्वसाध्यके ज्ञानहेतौ, कपालत्वसाध्यके च घटादिहेतौ। आदिपदात् ईश्वरत्वसाध्यकनित्यज्ञानहेतोस्तन्तुत्वसाध्यकपटादिहेतोश्च परिग्रहः। तत्सन्देहजनके=आत्मत्वकपालत्वसन्देहजनकज्ञानविषये हेताविति पूर्वेणान्वयः।

टीकायां भावमाह-**तथा चेति**। **तादृशेति**। हेतुत्वाभिमतपदोपादानस्वरसादित्यर्थः। **यादृशेति**। सव्यभिचारत्वघटकसम्बन्धात्वच्छिन्न यादृशरूपावच्छिन्न तादृशसम्बन्धावच्छिन्न प्रकारताशालिज्ञानमित्यर्थः। तादृशरूपवान्=सव्यभिचारताघटकसम्बन्धावच्छिन्नत्वविशिष्टतादृशधर्मवान्। तेन सम्बन्धेन=सव्यभिचारत्वघटकसम्बन्धेन। **सव्यभिचार इति**। तथाच धूमवान्वह्नेरित्यादौ सव्यभिचारताघटकीभूतसंयोगसम्बन्धावच्छिन्नधूमतदभाववद्वृत्तित्वावच्छिन्न वह्न्यादिप्रकारकज्ञानस्य धूमसंशयजनकतया तादृशसम्बन्धावच्छिन्नत्वविशेषितधूमधूमाभाववद्वृत्तित्वस्य वह्नौ सत्त्वात् लक्षणसमन्वय इति भावः।

**एतेनेति**। समवायेन ज्ञानादिहेतुत्वाभिधानेनेत्यर्थः। **सूचितमिति**। अन्यथा समवायान्यसम्बन्धेन ज्ञानादेर्हेतुत्वे तस्य सव्यभिचारित्वस्येष्टतयाऽलक्ष्यत्वमेव न स्यादित्याशयः।

**विषयत्वसंयोगादीति**। आत्मत्वसाध्यकज्ञानहेतौ समवायेनात्मत्ववद्वृत्तित्व विषयतयाऽऽत्मत्वाभाववद्वृत्तित्वरूपं कपालत्वसाध्यकघटहेतौ च समवायेन कपालत्ववद्वृत्तित्व संयोगेन कपालत्वाभाववद्वृत्तित्वरूपं यत् तत्तत्साध्यतदभावसाहचर्यं तत्प्रकारेणेत्यर्थः। तादृशसम्बन्धेन=विषयत्वसंयोगादिसम्बन्धेन। स्वप्रकारकम्=तादृशज्ञानघटादिप्रकारकम्।

## ❀ गादाधरी ❀

इत्यर्थः । **न च तेन सम्बन्धेन** तद्वत्ताज्ञानस्य लक्षणघटकत्वेपि समवायेन विषयतासंयोगादिघटितकोटिद्वयसामानाधिकरण्यावच्छिन्नज्ञानघटादिप्रकारकज्ञानमादायातिप्रसङ्ग इति वाच्यम् । तेन सम्बन्धेन तद्वत्ताज्ञानस्य तत्सम्बन्धघटितसहचारविषयकस्यैव संशयजनकतया समवायसम्बन्धावच्छिन्नायां संशयजनकतावच्छेदकप्रकारतायां समवायसम्बन्धघटितसाध्यतदभावसाहचर्यस्यैवावच्छेदकतया तद्वत्तायाः ज्ञानघटादावसत्त्वेनातिव्याप्त्यनवकाशात् ।

## ❀ विवृतिः ❀

ननु सव्यभिचारताघटकसम्बन्धावच्छिन्नाया एव प्रकारताया लक्षणघटकताया दीधितिकृताऽभिहिततया विषयतया आत्मत्वाभावसहचरितस्य समवायेनात्मत्वसहचरितस्य ज्ञानादेः सव्यभिचारताघटकीभूतसमवायावच्छिन्नप्रकारताकज्ञानमादाय ज्ञान हेतावतिव्याप्तिर्दुर्वारैवेत्याशंकते-**न चेति** । वाच्यमितिपरेणान्वयः ।

तेन सम्बन्धेन = सव्यभिचारताघटकसम्बन्धेन । तद्वत्ताज्ञानस्य = साध्यतदभाववद्वृत्तित्वावच्छिन्नकिञ्चिद्धर्मावच्छिन्नप्रकारताकज्ञानस्य । **समवायेनेति** । तृतीयार्थोऽवच्छिन्नत्वम्, तस्य चाग्रिमज्ञानघटादिप्रकारकेत्यत्र प्रकारतायामन्वयः । **विषयतेति** । विषयतया आत्मत्वाभावसहचरितसमवायेनात्मत्वसहचरितज्ञानवानयम्, संयोगेन कपालत्वाभावसहचरित समवायेन कपालत्वसहचरित घटवानयमित्याकारकात्मत्वतदभावादिमद्वृत्तित्वाद्यवच्छिन्नसमवायावच्छिन्नज्ञानघटादिप्रकारकज्ञानमित्यर्थः ॥

समाधत्ते-**तेन सम्बन्धनेति** । सव्यभिचारताघटकीभूतसमवायसम्बन्धेनेत्यर्थः । तद्वत्ताज्ञानस्य=ज्ञानघटादिमत्ताज्ञानस्य । **तत्सम्बन्धेति** । समवायादिरूप-सव्यभिचारताघटकसम्बन्धावच्छिन्नसाध्यतदभाववद्वृत्तित्वविषयकस्यैवेत्यर्थः । संशयजनकतया=साध्यादिसंशयजनकतया । **संशयेति** । ज्ञानघटादिनिष्ठायां संशयजनकतावच्छेदकप्रकारतायामित्यर्थः । **समवायेति** । समवायसम्बन्धावच्छिन्नसाध्यतदभाववद्वृत्तित्वस्यैवेत्यर्थः । तद्वत्तायाः=समवायावच्छिन्नाऽत्मत्वतदभावादिमद्वृत्तित्ववत्वस्य । **अतिव्याप्त्यनवकाशादिति** । तथाच विषयतासम्बन्धघटितात्मत्वतदभाववद्वृत्तित्वावच्छिन्नसव्याभिचारताघटकत्वेनाभिमतसमवायसम्बन्धावच्छिन्नज्ञानादिप्रकारताकं ज्ञानं न तादृशसाध्यादिसंशयजनकम् अपि तु समवायावच्छिन्नात्मत्व तदभाववद्वृत्तित्वाद्यवच्छिन्नसमवायावच्छिन्नज्ञानादिप्रकारकज्ञानमेव तथा, एवञ्च, समवायावच्छिन्नात्मत्वतदभाववद्वृत्तित्वाद्यवच्छिन्नसमवायावच्छिन्नज्ञानादिप्रकार-

**विप्रतिपत्तिस्तु प्रत्येकं न तथा, न वा पक्षवृत्तिः, साधारण**

---

❀ दीधितिः ❀

**विप्रतिपत्तौ प्रत्येकं कोटिद्वयोपस्थापकत्वाभावात् लक्षणस्थद्वय-**

❀ विवृतिः ❀

कज्ञानीयनिरुक्तज्ञाननिष्ठाया आत्मत्वादिसंशयजनकतावच्छेदकप्रकारताया अवच्छेदकीभूतं यत् समवायावच्छिन्नात्मत्वतदभाववद्वृत्तित्वं तद्वत्त्वस्य ज्ञानादौ विरहान्नातिव्याप्तिरिति भाव इति दिक् ॥

ननूपस्थितौ कोटिद्वयविषयकत्वमनिवेश्य साध्यसंशयजनकोपस्थितिजनकज्ञानीयप्रकारताश्रयत्वमात्रं यदि सव्यभिचारत्वं तदा पर्वतो वह्निमान्धूमात् शब्दोऽनित्यः कृतकत्वादित्यादौ पर्वतो वह्निमान्न वा शब्दोऽनित्यो न वेत्याकारकवाक्यद्वयात्मकविप्रतिपत्तिघटकैकैकवाक्येऽतिव्याप्तिः, वह्निसंशयजनकवह्न्याद्युपस्थितिजनकीभूतस्य केवलवह्निमानित्यादिवाक्यप्रकारकाऽऽकाशविशेष्यकज्ञानस्य प्रकारताया निरुक्तप्रत्येकवाक्ये सत्त्वात्।

नच तादृशप्रत्येकवाक्यस्य सव्यभिचारत्वमिष्टमेवेति वाच्यम्। निरुक्तवाक्यादेराकाशमात्रवृत्तितया वह्न्यादिविरुद्धत्वेनैतल्लक्षणालक्ष्यत्वात्। अत उपस्थितौ कोटिद्वयविषयकत्वविशेषणस्य छलतः फलमाह मूले **विप्रतिपत्तिस्त्वति**। विरुद्धकोटिद्वयोपस्थितिजनकज्ञानविषयीभूतवाक्यद्वयरूपविप्रतिपत्तिघटकन्त्वित्यर्थः। अस्य प्रत्येकमित्यनेन सम्बन्धः। विप्रतिपत्तिपदस्य तद्घटकार्थपरतया निरुक्तार्थलाभसम्भव इति ध्येयम् ॥

प्रत्येकम् = पर्वतो वह्निमान् पर्वतो वह्निमान्नेति च वाक्यम्। न तथा = न वह्न्युपस्थितिजनकीभूतं यद् वह्न्यभावोपस्थितिजनकं ज्ञानं तदीयप्रकारताश्रयीभूतम्। वह्निमानित्याकारकवाक्यज्ञानेन वह्नेर्वह्निमान्नेत्याकारकवाक्यज्ञानेन तु वह्न्यभावस्यैवोपस्थितिजननात् साध्यसाध्याभावोपस्थितिजनकत्वं न कस्याऽपि वाक्यज्ञानस्येतिउभयकोट्युपस्थितिजनकज्ञानपदेन प्रत्येकवाक्यज्ञानस्य धर्त्तुमशक्यत्वान्न विप्रतिपत्तिघटकप्रत्येकवाक्येऽतिव्याप्तिरिति भावः।

नन्वेकैकवाक्यप्रकारकाऽऽकाशादिविशेष्यकज्ञानस्य साध्यसाध्याभावोपस्थितिजनकत्वविरहेऽपि पर्वतो वह्निमानित्यादिवाक्यप्रकारकं पर्वतोवह्निमान्नेत्याद्याकारकवाक्यप्रकारकञ्च यदाकाशादिविशेष्यकं समूहालम्बनज्ञानं तस्य साध्यसाध्याभावोपस्थितिजनकतया तदीयप्रकारताश्रयत्वमादाय प्रत्येकवाक्येऽतिव्याप्तिर्दुर्वारैवेत्यत आह—**न वा पक्षवृत्तिरिति**। न वा पक्षविशेष्यतानिरूपितसाध्यसाध्याभावोपस्थितिजनकज्ञा-

**मन्वयेन असाधारणं व्यतिरेकेण अनुपसंहारी पक्ष एवोभयसाहचर्येण कोटिद्वयोपस्थापकः ।**

---

❀ विवृतिः ❀

नीयप्रकारताश्रयीभूतेत्यर्थः । विप्रतिपत्तिरितिपूर्वेणान्वयः । एतेन न वा पक्षवृत्तिरित्यस्य नवा पक्षे वर्त्तमानेत्यर्थकरणे ह्रदो धूमवान् वह्नेरित्यादौवह्न्यादावव्याप्तिस्तस्य ह्रदरूपपक्षेऽवर्त्तमानत्वादिति पूर्वपक्षोऽपि निरस्तः ।

तथा च निरुक्तसमूहालम्बनज्ञानीयप्रकारता न पक्षीभूतपर्वतादिविशेष्यतानिरूपिता अपि तु आकाशनिष्ठविशेष्यतानिरूपितैवेति न निरुक्तसमूहालम्बनज्ञानीयप्रकारतामादायाऽपि प्रत्येकवाक्येऽतिव्याप्तिरित्याशयः । यद्यपि साध्योपस्थितिजनकतावच्छेदकीभूता सती साध्याभावोपस्थितिजनकतावच्छेदकीभूता या प्रकारता तदाश्रयत्वस्यावश्यं निवेशनीयतया तत एवोक्तसमूहालम्बनज्ञानमादाय नातिव्याप्तिस्तादृशज्ञानीयप्रत्येकवाक्यप्रकारतायां साध्यसाध्याभावोपस्थितिजनकतावच्छेदकत्वविरहादिति नवेत्यादिकं व्यर्थमित्युच्यते, तथापि यथाश्रुताभिप्रायेणैव तथाभिधानमित्यवधेयम् ।

साधारणम् = साधारणत्वेनाभिमतो हेतुः-धूमादिसाध्यकवह्न्यादिहेतुरितियावत् । **अन्वयेनेति** । अन्वयः साध्यतदभाववद्वृत्तित्वं तृतीयार्थः साधारणपदार्थान्वयि अवच्छिन्नप्रकारताकज्ञानविषयत्वरूपवैशिष्ट्यं, तथाच साध्यतदभाववद्वृत्तित्वावच्छिन्नप्रकारताकज्ञानविषयीभूतं सदित्यर्थः पर्यवसितः । लिङ्गव्यत्ययेनाग्रिमकोटिद्वयोपस्थापक इत्यनेनान्वयः । असाधारणम् असाधारणत्वेनाभिमतो हेतुः, शब्दोऽनित्यः शब्दत्वादित्यादिस्थलीयशब्दत्वादिहेतुरितियावत् । **व्यतिरेकेणेति** । पूर्ववत् निश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपधर्मावच्छिन्नप्रकारताकज्ञानविषयीभूतं सदित्यर्थः । पूर्ववदत्राऽपि लिंगव्यत्ययेनाग्रिमोपस्थापकइत्यनेनान्वयः । अनुपसंहारी = अनुपसंहारित्वेनाभिमतो हेतुः सर्वमनित्यं मेयत्वादित्यादिस्थलीयमेयत्वादिहेतुरिति यावत् । **पक्ष एवेति** । एवकारोऽप्यर्थे । तथा च सन्देहविषयीभूतसाध्यसाध्याभाववत्पक्षवृत्तित्वप्रकारेण ज्ञानविषयीभूतः सन्नपीत्यर्थः पर्यवसितः । कोटिद्वयोपस्थापकः=साध्यसाध्याभावोपस्थितिजनकतावच्छेदकप्रकारतावच्छेदकधर्मवान् । एतेन सम्बन्धनिश्चयस्यैव सम्बन्ध्यन्तरस्मारकतया सर्वत्र पक्षे साध्यसन्देहदशायाम् अनुपसंहारिणि हेतौ साध्यादिमद्वृत्तित्वस्यापि सन्दिग्धतया निरुक्तानुपसंहारित्वज्ञानस्य कोटिद्वयोपस्थितिजनकत्वं न सम्भवतीति पूर्वपक्षोऽपि निरस्तः । अनुपसंहारित्वज्ञानस्य कोटिद्वयोपस्थितिजनकत्वाभावेऽपि कालान्तरीण साध्यतदभाववद्वृत्तित्वप्रकारेण निश्चयविषयतावच्छेदकमेयत्वत्वादिमत्त्वस्यानुपसंहारितादशायामपि हेतौ सत्त्वेन लक्षणसमन्वयसम्भ-

❀ गादाधरी ❀

विप्रतिपत्तिस्त्वित्यादिमूले तथापदस्य कोट्युपस्थापकपरत्वेऽसङ्गतिः- तद्घटकसाध्यतदभावोपस्थापकपदयोः प्रत्येकं कोट्युपस्थापकत्वात्, प्रत्येकमतथात्वेपि वा कथं तत्र लक्षणासत्त्वमित्यपि न स्फुटमिति तद्ग्र- न्थमधृत्वैव तदर्थं पूरयित्वा व्याचष्टे-विप्रतिपत्तेरिति । विप्रतिपत्तिघटक- तत्तत्पदस्येत्यर्थः । तत्तत्पदविषयकप्रत्येकज्ञानयोः कोटिद्वयोपस्थापकत्व- विरहेपि समूहालंबनज्ञानस्य तथात्वात्तदादायैवातिव्याप्तिर्भविष्यतीति

❀ विवृतिः ❀

वात् लक्षणसमन्वयप्रदर्शनपरतयैवोक्तमूलस्य दीधितिकृता व्याख्येयत्वादित्यग्रेस्फुटी- भविष्यति ।

यद्वा साधारण्यज्ञानमेव संशयजनकं नतु तन्निश्चयत्वेनाऽपि संशयजनकत्वमित्या- शयेन वाऽनुपसंहारित्वज्ञानस्य संशयजनककोटिद्वयोपस्थितिजनकत्वमभिहितं मूलकृते- तिध्येयम् ॥

टीकायां-**तथापदस्येति** । मूलस्थ 'न तथे'तिवाक्यघटक- तथापदस्येत्यर्थः । कोट्युपस्थापकपरत्वे=उपस्थितिजनकज्ञानीयप्रकारताश्रयमात्रपरत्वे । असंगतिः= नञर्थान्वयाऽसम्भवरूपाऽसंगतिः । तत्र हेतुमाह **तद्घटकेति** । विप्रतिपत्तिघट- कयोः साध्योपस्थितिजनकज्ञानविषयीभूतसाध्याभावोपस्थितिजनकज्ञानविषयीभूतयोः प्रतियोगिवाचकपदनञ्पदयोरित्यर्थः । प्रत्येकं=शब्दोऽनित्य इति वाक्यस्य, शब्दोऽ- नित्यो नेतिवाक्यस्य च । कोट्युपस्थापकत्वात्=कोट्युपथितिजनकज्ञानीयप्रकारताश्रय- त्वात् । शब्दोऽनित्यइति वाक्यज्ञानेन अनित्यत्वस्योपस्थितिजननात् शब्दोऽनित्योने- तिवाक्यज्ञानेन तु अनित्यत्वाभावस्योपस्थितिजननात् न तथेतिवाक्यघटकनञर्था न्वयासम्भवेन प्रत्येकं न तथेत्यादिमूलमसंगतमितिभावः ।

ननु तथापदस्य कोटिद्वयोपस्थावकपरत्वे न मूलाऽसंगतिरत आह-**प्रत्येकमिति** । अतथात्वेऽपि वा = कोटिद्वयोपस्थापकत्वाभावेऽपि वा । तत्र = विप्रतिपत्तिघटकप्रत्ये- कवाक्ये । लक्षणाऽसत्त्वम्=अतिव्याप्तिवारणम् । **नस्फुटमिति** । मूले इत्यादिः ।

तद्ग्रन्थम् = विप्रतिपत्तिस्त्वित्यादिग्रन्थम् । तदर्थम् = निरुक्तमूलार्थम् । **विप्र- तिपत्तीति** । विप्रतिपत्तिघटकीभूतं यत् शब्दोऽनित्यइतिपदं यच्च शब्दोऽनित्योनेति पदं तस्येत्यर्थः । **तत्तत्पदेति** । विप्रतिपत्तिघटकशब्दोऽनित्यइत्यादिपदविषयक- प्रत्येकज्ञानयोरित्यर्थः । **कोटिद्वयविति** । अनित्यत्वतदभावादेरुपस्थितिजन- कत्वाभावेऽपीत्यर्थः । समूहालम्बनेति । प्रत्येकपदविषयकस्येत्यादिः । तथात्वात्= साध्यसाध्याभावरूपकोटिद्वयोपस्थापकत्वात् । तदादायैव=निरूक्तसमूहालम्बनज्ञान-

❀ दीधितिः ❀

**पदेन तद्वारणात्, मिलितस्य तदुपस्थापकत्वेऽपि तद्वाक्यज्ञानं न तथा,**

❀ गादाधरी ❀

**आशङ्कायां न वा पक्षवृत्तिरिति मूलावतार इति सूचयितुं पूरणसम्वलितं तदर्थमाह–मिलितस्येति। मिलितविषयकस्येत्यर्थः। तदुपस्थापकत्वेपि–कोटिद्वयोपस्थापकत्वेपि। तद्वाक्यज्ञानं–तादृशवाक्यप्रकारताशालिज्ञानत्वावच्छिन्नम्। तथा–कोटिद्वयोपस्थापकम्, तथाच पक्षधर्मतापदोपादानादेव न तत्रातिव्याप्तिरिति भावः। पक्षधर्मतापदानुपादानेपि न तत्राति-**

❀ विवृतिः ❀

मादायैव। **अतिव्याप्तिरिति**। शब्दोऽनित्यो नवेतिवाक्यद्वयप्रकारकाकाशादिविशेष्यकसमूहालम्बनज्ञानस्य साध्यसन्देहजनककोटिद्वयोपस्थितिजनकतया तदीयप्रकारताश्रयत्वस्य तत्तद्वाक्ये सत्त्वादित्याशयः।

इति सूचयितुं=निरुक्तमूलावतारं सूचयितुम्। **पूरणसम्वलितमिति**। निरुक्तमूलावतारप्रयोजनं पूरयित्वेति भावः। तदर्थम्=नवा पक्षवृत्तिरित्यादिमूलार्थम्। **मिलितेति**। शब्दोऽनित्यो नवेत्याद्याकारकवाक्यद्वयविषयकस्येत्यर्थः। **कोटिद्वयेति**। निरुक्तसमूहालम्बनज्ञानस्येत्यादिः। **तादृशेति**। आकाशविशेष्यकतत्तत्प्रकारताशालिज्ञानत्वावच्छिन्नमित्यर्थः। विप्रतिपत्तिवाक्यज्ञानत्वेन संशयजनककोटिद्वयोपस्थितिजनकत्वसूचनाय ज्ञानमित्यनुक्त्वा तादृशज्ञानत्वावच्छिन्नमित्युक्तमिति ध्येयम्।

**तथेति**। नञर्थेन सहान्वयात् पक्षीभूतशब्दविशेष्यतानिरूपितप्रकारताकं सत् कोटिद्वयोपस्थापकं नेत्यर्थः। भावमाह-**तथाचेति**। शब्दोऽनित्य इत्यादौ शब्दोऽनित्यो नवेत्याकारक तत्तद्वाक्यप्रकारकसमूहालम्बनज्ञानस्याकाशविशेष्यकतया पक्षीभूतशब्दविशेष्यकत्वाभावेन लक्षणघटकपक्षधर्मतापदोपादानादेव न तादृशवाक्यप्रकारकज्ञानमादाय प्रत्येकवाक्येऽतिव्याप्तिरित्याशयः।

ननु पक्षपदस्य धर्मिमात्रपरताया दीधितिकृता पूर्वं व्याख्याततया तन्मते शब्दोऽनित्यो नवेत्याकारकविप्रतिपत्तिघटकप्रत्येकवाक्यप्रकारकाकाशादिरूपधर्मिविशेष्यकसमूहालम्बनज्ञानमादाय तत्तद्वाक्येऽतिव्याप्तिस्तु अस्त्येव आकाशात्मकधर्मिविशेष्यतानिरूपितनिरुक्तसमूहालम्बनज्ञानीयतत्तद्वाक्यप्रकारतायास्तत्तद्वाक्ये सत्त्वादित्याशंकानिराकरणपरं न वेत्यादिदीधितिग्रन्थमवतारयितुमाह–**पक्षधर्मतेति**। पक्षपदस्य धर्मिमात्रपरत्वं स्वीकृत्येत्याशयः।

तत्र=शब्दोऽनित्यो न वेत्याकारकविप्रतिपत्तिघटकप्रत्येकवाक्ये। अतिव्याप्त्य-

❀ दीधितिः ❀

**न वा मिलित्वा द्वयोर्जनकत्वं, तथात्वेऽपि वा येन सम्बन्धेन तद्वत्ता-**

❀ गादाधरी ❀

व्याप्तिः सम्भवति पदद्वयविषयकज्ञानस्य कोटिद्वयोपस्थितिजनकत्वेपि विषयभेदेन विषयताभेदान्नित्यानित्यपदविषयतयोः प्रत्येकं कोटिद्वयोपस्थितिजनकतावच्छेदकत्वविरहात्, लक्षणे च कोटिद्वयोपस्थितिजनकतावच्छेदकैकविषयताया एव निवेशादित्याह–नवेति । मिलित्वा–एकविषयताश्रयीभूय, द्वयोः–पदयोः, जनकत्वं–जनकतावच्छेदकघटकत्वम् । कोटिद्वयोपस्थितिजनकतावच्छेदकीभूता या विषयता तदाश्रयत्वमिति

❀ विवृतिः ❀

भावे हेतुमाह–**पदद्वयेति** । नित्याऽनित्यपदद्वयविषयकज्ञानस्येत्यर्थः । कोटिद्वयोपस्थितिजनकत्वेऽपि=नित्यत्वाऽनित्यत्वविषयकोपस्थितिजनकत्वेऽपि । विषयभेदेन= तत्तत्पदादिरूपविषयव्यक्तिभेदेन । विषयताभेदात्=तत्तत्पदनिष्ठप्रकारताया भेदात् । **नित्याऽनित्येति** । तादृशसमूहालम्बनज्ञानीयेत्यादिः । **प्रत्येकमित्यादि** । नित्यपदप्रकारताया नित्यत्वोपस्थितिजनकतावच्छेदकत्वात् अनित्यपदप्रकारतायाश्चाऽनित्यत्वोपस्थितिजनकतावच्छेदकत्वात् उभयोपस्थितिजनकतावच्छेदकत्वं न कस्या अपि प्रकारताया इत्याशयः ।

**लक्षणे चेति** । निवेशादितिपरेणान्वयः । **कोटिद्वयविति** । साध्योपस्थितिजनकतावच्छेदकीभूता सती साध्याभावोपस्थितिजनकतावच्छेदकीभूता या प्रकारता तस्या एव निवेशादित्यर्थः । **एकेति** । नित्यत्वोपस्थितिजनकतावच्छेदकीभूतासती या नित्यत्वाभावोपस्थितिजनकतावच्छेदकीभूता प्रकारता तदाश्रयीभूयेत्यर्थः । पदयोः=नित्याऽनित्यपदयोः । पदज्ञानस्यैवोपस्थितिजनकतया पदादेस्तथात्वाऽसम्भवादाह–**जनकतेति** । पदनिष्ठप्रकारताया उपस्थितिजनकतावच्छेदकतया तादृशावच्छेदकघटकत्वं पदादेरक्षतमितिभावः । पर्यवसितार्थमाह–**कोटिद्वयविति** । नित्यत्वोपस्थितिजनकतावच्छेदकीभूता सती नित्यत्वाभावोपस्थितिजनकतावच्छेदकीभूता या प्रकारता तदाश्रयत्वमित्यर्थः । न वा द्वयोः पदयोरिति पूर्वेणान्वयः ।

**अयंभावः**–पक्षपदस्य धर्मिमात्रपरत्वेऽपि न शब्दोऽनित्यो न वेति विप्रतिपत्तिघटकप्रत्येकवाक्येऽतिव्याप्तिः आकाशादिरूपयत् किञ्चिद्धर्मिविशेष्यकाऽनित्यपदप्रकारकनित्यपदप्रकारकसमूहालम्बनज्ञानस्याऽनित्यत्वाऽनित्यत्वाभावोपस्थितिजनकत्वेऽपि तादृशज्ञानीयतत्तत्पदप्रकारतायाः पदव्यक्तिभेदेन भिन्नतया कस्यामपि पदप्रकार-

❁ गादाधरी ❁

पर्यवसितोर्थः ! ननु विप्रतिपत्तिघटकपदानां प्रतिपाद्यत्वादिसंबन्धेन कोटि-द्वयसहचरिततया तेन सम्बन्धेन तद्वत्ताज्ञानस्य संशयहेतुत्वात्तेषां प्रत्येकं सन्देहजनककोटिद्वयोपस्थितिजनकतावच्छेदकविषयताश्रयत्वमक्षतमेवे -त्याह–तथात्वेपीति । विप्रतिपत्तिघटकपदानां प्रत्येकं तादृशविषयताश्रय-

❁ विवृतिः ❁

तायाम् अनित्यत्वोपस्थितिजनकतावच्छेदकत्वाऽनित्यत्वाभावोपस्थितिजनकतावच्छे-दकत्वयोर्द्वयोर्विरहेण लक्षणघटकीभूतायाः साध्योपस्थितिजनकतावच्छेदकत्वविशिष्ट-साध्याभावोपस्थितिजनकतावच्छेदकत्ववत्प्रकारतायाः तत्तत्पदव्यक्तावसत्त्वादिति ।

येनसम्बन्धेनेत्यादिदीधिति ग्रन्थावतारार्थशंकते **नन्विति**। विप्रतिपत्तिघटकपदानाम्=शब्दोऽनित्यो नवेत्याकारकविप्रतिपत्तिघटकनित्याऽनित्यपदानाम्। **प्रतिपाद्यत्वादिति।** स्वजन्यप्रतिपत्तीयविशेष्यता सम्बन्धेनेत्यर्थः।स्वंविप्रतिपत्तिघटकनिऽत्यानित्यपदद्वयम। आदिपदात् स्वप्रयोगात्मकव्यवहारजनकज्ञानविषयत्व सम्बन्धपरिग्रहः । एतेन-प्रत्येकपदजन्यप्रतिपत्तीयविषयतायाः प्रत्येकपदार्थनिष्ठतया तत्रोभयसाहचर्यविरहेणाऽसंगतिरित्यपास्तम्। पदद्वयजन्यप्रतिपत्तीयविषयतायाः पदार्थद्वयेऽसत्त्वादितिध्येयम्।।

**कोटिद्वयेति** । नित्यत्वानित्यत्ववद्वृत्तितयेत्यर्थः । तेनसम्बन्धेन=प्रतिपाद्यत्वसम्बन्धेन । **तद्वत्ताज्ञानस्येति** । पदद्वयप्रकारकज्ञानस्येत्यर्थः नच प्रतिपाद्यतासम्बन्धेनतादृश नित्यानित्यपदद्वयप्रकारकज्ञानस्य नित्याऽनित्यपदार्थविशेष्यकतया शब्दरूप प्रकृतपक्षविशेष्यताकत्वविरहेण कथंतादृशज्ञानस्यलक्षणघटकत्वमिति वाच्यम् । दीधितिकारमते पक्षपदस्य धर्मिमात्रपरतया निरुक्तपदार्थद्वयस्यापि धर्मिस्वरूपत्वेन तद्विशेष्यकज्ञानस्याऽपि लक्षणघटकत्वसम्भवात् ।

तेषाम्=विप्रतिपत्तिघटकपदानाम्। **प्रत्येकमिति**। पदद्वयत्वेनेत्यादिः। **अक्षतमेवेति । अयमभिप्रायः ।** शब्दपक्षकाऽनित्यत्वसाध्यकस्थले शब्दोऽनित्यो-नवेतिविप्रतिपत्तिघटकनित्यानित्यपदद्वयेऽतिव्याप्तिः, तादृशपदद्वयस्य प्रतिपाद्यत्व-सम्बन्धेन नित्यानित्यपदार्थद्वयवृत्तितया तेनसम्बन्धेनानित्यत्वतदभावसहचरित नि-त्याऽनित्यपदद्वयवत् नित्याऽनित्यपदार्थद्वयमित्याकारज्ञानस्य अनित्यत्वरूपसाध्य-संशयजनकतया साध्यसंशयजनकाऽनित्यत्वरूप साध्योपस्थितिजनकतावच्छेदकी-भूतासती तादृशसाध्याभावरूप नित्यत्वोपस्थितिजनकतावच्छेदकीभूता या तादृश-ज्ञानीयविप्रतिपत्तिघटकपदद्वयप्रकारता तदाश्रयत्वस्य प्रत्येकपदे सत्त्वादिति ।

विप्रतिपत्तिघटकपदानां=नित्याऽनित्यपदानाम् । **प्रत्येकेत्यादि**। साध्यीभूताऽ-नित्यत्वोपस्थितिजनकतावच्छेदकीभूतासती साध्याभावनित्यत्वोपस्थिति जनकताव

❀ दीधितिः ❀

**ज्ञानमुभयकोट्युपस्थापकं तेन सम्बन्धेन हेतुत्वेऽवश्यं सव्यभिचारत्वमिति ।**

❀ गादाधरी ❀

त्वेपीत्यर्थः । **अवश्यं सव्यभिचारत्वमिति** । तथाच लक्ष्यतया न तत्रातिव्याप्तिरिति भावः ।

नन्वनुपसंहारी पक्ष एवेति मूलमसङ्गतं सम्बन्धनिश्चयस्यैव स्मारकतया पक्षे साध्यस्य तदभावस्य च सन्दिग्धतया तदन्तर्भावेन हेतौ तत्सा-

❀ विवृतिः ❀

वच्छेदकप्रकारताश्रयत्वेऽपीत्यर्थः। **लक्ष्यतयेति** । नित्याऽनित्यपदद्वयस्य प्रतिपाद्यतासम्बन्धेन नित्याऽनित्यपदार्थद्वये वर्त्तमानतया तत्राऽनित्यत्वसाध्यस्यविरहेण निरुक्तपदद्वयस्यसाधारणतयालक्ष्यत्वमिष्टमेवेत्याशय इत्यास्तांविस्तरः ॥

सर्वमनित्यं मेयत्वादित्यादौ विश्वपक्षकाऽनुपसंहारिणो मेयत्वस्य हेतोरनुपसंहारित्वस्य विश्वमात्रे साध्यसन्देहदशायामेव सर्ववादिसिद्धतया सर्वत्राऽनित्यत्वस्य सन्देहे अनित्यत्वतदभाववद्वृत्तित्वमपि मेयत्वहेतौ सन्दिग्धमेव नतु तस्य तत्रनिश्चयुतिअनित्यत्वतदभावरूपकोटिद्वयोपस्थितिकारणस्य तादृशवृत्तित्वरूप सम्बन्धनिश्चयस्य विरहेण कोटिद्वयोपस्थित्यसम्भवात् साध्यसंशयजनककोद्वियोटपस्थितिजनकतावच्छेदकप्रकारताश्रयत्वस्य मेयत्वहेतौ दुरुपपादतया अनुपसंहारी पक्ष एवेत्यादिना निरुक्तमेयत्वहेतौ अनुपसंहारिणि लक्षणसमन्वयप्रदर्शनं मूलकृतोऽसंगतमित्यतः प्रकारान्तरेणानुपसंहारिणि लक्षणसमन्वयप्रदर्शनपरं दीधितिग्रन्थं व्याख्यातुं भूमिकामारचयति-**नन्वित्यादि** ।

सम्बन्धनिश्चयस्यैव = साध्यसाध्याभाववद्वृतित्वादिसम्बन्धनिश्चयस्यैव । एवकारात् तादृशसम्बन्धसंशयस्य सम्बन्धिस्मारकत्वव्यवच्छेदः । स्मारकतया = सम्बन्धिनः साध्यसाध्याभावादेरुपस्थितिजनकतया । पक्षे=साध्यधर्मिणि सर्वत्र । साध्यस्य=अनित्यत्वादेः । साध्याभावस्य च=नित्यत्वादेश्च । चोऽप्यर्थे । **सन्दिग्धतयेति** । यद्यपि साध्यसन्देहस्य साध्य साध्याभावप्रकारकतया साध्यस्यसन्दिग्धत्वे साध्याभावस्यापि सन्दिग्धत्वस्यावश्यकतया पृथक्त्वेन साध्याभावस्यसन्दिग्धत्वाभिधानमसंगतं तथापि साध्याभावत्वेनेव नित्यत्वत्वेनापि नित्यत्वरूपसाध्याभावस्य सन्दिग्धत्वसूचनाय पृथक्त्वेन तथाभिधानमन्यथा नित्यत्वत्वेन नित्यत्वनिश्चयदशायाम् अनुपसंहारित्वाभावस्येष्टापत्तिः स्यादितिध्येयम् ॥

❀ दीधितिः ❀

**अनुपसंहारी पक्ष एवेति। अनुपसंहारितादशायां साध्यतदभावसहितत्वनिर्णयाभावेऽप्युक्तक्रमेण वास्तवतत्सहचरितत्वमादायैव लक्षणसमन्वय इति भावः॥**

❀ गादाधरी ❀

मानाधिकरण्यस्य निश्चेतुमशक्यत्वेन हेतोः कोटिद्वयोपस्थापकत्वासम्भवादतोऽभिप्रायं व्याचष्टे–अनुपसंहारीति। अनुपसंहारितादशायाम्–पक्षे साध्यसन्देहदशायाम्, उक्तक्रमेण लक्षणसमन्वय इति योजना। यद्रूपविशिष्टवत्ताज्ञानं साध्यसन्देहजनकं वास्तवतद्रूपवत्त्वस्यैव लक्षणार्थतयोपस्थितत्वात्। सर्वमनित्यं प्रमेयत्वादित्यादौ पक्षे एव क्वचित्साध्यस्य क्वचित्साध्याभावस्य निश्चयदशायां नित्यत्वतदभावसहचरितप्रमेयत्वव-

❀ विवृतिः ❀

तदन्तर्भावेन=पक्षीभूतसर्वान्तर्भावेन। तत्सामानाधिकरण्यस्य=अनित्यत्वतदभावरूपसाध्यसाध्याभाववद्वृत्तित्वस्य-हेतौ=मेयत्वादौ। **कोटिद्वयविति** अनित्यत्वतदभावोपस्थितिजनकतावच्छेदकप्रकारताश्रयत्वस्यासम्भादित्यर्थः। अभिप्रायम्=मूलाभिप्रायम्। व्याचष्टे दीधितिकार इति शेषः। विश्वमात्रे साध्यसन्देहदशायामेवानुपसंहारित्वंसम्भवतीति सूचनायानुपसंहारित्वदशायामित्यस्य व्याख्यानमाह–**पक्ष इत्यादि।**

न केवलमनुपसंहारितादशायामित्यस्याग्रिमनिर्णयाभावेऽपीत्यनेन सम्बन्धः अपि तु उक्तक्रमेणेत्यादिनाऽपि तस्य सम्बन्ध इत्याह **उक्तक्रमेणेत्यादि।** फलीभूतसंशयधर्मितावच्छेदकता पर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपित यद्रूपावच्छिन्नप्रकारताशालिनिश्चयत्त्वेन साध्यसंशयजनकत्वं तद्रूपवत्त्वमित्यस्यलक्षणार्थं तायाः पूर्वममिहिततया न सर्वमनित्यं मेयत्वादित्त्यादावनुपसंहारिण्यव्याप्तिः, सर्वं अनित्यं मेयत्वादित्यादौ यदाकुत्रचित् पदार्थे अनित्यत्वंरूपसाध्यस्य कुत्रचिचाऽनित्यत्वाभावरूपसाध्याभावस्य निश्चयस्तदा मेयत्वस्य साध्यसाध्याभाववद्वृत्तित्वेन निश्चेतुं शक्यतया तत्कालीनाऽनित्यत्वतदभाववद्वृत्तिताविशिष्टमेयत्ववत् सर्वमित्याकारकनिश्चयप्रकारतावच्छेदकाऽनित्यत्वतदभाववद्वृत्तित्वविशिष्टमेयत्वत्वस्य सर्वत्र पक्षे साध्यसन्देहदशायामपि मेयत्वहेतौ सत्त्वेन लक्षणसमन्वयसम्भवादिति दीधितिकृतामाशयं स्फुटीकर्तुमाह **यद्रूपेति।** यद्रूपावच्छिन्नप्रकारताशालिनिश्चयइत्यर्थः॥

**उपस्थितत्वादिति।** पूर्वं लक्षणवाक्येनानुभूतस्यार्थस्य इदानीं स्मरणोदयेन स्मृतिविषयत्वं तत्राऽक्षतमित्याशयः। क्वचित्=सर्वत्वाश्रये कुत्रचित्। साध्यस्य-

❀ दीधितिः ❀

**केचित्तु व्याप्यादिधर्मेऽपि साधारण्यज्ञानात् संशयस्योदयात्**

❀ गादाधरी ❀

त्सर्वमित्याकारकज्ञानस्य सम्भवेन तद्विषयतावच्छेदकोभयसाहचर्यमादाय साध्यसन्देहदशायामपि लक्षणसमन्वयः। अनुपसंहारितोत्तीर्णतादशायां तदुभयसाहचर्यसत्त्वेपि तदानीं तादृशहेतोः साधारणतया न सामान्यलक्षणातिव्याप्तिरिति भावः।

❀ विवृतिः ❀

अनित्यत्वस्य। साध्याभावस्य=अनित्यत्वाभावस्य। इत्याकारकज्ञानस्य = इत्याकारकनिश्चयस्य। **तद्विषयत्वेति**। निरुक्तज्ञानीयप्रकारतावच्छेदकानित्यत्वतदभाववद्वृत्तित्वविशिष्टमेयत्वत्वमादायेत्यर्थः।

नन्वेवं पक्षादौ साध्यादेर्निश्चयदशायां साध्यतदभाववद्वृत्तित्वस्य मेयत्वहेतौ सत्त्वात् तदानीं निरुक्तमेयत्वहेतावतिव्याप्तिरत आहा**नुपसंहारितेति**। साध्यादेर्निश्चयदशायामित्यर्थः। **तदुभयेति**। मेयत्वादिहेतावित्यादिः। तदानीं=साध्यादेर्निश्चयदशायाम्। तादृशहेतोः=सर्वपक्षकाऽनित्यत्वसाध्यकमेयत्वहेतोः। **साधारणतयेति**। विपक्षे मेयत्वस्य सत्त्वादित्याशयः।

**न सामान्यलक्षणेति**। नच सर्वत्वसामानाधिकरण्यावगाहिकोटिद्वयप्रकारकज्ञानस्य विरोधानवगाहितया संशयत्वायोगात् सर्वत्वसामानाधिकरण्येन साध्यादेर्निश्चयदशायाञ्च सर्वत्वावच्छेद्यत्वावगाहिसाध्यादिप्रकारकज्ञानरूपसंशयाऽसम्भवेन यथोक्तलक्षणस्य च संशयजनकताघटिततया कथं पक्षादौ कुत्रचित् साध्यादेर्निश्चयदशायां सामान्यलक्षणसंगतिरिति वाच्यम्। कालान्तरीणसंशयस्य स्वरूपयोग्यनिरुक्तज्ञानमादाय लक्षणसमन्वयसम्भवात्।

**वस्तुतः**। सर्वत्व सामानाधिकरण्येन साध्यनिश्चयकाले तत्सामानाधिकरण्येन साध्याभावनिश्चयस्याऽप्रामाण्यज्ञानास्कन्दितस्य सत्त्वदशायां सर्वत्वावच्छेदेन साध्यप्रकारकस्य तत्सामानाधिकरण्येन साध्याभावप्रकारकस्य च संशयस्योदयसम्भवेन तादृशसंशयजनकतावन्निरुक्तज्ञानमादायैव सामान्यलक्षणसमन्वय इति ध्येयम्॥

**अतिव्याप्तिरिति**। नेति पूर्वेण सम्बन्धः। तथाच सर्वमनित्यं मेयत्वादित्यादौ सर्वत्वसामानाधिकरण्येन साध्यादेर्निश्चयदशायामपि मेयत्वस्य लक्ष्यतया तत्र लक्षणसंगतिर्न कामविक्षतिमावहतीति भावः॥

**दीधितौ व्याप्यादिधर्मेऽपीति**। वह्न्यादिसाध्यकधूमादिहेतावपीत्यर्थः।

❀ दीधितिः ❀

**तदज्ञाने च वस्तुतः साधारणज्ञानेऽप्यनुदयात्साधारण्यज्ञानं हेतु-**

❀ गादाधरी ❀

साधारण्यविषयकज्ञानत्वावच्छिन्नस्यैव संशयान्वयव्यतिरेकानुविधायित्वात्तेन रूपेण संशयहेतुता न तु तद्विषयकनिश्चयत्वेन तदवच्छिन्नस्या-

❀ विवृतिः ❀

साधारण्यज्ञानात्=वह्निवह्न्यभावादिमद्वृत्तित्वावच्छिन्नधूमादिप्रकारकज्ञानात् । संशयस्योदयात्=वह्न्यादिसंशयजननात् । तदज्ञाने च = साध्यसाध्याभाववद्वृत्तित्वावच्छिन्नहेतुप्रकारकज्ञानविरहदशायाञ्च । वस्तुतः=वस्तुगत्या । साधारणज्ञानेऽपि=साध्यादिमद्वृत्तित्वस्याज्ञायमानतादशायां येन केनाऽपि रूपेण साधारणहेतोर्ज्ञानेऽपि । **अनुदयादिति** । संशयस्येतिपूर्वेणान्वयः । साधारण्यज्ञानम् = तत्तदभाववद्वृत्तित्वावच्छिन्नप्रकारताकज्ञानम् । हेतुः=संशयकारणम् । तत्र = तादृशज्ञानात्मके संशयकारणे । निश्चयत्वम्=तादृशवृत्तित्वादिशंशयान्यतादृशवृत्तित्वादिप्रकारकज्ञानत्वम् । अकिञ्चित्करम्=संशयजनकतानवच्छेदकम् ।

**गौरवादिति** । संशयान्यत्वादिप्रवेशेनेत्यादिः । तथाच = संशयनिश्चयसाधारण साधारण्यज्ञानत्वेन संशयजनकत्वस्यावश्यकत्वे च । पक्ष एव=सर्वमनित्यं मेयत्वादित्यादौ सर्वत्र साध्यसन्देहदशायां सर्वरूपपक्षान्तर्भाव एव । **तत्संशयेति** । मेयत्वधर्मिकाऽनित्यत्वतदभाववद्वृत्तित्वसन्देहात्मकाऽनित्यत्वतदभाववद्वृत्तित्वज्ञानादित्यर्थः । तथात्वम्=निरुक्तज्ञानीयसाध्यादिमद्वृत्तित्वरूपाऽनुपसंहारित्वमादाय मेयत्वस्य हेतोः सव्यभिचारत्वम् ॥

टीकायां **साधारण्येति**। तत्तदभाववद्वृत्तित्वावच्छिन्नप्रकारकज्ञानत्वावच्छिन्नस्यैवेत्यर्थः । एवकारात् तादृशनिश्चयत्वावच्छिन्नस्य व्यवच्छेदः । **संशयेति** । तत्तदभाववद्वृत्तित्वरूपसाधारण्यज्ञानसत्त्वे तत्तदभावप्रकारकसंशयः, तादृशज्ञानस्याऽसत्त्वे च न तादृशसंशय इत्याकारकसंशयान्वयव्यतिरेकानुविधायित्वादित्यर्थः । **वस्तुतः** संशयव्यापकत्वे सति, संशयाभावव्यापकीभूताभावप्रतियोगित्वमेव संशयान्वयव्यतिरेकानुविधायित्वमितिध्येयम् ॥

तेन रूपेण=साधारण्यावच्छिन्नप्रकारताशालिज्ञानत्वेन रूपेण । नतु तद्विषयकनिश्चयत्वेन=नतु साधारण्यावच्छिन्नप्रकारताशालिनिश्चयत्वेन । संशयहेतुतेतिपूर्वेणान्वयः। कथन्तानिवृत्त्यर्थमाह–**तदवच्छिन्नस्येति** । साधारण्यावच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नस्येत्यर्थः **असिद्धत्वादिति** । साधारण्यनिश्चयस्याऽसत्त्वेऽपि हेतौ तत्तदभा-

❀ दीधितिः ❀

**स्तत्र निश्चयत्वमकिञ्चित्करं गौरवात्, तथाच पक्ष एव तत्संशयात्म-**

❀ गादाधरी ❀

**न्वयव्यतिरेकानुविधायिताया असिद्धत्वात्, तथाच साध्यसंशयकाले साहचर्यनिश्चयस्यासम्भवेऽपि तदंशे संशयात्मकसंशयजनकज्ञानमादाय लक्षणसमन्वयः सम्भवतीति केचिदाहुः, तन्मतमुपन्यस्यति-केचित्त्विति। वस्तुतः-वस्तुगत्या यत्साधारणं तज्ज्ञानेपि, तत्र-तद्धेतुतायाम्। अकिञ्चित्करम्-अनवच्छेदकम्। पक्ष एव-पक्षान्तर्भावेनैव। तत्संशयेति। साहचर्यांशे संशयेत्यर्थः। साहचर्यज्ञानात्-साहचर्यविशिष्टप्रकारकज्ञानात्। तथात्वं-सव्यभिचारत्वम्।**

**तच्चिन्त्यमिति। सम्बन्धांशे निश्चयात्मकं सम्बन्धिज्ञानं सम्बन्ध्य-**

❀ विवृतिः ❀

ववद्वृत्तित्वस्य संशयदशायां तत्तदभावादेः संशयजननात् साधारण्यनिश्चयस्याऽन्वयव्यतिरेकानुविधायित्वमसिद्धमेवेतिहृदयम्।

निरुक्तमते सर्वमनित्यं मेयत्वादित्यादौ सर्वत्र पक्षे साध्यसन्देहदशायामपि लक्षणसमन्वयं प्रदर्शयितुमाह **तथा चेति**। साधारण्यज्ञानमात्रस्यैव संशायकत्वे चेत्यर्थः। **साध्येति**। सर्वत्र पक्षे इत्यादिः। साहचर्यनिश्चयस्य=मेयत्वादौ अनित्यत्वतदभाववद्वृत्तित्वनिश्चयस्य। तदंशे=तादृशवृत्तित्वांशे। **संशयेति**। तादृशवृत्तित्वसंशयरूपं यत् अनित्यत्वसंशयजनकं ज्ञानं तदित्यर्थः।

**लक्षणसमन्वय इति**। तथाच अनित्यत्वतदभाववद्वृत्तित्ववत् तादृशवृत्तित्वाभाववत् प्रमेयत्ववत् सर्वमित्याकारकवृत्तित्वांशे संशयात्मकज्ञानीयाऽनित्यत्वतदभाववद्वृत्तित्वमादाय मेयत्वरूपाऽनुपसंहारिणिलक्षणसमन्वय इतिभावः।

**यत्साधारणमिति**। अज्ञायमानसाध्यादिमद्वृत्तित्वाश्रयीभूतमित्यर्थः। **अनवच्छेदकमिति**। संशयजनकतायाइत्यादिः। सम्बन्धिप्रकारकज्ञानस्यैव सम्बन्ध्यन्तरस्मारकतामते त्वाह-**साहचर्यविशिष्टेति**। साध्यादिमद्वृत्तित्वाद्यवच्छिन्नप्रकारताकज्ञानादित्यर्थः॥

दीधितिकृतां चिन्ताबीजं प्रदर्शयति **सम्बन्धांशे इति**। साध्यतदभाववद्वृत्तित्वादिरूपसम्बन्धांशे इत्यर्थः। निश्चयात्मकम्=तादृशवृत्तित्वादिसम्बन्धसंशयाद्यन्यतादृशवृत्तित्वादिसम्बन्धप्रकारकज्ञानात्मकम्। सम्बन्धिज्ञानम्= तादृशवृत्तित्वादिसम्बन्धविशिष्टहेत्वादिनिष्ठप्रकारताकनिश्चयः। सम्बन्ध्यन्तरस्मारकम्=सम्बन्ध्यन्तरस्य साध्यादेः साध्याभावादेश्च स्मृतिरूपोपस्थितिजनकम्।

❀ दीधितिः ❀

**कतदुभयसाहचर्य्यज्ञानाद्भवति तथात्वमिति भाव इत्याहुः, तच्चिन्त्यम्।**

❀ गादाधरी ❀

**न्तरस्मारकं शक्त्यादिसंशयात्पदार्थस्मरणाद्यनुत्पत्तेरिति साधारण्यसंशये कोट्युपस्थापकत्वं न सम्भवति, एवं च संशयसाधारणसहचारज्ञानत्वेन हेतुत्वे अप्रामाण्यनिश्चयानास्कन्दितत्वमेवावच्छेदककोटौ निवेशनीयं**

❀ विवृतिः ❀

कथमित्याकांक्षायामाह-**शक्त्यादीति**। घटादिपदं घटादिनिरूपितशक्तिरूप-सम्बन्धवन्नवेत्याकारकशक्तिसम्बन्धसंशयादित्यर्थः। अर्थस्य=घटादेः। **अनुत्पत्ते-रिति**। अन्यथा तादृशशक्तिसंशयादपि पदार्थस्मरणं स्यादित्याशयः। साधारण्यसंशये= साध्यादिमद्वृत्तित्वस्य संशये। कोट्युपस्थापकत्वं=साध्यादेः स्मारकत्वम्।

**न सम्भवतीति**। तथाच सर्वमनित्यं मेयत्वादित्यादौ सर्वत्र पक्षे साध्यसन्देह-दशायां अनित्यत्वतदभाववद्वृत्तिमेयत्ववत् सर्वमित्याकारकज्ञानस्य तादृशवृत्तित्वांशे संशयात्मकतया तेन चाऽनित्यत्वतदभावस्योपस्थित्यजननात् निरुक्तज्ञानस्य साध्य-संशयजनककोटिद्वयोपस्थितिजनकत्वेन धर्त्तुमशक्यतया न तादृशज्ञानमादाय सर्वत्र-साध्य सन्देहदशायामपि अनुपसंहारिणिलक्षणसमन्वयः सम्भवतीति भावः॥

ननु माभूत् साध्यादिमद्वृत्तित्वांशे संशयात्मकं ज्ञानं साध्यादिरूपकोटिद्वयोपस्थि-तिजनकम्, संशयजनकन्तु स्यादेव, कोटिद्वयोपस्थितेर्विशेषणज्ञानमुद्रयैव संशयज-नकत्वाभ्युपगमेन संशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मवत्त्वस्यैव लक्षणा-र्थतया सर्वत्र साध्यसन्देहदशायामपि साध्यादिमद्वृत्तित्वांशे संशयात्मकज्ञानमादाय सर्वमनित्यं मेयत्वादित्यादौ लक्षणसमन्वयः सम्भवत्येवेत्यत **आहैवमिति**।

केचित्तु, ननु यत्र सम्बन्धप्रकारकं ज्ञानं सम्बन्ध्यन्तरस्मारकं तत्रैव सम्बन्धांशे निश्चयात्मकं ज्ञानं तादृशस्मृतिजनकं वाच्यम्, यत्र तु सम्बन्धिप्रकारकं ज्ञानमेव सम्बन्ध्यन्तरस्मारकं तत्र न सम्बन्धांशे निश्चयात्मकं ज्ञानं तथा एवञ्च पदविशेष्यक-शक्त्यादिसम्बन्धप्रकारकज्ञानस्यैव पदार्थस्मारकतया शक्त्यादिसम्बन्धसंशयदशायां न पदार्थस्मरणापत्तिः, साधारण्यादिसम्बन्धविशिष्टधर्मप्रकारकज्ञानस्य कोटिद्वयोप-स्थापकत्वमते तु साधारण्यांशे संशयात्मकमपि ज्ञानं भवति कोटिद्वयोपस्थापकमत आहैवमित्यवतारयन्ति॥

**संशयेति**। संशये निश्चये च वर्तमानं यत् सहचारज्ञानत्वं तेन रूपेणेत्यर्थः। हेतुत्वे=साध्यादिसंशयजनकत्वे। अवच्छेदककोटौ=संशयजनकतावच्छेदककोटौ। **निवेशनीयमिति**। संशयनिश्चयसाधारणज्ञानत्वेन संशयजनकत्वाभ्युपगमे तादृश-

❀ गादाधरी ❀

तन्निश्चयत्वेन हेतुत्वे तु अप्रामाण्यज्ञानानास्कन्दितत्वमेव लाघवात् संशयात्मकसहचारज्ञानं न हेतुः। एवमनुपसंहारितादशायां संशयजनकज्ञानसंपादनप्रयासो विफलः तादृशज्ञानासत्त्वदशायां साधारणाव्याप्तिभयेन तादृशज्ञानस्योपलक्षणविधयैव लक्षणघटकत्वादित्यादि चिन्ताबीजमूहनीयम् ॥

❀ विवृतिः ❀

ज्ञानधर्मिकाऽप्रामाण्यसंशयदशायां संशयोत्पत्तेरावश्यकतया अप्रामाण्यज्ञानानास्कन्दितत्वं तादृशहेतुतायामवच्छेदकं न भवितुमर्हतीति भावः ॥

तन्निश्चयत्वेन=सहचारनिश्चयत्वेन । हेतुत्वे तु=संशयजनकत्वे तु । **अप्रामाण्यज्ञानानास्कन्दितत्वमिति**। अवच्छेदकमितिपूर्वेणान्वयः। एवकारात् अप्रामाण्यनिश्चयानास्कन्दितत्वस्य हेतुतावच्छेदकत्वव्यवच्छेदः। निश्चयत्वेन कारणत्वादिविवक्षणे निश्चयधर्मिकाऽप्रामाण्यसंशयसत्त्वदशायां निश्चयस्य कार्योत्पत्त्यजनकतया अप्रामाण्यज्ञानानास्कन्दितत्वमेव निश्चयनिष्ठकारणत्वादेरवच्छेदकं वाच्यमित्याशयः।

लाघवात् = कारणतावच्छेदकलाघवात् । न हेतुः=न संशयजनकम् । अपितु तादृशनिश्चय एव संशयहेतुरिति पूरणीयम् ॥

ननु साधारण्यज्ञानत्वेन संशयजनकत्वे अप्रामाण्यसंशयान्यत्वादिविशिष्टाऽप्रामाण्यज्ञानत्वावच्छिन्नाभावविशिष्टसाधारण्यज्ञानत्वेन अप्रमाण्यज्ञानत्वविशिष्टतादृशसंशयान्यत्वाद्यवच्छिन्नाभावविशिष्टसाधारण्यज्ञानत्वेन, साधारण्यज्ञानविशिष्टतादृशतादृशाऽप्रामाण्यज्ञानाभावत्वादिना च कारणताचतुष्टयकल्पनावत् साधारण्यनिश्चयत्वेन संशयजनकत्वमतेऽपि, अप्रामाण्यज्ञानाभावविशिष्टसंशयान्यसाधारण्यज्ञानत्वेन तादृशाभावविशिष्टसाधारण्यज्ञानत्वविशिष्टसंशयान्यत्वादिना एवं निश्चयघटकतत्तद्विशिष्टाऽप्रामाण्यज्ञानाभाववत्वादिना च चतुष्टयकारणतायाः कल्पनीयतया गौरवानवकाशात्संशयनिश्चयसाधारणसाधारण्यज्ञानत्वेनैव संशयजनकत्वं युक्तमिति यदि सूक्ष्मीक्ष्यते तदाप्याह **एवमिति** ।

अनुपसंहारितादशायाम् = सर्वत्र पक्षे साध्यादिसन्देहदशायाम् । **संशयेति** । साध्यसंशयजनककोटिद्वयोपस्थितिजनकज्ञानसम्पादनप्रयास इत्यर्थः । तादृशज्ञानाऽसत्त्वदशायाम्=संशयजनकसाध्यादिमद्वृत्तित्वज्ञानाऽसत्त्वदशायाम् । साधारणाव्याप्तिभयेन = धूमादिसाध्यकवह्न्यादिहेतावव्याप्तिभयेन । तादृशज्ञानस्य= साध्यसंशयजनककोटिद्वयोपस्थितिजनकज्ञानीयप्रकारत्वस्य । उपलक्षणविधयैव = प्रतियोगिव्यधिकरणतादृशप्रकारत्वाभावाभाववत्वेन ॥

केवलान्वयिसाध्यकानुपसंहारी अयं घट एतत्त्वादित्यसाधा-

❀ दीधितिः ❀

ननु केवलान्वयिसाध्यकानुपसंहारिणि साध्याभावाप्रसिद्ध्या तत्-

❀ गादाधरी ❀

केवलान्वयि इत्यादि मूलमवतारयति नन्वित्यादिना। अयं घट एत-त्वात् इत्यादिस्थले पक्षतादशायां संशयप्रयोजकनिश्चितसाध्यतदभावव-द्व्यावृत्तत्वस्य सत्त्वादव्याप्त्यप्रसक्तेस्तस्यालक्ष्यतयाऽव्याप्तिपरिहारोऽपि न संगच्छत इत्यतस्तत्र निश्चितसाध्यवद्वृत्तित्वं संपादयति एवमिति। हेतु भूतेदंत्ववति पूर्वं घटत्वग्रह एव तन्मूलकात् स घट इत्याकारकस्मरणात्

❀ विवृतिः ❀

**लक्षणघटत्वादिति**। तथाच यथा साधारणहेतौ कालान्तरीणसाध्यतदभावव-द्वृत्तित्वज्ञानीयप्रकारत्वमादाय तादृशज्ञानशून्यतादशायां लक्षणसमन्वयस्तथा सर्वमनित्यं मेयत्वादित्यादौ अनुपसंहारिण्यपि तादृशकालान्तरीणज्ञानीयप्रकारत्व-मादायैव लक्षणसमन्वयसम्भवे संशयनिश्चय साधारणसाधारण्यज्ञानत्वेन संशयज-नकत्वमुक्त्वा तत्र लक्षणसमन्वयप्रकारप्रदर्शनं विफलमित्याशयः॥

**दीधितौ केवलान्वयीति**। सर्वमभिधेयं प्रमेयत्वादित्यादौ अभिधेयत्वसा-ध्यकप्रमेयत्वरूपानुपसंहारिणीत्यर्थः। साध्याभावाप्रसिद्ध्या = अभिधेयत्वाभावाप्र-सिद्ध्या। तत्संशयाद्यभावात्=अभिधेयत्वसंशयादेरप्रसिद्धत्वात्। आदिपदात् साध्याभावविषयककोट्युपस्थितेरप्यप्रसिद्धत्वं सूचितम्॥

एवमित्यादिदीधितिमवतारयितुमाह टीकायां **अयं घट इत्यादि**। पक्षताद-शायाम्=इदन्त्वावच्छिन्ने घटत्वसंशयदशायाम्। **संशयेति**। संशयजनकतावच्छे-यकप्रकारतावच्छेदकस्य निश्चितघटत्वतदभाववद्घटान्तरपटादिव्यावृत्तत्वस्येत्यर्थः। **सत्त्वादिति**। इदन्त्व इत्यादिः। तस्या=निरुक्तैतत्वस्यहेतोः।

**न संगच्छत इति**। लक्षणगमनसम्भवे हेतोरलक्ष्यत्वाभिधानमसंगत-मित्याशयः। तत्र=हेतुभूतेदन्त्वे। निश्चितसाध्यवद्वृत्तित्वं = निश्चितघटत्ववद्वृत्तित्वम् **सम्पादयतीति**। तथा च पक्षे घटत्वनिश्चयसत्त्वे निश्चितघटत्ववद्व्यावृत्तत्वस्य पक्षमात्रवृत्तिहेतौ न सम्भवतीति हृदयम्॥

पूर्वम्=निरुक्तानुमानादतिपूर्वम् दिवसान्तरे वा। घटत्वग्रहएव = घटत्वग्रहस्य सत्त्व एव। तन्मूलकात् = घटत्वग्रहमूलकात् घटत्वग्रहकारणकादिति यावत्। **स घट इति**। इदन्त्वावच्छिन्नविशेष्यकघटत्वप्रकारकस्मरणादित्यर्थः। तद्घटत्वे-

रणश्च सद्धेतुरेव, तदज्ञानं दोषः पुरुषस्य।

❀ दीधितिः ❀

संशयाद्यभावादव्याप्तिः एवं यत्र स्थिरे धर्मिणि पूर्वं घटत्वं गृहीतमु-

❀ गादाधरी ❀

तद्घटत्वेनैव तद्घटभेदो गृहीतुं शक्यते नान्यथा प्रतियोगितावच्छेदकप्रकार-कप्रतियोगिज्ञानविरहादिति धर्मिणि पूर्वं घटत्वग्रहत्वस्यानुसरणम्। तद्घट-भिन्नोऽयमिति भ्रमपर्यन्तं तद्घटानवस्थाने तादृशो भ्रम एव न सम्भवति विशेष्यविरहादतः स्थिर इत्युक्तम्। तद्घटभिन्नोयमिति भ्रमदशायां इदं-

❀ विवृतिः ❀

नैव=तद्घटत्वावच्छिन्नप्रतियोगिताकत्वेनैव। गृहीतुं=ज्ञातुम्। **अन्यथेति**। पूर्वं धर्मिणि घटत्वग्रहमूलक 'सघट'इत्याकारकस्मरणानुदये इत्यर्थः।

**प्रतियोगितावच्छेदकेति**। न चेदन्त्वाच्छिन्नविशेष्यकघटत्वप्रकारकग्रहमूल-कस्य सघटइत्याकारकस्मरणस्य इदन्त्वावच्छिन्नविशेष्यकघटत्वप्रकारकतया तद्घट-भेदप्रतियोगितावच्छेदकतद्घटत्वप्रकारकज्ञानस्य पूर्वं विरहात् कथं तद्घटभिन्नो-ऽयमिति भ्रमः सम्भवतीति वाच्यम्। घटत्वस्याऽपि निरुक्तभेदप्रतियोगिता-वच्छेदकघटकतया तत्प्रकारकज्ञानस्याऽपि प्रतियोगितावच्छेदकप्रकारकप्रतियोगि-ज्ञानस्वरूपत्वात्, प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मप्रकारकज्ञानत्वेन हेतु-त्वस्याऽकल्पनात् इति ध्येयम्।

न च तथापि भेदज्ञाने अधिकरणज्ञानस्यैव जनकतया प्रतियोगितावच्छेदक प्रकारकप्रतियोगिज्ञानस्य तद्धेतुत्वाभिधानमयुक्तमितिवाच्यम्। सामान्यतोऽभाव-प्रकारकबुद्धौ प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य हेतुत्वमभ्युपेत्यैव तथाभिधानादितिवदन्ति॥

धर्मिणि=इदन्त्वावछिन्ने। **अनुसरणमिति**। तथाच पूर्वं घटत्वप्रकारेणे-दन्त्वावच्छिन्नस्याऽज्ञाने इदन्त्वावच्छिन्ने तद्घटभेदभ्रम एव न सम्भवति तद्घट-भेदबुद्धौ घटत्वादिप्रकारकज्ञानस्य जनकत्वात्, पूर्वं घटत्वग्रहे तु तद्ग्रहाधीनं तदाकारकस्मरणमेव तद्घटभेदभ्रमपूर्वक्षणे वर्त्तमानं सत् तादृशभेदभ्रममुत्पादयितुं शक्नोतीति निरुक्तस्मरणोदयार्थं इदन्त्वावच्छिन्नेऽतिपूर्वं घटत्वग्रहस्यानुसरणं दीधि-तिकृता कृतमिति भावः॥

धर्मिणि स्थिरत्वविशेषणोपादानं सार्थकयति **तद्घटेति**। तद्घटानवस्थाने= इदन्त्वावच्छिन्नायाः तद्घटव्यक्तेर्विनाशे। विशेष्यविरहात्=इदन्त्वावच्छिन्नव्यक्ते

❀ दीधितिः ❀

**त्तरदशायां तत्रैव दोषात् घटत्वाग्रहे तद्धटभिन्नोऽयमिति भ्रमे च घटत्व-**

❀ गादाधरी ❀

**त्वावच्छिन्ने घटत्वग्रहे इदंत्वस्य साध्यसहचरितत्वेन निश्चिततया असा-धारण्यं न शङ्कास्पदमपीत्याह–तत्रैव दोषाद्धटत्वाग्रह इति। तत्र—इदंत्वा-**

❀ विवृतिः ❀

विरहात्। **स्थिरइत्युक्तमिति**। अयं तद्घटभिन्न इत्याकारकभ्रमकाले यदि इदन्त्वावच्छिन्नस्य धर्मिणो विनाशः स्यात् तदा तादृशधर्मिणि निरुक्तभ्रमएव न सम्भवति विशेष्यतासम्बन्धेन भ्रमं प्रति तादात्म्येन विशेष्यस्य कार्यकालवृत्तितया हेतुत्वादतो धर्मिणो भ्रमपर्यन्तस्थायित्वसूचनाय स्थिरत्वस्य धर्मिविशेषणत्वं दीधितिकाराभिप्रेतमित्याशयः॥

भ्रमदशायाम्=भ्रमोत्पत्तिकाले। तेन भ्रमोत्तरकाले घटत्वनिश्चयसत्त्वेऽपि न क्षतिः। **इदन्त्वावच्छिन्ने इति**। धर्मिणीतिपूरणीयम्। घटत्वग्रहे=घटत्वप्रकारकनिश्चयसत्त्वे। इदन्त्वस्य=निरुक्तहेतोः। साध्यसहचरितत्वेन=घटत्ववद्वृत्तित्वेन। निश्चिततया=निश्चयीयप्रकारताश्रयतया। असाधारण्यम्=तत्कालावच्छेदेन घटत्वतदभावनिश्चयविषयीभूतधर्मिव्यावृत्तत्वम्।

न शंकास्पदमपि=न संशयीयप्रकारतावच्छेदकीभूतमपि। तादृशसाध्यादिमद्वृत्तित्वनिश्चयस्य निरुक्तव्यावृत्तत्वज्ञानसामान्ये एव प्रतिबन्धकतया तदंशे संशयात्मकपक्षधर्मताज्ञानोत्पादोऽपि न सम्भवतीतिहृदयम्॥

**तत्रैवेत्यादि**। नच तद्घटभिन्नोऽयमित्याकारकभ्रमजनक 'सघट'इत्याकारकस्मरणस्य इदन्त्वावच्छिन्नविशेष्यकघटत्वप्रकारकनिश्चयात्मकतया तस्यैव तादृशभ्रमोत्पत्तिकाले सत्त्वेन कथं भ्रमदशायां तत्र घटत्वस्याऽग्रहसम्भव इति वाच्यम्। निरुक्तभ्रमपूर्वतृतीयक्षणोत्पन्नतादृशस्मरणस्य भ्रमकाले विरहेण तदानीं तत्र घटत्वाऽग्रहसम्भवात्, तादृशस्मरणद्वितीयक्षणे कस्यचित् भ्रमजनकान्तरस्य विरहेण तदानीं तादृशभ्रमाऽनुत्पादेऽपि क्षत्यभावात्॥

अतएवोक्तस्मरणद्वितीयक्षणे प्रत्यक्षात्मकघटत्वग्रहवारणाय दोषादित्युक्तम् दीधितिकृता, दोषश्चात्र काचादिरूपो बोध्य इतिध्येयम्॥

**घटत्वाग्रहइतीति**। तद्धटभिन्नोऽयमित्याकारकभ्रमकालेयदि इदन्त्वावच्छिन्नविशेष्यकघटत्वप्रकारकनिश्चयो वर्त्तते तदा इदन्त्वहेतौ घटत्वादिरूपसाध्यनिश्चयविषयधर्मिव्यावृत्तत्वस्याऽपि निश्चयेन तस्यैव प्रतिबन्धकतया तदुत्तरं साध्यादिनिश्चयविषयधर्मिव्यावृत्तत्वज्ञानस्य तादृशहेतावुत्पादाऽसम्भवात् तत्राऽव्याप्तिशंकानुदयेन तस्या-

❀ गादाधरी ❀

**वच्छिन्ने । तद्घटभिन्नोयमिति भ्रमानुधावनं इदंत्वस्य निश्चितसाध्यवद्ध-र्मिव्यावृत्तत्वज्ञानसंपादनाय । तदा धर्मिणि घटत्वनिश्चयसत्त्वे एव संश-**

❀ विवृतिः ❀

ऽलक्ष्यतयाऽव्याप्तिपरिहारो मौलो न स्यादतो भ्रमकाले दोषात् घटत्वाऽग्रहेइत्युक्तम् दीधितिकारेणेत्याशयः ।

भ्रमानुधावनम्=तदानीं घटत्वाऽग्रहेऽपि भ्रमपर्यन्तानुसरणम् । **निश्चितेति ।** तादृशभ्रमोत्तरकालीनो यो भ्रमपूर्वकालीनं यत् 'सघट'इत्याकारकस्मरणं तत्जन्य-संस्कारजनितः पुनः स्मरणात्मकः 'सघट'इत्याकारकेदन्त्वावच्छिन्नविशेष्यकघटत्व-प्रकारकनिश्चयः तादृशसाध्यीभूतघटत्वनिश्चयविषयीभूतेदन्त्वावच्छिन्नधर्मिव्यावृत्तत्व-ज्ञानसम्पादनार्थमित्यर्थः । **इदन्तु तत्वम** । प्रथमं तद्घटभिन्नोऽयमित्याकारकभेद-भ्रमसत्त्वे तदुत्तरकाले 'सघट'इत्याकारकेदन्त्वावच्छिन्नविशेष्यकघटत्वप्रकारक-निश्चयसत्त्वेऽपि तदानीं तन्निश्चयविषयीभूतेदन्त्वावच्छिन्नधर्मिनिरूपितवृत्तित्वज्ञानं तादृशधर्मिनिष्ठेदन्त्वरूपहेतौ न सम्भवति, तद्व्यक्तित्वे तद्व्यक्तिनिरूपितवृत्तित्वग्रहे तद्व्यक्तौ तद्घटरूपतद्व्यक्तिभेदग्रहस्य प्रतिबन्धकत्वात् । तथाचोक्तभेदभ्रमसत्त्व एव भ्रमोत्तरकाले तादृशघटत्वनिश्चयविषयीभूतायां तद्व्यक्तौ तद्व्यक्तित्वस्य व्या-वृत्तत्वज्ञानं सम्भवति, अन्यथा पूर्वमुक्तभ्रमाऽसत्त्वे तद्व्यक्तौ घटत्वनिश्चयकाले तत्र तद्व्यक्तित्वस्य वृत्तित्वज्ञानमेव स्यादतस्तद्घटभिन्नोऽयमित्याकारकभ्रमानुधावनं दीधितिकृताकूतमिति ॥

ननु तद्घटभिन्नोयमित्याकारकभ्रमस्य तत्त्वघटत्वद्वयनिष्ठप्रतियोगितावच्छेदक-ताकभेदविषयकतया गौरवात् तद्व्यक्तिभिन्नोऽयमित्याकारकस्यैव भेदभ्रमस्यानु-धावनं युक्तम् , तादृशभ्रमस्य तद्व्यक्तित्वमात्रनिष्ठावच्छेदकताकभेदविषयकत्वेन लाघवसम्भवात्—नचोक्तभेदभ्रमपूर्वकालीनस्य 'सघट'इत्याकारकस्मरणस्य तद्व्यक्ति-त्वविशिष्टविषयकतया तस्यैव तद्व्यक्तिभिन्नोऽयमित्याकारकज्ञानप्रतिबन्धकत्वात् कथं तादृशस्मरणोत्तरं तद्व्यक्तिभिन्नोयमितिभ्रमस्य सम्भव इति वाच्यम् । उक्तस्मरणस्य तद्व्यक्तित्वांशे निर्धर्मितावच्छेदककतया तस्योक्तभ्रमेऽप्रतिबन्धकत्वात् ।

यद्यप्यनुभवबलात् निर्धर्मितावच्छेदककमपि तद्व्यक्तित्वविशिष्टविषयकं ज्ञानं तद्व्यक्तिभिन्नोऽयमित्याकारकज्ञाने प्रतिबन्धकमेवेत्युच्यते तदा लाघवानुरोधेन तद्व्यक्तिभिन्नोयमित्याकारकभेदभ्रमानुधावने तत्पूर्वं तादृशस्मरणानभ्युपगमेऽपि क्षतिविरहः अधिकरणज्ञानेनैव निरुक्तभेदभ्रमोत्पत्तिसम्भवादित्याशयेनाह **तदेति ।** निरुक्तभ्रमोत्तरकाले इत्यर्थः ।

## ❀ गादाधरी ❀

यप्रयोजकस्य तत्कालीनतत्पुरुषीयसाध्यनिश्चयविषयव्यावृत्तत्वस्येदंत्वेऽसत्त्वमतः केवलतद्व्यक्तित्वेन प्रतियोगिविधया तद्घटभानमुपेक्ष्य तद्घटत्वेन तद्घटभानानुसरणम्। तथा सति तादृशभ्रम एव तद्व्यक्तित्वविशिष्टे धर्मिणि घटत्वस्य निश्चयादिति तन्निष्ठेदंत्वे दर्शितसंशयप्रयोजकरूपाभावादव्याप्तिप्रसक्तिः। इदंत्वविशिष्टे घटसामान्यभेदभ्रमे इदंत्वे विपक्षवृत्तित्व-

## ❀ विवृतिः ❀

धर्मिणि = इदन्त्वरूपतद्व्यक्तित्वावच्छिन्ने। संशयप्रयोजकतावच्छेदकस्य = संशयजनकतावच्छेदकप्रकारतावच्छेदकस्य। **तत्कालीनेति**। तादृशभ्रमोत्तरकालीनतत्पुरुषीयघटत्वरूपसाध्यनिश्चयविषयीभूतधर्मिव्यावृत्तत्वस्येत्यर्थः। इदन्त्वे = तादृशहेतौ। अतः=भ्रमोत्तरकाले तद्व्यक्तित्वविशिष्टे घटत्वनिश्चयार्थम्। केवलतद्व्यक्तित्वेन=तद्व्यक्तित्वमात्रधर्मेण। प्रतियोगिविधया = प्रतियोगितावत्त्वेन। तद्घटभानं=भ्रमनिरूपिततद्घटविषयत्वम्।

ननु तद्घटभिन्नोऽयमित्याकारकभ्रमानुधावनेऽपि कथं तदुत्तरमिदन्त्वावच्छिन्ने घटत्वनिश्चय कथंवातद्व्यक्तिभिन्नोऽयमित्याकारक भ्रमोत्तरकाले न तादृशनिश्चय इत्यत आह **तथासतीति**। तद्व्यक्तिभिन्नोऽयमित्याकारकभ्रमानुधावनमुपेक्ष्य तद्घटभिन्नोयमित्याकारकभ्रमानुधावनेसतीत्यर्थः। तादृशभ्रमएव = तद्घटभिन्नोऽयमित्याकारकभ्रमस्य सत्त्वे एव। तद्व्यक्तित्वविशिष्टे धर्मिणि = तद्व्यक्तित्वरूपहेतुमति पक्षे। तन्निष्ठेदन्त्वेतद्व्यक्तिनिष्ठेदन्त्वरूपहेतौ॥

**दर्शितेति**। पूर्वप्रदर्शितस्य संशयजनकतावच्छेदकप्रकारतावच्छेदकीभूतस्य तत्कालीनतत्पुरुषीयघटत्वादिरूपसाध्यनिश्चयविषयीभूतधर्मिव्यावृत्तत्वधर्मस्याऽभावादित्यर्थः। **अव्याप्तिप्रसक्तिरिति**। तादृशभ्रमोत्तरकाले इत्यादिः। निश्चितघटत्वादिमद्वृत्तित्वस्यैवेदन्त्वे सत्त्वादिति भावः॥

**अयमभिप्रायः**। तद्व्यक्तिभिन्नोऽयमित्याकारकभेदभ्रमानुधावने तादृशभ्रमोत्तरकाले तद्व्यक्तित्वविशिष्टे घटत्वनिश्चय एव न सम्भवति, अनुभवबलात् तद्व्यक्तित्वविशिष्टविषयकबुद्धिसामान्यं प्रत्येव तद्व्यक्तौ तद्व्यक्तिभेदज्ञानस्य प्रतिबन्धकतायाः कल्पनीयतया निरुक्तभेदभ्रमस्यैव तद्व्यक्तित्वविशिष्टविषयकघटत्वनिश्चयप्रतिबन्धकत्वात्। तथाचोक्तभेदभ्रमोत्तरकाले तद्व्यक्तौ घटत्वस्यानिश्चये तदानीं तादृशनिश्चयाऽप्रसिद्ध्या तत्कालीनसाध्यादिनिश्चयविषयधर्मिव्यावृत्तत्वज्ञानाऽसम्भवेन यथा हेतौ असाधारण्यव्यवहारानुपपत्तिस्तथा निश्चितसाध्यादिमद्वृत्तित्वधर्मवत्त्वप्रयुक्तवास्तवतादृशव्यावृत्तत्वाभाववत्त्वेन तत्राऽव्याप्तेरप्यनुपपत्तिरितितादृशे-

❀ दीधितिः ❀

**निश्चयविषयीभवद्धर्मिव्यावृत्तत्वेन गृह्यमाणतया असाधारणे इदन्त्वेऽपि**

❀ गादाधरी ❀

निश्चयसम्भवादसाधारण्यं न शङ्कास्पदमपीति प्रतियोगिकोटौ तत्ताभाना-नुधावनम्। इदंत्वेपीति। अव्याप्तिरित्यनुषज्यते। वस्तुतस्तद्व्यावृत्तत्वाभा-

❀ विवृतिः ❀

दन्त्वस्यालक्ष्यत्वाभिधानं मूलकृतोऽसंगतं स्याद् अतः तद्धटत्वेन तद्धटभेदभ्रमानु-धावनम्। तथा सति, तादृशभेदभ्रमपूर्वकालीनेदन्त्वावच्छिन्नविशेष्यकघटत्वग्रह-मूलकस्य 'सघट'इत्यकारकस्मरणस्य तादृशभ्रमोत्तरकाले उत्पत्तौ बाधकाभावेन तदानीं सघटस्तद्व्यावृत्तमिदन्त्वमित्याकारकज्ञानमादाय हेतौ असाधारण्यव्यवहारप्रसंगः, किन्तु निरुक्तभ्रमात्मकव्यावृत्तत्वज्ञानसत्त्वेऽपि निश्चितघटत्वादिमद्वृत्तित्वस्यैवेदन्त्वे सत्त्वेन वास्तवतादृशघटत्वनिश्चयविषयधर्मिव्यावृत्तत्वस्य हेतौ विरहादव्याप्तिप्रसक्ति-रतोऽलक्ष्यतया इदन्त्वादावव्याप्तिपरिहारो मौलः समीचीन एवेति ॥

ननु तथापि लाघवात् घटभिन्नोयमित्येवं भ्रमानुधावनं कर्त्तव्यम्। नतुतद्धट-भिन्नोऽयमित्याकारकभ्रमानुसरणम्, निरुक्तभ्रमस्य तत्त्वघटत्वद्वयनिष्ठावच्छेदकता-कभेदावगाहित्वेन गौरवादत आह**दन्त्वविशिष्टे इति**। इदन्त्वरूपहेतुमतीत्यर्थः। **घटसामान्येति**। नच भ्रमपूर्वकालीनस्य 'सघट'इत्याकारकस्मरणस्य इदन्त्वा-वच्छिन्नविशेष्यकघटत्वप्रकारकनिश्चयात्मकतया तस्यैव घटसामान्यभेदभ्रमे प्रतिबन्धकत्वात् कथमुक्तभ्रमसम्भव इति वाच्यम्। घटसामान्यभेदपूर्वकाले तादृशस्मरणानभ्युपगमेऽपि क्षत्यभावस्योक्तत्वात् ॥

यद्यपीदन्त्वावच्छिन्ने घटसामान्यभेदभ्रमानुधावने तादृशभ्रमस्यैव तदु-त्तरकालीनेदन्त्वावच्छिन्नविशेष्यकघटत्वनिश्चयप्रतिबन्धकतया तदानीं घटत्व-निश्चयाऽसम्भवात् तत्कालीनघटत्वादिनिश्चयविषयधर्मिव्यावृत्तमिदन्त्वमित्या-कारकज्ञानस्याप्यसम्भवः, एवमिदन्त्वे तत्कालीनघटत्वनिश्चयविषयधर्मिवृत्तित्व-स्याऽसत्त्वेनाऽव्याप्तिप्रसक्तेरप्यनुपपत्तिस्तथापि निरुक्तदोषस्य स्फुटतया तमुपेक्ष्य दोषान्तरमाह **विपक्षेति**। घटसामान्यभेदवत्त्वेन निश्चिततद्व्यक्तिनिरूपितवृत्तित्व-निश्चयसम्भवादित्यर्थः।

असाधारण्यम्=तत्कालीनतत्पुरुषीयनिश्चितसाध्यतदभाववद्व्यावृत्तत्वम्। न शंकास्पदमिति ॥ इदन्त्वे घटभेदनिश्चयविषयीभूततद्व्यक्तिनिरूपितवृत्तित्वज्ञानस्य पूर्वोक्ताऽसाधारण्यग्रहप्रतिबन्धकतया असाधारण्यस्य शंकास्पदत्वाभावे निरुक्ते-

❀ दीधितिः ❀

**वस्तुतस्तद्व्यावृत्तत्वाभावेन तत्र लक्षणायोगादित्यतस्तयोर्लक्ष्यत्वाभा-**

❀ गादाधरी ❀

**वेन**—वास्तविकस्य साध्यनिश्चयविषयीभूतधर्मिव्यावृत्तत्वस्याभावेन। **लक्षणायोगादिति**। वास्तवसंशयप्रयोजकरूपवत्त्वस्य लक्षणघटकत्वादिति भावः। अत एवेत्यत्रेदंपदेन पूर्वाभिहितायाः सद्धेतुत्वाज्ञानस्य पुरुषदोष-

❀ विवृतिः ❀

दन्त्वहेतोरलक्ष्यत्वाभिधानमसंगतं स्यादतो हेतौ असाधारण्यव्यवहारप्रयोजकज्ञान-सम्पादनाय घटभिन्नोऽयमित्याकारकभ्रममुपेक्ष्य तद्घटभिन्नोऽयमित्याकारकभेद-भ्रमानुधावनं दीधितिकृता कृतमित्याशयः ॥

**इदमत्रावधेयम्**। तद्घटभिन्नोऽयमित्याकारकभ्रमोत्पत्त्यर्थं तत्पूर्वं पूर्व-कालीनेदन्त्वावच्छिन्नविशेष्यकघटत्वग्रहमूलकसघटइत्याकारकस्मरणानुधावनं निष्प्र-योजनकमेव, भेदज्ञाने प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याहेतुत्वात्, अन्यथा स्तम्भादौ पिशाचभेदग्रहानुदयप्रसंगः स्यात्, यद्यपि अभावबुद्धिसामान्यं प्रत्येव प्रतयोगितावच्छेदकविशिष्ट प्रतियोगिज्ञानस्य हेतुत्वं कथञ्चिद्वक्तुंशक्यते तादृशज्ञानविरहदशायाञ्चाभावज्ञानं नोत्पद्यत एवेत्युच्यते, तथापि प्रतियोगितावच्छे-दकतापर्याप्त्यधिकरणधर्मविशिष्टप्रतियोगिज्ञानस्यैवावश्यमभावबुद्धौ हेतुत्वंवाच्यम्, अन्यथा नीलत्वविशिष्टग्रहदशायामपि नीलघटभेदग्रहोत्पत्तेर्दुर्वारता स्यात्, तथाच 'स घट'इत्याकारकस्मरणस्य इदन्त्वावच्छिन्नविशेष्यकघटत्वप्रकारकज्ञानात्मकतया तद्घटभेदप्रतियोगितावच्छेदकतद्घटत्वप्रकारकज्ञानानात्मकत्वेन तादृशस्मरणोत्तरं तद्घटभेदग्रहोत्पत्तिरेव न सम्भवति, अतः पूर्वं इदन्त्वावच्छिन्ने घटत्वग्रहानुधावनं तादृशभ्रमोत्तरं सघटइत्याकारकस्मरणात्मकेदन्त्वावच्छिन्नविशेष्यक घटत्वप्रकारक-निश्चयसम्पादनार्थमेव, अन्यथा तदानीं अव्याप्तिप्रसक्तिः सुदूरपराहतास्यादिति तु सुधीभिर्विभावनीयमिति ॥

**साध्यनिश्चयेति**। तद्घटभिन्नोऽयमित्याकारकभ्रमोत्तरकाले इदन्त्वावच्छिन्ने-घटत्वनिश्चयसत्त्वेन वास्तव साध्यनिश्चयविषयीभूतधर्मिवृत्तित्वस्येदन्त्वे सत्त्वान्न-वास्तवतादृशधर्मिव्यावृत्तत्वं तदानीं हेतौ सम्भवतीति हृदयम्। भावमाह-**वास्तवेति**। संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्त्यधिकरणीभूतधर्मवत्त्वस्यैव लक्षणघटकत्वादित्यर्थ ॥

अयंघटएतत्त्वादित्यादिस्थले एतत्त्वादिहेतौसद्धेतुत्वाऽज्ञानकाले दुष्टत्वापत्तिंवार-यितुमाह-**मूलेतदज्ञानमिति**। सद्धेतुत्वाऽज्ञानमित्यर्थः। दोषः **पुरुषस्येति**।

**अत एवासाधारणप्रकरणसमयोरनित्यदोषत्वम्, अन्यथा सद्धेतौ**

❀ दीधितिः ❀

**वेन परिहरति केवलान्वयीति। अतएवेति। यत एव पुरुषदोषाधीनं**

❀ गादाधरी ❀

**तायाः परामर्शेऽसङ्गतिस्तस्या असाधारण्यादेरनित्यदोषतायामनुपष्टम्भक-त्वात् अतस्तत्परामर्शनीय व्याचष्टे-अत एवेति। पुरुषदोषाधीनं-पुरुषस्य हेतु-**

❀ विवृतिः ❀

दोष पदस्य भ्रमप्रयुक्तार्थे लाक्षणिकतया पुरुषीयभ्रम प्रयुक्तं तादृशाऽज्ञानमित्यर्थः पर्यवसितः। तथा च न हेतोरप्येतत्वादेः कदाचिदपि दुष्टत्वमित्याशयः।

ननु सर्वदैव सद्धेतोरदुष्टत्वे पक्षमात्रवृत्तिहेतोरसाधारणत्वेन विरोधिपरामर्शद्वय काले च सद्धेतोः सत्प्रतिपक्षितत्वेन व्यवहारोनस्यादित्यत **आहातएवेति**। सद्धेतुत्वाऽज्ञानस्य पुरुषदोषाधीनत्वादेवेत्यर्थः। **असाधारणेति**। असाधारणस्य पक्षमात्रे वर्तमानस्य हेतोः प्रकरण समस्य विरोधिपरामर्श कालीनपरामृष्यमाणस्यहेतोरित्यर्थः। अनित्यदोषत्वम्=कदाचित् सद्धेतोरपि निश्चितसाध्यतदभाववद्व्यावृत्तत्व भ्रम प्रयुक्तः साध्याभावव्याप्यवत्वा भ्रमप्रयुक्तश्च यः असाध्यारणत्वेन सत्प्रतिपक्षितत्वेन च व्यवहार स्तद्विषयत्वम्। तथाच सद्धेतौ कदाचित् तादृश भ्रमाधीनाऽसाधारणत्वादिना व्यवहारविषयत्वसत्वेऽपि वास्तवदोषवत्वाभावेन नकदाचिदपितस्य तस्य दुष्टत्वमित्याशयः॥

**अन्यथेति**। पुरुषदोषाधीनाऽसद्धेतुत्वज्ञानकालेऽपि हेतोर्दुष्टत्वाभ्युपगमे इत्यर्थः। सद्धेतौ=पर्वतादिपक्षक वह्न्यादिसाध्यक धूमादिहेतौबाधादिज्ञाने=पर्वतादौवह्न्यादेरभावग्रहकाले। हेत्वाभासाधिक्यापत्तिः=पञ्चहेत्वाभासातिरिक्ते हेत्वाभासत्व स्वीकारापत्तिः। बाधस्यनित्यदोषतया कालानवच्छिन्नत्वेन तादृशबाधभ्रमकाले दोषान्तरस्याऽसम्भवेन च तदानीं सद्धेतौ दुष्टत्वव्यवहारौपयिकस्य हेत्वाभासान्तरस्य स्वीकारापत्तिरिति भावः।

यत एवेत्यादि दीधितिमवतारयितुमाह टीकायां **अत एवेत्यत्रेदंपदेनेति**। अत एवेत्यादिमूल घटकीभूतेनेदंपदेनेत्यर्थः। पूर्वाभिहितायाः=मूलोक्तायाः। सद्धेतुत्वाऽज्ञानस्य=व्याप्ति पक्षधर्मत्वाद्यऽज्ञानस्य। पुरुषदोषतायाः=पुरुषस्य भ्रमाधीनतायाः। परामर्शे=इदं पद प्रतिपाद्यत्वेन ग्रहणे। असंगतिं स्फुटयति तस्या इति। सद्धेतुत्वाऽज्ञाननिष्ठपुरुषदोषाधीनतायाइत्यर्थः।

असाधारण्यादेः=निश्चितसाध्य तदभाववद्व्यावृत्तत्वादेः। आदिपदात्सत्प्रतिपक्षदोष परिग्रहः। अनित्यदोषतायाः=किञ्चित् कालावच्छिन्नदोषतायाः। अनुपस्टम्भकत्वात्=अप्रयोजकत्वात्। पुरुषदोषाधीनतायाः सद्धेतुत्वाऽज्ञाननिष्ठतया अनित्यदोषतायाश्चाऽसाधारण्यादिनिष्ठतयाद्वयोविभिन्नाधिकरणत्वेन प्रयोजक प्रयोज्य भावाऽसम्भव इति भावः।

बाधादिज्ञाने हेत्वाभासाधिक्यापत्तिः ।

❀ दीधितिः ❀

तद्दोषत्वम् अतएव तस्यानित्यदोषत्वम्, साहजिक (दोष) त्वे कादाचि-

❀ गादाधरी ❀

मति पक्षे च साध्यतदभावानिश्चयसाध्याभावव्याप्यवत्ताभ्रमाधीनम्। तद्दोषत्वं–तादृशहेतोरसाधारण्यसत्प्रतिपक्षरूपदोषत्वं, तस्य—असाधारण्यस्य सत्प्रतिपक्षस्य च, अनित्यदोषत्वं–दशाविशेषे एव हेतोर्दुष्टतासम्पादकत्वम्। साहजिकदोषत्वे–तादृशपुरुषदोषविरहदशायामपि हेतोर्दुष्टतासम्पादकत्वे कादाचित्केति। कदाचिदेव हेतोर्दुष्टतासम्पादकत्वम्। एतावतायं घट

❀ विवृतिः ❀

यद्वा अनुपष्टम्भकत्वात्=अननुमापकत्वात्। पुरुषदोषाधीनतायाः=सद्धेतुत्वाऽज्ञाने वर्तमानतया तत्राऽसाधारण्यादि निष्ठाऽनित्यदोषताया अभावसत्वात् पुरुषदोषाधीनताया अनित्यदोषत्वाऽव्याप्यतया तस्यास्तदनुमापकत्वं नसम्भवतीति हृदयम् ॥

तत्परामर्शनीयम्=इदं पद प्रतिपाद्यपदार्थम्। व्याचष्टेदीधितिकारइतिशेषः। तथाच इदं पदेन पुरुषदोषाधीनदोषतायाः परामर्शे नाऽसंगतिः तस्या अनित्यदोषतायाश्चाऽसाधारण्यादिमात्रनिष्ठतया द्वयोरेकाधिकरणत्वेन प्रयोजक प्रयोज्य भावस्य व्याप्य व्यापक भावस्यच सम्भव इत्याशयः।

**हेतुमतीत्यादि**। क्रमेण हेतुमति यः साध्यतदभावनिश्चय विषयत्वाभाव भ्रःम पक्षेच यः साध्याभाव व्याप्यवत्ता भ्रमस्तदधीनमित्यर्थः। तादृश हेतोः=निश्चितसाध्य तदभाववद्व्यावृत्तत्वेन गृह्यमाणस्य, साध्याभाव व्याप्य परामर्श कालीन परामृष्यमाणस्य-हेतोः। असाधारण्य सत्प्रतिपक्ष दोषत्वम्=निश्चितसाध्य तदभाववद्व्यावृत्तत्वज्ञानविषयत्वं साध्याभावव्याप्यवत्तापरामर्शकालीन परामर्श विषयत्वम्। दशाविशेषे एव=तादृश भ्रम-काले एव। दुष्टतासम्पादकम्=दुष्टत्व प्रयोजकम्। तत् कालावच्छिन्न तादृश भ्रम विषयत्वमेव हेतौ दुष्टतानुमापकमिति यावत्। **तादृश दोषेति**। पुरुषस्य तादृश भ्रमविरह-दशायां मपीत्यर्थः। हेतोर्दुष्टता सम्पादकत्वे=कालान्तरीय भ्रमविषयताया हेतौर्दुष्टता-प्रयोजकत्वे। कदाचिदेव=भ्रमकाले एव।

**दुष्टतासम्पादकत्वमिति**। तादृश पुरुषभ्रमविषयत्वस्येत्यादिः। तथा च पुरुषस्य भ्रमशून्य कालेऽपि कालान्तरीण भ्रमविषयतामादाय हेतोर्दुष्टत्वाभ्युपगमे भ्रम-काल एवतादृश भ्रमविषयताया हेतौदुष्टत्व प्रयोजकत्वमितिनियमानुपपत्तिरिति भावः।

एवञ्चेत्यादिदीधितिमवतारयितुमाह**एतावतेति**। पूर्वोक्त यत एवेत्यादि ग्रन्थेने-

❀ दीधितिः ❀

त्कत्वानुपपत्तेः, एवञ्च यत्र दोषताप्रयोजकं वस्तुतो हेतौ तत्रानित्यदोषत्वमपि, यत्र पुरुषस्य तद्भ्रमो न तत्र तदपि भ्रममात्राद्दुष्टत्वेऽतिप्रसङ्गमाह अन्यथेति केचित् ॥

❀ गादाधरी ❀

एतत्त्वादित्यादौ पुरुषदोषाधीनदुष्टत्वशंकायाऽनिवृत्तेस्तन्निवृत्त्यर्थम् अन्यथेत्यादिग्रन्थ सङ्गमनाय चाभिप्रायं पूरयति एवंचेति । दोषताप्रयोजकं-निश्चितसाध्यव्यावृत्तत्वादिकं, हेतौ तिष्ठतीति शेषः । तत्रानित्यदोषत्वमपि-तत्रैवानित्यदोषत्वम् । तत्-भ्रमो दोषताप्रयोजकरूपस्येति शेषः । अन्यथापदार्थं व्याचष्टे भ्रममात्रादिति । तादृशरूपभ्रमादित्यर्थः । केचिदित्यस्वरससूचनाय । स च निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य संशयप्रयोजकताया अग्रे खण्डनीयत्वात्, असाधारण्यादेः पुरुषदोषाधीनदोषताया: प्रकृ-

❀ विवृतिः ❀

त्यर्थः । **पुरुषेति** । पुरुषस्य यस्तद्घटभिन्नोयमित्यादि-भ्रमस्तत्प्रयुक्तायां दुष्टत्वशंकायामित्यर्थः । अनिवृत्तेः=सत्त्वात् । तन्निवृत्त्यर्थम्,=तादृशशंकानिरासार्थम् । अन्यथेत्यादिग्रन्थसंगमनाय=अन्यथा सद्धेतावित्यादिमूलग्रन्थसंगमनाय । अभिप्रायम्=मूलाभिप्रायम् । पूरयति दीधितिकार इति शेषः ।

**निश्चितेति** । भ्रमकालेऽपीत्यादिः । हेतौ=एतत्त्वादौ । तत्रैव=तादृशहेतावेव । एवकारात् तादृशव्यावृत्तत्वादेरभाववतो दुष्टताव्यवच्छेदः । अनित्यदोषत्वम्=अनित्यदोषवत्त्वम् । तथाचायंघटएतत्त्वादित्यादौ तद्घटभिन्नोऽयमित्याकारकभ्रमोत्तरकाले स घट इत्याकारकनिश्चयसत्त्वदशायाम् एतत्त्वादौ निश्चितसाध्यतदभाववद्व्यावृत्तत्वज्ञानसम्भवेऽपि निश्चितसाध्यवद्वृत्तित्वस्यैव सत्त्वेन तादृशव्यावृत्तत्वं तत्र न तिष्ठतीतिन भ्रमकालेऽपि तादृशहेतोर्दुष्टत्वमितिभावः ।

**दोषतेति** । निश्चितसाध्यतदभाववद्व्यावृत्तत्वादेरित्यर्थः । तथाच यत्र हेतौ-निश्चितसाध्यतदभाववद्व्यावृत्तत्वादेर्भ्रममात्रं वर्त्तते नतु तादृशव्यावृत्तत्वादिकं तत्र तिष्ठति तत्र हेतौ अनित्यदोषवत्वमपि न स्वीकरणीयम् यत्र तु भ्रमविषयीभूतधर्मस्य हेतौ वर्त्तमानत्वं तत्रैव हेतौ अनित्यदोषत्वमितिदीधितिग्रन्थस्य तात्पर्यमित्याशयः ।

तादृशरूपभ्रमात्=बाधादिरूपभ्रमात् । अस्वरसं व्याचष्टे-**सचेति** । अस्वरसश्चेत्यर्थः । अग्रे=परे त्वित्यादिकल्पे । **खण्डनीयत्वादिति** । तथाच साध्यतदभाववद्व्यावृत्तत्वस्यैव संशयप्रयोजकतया तस्यैवाऽसाधारण्यस्वरूपत्वेन नित्यदोषत्वात्तत्र पुरुषदोषाधीनदोषत्वं न सम्भवतीति हृदयम् ॥

❀ दीधितिः ❀

**परे तु अयं घट एतत्त्वादित्यादावव्याप्तिः साध्यसन्देहप्रयोजकं हि**

❀ गादाधरी ❀

तानुपयोगितयामूलानुक्ततयाचातएवेत्यत्रेदंपदेनतत्परार्शे संदर्भविरोधाच्च ॥

तस्य–असाधारणस्य, धर्मस्य–वृत्तिमतः। ननु तादृशहेतोः संशयप्रयोजकरूपशून्यत्वेऽसाधारण्यमेव कथं बीजाभावादित्यत आह असाधारण्यं त्विति। अतः–इत्याशङ्कातः। ननु अयं घट एतत्त्वात् इत्यादेरिव

❀ विवृतिः ❀

ननु निश्चितसाध्यतदभाववद्व्यावृत्तत्वमेवाऽसाधारण्यमन्यथा शब्दोऽनित्यःशब्दत्वादित्यादौ घटादावनित्यत्वनिश्चयदशायां शब्दत्वादेरसाधारण्यं न स्यात्तदानीं शब्दत्वमसाधारणमित्याकारकव्यवहारस्य सर्वसिद्धत्वेन इष्टापत्तेरसम्भवात्। यद्यपि परेत्वित्यादिकल्पे गगनादेरेवाऽसाधारण्यं युक्त्या व्यवस्थापितं तथापि तस्य मतान्तरत्वेन मूलकारसम्मतत्वे दीधितिकारसम्मतत्वे च प्रमाणाभाव इति यदि ब्रूयात् तदाप्याहाऽ**साधारण्यादेरिति**। आदिपदात्सत्प्रतिपक्षस्यपरिग्रहः। पुरुषदोषाधीनदोषतायाः=पुरुषीय भ्रमाधीनदोषतायाः। प्रकृतानुपयोगितया=अयं घट एतत्त्वादित्यादावेतत्त्वादेरलक्ष्यत्वाभिधानानुपयोगितया ॥

ननु परम्परया तादृशाभिधानोपयोगित्वं तत्राऽस्त्येवेत्यतआह–**मूलेति**। तथाचाऽसाधारण्यादेःपुरुषदोषाधीनदोषत्वं मूलकृता नाभिहितमिति अतएवेत्यत्रेदंपदेन तस्य परामर्श एव न सम्भवतीति भावः। **सन्दर्भविरोधादिति**। मूलानभिहितवस्तुन इदं पदेन परामर्शेमूलग्रन्थविरोध इति हृदयम् ॥

अयं घट एतत्त्वादित्यादिमूलग्रन्थम् अन्यथा व्याचक्षाणानां मतं दीधितिकृता प्रदर्शितं व्याख्यातुमारभते **तस्येत्यादि**। वस्तुमात्रस्य धर्मत्वे गगनादेरेकस्यैव साध्यतदभाववद्व्यावृत्तत्वसम्भवात् नह्येकस्येत्यादिकमसंगतं स्यादतो धर्मपदस्य वृत्तिमदर्थकत्वं विवृणोति **वृत्तिमतइति**। तथाच वृत्तिमतएतत्त्वादेर्न कस्यापि साध्यतदभाववद्व्यावृत्तत्वमित्याशयः। तादृशहेतोः=इदन्त्वावच्छिन्नपक्षकघटत्वादिसाध्यकएतत्त्वादिहेतोः। **संशयेति**। साध्यतदभाववद्व्यावृत्तत्वस्याभाववत्वेइत्यर्थः। **असाधारण्यमेवेति**। मूलाभिहितमित्यादिः। **असाधारण्यंत्विति**। तथाच पक्षमात्रवृत्तित्वमादायैव एतत्त्वादेरसाधारणत्वं मूलकृताभिहितमितिभावः। **इत्याशंकतइति**। साध्यतदभाववद्व्यावृत्तत्वं यद्यसाधारण्यं तदा तस्यैतत्त्वादिहेतावसत्त्वात् अव्याप्तिरित्याशंक्य तस्याऽलक्ष्यतया अव्याप्तिं परिहरति मूले अयंघट इत्यादीति हृदयम् ॥

❀ दीधितिः ❀

**तस्य साध्यतदभाववद्व्यावृत्तत्वं न ह्येकस्य धर्मस्य तदुभयव्यावृत्तत्वं सम्भवति, असाधारण्यन्तु तस्य पक्षमात्रवृत्तितया अतस्तस्यालक्ष्यत-**

❀ गादाधरी ❀

तुल्ययुक्त्या शब्दोऽनित्यः शब्दत्वादित्यादेरपि सद्धेतुत्वमेव, शब्दो नित्यः शब्दत्वादित्यादिकमपि विरुद्धमेव, न त्वसाधारणं साध्यतदभाववद्व्यावृत्तत्वाभावादसाधारणहेत्वाभासस्यैवाप्रसिद्धरत आह एवं चेति। अवृत्तोति। वृत्तिमतः साध्यतदभाववद्व्यावृत्तत्वासम्भवादिति भावः। ननु पक्षधर्मताज्ञानविरहादेव गगनादिहेतुकस्थले अनुमित्यनुत्पादनिर्वाहादसाधारण्यज्ञानस्यानुमित्यनुत्पादप्रयोजकत्वमेव नास्तीति कथं तस्य हेत्वाभासत्वमित्यत आह–पक्षवृत्तित्वेति। असङ्करः–इतरानधीनानुमित्यनुत्पा-

❀ विवृतिः ❀

एवञ्चेत्यादिदीधितिमवतारयितुं शंकते **नन्विति**। **अयमाशयः**। अयं घट एतत्त्वादित्यादिस्थले यथा एतत्त्वादिहेतौ घटत्वतदभाववद्व्यावृत्तत्वविरहादेतत्त्वादिकं नासाधारणं तथा शब्दोऽनित्यःशब्दत्वादित्यत्राऽपि अनित्यत्वतदभाववद्व्यावृत्तत्वस्य शब्दत्वे विरहात् शब्दत्वमप्यसाधारणं न स्यात् किन्त्वनित्यत्वव्याप्यतयासद्धेतुत्वमेव स्यात् एवं शब्दो नित्यःशब्दत्वादित्यत्रापि तुल्ययुक्त्या नित्यत्वतदभाववद्व्यावृत्तत्वस्यशब्दत्वे विरहात्तस्याऽसाधारणानात्मकत्वे विरुद्धत्वमेव स्यात् तथाच कस्यापि वृत्तिमतः असाधारण्यं न सम्भवति वृत्तिमतो धर्मस्य साध्यवद्व्यावृत्तत्वे साध्याभाववद्व्यावृत्तत्वस्य, साध्याभाववद्व्यावृत्तत्वे च साध्यवद्व्यावृत्तत्वस्यासम्भवात् उभयव्यावृत्तत्वं न कुत्राऽपीत्यवृत्तेरेव गगनादेरसाधारण्यमेतन्मतसिद्धमित्येवं प्रदर्शयितुमेवञ्चेत्यादिकं दीधितिकृताभिहितमिति ॥

**पक्षधर्मतेति**। साध्यव्याप्यगगनादिमत्तानिश्चयाभावादेवेत्यर्थः। **गगनादीति**। आदिना आत्मादिपरिग्रहः। **अनुमितीति**। परामर्शरूपकारणाभावेनानुमित्युत्पाद एव नसम्भवतीति हृदयम्।

असाधारण्यज्ञानस्य=साध्यतदभाववद्व्यावृत्तत्वज्ञानस्य। **अनुमित्येति**। अनुमितिप्रतिबन्धकत्वमेवेत्यर्थः। तस्य=साध्यतदभाववद्व्यावृत्तत्वरूपाऽसाधारण्यस्य। **हेत्वाभासत्वमिति**। अनुमितितत्कारणान्यतरविरोधिन एव हेत्वाभासत्वादित्याशयः **पक्षवृत्तित्वेति**। तथाच अयं वह्निमान् गगनादित्यादौ गगनादिहेतोरवृत्तितयावह्निव्याप्यगगनवानयमित्याकारकज्ञानासम्भवेन तादृशज्ञानरूपपरामर्शाभावाधीनएवानुमित्यनुत्पादो न तु तादृशगगनादिहेतौवह्नितदभाववद्व्यावृत्तत्वज्ञानाधीनः

❀ दीधितिः ❀

**योत्तरयति अयं घट इत्यादि। एवञ्चावृत्तिगगनादिकमेवासाधारणम्।**

❀ गादाधरी ❀

**दप्रयोजकज्ञानविषयत्वम्। ननु उभयव्यावृत्तत्वस्य वृत्तिमत्त्वविरुद्धतया तदुभयज्ञानस्य नैकदा सम्भवः, मिथः प्रतिबन्धकत्वात्, न चैवं पक्षधर्म-**

❀ विवृतिः ❀

एवञ्च साध्यतदभाववद्व्यावृत्तत्वे अनुमितितत्कारणान्यतरप्रतिबन्धकज्ञानविषयत्वा-भावात् तस्य हेत्वाभासत्वमेवनसम्भवतीत्यतोगगनादौपक्षवृत्तित्वभ्रमदशायामित्युक्तं-दीधितिकृतेतिभावः ॥

**इदन्तु चिन्त्यते।** परामर्शाभावस्य यथा अनुमितिकारणभावरूपत्वं तथा साध्यतदभाववद्व्यावृत्तत्वज्ञानाभावस्यापि अनुमितिकारणतया तदभावस्य साध्य-तदभाववद्व्यावृत्तत्वज्ञानस्य अनुमितिकारणाऽभावरूपत्वे बाधकाभावेन विनिगम-नाविरहात् अनुमित्यनुत्पादप्रयोजकत्वम् असाधारण्यज्ञानस्याप्यक्षतमेव किन्तु गगनादौ यदि पक्षावृत्तित्वज्ञानं सम्भवति तदा गगननिष्ठपक्षावृत्तित्वस्य स्वरूपा-सिद्धित्वेन तस्यैव गगनादिहेतुकस्थले दोषत्वसम्भवात् गगनादौ साध्यतदभावव-द्व्यावृत्तत्वस्य दोषत्वाभ्युपगमो निरर्थक इत्याशयेनपक्षवृत्तित्वज्ञानासम्भवप्रदर्शनाय गगनादौ पक्षवृत्तित्वभ्रमोऽभिहितः, आसाधारण्यस्यासंकर इत्यस्य स्वरूपासिद्ध्यन-धीनानुमित्यनुत्पादप्रयोजकज्ञानविषयत्वमसाधारण्यस्य इत्यर्थकरणेऽपि न क्षतिरिति ॥

**इतरेति।** साध्यतदभाववद्व्यावृत्तत्वज्ञानेतरपरामर्शाभावानधीनानुमित्यनुत्पा-दप्रयोजकज्ञानविषयत्वमित्यर्थः। साधारण्यस्येति पूर्वेणान्वयः। न चोभयेत्यादिकमव-तारायितुं शंकते-**नन्विति**। उभयव्यावृत्तत्वस्य=साध्यतदभाववद्व्यावृत्तत्त्वस्य। वृत्तिमत्त्वविरुद्धतया = किंचिन्निरूपितवृत्तित्वाधिकरणाऽवर्त्तमानतया। तदुभयज्ञा-नस्य = गगनादिधर्मिकसाध्यतदभाववद्व्यावृत्तत्वविषयकस्य तद्धर्मिकपक्षवृत्तित्व-विषयकसमूहालम्बनज्ञानस्य। **नैकदेति**। नैकात्मनीतिपूरणीयम्। तेन विभिन्ना-त्मन्येकदा तादृशज्ञानयोः सम्भवेऽपि न क्षतिः ॥

**मिथःप्रतिबन्धकत्त्वादिति।** गगनादिधर्मिकसाध्यतदभाववद्व्यावृत्तत्वज्ञाने, तद्धर्मिकपक्षवृत्तित्वज्ञानस्य, गगनादिधर्मिकपक्षवृत्तित्वज्ञाने च तद्धर्मिकसाध्यतदभा-ववद्व्यावृत्तत्वज्ञानस्य प्रतिबन्धकतया यथैकधर्मिकवह्निवह्न्यभावविषयकं समूहाल-म्बनमपि ज्ञानमनाहार्य्यात्मकं नोत्पत्स्यते तथा गगनादिधर्मिकतादृशव्यावृत्तत्वपक्ष-वृत्तित्वविषयकं समूहालम्बनमपि ज्ञानं नोत्पद्यत एव कार्य्यकालवृत्तितयैव परस्पर-ज्ञानस्य प्रतिबन्धकत्वादिति कथं गगनादौ पक्षवृत्तित्वभ्रमदशायां तत्र साध्यतद-भाववद्व्यावृत्तत्वज्ञानं सम्भवतीत्यभिप्रायः ॥

❀ दीधितिः ❀

**पक्षवृत्तित्वभ्रमदशायाञ्चासाधारण्यस्यासङ्करः। न चोभयव्यावृत्तत्ववृ-**

❀ गादाधरी ❀

ताज्ञानाभावसंपादकतयैव तस्य हेत्वाभासत्वं निष्प्रत्यूहम्, तथासत्यसिद्धावन्तर्भावेन सव्यभिचारप्रभेदत्वानुपपत्तेरत आह-न चोभयेति। स्वरूपतो विरोधः-परस्पराभावव्याप्यत्वाविशेषितयोः परस्परज्ञानप्रतिबन्धकीभूतज्ञानविषयत्वं, तस्य वास्तवविरुद्धविषयकस्यापि ज्ञानस्य विरोधाविषयकस्याप्रतिबन्धकत्वादिति भावः॥

❀ विवृतिः ❀

गगनादौ साध्यतदभाववद्व्यावृत्तत्वज्ञानकाले यदि तद्धर्मिकपक्षवृत्तित्वज्ञानमेव न सम्भवतितदाताद्दशव्यावृत्तत्वस्य पक्षधर्मताज्ञानप्रतिबन्धकज्ञानविषयतयैवानुमितितत्कारणान्यतरविरोधित्वसम्भवेन तत्र हेत्वाभासत्वं निर्विवादमेवेत्याशयेन तटस्थः शंकतनचैव**मिति** एवं=एकधर्मिकसाध्यतदभावयद्व्यावृतत्तत्वपक्षवृत्तित्वज्ञानयोः परस्परप्रतिबन्धकत्वे। पक्षधर्म**तेति**। गगनादिधर्मिकपक्षनिरूपितवृत्तित्वज्ञानप्रतिबन्धकज्ञानविषयतयैवेत्यर्थः। तस्य=गगनादिनिष्ठसाध्यतदभाववद्व्यवृत्तत्वस्य। निष्प्रत्यू**हमिति**। तथाच प्रक्षालनाद्धीतिन्यायेन गगनादौ पक्षवृत्तित्वभ्रमानुधावनं न कर्त्तव्यमित्याशयः।

समाधत्ते-**तथासतीति**। पक्षधर्मताज्ञानविरोधित्वेन साध्यतदभाववद्व्यावृत्तत्वस्य हेत्वाभासत्वाभ्युपगमे सतीत्यर्थः। असिद्धावन्तर्भावेन=असिद्धिरूपहेत्वाभासस्वरूपत्वेन। तस्येति पूर्वेणान्वयः। साध्यव्याप्यहेतुधर्मिकपक्षवृत्तित्वज्ञानविरोधिन एवासिद्धिस्वरूपत्वादिति भावः। **सव्यभिचारेति**। साध्यतदभाववद्व्यावृत्तत्वस्य पक्षधर्मताज्ञानविरोधित्वेनासिद्धिस्वरूपतया तस्य सव्यभिचारमध्ये प्रवेश एव नस्यादिति हृदयम्।

**परस्परेति**। साध्यतदभाववद्व्यावृत्तत्वाभावव्याप्यत्वाविशेषितवृत्तिमत्त्व, वृत्तिमत्त्वाभावव्याप्यत्वाविशेषितसाध्यतदभाववद्व्यावृत्तत्वयोरित्यर्थः। **परस्परज्ञानेति**। साध्यतदभाववद्व्यावृत्तत्वज्ञानप्रतिबन्धकज्ञानविषयत्वं वृत्तिमत्वे, वृत्तिमत्त्वज्ञानप्रतिप्रन्धकज्ञानविषयत्वं च साध्यतदभाववद्व्यावृत्तत्वे न चेत्यर्थः। तस्य=साध्यतदभाववद्व्यावृत्तत्वस्य, वृत्तिमत्वस्य च। **वास्तवेति**। परस्पराधिकरणे अवर्त्तमानवस्तुविषयकस्यापीत्यर्थः। विरोधाविषयकस्य=परस्पराभावव्याप्यत्वाविषयकस्य॥

**अप्रतिबन्धकत्वादिति**। यथावह्निजलयोः परस्पराधिकरणावृत्तित्वेन परस्प-

❀ दीधितिः ❀

**त्तिमत्त्वयोः स्वरूपतो विरोधः, निश्चितसाध्यतदभाववद्व्यावृत्तत्वञ्च न सन्देहप्रयोजकम्, तथा सति तुल्यन्यायतया निश्चितसाध्यतदभाव-**

❀ गादाधरी ❀

ननु निश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपसंशयप्रयोजकधर्मस्योक्तहेतौ सत्त्वात्कथं तत्राव्याप्तिशङ्का कथं वाऽलक्ष्यताभ्युपगमेन तत्परिहार इत्यत आह निश्चितेति। साध्यतदभावनिश्चयविषयीभूतधर्मिव्यावृत्तत्वं न साध्यसन्देहजनकतावच्छेदकप्रकारतावच्छेदकमित्यर्थः। निश्चितसाध्यतदभाववद्वृत्तित्वस्य—साध्यतदभावनिश्चयविषयवृत्तित्वस्य, तथात्वे-संशयप्रयो-

❀ विवृतिः ❀

रविरुद्धत्वेऽपि एकधर्मिणि एकदा वह्निज्ञानं जलज्ञानं च भवति नतु वह्निज्ञानं जलज्ञाने जलज्ञानं च वह्निज्ञाने प्रतिबन्धकं, यदातु वह्न्यभावव्याप्यत्वेन जलावगाहिज्ञानं जलाभावव्याप्यत्वेन च वह्न्यवगाहिज्ञानं सम्भवति तदैव वह्निज्ञाने वह्न्यभावव्याप्यत्वेन जलज्ञानं जलज्ञाने च जलाभावव्याप्यत्वेन वह्निज्ञानं प्रतिबन्धकं भवति तथा साध्यादिमद्व्यावृत्तत्व वृत्तिमत्त्वयोरेकाधिकरणाऽसम्भवेन तयोःपरस्परविरुद्धत्वेऽपि परस्पराभावव्याप्यत्वेनानवगाहिवृत्तिमत्त्वतादृशव्यावृत्तत्वयोर्ज्ञानं न परस्परज्ञानप्रतिबन्धकमित्येकधर्मिणि गगनादौ पक्षवृत्तित्वावगाहितादृशव्यावृत्तत्वाद्यवगाहिं च ज्ञानं सम्भवत्येवेतिभावः ॥

निश्चितेत्यादिदीधितिमवतारयति **नन्वित्यादि**। निश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपस्य संशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मस्येत्यर्थः। उक्तहेतौ=अयं घट एतत्त्वादित्स्थलीयैतत्त्वहेतौ। **सत्त्वादिति**। घटत्वरूपसाध्यनिश्चयस्य पक्षभिन्ने घटे, घटत्वाभावरूपसाध्याभावनिश्चयस्य च पटादौ सत्त्वेन तदुभयव्यावृत्तत्वमेतत्त्वहेतौ वर्तत एवेत्याशयः। तत्र=एतत्त्वहेतौ। **अव्याप्तिशंकेति**। मूले इत्यादिः। **अव्याप्तिपरिहारइति**। तथाच संशयप्रयोजकरूपस्यैतत्त्वहेतौ सत्त्वात् तस्यालक्ष्यताभ्युपगमोमौलो न स्यादितिभावः॥

**साध्येति**। निश्चिते साध्यवति, निश्चिते साध्याभाववतिचाऽवर्त्तमानत्वमित्यर्थः। न संदेहप्रयोजकमित्यस्यार्थमाह-**नसाध्येति**। साध्यसंदेहनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूता या प्रकारता तदवच्छेदकं नेत्यर्थः। यदि निश्चितसाध्यतदभाववद्व्यावृत्तत्वं संशयप्रयोजकं तदा तुल्ययुक्त्या निश्चितसाध्यतदभाववद्वृत्तित्वमपि संशयप्रयोजकमवश्यं वाच्यमित्यभिप्रायकं दीधितिग्रन्थं व्याख्यातुमाह-**साध्येति**। साध्यनिश्चयविषयीभूते साध्याभावनिश्चयविषयीभूते च धर्मिणि यद्वृत्तित्वं तस्येत्यर्थः। संशयप्रयोजकत्वे=साध्यादिसंशयप्रयोजकत्वे ॥

❀ दीधितिः ❀

**वद्वृत्तित्वस्यापि तथात्वे सद्धेतावपि साध्याभाववत्त्वभ्रमविषयवृत्तित्व-**

❀ गादाधरी ❀

जकत्वे,सद्धेतौ–वन्ह्याद्यधिकरणवृत्तितया निश्चिते धूमादौ, धर्मिवृत्तित्वग्र-हदशापर्यन्तानुधावनं संशयजनकज्ञानस्य विशेषणविधया लक्षणघटकत्वे-प्यतिव्याप्तिः सम्भवतीत्यभिप्रायेण । वस्तुतो यदा हेतुमति साध्याभाव-भ्रमो वर्तते तदा हेतौ तदधिकरणवृत्तित्वाग्रहेप्यतिव्याप्तिः सम्भवति तादृ-

❀ विवृतिः ❀

सद्धेतुपदस्य–सद्धेतुसामान्यपरत्वे पक्षमात्रवृत्तिहेतावेतत्त्वादौ साध्यादिनिश्चय-विषयधर्मिवृत्तित्वासत्त्वेन तत्रातिव्यात्प्यसम्भवात् तत्पदस्य सद्धेतुविशेषपरत्वमाह **वह्न्याद्येति** । आदिना–सत्ताधिकरणवृत्तितया निश्चितजात्यादिहेतुपरिग्रहः । तथाच निश्चितसाध्यतदभाववद्वृत्तित्वस्य संशयप्रयोजकत्वे वह्निमान्धूमादित्यादौ यदा वह्न्यधिकरणचत्वरादिवृत्तितया निश्चितो धूमादिः वह्न्यभाववत्त्वेन भ्रमात्मक-निश्चयविषयीभूतमहानसवृत्तितया निश्चितः तदा वह्निवह्न्यभावनिश्चयविषयींभूत-चत्वरमहानसादिवृत्तिधूमवानित्याकारकज्ञानमादायधूमादावतिव्याप्तिः । निरुक्त-ज्ञाननिष्ठायां वह्न्यादिसंशयजनकतायाम् अवच्छेदकीभूतधूमप्रकारतावच्छेदकतादृश महानसादिवृत्तित्वस्य धूमादौ सत्त्वादिति भावः ॥

ननु दीधितौ साध्याभावभ्रमविषयधर्मिवृत्तित्वज्ञानदशापर्यन्तानुधावनं व्यर्थं धूमादिमद्वृत्तित्वज्ञानविरहदशायां वह्न्यादावव्याप्तिभिया तादृशवृत्तित्वज्ञानोपलक्षित-प्रकारतावच्छेदकधर्मवत्त्वस्यैव लक्षणार्थतायाः आवश्यकतया तत्रैव।त्रापि धूमादौ वह्न्यभावादिभ्रमशून्यकालेऽपि कालान्तरीणमहानसादिवृत्तित्वज्ञानीयप्रकारतावच्छे-दकमहानसवृत्तित्वसत्त्वेनातिव्याप्तिसम्भवात् इत्यतस्तादृशवृत्तित्वग्रहानुधावनं सार्थ-कयति **धर्मीति** । साध्याभावभ्रमविषयेत्यादिः । संशयजनकज्ञानस्य=निश्चितसाध्य-साध्याभाववद्वृत्तित्वादिज्ञानस्य । विशेषणविधया लक्षणघटकत्वेऽपि=निरूपितत्वस-म्बन्धेन तादृशज्ञानविशिष्टत्वेन प्रकारतायाः लक्षणघटकत्वेऽपि । **अतिव्याप्तिरिति** । तादृशज्ञानस्योपलक्षणतया लक्षणघटकत्वेयथाऽतिव्याप्तिस्तथा तस्य विशेषणविधया लक्षणघटकत्वेऽप्यतिव्याप्तिरस्त्येवेत्याशयः ॥

वस्तुतः–साध्यसंशयजनकज्ञानं उपलक्षणतयैव लक्षणघटकं नतु विशेषणतयेत्याह **वस्तुतइति** । यदा=यस्मिन्काले । हेतुमिति=धूमादिमति महानसादौ । साध्या-भावभ्रमः=वह्न्याद्यभावप्रकारको भ्रमः । तदा=तस्मिन्काले । हेतौ=धूमादौ । **तदधिकरणेति** । तादृशभ्रमविशेष्यीभूतमहानसादिवृत्तित्वाऽग्रहेऽपीत्यर्थः । तेन-

❀ दीधितिः ❀

**ग्रहदशायामतिप्रसङ्गात् । न च तादृशनिश्चयविषयस्य धर्मिणो वास्तवं साध्याभावादिमत्त्वमपि तन्त्रम् । मानाभावात् । किञ्चसन्देहजनकता-**

❀ गादाधरी ❀

**शज्ञानस्योपलक्षणत्वादिति ध्येयम् । तादृशेति । साध्यतदभावविषयके-त्यर्थः । तन्त्रं-संशयप्रयोजकरूपघटकम् । जनकतावच्छेदकरूपस्य-जन-**

❀ विवृतिः ❀

वह्न्यभावादेरधिकरणतायाः महानसादावसत्त्वेऽपि न क्षतिः । अतिव्याप्तिः सम्भव**तीति** । कालान्तरीणतादृशवृत्तित्वज्ञानमादायेत्यादिः । तादृशज्ञानस्य = निश्चितसाध्यादिमद्वृत्तित्वज्ञाननिरूपितत्वस्या । उपलक्षणत्वात्=उपलक्षणतया लक्षणघटकत्वात् ।

ननु साध्यादिनिश्चयविषयीभूतं यत् साध्याधिकरणं–साध्याभावनिश्चयविषयीभूतं च यत्साध्याभावाधिकरणं तदुभयनिरूपितवृत्तित्वमेव साधारणत्वमस्तु नतु साध्याभावादिनिश्चयविषयीभूतधर्मिवृत्तित्वं तथा, तथाच न वह्निमान्धूमादित्यादावतिव्याप्तिः महानसादौ वह्न्यभावभ्रमसत्त्वेऽपि तस्य वह्न्यभावानधिकरणतया तादृशवह्न्यभावनिश्चयविषयीभूतवह्न्यभावाधिकरणजलादिवृत्तित्वस्य धूमे विरहादित्याशंकामपाकर्तुमाह **दीधितौ नचेति** । तन्त्रमितिपरेणान्वयः । तादृशनिश्चयविषयस्य=साध्याभावादिनिश्चयविशेष्यीभूतस्य । धर्मिणो=महानसादेः । वास्तवसाध्याभावादिमत्त्वं = प्रकृतसाध्यीभूतवह्न्यादेरभावाधिकरणत्वं । तन्त्रं = संशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मघटकं । माना**भवादिति** । साध्यादिभ्रमविषयीभूतधर्मिवृत्तित्वेन हेतोर्शनादपि साध्यसंशयस्योत्पत्तिदर्शनात् तादृशनिश्चयविषयधर्मिनिष्ठसाध्याभावाधिकरणत्वघटितवृत्तित्वादिना हेतुज्ञानस्य संशयजनकत्वं निष्प्रामाणिकमितिभावः ॥

टीकायां **साध्येति**। साध्यविषयकस्य निश्चयस्य साध्याभावविषयकस्य निश्चयस्येत्यर्थः । **संशयेति** । संशयजनकतावच्छेदकप्रकारतावच्छेदकरूपघटकमित्यर्थः । तथाच साध्यादिनिश्चयाघटितः केवलसाध्यतदभाववद्वृत्तित्वनिश्चय एव साधारणधर्मदर्शनविधया संशयजनको वाच्यः । तथासति न वह्निसाध्यकधूमादावतिव्याप्तिः। पर्वतादौ वह्न्यादेः संशयसत्त्वेऽपि तदन्तर्भावेण धूमादौ वृत्तित्वनिश्चयस्यासम्भवात् वह्न्यभावादिमति जलादौ च धूमादेरवर्त्तमानत्वादित्याशयः ॥

निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य संशयप्रयोजकत्वे तुल्ययुक्त्या निश्चित साध्यतदभाववद्वृत्तित्वस्यापि संशयप्रयोजकतायाः आवश्यकतया धूमादिहेतौ वह्न्यभावादिभ्रमविषयमहानसवृत्तित्वमादायातिव्याप्तिरित्यादिप्रतिबन्धेरनुत्तरत्वात् किंचेत्यादिना दोषान्तराभिधानप्रयोजनपरं दीधितग्रन्थं व्याख्यातुमाह **जनकतेति** । संश-

❀ दीधितिः ❀

**वच्छेदकरूपस्य विशेषणत्वे व्यभिचारिणि रासभादौ महानसादिवृ-**

❀ गादाधरी ❀

**कतावच्छेदकप्रकारतावच्छेदकरूपस्य, विशेषणत्वे-धर्मिविशेषणतया स-व्यभिचारप्रतिपाद्यत्वे, महानसादिवृत्तितादशायामव्याप्तिः-तत्कालान्त-र्भावेनाव्यभिचारित्वव्यवहारापत्तिः तदानीं साध्याभाववद्वृत्तित्वाभावस्य तत्राक्षतत्वात्, तादृशव्यवहारविषयस्याबाधितत्वादिति भावः ।**

❀ विवृतिः ❀

येत्यादिः । तथाच संशयजनकतावच्छेदकप्रकारतावच्छेदकीभूतनिश्चितसाध्यादि-मद्वृत्तित्वादेरित्यर्थः पर्य्यवसितः । धर्मिविशेषणतया=धर्मिणः सव्यभिचारत्वेनाभिम-तहेतोरितरव्यावृत्तिप्रयोजकतया । **सव्यभिचारेति** । सव्यभिचारपदजन्यप्रतीति-विषयतावच्छेदकत्वेत्यर्थः । **महानसेति** । रासभादौ महानसादिवृत्तित्वकाले इत्यर्थः । **तत्कालेति** । यदा-महानसादौ रासभादयो वर्त्तन्ते तत्कालान्तर्भावेणे-त्यर्थः । **अव्यभिचारेति** । रासभादयो वह्न्यादिव्याप्या-इत्याकारकव्यवहारापत्ति-रित्यर्थः । साधारणस्य नित्यदोषतया सव्यभिचारस्य कालविशेषावच्छिन्नत्वाऽप्रसि-द्ध्या तत्कालान्तर्भावेण सव्यभिचारत्वव्यवहारानुपपत्तिरित्युक्तिर्न संगच्छते तत्काला-वच्छिन्नत्वविशेषितसव्यभिचाररूपव्यवहर्तव्यस्यचाप्रसिद्धत्वात् अतस्तत्कालान्तर्भा-वेणाव्यभिचारित्वव्यवहारानुपपत्तिरित्युक्तमितिध्येयम् ॥

रासभादौ वह्निव्याप्यत्वव्यवहारं प्रतिव्यवहर्तव्यप्रसिद्धेरपेक्षिततया तां प्रदर्शयति-**तदानीमिति** । रासभादेर्महानसादौ सत्त्वदशायामित्यर्थः । **साध्येति** । वह्न्याद्य-भाववद्वृत्तित्वाभावरूपवह्निव्याप्यत्वस्येत्यर्थः । तत्र=रासभादौ । अक्षतत्वात्= सत्त्वाद् । **तादृशेति** । वह्न्यव्यभिचारित्वव्यवहारविषयस्यवह्न्याद्यभाववद्वृत्तित्वा-भावस्येत्यर्थः । अबाधितत्वात्=रासभादिनिष्ठत्वेन यथार्थ्यज्ञानविषयत्वात् । व्यव-हर्तव्यज्ञानस्य पदार्थद्वयसम्बन्धज्ञानात्मकतया तन्निष्ठयाथार्थ्यस्यैव व्यवहारप्रयोजक-त्वमित्याशयेनेदं । तथाच निश्चितसाध्यवद्वृत्तित्वविशिष्टनिश्चितसाध्याभाववद्वृत्ति-त्वादिरूपसंशयप्रयोजकधर्मस्य यदि यदा हेतौ वर्तमानत्वं तदैव सव्यभिचारत्वमि-त्युच्यते तदा वह्निमान् रासभात् इत्यादौ रासभेऽव्याप्तिः । यदा रासभादेर्महानसवृ-त्तित्वं तदा तस्य वह्न्यभाववति भूतलादौ अवर्तमानतया निश्चितसाध्याभाववद्वृत्ति-त्वस्य तदानीं रासभादौ विरहादितिभावः ॥

ननु निश्चितसाध्यतदभाववद्वृत्तितावच्छेदकताविशिष्टहेतुतावच्छेदकच्छिन्नप्रका-रताशालिज्ञानमेवसंशयजनकं वाच्यम् अन्यथा द्रव्यं विशिष्टसत्त्वादित्यादिसद्धेताव-

❀ दीधितिः ❀

त्तितादशायामव्याप्तिः, उपलक्षणत्वे असाधारण्योत्तीर्णतादशायामति-

❀ गादाधरी ❀

नच द्रव्यं विशिष्टसत्त्वादित्यादावतिव्याप्तिवारणाय साध्यसन्देहजनकता-वच्छेदकप्रकारतावच्छेदकतावच्छेदकधर्मवत्प्रकृतहेतुतावच्छेदकवत्त्वमेव व्यभिचारपदार्थो वाच्यः, साधारणस्थले च तादृशो धर्मः साध्यतदभाव-वद्वृत्तितावच्छेदकत्वमेव तद्विशिष्टहेतुतावच्छेदकावाच्छिन्नहेतुमत्ताज्ञान-स्यापि सन्देहजनकत्वोपगमात्, एवं च रासभादेर्महानसादिवृत्तिताद-शायां साध्याभाववद्वृत्तित्वविरहेपि तदवच्छेदकरासभत्वादिसत्त्वेन तादृशव्यभिचाराभावो नास्तीति कथमुक्तव्यवहारापत्तिरिति वाच्यम्। एवमपि अनित्यधर्मस्य हेतुतावच्छेदकत्वे तदसत्त्वदशायामापत्तितादव-

❀ विवृतिः ❀

तिव्याप्त्यापत्तिःद्रव्यत्वतदभाववद्वृत्तित्वस्य विशिष्टसत्तायां सत्वात् एवंच वह्निमान् रासभादित्यादौरासभादेर्महानसवृत्तित्वकालेऽपि नाव्याप्तिः रासभान्तरे वह्निवह्न्यभा-ववद्वृत्तित्वसत्वेन तादृशवृत्तितावच्छेदकत्वविशिष्टरासभत्वस्य महानसवृत्तिरासभेऽपि विद्यमानत्वात् इत्याशंकते-**नचेति**। वाच्यमितिपरेणान्वयः। **अतिव्याप्तिवारणयेति** यथाश्रुतसाध्याभावादिमद्वृत्तित्वस्य सत्तायांसत्त्वादित्याशयः। **साध्येति**। साध्य-संदेहजनकतावच्छेदकीभूताया प्रकारतावच्छेदकता तदवच्छेदकधर्मविशिष्टप्रकृत-हेतुतावच्छेदकवत्त्वमेवेत्यर्थःएवकारात् संशयजनकतावच्छेदकप्रकरतावच्छेदकधर्म-वत्त्वस्यसव्यभिचारत्वव्यवच्छेदः। साधारणस्थले=धूमादिसाध्यकवह्न्यादिहेतौ। तादृशो धर्मः=संशयजनकतावच्छेदकप्रकारतावच्छेदकतावच्छेदको धर्मः। **सा-ध्येति**। निश्चितेत्यादिः। **तद्विशिष्टेति**। तादृशवृत्तितावच्छेदकताविशिष्टहेतुताव-च्छेदकावच्छिन्नप्रकारताशालिज्ञानिस्यापीत्यर्थः। अपिरेवार्थे। तेन साध्यतदभाववद्वृ-त्तित्वविशिष्टहेतुप्रकारकज्ञानस्य संशयजनकत्वव्यवच्छेदः। अन्यथातादृशज्ञानमा-दायद्रव्यं विशिष्टसत्त्वादित्यादावतिव्याप्तिः स्यादितिध्येयम्॥

**उपसंहरत्येवंचेति**। साध्यादिमद्वृत्तितावच्छेदकताविशिष्टधर्मावच्छिन्नप्रकार-ताशालिज्ञानस्य संशयजनकत्वे चेत्यर्थः। **तदवच्छेदकेति**। साध्याभाववद्वृत्तिता-वच्छेदकताविशिष्टरासभत्वादिसत्वेनेत्यर्थः। **तादृशेति**। तादृशवह्न्यादिव्याप्य-त्वमित्यर्थः। उक्तव्यवहारापत्तिः=वह्न्यादिव्याप्यत्वव्यवहारापत्तिः।

**उत्तरयत्ति-एवमपीति**। निरूक्तरासभत्वादिकमादाय रासभादौ वह्न्यादि-व्याप्यत्वव्यवहारापत्तिवारणेऽपीत्यर्थः। अनित्यधर्मस्य=काननसंयोगरूपधर्मस्य। हेतुतावच्छेदकत्वे=काननसंयोगवन्निष्ठहेतुतायामवच्छेदकत्वे। तदसत्त्वदशायां=

❁ दीधितिः ❁

**व्याप्तिः, असाधारणप्रकरणसमयोस्तत्त्वेन भ्रमविषययोरनित्यदोषत्वं**

❁ गादाधरी ❁

स्थ्यात्। विशेषणत्वे–कालविशेषावच्छिन्नतया तदानीं व्यभिचारीत्यादि-व्यवहारविषयत्वे, अव्याप्तिः–तत्कालान्तर्भावेण तादृशव्यवहारानुपपत्ति-रिति तु नार्थः साधारणस्य नित्यदोषतया कालविशेषान्तर्भावेण व्यभि-चारिव्यवहाराजनकतायास्तत्रेष्टत्वात्। उपलक्षणत्वे–अत्यन्तायोगव्यव-

❁ विवृतिः ❁

काननसंयोगरूपहेतुतावच्छेदकस्यासत्त्वदशायां। आपत्तितादवस्थ्यात्=कानन-संयोगिनोवह्न्यादिव्याप्यत्वव्यहारापत्तितादवस्थ्यात्। तथाच वह्निमान्काननसंयोगिन इत्यादौ काननसंयोगित्वेन रासभादेः हेतुतास्थले यदा काननसंयोगिनिमहानसादिवृत्तित्वं तदा वह्न्यभाववद्वृत्तितावच्छेदकतायाः काननसंयोगरूपहेतुतावच्छेदकेविरहेण-साध्यतदभाववद्वृत्तितावच्छेदकताविशिष्टकानन संयोगवत्वस्यकाननसंयोगिनि रासभ-दावभावात् तदानींकाननसंयोगिनि वह्न्यादिव्याप्यत्वव्यवहारापत्तिरूक्तरीत्या लक्षणा-र्थस्य निर्वचनेऽपि वारायितुँ न शक्यते इतिभावः॥

ननु संशयप्रयोजकधर्मस्य विशेषणत्वे रासभादौ महानसादिवृत्तितादशायामव्याप्ति-रित्यादेः रासभादौ वह्न्याद्यव्यभिचारित्वव्यवहारापत्तिरूपवक्रव्याख्यानमसंगतं यथा-श्रुतस्य महानसादिवृत्तितादशायां रासभादौ सव्यभिचारत्वव्यवहारानुपपत्तिरित्यादि-व्याख्यानस्यैव सम्यक्त्वादित्यतआह- **कालविशेषिति**। यदासाध्यतदभाववद्वृत्तित्वंहेतौवर्त्ततेतत्कालावच्छिन्नतयेत्यर्थः। तदानीं=तत्कालावच्छेदेन। विशेषणत्वे, इत्यस्य समुदितार्थमाहव्य**भिचारीति**॥ तत्कालान्तर्भावेण=रासभादौमहानासादि-वृत्तित्वकालावच्छेदेन। **तादृशेति**। रासभःव्यभिचारीतिव्यवहारानुपत्तिरित्यर्थः। इतितुनार्थः= इतितुनव्याख्यानम्। कथमित्याकांक्षायामाह**साधारण्यस्येत्यादि**। नित्यदोषतया = कालविशेषानवच्छिन्नदोषतया। कालविशेषान्तर्भावेण=किञ्चित्काला वच्छिन्नत्वेन। **व्यभिचारीति**। व्यभिचारीत्याकारकव्यवहारप्रयोजकत्वाभावत्वे-त्यर्थः। तेन=व्यभिचारिव्यवहारंप्रतिव्यवहर्त्तव्यज्ञानविधया साधारणज्ञानस्यकारण तया साधारणस्यातथात्वेऽपि न क्षति रिति ध्येयम्॥

तत्र = साधारणे रासभादौ। **इष्टत्वादिति**। यद्यपि किंचित्कालावच्छिन्नत्वस्य व्यभिचारिव्यवहारजनकत्वनिष्ठप्रतियोगिताव्यधिकरणतया तेन रूपेण तादृशव्यवहार-जनकत्वाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकतया तस्यसर्वत्र सत्त्वेन साधारण दावपि तादृशाभावइष्टएवेत्याशयवर्णनं न युक्तम्। नैयायिकमते व्यधिकरणधर्मावच्छि-

❀ दीधितिः ❀

विशेषादर्शनदशायामनुमित्यनुत्पादप्रयोजकत्वं नतु वास्तवं हेतुदोष-

❀ गादाधरी ❀

च्छेदपरिचायकतया व्यभिचारपदप्रतिपाद्यत्वे। तादृशरूपात्यन्तायोग-व्यवच्छेदस्य तत्पदार्थत्वोपगम इति यावत्। असाधारण्योत्तीर्णतादृशा-यांहेतुमति साध्यतदभावयोरन्यतरनिश्चयदशायाम्। तत्कालान्तर्भावेणा-तिव्याप्तिः—कालान्तरीणासाधारण्यमादाय सव्यभिचारव्यवहारापत्तिः।

इदं पुनरिहावधेयम्। शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षतादृशायांस-

❀ विवृतिः ❀

न्नाभावस्यासत्वात् तथापि किञ्चित्कालावच्छिन्नत्वविशेषितस्वरूपसम्बन्धस्य तादृश व्यवहारजनकत्वव्यधिकरणसम्बन्धतया तेन सम्बन्धेन—सव्यभिचारव्यवहारजनकत्वा-भावस्यापि सार्वत्रिकतया तादृशाभावः साधारणे इष्ट एवेति अभिप्रायो बोध्यः॥

**अत्यन्तेति**। प्रतियोगिव्यधिकरणो यो निश्चितसाध्यतदभाववद्वृत्तित्वाभावस्त-दभाववत्त्वेनेत्यर्थः। **तादृशेति**। निश्चितसाध्यतदभाववद्वृत्तित्वरूपधर्मस्य योऽत्य-न्तायोगव्यवच्छेदः, प्रतियोगिव्यधिकरणतदभावाभावस्तस्येत्यर्थः। तत्पदार्थत्वोप-गमे=सव्यभिचारपदार्थत्वोपगमे। तथाच वह्निमान् रासभादित्यादौ रासभादेः महानसवृत्तितादशायामपि नाव्याप्तिः, रासभादेः वह्न्यधिकरणाद्यवृत्तित्वकालीन-वह्निवद्वह्न्यभाववद्वृत्तित्वस्य संशयप्रयोजकरूपस्य—महानसादिवृत्तित्वदशायां रासभादौ प्रतियोगिव्यधिकरणाभावविरहेण तादृशधर्मोपलक्षितत्वस्य तत्र सत्वात्इतिभावः।

हेतुमति=शब्दत्वाद्यधिकरणे। **साध्येति**। शब्दोऽनित्यः शब्दत्वादित्यत्र, शब्देऽनित्यत्वरूपसाध्यस्य, शब्दो नित्यः शब्दत्वातित्यत्र च, शब्दे नित्यत्वाभावरूप साध्याभावस्य च निश्चयदशायामित्यर्थः। **कालान्तरीणेति**। शब्दादावनित्यत्वसं-शयकालीननिश्चितसाध्यतदभाववद्व्यावृत्तत्वमादायेत्यर्थः। सव्यभिचारित्व**व्यव-हारापत्तिरिति**। तथाच संशयप्रयोजकरूपस्योपलक्षणतया सव्यभिचारपदप्रतिपा-द्यत्वे शब्दोऽनित्यः शब्दत्वादित्यत्र यदा पक्षे-शब्दादौ अनित्यत्वस्य निश्चयस्तदानीमपि शब्दत्वादेः सव्यभिचारत्वेन व्यवहारविषयत्वंस्यात्—शब्दादौ अनित्यत्वसंशयकाली-ननिश्चितानित्यत्वतदभाववद्घटगगनादिव्यावृत्तत्वस्य तादृशनिश्चयकालेऽपि शब्द-त्वादावक्षतत्वात्, शब्दादावनित्यत्वसंशयकालएव शब्दत्वादेरसाधारण्यस्येष्टतया तदा-नीमिष्टापत्तेरसम्भवादित्याशयः।

संशयप्रयोजकरूपस्य विशेषणतया लक्षणघटकत्वेऽपि—असाधारण्योत्तीर्णतादृशा-यामतिव्याप्तिसंगमयितुमाहेदम् **पुनरिहावधेमिति**। अस्य तु नोक्तदोषावसर इति

❀ गादाधरी ❀

व्यभिचारव्यवहारनियामकं यत्पटगगनादिव्यावृत्तित्वस्वरूपमसाधारण्यं तच्छब्दादौ साध्यनिश्चयदशायामप्यक्षतमेवेति विशेषणत्वेप्येतद्दोषतादवस्थ्यम्। संशयप्रयोजकरूपस्य तथात्वेन न व्यभिचारपदप्रतिपाद्यता किन्तु साध्यतदभाववद्वृत्तित्वत्वनिश्चितसाध्यतदभाववद्व्यावृत्तत्वत्वरूपेणैवनिश्चयघटितरूपावच्छिन्नपरवाक्याच्चकालविशेषोनिश्चयांश एवा-

❀ विवृतिः ❀

इत्यनेन सम्बन्धः। पक्षतादशायां = शब्ददावनित्यत्वस्यसंदेहदशायां। सव्यभिचारव्यवहारनियामकं = सव्यभिचारव्यवहारजनकज्ञानविषयीभूतं। **घटेति**। पक्षतादशायां–अनित्यरूपसाध्यनिश्चयविषयीभूतो घटः–अनित्यत्वाभावरूपसाध्याभावनिश्चयविषयीभूतं गगनादि इति तादृशघटगगनादिव्यावृत्तत्वरूपमित्यर्थः। तत्=तादृशघटगगनादिव्यावृत्तत्वं। **शब्दादाविति**। पक्षेइत्यादिः। साध्यनिश्चयदशायां = अनित्यत्वनिश्चयदशायां। **अक्षतमिति**। शब्दत्वादावितिशेषः। **विशेषणत्वेऽपीति**। संशयप्रयोजकरूपस्येत्यादिः। एतद्दोषतादवस्थ्यम्=अतिव्याप्तितादवस्थ्यम्, सव्यभिचारव्यवहारापत्तितादवस्थ्यमितियावत्। तथाच संशयप्रयोजकरूपस्योपलक्षणत्वपक्षे एव कथं असाधारण्योत्तीर्णतादशायां दीधितिकृता अतिव्याप्तिरभिहितेत्याक्षेपाभिप्रायः पर्य्यवसितः॥

उक्तदोषं निरसितुं शंकते–**संशयेति**। संशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मस्येत्यर्थः। तथात्वेन = संशयप्रयोजकत्वेन। न व्यभिचारपदप्रतिपाद्यता=न व्यभिचारपदशक्यता। तर्हिकेनरूपेण तत्पदशक्यतेत्याकांक्षायांमाह **साध्येति**। साध्यवद्वृत्तित्वविशिष्टंयत् साध्याभाववद्वृत्तित्वं तत्वेन, निश्चितसाध्यवद्व्यावृत्तत्वविशिष्टं यत् निश्चितसाध्याभाववद्व्यावृत्तत्वं तत्वेनैवेत्यर्थः। एवकारात् संशयप्रयोजकत्वेन तत्पदशक्यत्वव्यवच्छेदः। नचैवमननुगमः, अन्यतरत्वेन द्वयोः कथंचिदनुगमसम्भवात्, सव्यभिचारपदस्य–नानार्थताया इष्टत्वस्य वक्ष्यमाणत्वाच्चेति ध्येयम्॥

नन्वेवमिदानीमयमसाधारण इत्यादि वाक्यघटकैतत्कालार्थविशेषित सप्तम्यर्थावच्छिन्नत्वस्य कुत्रान्वय इत्यतआह **निश्चयघटितेति**। इदानीमयमसाधारणइत्यादिवाक्याच्चेत्यर्थः। पञ्चम्यर्थः प्रयोज्यत्वं–अस्यअन्वेतीत्यत्रान्वयेऽन्वयोबोद्धव्यः। कालविशेषः = तत्कालविशेषितसप्तम्यर्थावच्छिन्नत्वं। निश्चयांशे = साध्यादिनिश्चये। **एवेति**। एवकारात् तादृशासाधारण्येऽन्वयव्यवच्छेदः। अन्यथा पूर्वोक्तदोषस्यनिरासो नस्यादितिभावः॥

## ❀ गादाधरी ❀

न्वेति साध्यतदभावनिश्चयादौ खण्डशक्तिस्वीकारेणअन्वयबलात्साध्यतदभावनिश्चयविषयवृत्तित्वसामान्याभावभिन्नस्यापि तत्कालीनतन्निश्चयविषयवृत्तित्वत्वावच्छिन्नाभावस्य लाभः। सव्यभिचारपदस्य नानार्थत्वमिष्टमेवेति चेदुच्यते तदा उपलक्षणत्वेपि नोक्तदोषावसर इति।

## ❀ विवृतिः ❀

ननु पदार्थः पदार्थान्तरेणैवान्वेति नतु पदार्थैकदेशेनेतिनियमात्, साध्यादिनिश्चयविषयव्यावृत्तत्वस्यासाधार्ण्यैकदेशे साध्यादिनिश्चये-तत्कालावच्छिन्नत्वस्यान्वयोऽव्युत्पन्नएवेत्यतआह **साध्यतदभावनिश्चयादाविति** आदिपदात्धर्मिपरिग्रहः। **खण्ड शक्तीति**। तथाच साध्यतदभावनिश्चयः, धर्मि, व्यावृत्तत्वं एतत्त्रयमेवासाधारण्य पदार्थः-साध्यतदभावनिश्चयरूपैकपदार्थे च तत्कालावच्छिन्नत्वस्यान्वयः। तादृशनिश्चयस्य विषयतया-धर्मिणिधर्मिणश्चव्यावृत्तत्वेन्वयः, इतिनैकदेशान्वयप्रसंगइतिभावः।

अन्वयवलात् = इदानीमयमसाधारणः इत्यादिवाक्यघटक तत्कालार्थविशेषितसप्तम्यर्थावच्छिन्नत्वस्य साध्यादिनिश्चय एवान्वयस्याभ्युपगमात्। **साध्येति**। तत् कालावच्छिन्नत्वाविशेषितानित्यत्वतदभावादिनिश्चयविषयीभूतघटगगनादिवृत्तित्वसामान्याभावभिन्नस्यापीत्यर्थः **तत्कालेति**। तत्कालावच्छिन्नत्व विशिष्टसाध्यादिनिश्चयविषयवृत्तित्वत्वावच्छिन्नाभावस्येत्यर्थः। नन्वेवंनिरुक्तरीत्या अर्थत्रयकल्पने सव्यभिचारपदस्य नानार्थतापत्तिरित्यतआह **सव्यभिचारेति। इष्टमेवेति**। अनन्यगत्येत्याशयः। **उच्यतइति**। शब्दोऽनित्यः शब्दत्वादित्यादौ-शब्दादावनित्यत्वादिनिश्चयकाले तत्कालावच्छिन्नत्वविशेशितानित्यत्वादिमद्व्यावृत्तत्वस्य शब्दत्वादौविरहात् असाधारण्यादेः विशेशणतया लक्षणघटकत्वे न तत्रातिव्याप्तिरितियद्यतावदुच्यते इति समुदितार्थः।

उत्तरयति। **तदेति**। उपलक्षणत्वेऽपि = निरुक्तासाधारण्यादेरुपलक्षणतया लक्षणघटकत्वेऽपि। नोक्तदोषावसरः = शब्दादावनित्यत्वनिश्चयकाले इदानीं शब्दत्वमसाधारणमित्याकारकव्यवहारापत्तिरूपदोषावसरः। तादृशव्यवहारविषयस्यतत्कालावच्छिन्नानित्यत्वादिनिश्चयविषयवृत्तित्वसामान्याभावस्य शब्दत्वादौ विरहादित्याशयः।

**वस्तुतः** साध्यादिनिश्चयविषयीभूतघटगगनादिव्यावृत्तत्वरूपसंशयप्रयोजकधर्मस्य संशयप्रयोजकत्वरूपेणैव सव्यभिचारपदशक्यता वाच्या-तथाच तादृशधर्मस्य विशेषणतया लक्षणघटकत्वे उपलक्षणतया लक्षणघटकत्वे वा शब्दोऽनित्यः शब्दत्वादित्यादौ-शब्दादावनित्यत्वनिश्चयदशायां घटगगनादिव्यावृत्तत्वस्य शब्दत्वादौ सत्वेन तत्रातिव्याप्तेः निश्चयाघटितसाध्यतदभाववद्व्यावृत्तत्वमेवासाधारण्यं-संशयप्रयोजकमित्येवं दीधितिकृताभिहितमितितु युक्तमुत्पश्यामः।

❀ गादाधरी ❀

एवं च निश्चयाघटितं साध्यतदभाववद्व्यावृत्तत्वमेव संशयप्रयोजकं तदवच्छिन्नप्रकारकज्ञानस्य विशेषदर्शनतया संशयप्रतिबन्धकत्वेपि तत्कोटिविशिष्टबुद्धौ तत्कोटिमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानप्रतिबन्धकतायां विपरीतकोटिमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानस्योत्तेजकतया सत्प्रतिपक्षस्थलमिव संशयनिर्वाहः, तथा चायं घट एतत्त्वादित्यादौ साध्यतदभाव-

❀ विवृतिः ❀

एतावता निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य संशयप्रयोजकत्वाभावेऽपि साध्यतदभाववद्व्यावृत्तत्वस्य संशयप्रयोजकत्वे युक्ते दीधितिकृता नाभिहिततया स्वयंतत्रयुक्तिमाह**एवञ्चेति** । निश्चयाघटितं = साध्यादिमतिनिश्चयविषयत्वविशेषणाघटितम् । संशयप्रयोजकं = संशयजनकतावच्छेदकप्रकारतावच्छेदकं । **तदवच्छिन्नेति** । साध्यतदभाववद्व्यावृत्तत्वावच्छिन्नहेतुनिष्ठप्रकारताकज्ञानस्येत्यर्थः । विशेषदर्शनतया= तदभावव्याप्यप्रकारकज्ञानात्मकतया । संशयप्रतिबन्धकत्वेऽपि = संशयानुत्पादप्रयोजकत्वेऽपि ।

अयं वह्निमान् गगनात् इत्यादौ गगनादिनिष्ठं वह्निमद्व्यावृत्तत्वं–वह्न्यभावव्याप्यत्वं,–वह्न्यभाववद्व्यावृत्तत्वं च वह्निव्याप्यत्वं–एवञ्च वह्निवह्न्यभाववद्व्यावृत्तत्वविशिष्ट गगनप्रकारक ज्ञानस्य वह्न्यभावव्याप्यप्रकारकत्वेन, वह्न्यभावाभावव्याप्यप्रकारकत्वेन च वह्निप्रकारकबुद्धौ वह्न्यभावप्रकारकबुद्धौ च प्रतिवन्धकतया तादृशज्ञानदशायां वह्निमान्नवेति संशयोत्पादएवनसम्भवति, तादृश संशयस्य वह्निवह्न्यभावप्रकारकबुद्धित्वेन निरुक्त व्यावृत्तत्वज्ञानप्रतिवध्यत्वात् इत्याशंकां निरस्यति **ततकोटीति** । वह्न्यादिप्रकारकबुद्धावित्यर्थः । **तत्कोटिमदिति** । वह्न्यादिमद्व्यावृत्तत्वरूप वह्न्यभावव्याप्यत्वावच्छिन्न प्रकारताकज्ञाननिष्ठ प्रतिवन्धकतायामित्यर्थः । **विपरीतेति** । वह्न्यभावव्यावृत्तत्वावच्छिन्नप्रकारताकज्ञानस्येत्यर्थः । उत्तेजकतया=प्रतिवन्धकतावच्छेदकीभूतोयस्तादृशज्ञानाभावस्ततप्रतियोगितया । **सत्प्रतिपक्षेति** । सत्प्रतिपक्षसम्बलनदशायां रत्नकोषकारमतेयथा संशयनिर्वाहः तथा निरुक्तव्यावृत्तत्वज्ञानदशायामपि–संशयनिर्वाहइति समुदितार्थः ॥

**अयंभावः**–यथा वह्निप्रकारकबुद्धौ वह्निव्याप्यप्रकारकज्ञानविरहविशिष्टत्वेन वह्न्यभावव्याप्यप्रकारकज्ञानस्य, वह्न्यभावप्रकारकबुद्धौ च वह्न्यभावव्याप्यप्रकारकज्ञानविरहविशिष्टत्वेन वह्निव्याप्यप्रकारकज्ञानस्य प्रतिबन्धकतायाः कल्पनीयतया–वह्निव्याप्यधूमवानयं वह्न्यभावव्याप्य जलवानयं इत्याकारक परामर्शद्वयसम्बलनरूप सत्प्रतिपक्षसम्बलनदशायां अयं वह्निमान्नवेत्याकारकसंशयस्य वह्निवह्न्यभावप्रकारकबुद्धिस्वरूपत्वेऽपि

❀ गादाधरी ❀

वद्व्यावृत्तत्वस्यासत्त्वेनाव्याप्त्याशङ्कायां अलक्ष्यत्वाभ्युपगमेन तत्परिहारस्य च नासङ्गतिरिति समुदिततात्पर्यार्थः। संशयप्रयोजकरूपं चेदानीमुपलक्षणविधयैव दुष्टताव्यवहारनियामकम्, अतो रासभादौ महानसादिवृत्तितादृशायां नाव्याप्तिरसाधारणश्च हेतुः सर्वदैव तथेति नातिप्रसंगोपीति ध्येयम्।

❀ विवृतिः ❀

मत् भेदेन तदुत्पादः सम्भवत्येव तथा वह्निप्रकारकबुद्धौ वह्न्यभाववद्व्यावृत्तत्वा वच्छिन्न प्रकारकज्ञानविरहविशिष्टत्वेन वह्निमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानस्य, वह्न्यभावप्रकारक बुद्धौ च वह्निमद्व्यावृत्तत्वावच्छिन्नप्रकारकज्ञानविरहविशिष्टत्वेन वह्न्यभाववद्व्यावृत्तत्वावच्छिन्न प्रकारकज्ञानस्यैव प्रतिबन्धकत्वे कल्पनीये वह्निवह्न्यभाववद्व्यावृत्तगगनवानयम् इत्याकारकज्ञानदशायामपि अयं वह्निमान्नवेत्याकारकसंशयोभवत्येवेति ॥

एवं च साध्यतदभाववद्व्यावृत्तत्वस्यैव संशयप्रयोजकत्वेन असाधारण्य स्वरूपतायां पर्य्यवसितायां अयं घट एतत्वादित्यादावव्याप्तिः, एतत्वहेतौ घटत्व तदभाववद्व्यावृत्तत्वस्यासत्वात् अतः तादृशहेतोः सद्धेतुत्वेन निरूक्तलक्षणाऽलक्ष्यतया तत्र लक्षणा सत्वेऽपि न क्षतिरित्येवायं घट इत्यादिनाऽशंक्य समाहितं मणिकृतेत्याह **तथाचेत्यादि**। तत् परिहारस्य=अव्याप्ति परिहारस्य ॥

नन्वेवमपि रासभादौ महानसवृत्तितादशायां वह्निमान् रासभादित्यादौ कथं नाव्याप्तिः कथंवाऽसाधारण्योत्तीर्णतादशायां नातिव्याप्तिरत आह **संशयेति**। संशयजनकतावच्छेदक प्रकारतावच्छेदकरूपमित्यर्थः। इदानीं=एतन्मत व्याख्यानावसरे। उपलक्षणविधयैव=प्रतियोगिव्यधिकरणस्य तादृशरूपाभावस्याभाववत्त्वेनैव। एवकारात् तादृश रूपस्य विशेषणत्वेन दुष्टतानियामकत्वव्यवच्छेदः दुष्टतानियामकं=अयं सव्यभिचारइति व्यवहार प्रयोजकं। **नाव्याप्तिरिति**। तथा च वह्निमान् रासभादित्यादौ यदारासभादौ महानसादिवृत्तित्वं वर्त्तते तदानीमपि कालान्तरीण संशयप्रयोजकरूपस्य वह्निवह्न्यभाववद्वृत्तित्वस्य रासभादौ सत्त्वाल्लक्षणसमन्वय इतिभावः ॥

असाधारण्यस्यैवतन्मते नित्यदोषतया न कुत्राप्यतिव्याप्तिरित्याहासाधारणश्च **हेतुरिति**। वह्न्यादिसाध्यकगगनादिहेतुश्चेत्यर्थः। सर्वदैव तथा=सर्वदेवसाध्य तदभाववद्व्यावृत्तत्वरूपसंशयप्रयोजकधर्मवान्। **नातिप्रसंगोऽपीति**। तथा च शब्दोऽनित्यः शब्दत्वादित्यादेरलक्ष्यतया असाधारण्योत्तीर्णताकालएव गगनादिहेतुकस्थलेनास्तीति क्वातिव्याप्तिरित्याशयः। संशयजनकताघटितलक्षणवादिनां प्राचीनानांमतेनिश्चित साध्यतदभाववद्व्यावृत्तत्वस्यैव असाधारण्यस्वरूपतया ध्येयमित्युक्तम् ॥

❀ गादाधरी ❀

अदुष्टहेतौ वास्तवासाधारणप्रकरणसमत्वाभावादसाधारणप्रकरणसमोपीति व्याचष्टे–असाधारणेति। भ्रमविषयस्य नव्यमते दोषत्वाभावादनित्यदोषत्वमिति व्याचष्टे—विशेषेति। प्रयोजकत्वं–प्रयोजकज्ञानविषयत्वम्, अत एवेत्यत्रेदंपदार्थस्य सद्धेतोः सर्वदाऽदुष्टत्वस्यभ्रमविषयस्याऽनुमित्यनुत्पादप्रयोजकतायामनुपष्टंभकतया तदुपष्टम्भ्यं पूरयति–नत्विति।

❀ विवृतिः ❀

नन्वेतन्मते दोषमात्रस्यैव नित्यदोषतया असाधारणप्रकरणसमयोरनित्यदोषत्वाभिधानं मूलकृतोऽसंगतमित्यत आह–**दीधितौ असाधारणेति**। असाधारणत्वेन सत्प्रतिपक्षितत्वेन चाभिमतहेत्वोरित्यर्थः। तत्त्वेन=असाधारणत्वेन–सत्प्रतिपक्षितत्वेन च, साध्यतदभाववद्व्यावृत्तत्वेन,साध्याभावव्याप्यत्वेनेतियावत्। भ्रमविषययोः=निरुक्तधर्मस्य भ्रमविषयीभूतयोः। अनित्यदोषस्यैतन्मतेऽलीकतया अनित्यदोषत्वमित्यस्यार्थमाह। **विशेषेति**। निरुक्तासाधारण्यादिभ्रमेभ्रमत्वाग्रहदशायामित्यर्थः। अनुमित्यनुत्पादप्रयोजकत्वं=अनुमितिप्रतिबन्धकज्ञानविषयत्वं। तथा च यदा असाधारण्यादिभ्रमे भ्रमत्वज्ञानं नास्ति तदा तादृशासाधारण्यभ्रमात्मकज्ञानस्य भ्रमत्वज्ञानानास्कन्दिततया केवलमनुमितिप्रतिबन्धकत्वमेव नतु तादृशभ्रमविषयस्य दोषत्वं, नवा तद्विषयकिंचित्पदार्थवत्वमादाय हेतोर्दुष्टत्वमपीति न मूलाऽसंगतिरितिभावः। मौलमन्यथापदार्थं व्याचष्टे **अनुमित्येति**। भ्रमत्वज्ञानानास्कन्दिताऽनुमितिप्रतिबन्धकज्ञानविषयतामात्रेणेत्यर्थः॥

इदमेव विवृणोति **टीकायाम् अदुष्टहेताविति**। नव्यमते अनुमितिप्रतिबन्धकप्रमाविषयदोषवत एव दुष्टत्वादित्याशयः। **वास्तवेति**। साध्यतदभाववद्व्यावृत्तत्वसाध्याभावव्याप्यवत्प्रक्षकत्वयोरभावादित्यर्थः। **व्याचष्टेइति**। तथा चासाधारणप्रकरणसमपदयोरसाधारणत्वेन प्रकरणसमत्वेन च यो भ्रमः तद्विषयार्थपरतया न मूलासंगतिरितिभावः। अनित्यदोषत्वमितिव्याचष्टे=अनित्यदोषशब्दस्यार्थमाह। असाधारण्यज्ञानस्यैवानुमित्यनुत्पादप्रयोजकतया असाधारणादेः तथात्वं न सम्भवतीत्यतो व्याचष्टे **प्रयोजकेति**। प्रयोजकज्ञानविषयो यत्र तादृशत्वमित्यर्थः। सद्धेतोः=सद्धेतुनिष्ठस्य। सर्वदाऽदुष्टत्वस्य=सर्वकालावच्छेदेनदोषाभावस्य। **भ्रमविषयस्येत्यादि**। भ्रमविषयनिष्ठं यद् अमुमितिप्रतिबन्धकज्ञानविषयत्वं तस्मिन्नित्यर्थः। अनुपष्टम्भकतया=अननुमापकतया। सद्धेतुमात्रे अनुमितिप्रतिबन्धकभ्रमविषयताया असत्त्वेन दोषाभावस्य निरुक्तविषयताव्यभिचारित्वात् तदनुमापकत्वं दोषाभावस्य न सम्भवतीतिहृदयम्।

❀ दीधितिः ❀

**त्वम्, अन्यथानुमित्यनुत्पादप्रयोजकज्ञानविषयतामात्रेण वास्तवहेतु-दोषत्वे इत्याहुः।**

❀ गादाधरी ❀

तथाच यत एव सद्धेतुः सर्वदैव तथा न तु कदाचिदपि दुष्टलक्षणलक्ष्यः अत एव तत्स्थलीयानुमितिविरोधी यो भ्रमरूपो ग्रहस्तस्यानुमित्यनुत्पाद-प्रयोजकत्वेऽपि न हेतुदोषः भ्रमदशायां सद्धेतोर्दुष्टत्वे भ्रमविषयस्य दोष-त्वमावश्यकं स्यादिति अत एवेत्यादिमूलस्य पर्यवसितोर्थः।

ननु भ्रमस्यानुमित्यनुत्पादप्रयोजकत्वे तद्विषयस्य दोषत्वमित्यत एवेति भ्रमविषयो न दोष इत्येवासिद्धमित्याशङ्कायामन्यथेति मूलावतारा-त्तादृशशङ्कोद्धारं स्फुटीकर्तुं चिकीर्षुरन्यथापदं व्याचष्टे-अन्यथेति॥

**मूले बाधादिज्ञान इति।** पक्षविशेष्यकसाध्याभावादिभ्रमदशाया-

❀ विवृतिः ❀

तदुपष्टम्भकम्=अनुमितिप्रतिबन्धकभ्रमविषयताया अनुमापकम्। पूरण-सम्वलितपर्य्यवसितार्थमाह—**तथाचेत्यादि**। सर्वदैव तथा = सर्वदैव दोषाभाववान्। **तत्स्थलीयेति**। सद्धेतुस्थलीयानुमितिप्रतिबन्धकीभूतइत्यर्थः। तस्य=भ्रमात्मक-ग्रहस्य। **अनुमित्येति**। अनुमितिप्रतिबन्धकत्वेऽपीत्यर्थः। तद्विषयः= निरुक्तभ्रमविषयः। भ्रमदशायां=अनुमितिप्रतिबन्धकभ्रमकाले। **पर्य्यवसि-तार्थइति**। तथा चातएवेत्यत्रेदंपदेन सद्धेतुनिष्ठस्यसर्वदाऽदुष्टत्वस्य परामर्शेऽपि तस्य नानुमितिप्रतिबन्धकभ्रमविषयतायामनुमापकत्वम् अपि तु तादृशभ्रमविषयस्यदोष-त्वाभाव एव तथात्वमेवञ्च सद्धेतुप्रयोज्यानुमितिप्रतिबन्धकभ्रमविषयों न दोषः, सर्व-कालावच्छिन्नदोषाभाववत् सद्धेतुकालीनत्वादित्यनुमानप्रयोग एवादरणीय इति भावः।

**नन्वित्यादि**। भ्रमस्य = असाधारण्यादेर्भ्रमस्य। अनुमित्यनुत्पादप्रयोजकत्वे= अनुमितिप्रतिबन्धकत्वे। तद्विषयस्य=तादृशभ्रमविषयस्य। **इष्ट एवेति**। तथा चानुमितिप्रतिबन्धकभ्रमसत्त्वे तद्विषयत्वमादाय सद्धेतोरपिदुष्टत्वसम्भवे अयं घट एतत्त्वादित्यादेः अलक्ष्यतया अव्याप्तिपरिहारो असंगत इत्याशयः। भ्रमविषयो नदोषः=भ्रमविषये दोषत्वाभावः। **असिद्धमिति**। तथाच पूर्वोक्तानुमाने बाध **इति भावः**। इत्याशंकायां=भ्रमविषयत्वस्य दोषत्वमित्याशंकायां जायमानायां। **तादृशशंकोद्धारं** = भ्रमविषयस्य दोषत्वशंकानिवृत्तिं। व्याचष्टे दीधितिकार **इति शेषः**॥

सद्धेतौ बाधस्याप्रसिद्धतया बाधादिज्ञानेत्यादिकमसिद्धमतः तादृशमूलमन्यथा-

**न च प्रमेयत्वेनाभेदानुमाने शब्दोऽनित्यः शब्दाकाशान्यत-**

❀ गादाधरी ❀

मित्यर्थः। हेत्वाभासाधिक्यापत्तिः-अतिरिक्तहेत्वाभासतापत्तिः, बाधादेर्नित्यदोषतायाः सर्ववादिसिद्धतया भ्रमविषयस्य तदन्तर्भावासम्भवादिति भावः।

अभेदे साध्ये प्रमेयत्वस्यानित्यत्वे साध्ये शब्दाकाशान्यतरत्वस्य च

❀ विवृतिः ❀

व्याचष्टे-**पक्षेति**। **अतिरिक्तेति**। पञ्चहेत्वाभासातिरिक्तस्य हेत्वाभासत्वापत्तिरित्यर्थः। तेनातिरिक्तहेत्वाभासस्याप्रसिद्धावपि न क्षतिरिति ध्येयम्॥

ननूक्तभ्रमविषयस्य बाधत्वमेव स्यात् अत आह **बाधादेरिति** आदिना साधारण्यादिपरिग्रहः। सर्ववादिसिद्धतया = नित्यानित्यदोषवादिमतसिद्धतया। भ्रमविषयस्य = पक्षविशेष्यकसाध्याभावादिभ्रमविषयस्य। तदन्तर्भावाऽसम्भवात्=बाधमध्येप्रवेशासम्भवात्। तथा च पक्षविशेष्यकसाध्याभावभ्रमविषयस्य बाधभिन्नतया निश्चितत्वे दोषान्तरभिन्नत्वस्यापि तत्रावश्यकतया हेत्वाभासत्वं यदिपक्षविशेष्यक साध्याभावादिभ्रम विषयवृत्ति स्यात् तदा पञ्चहेत्वाभासातिरिक्तवृत्ति स्यादित्याकारकापत्तीयापाद्याभावेन हेत्वाभासत्वे तादृशभ्रमविषयवृत्तित्वाभावस्य सिद्धौ तात्पर्यमिति भावः।

यथाश्रुतलक्षणे अव्याप्तिमाशंकते **मूले नचेति**। अव्याप्तिरिति परेणान्वयः। प्रमेयत्वेनाभेदानुमाने = इदमेतद्व्यक्त्यभिन्नं प्रमेयत्वात्, इत्यनुमाने। प्रमेयत्वस्य सर्वत्र सत्त्वेन तत्रतद्व्यक्त्यभेदरूप साध्यविरहेण हेतोः साधारणत्वम्, एवं शब्दाकाशान्यतरत्वहेतोरपि आकाशे वर्त्तमानतया तत्रानित्यत्वरूप साध्याभावस्य सत्त्वात् तस्यापि साधारणत्वमित्यभिमानः। **अव्याप्तिरिति**। इदमेतद्व्यक्त्यभिन्नं प्रमेयत्वादित्यादौ साध्यस्य पक्षमात्रे वर्त्तमानतया अन्यत्र तादृशाभेदनिश्चयस्यासम्भवेन साध्यवद्वृत्तित्वनिश्चयस्य हेतावप्रसिद्ध्या साध्यतदभाववद्वृत्तित्वनिश्चयात्मकसम्बन्धनिश्चस्यापि हेतावप्रसिद्धतया कारणाभावेन साध्यतदभावोपस्थितेरजननात् साध्यसंशयजनककोटिद्वयोपस्थितिजनक पक्षधर्मताज्ञानस्याप्रसिद्धत्वादव्याप्तिः, एवं शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यादावपि अनित्यत्वस्य शब्दरूपपक्षे संदिग्धतया अन्यत्रघटादौ तस्य निश्चयसत्त्वेऽपि तत्रतादृशान्यतरत्वस्यावर्त्तमानतया साध्यवद्वृत्तित्वेन हेतोरनिश्चितत्वेन अनित्यत्वतदभावोपस्थितिजनकानित्यत्वतदभाववद्वृत्तित्वनिश्चयात्मक सम्बन्धनिश्चयस्य तादृशान्यतरत्वहेतावसम्भवात् तत्रापि साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानस्याप्रसिद्धत्वादव्याप्तिरितिभावः।

रत्वादित्यत्र च साधारणेऽव्याप्तिः तयोःसाध्यवदवृत्तित्वेन विरु-

❀ दीधितिः ❀

अनवगतसाध्यसहचारत्वे सति अवगतसाध्याभावसहचारतया

❀ गादाधरी ❀

वास्तवसाध्यवदवृत्तित्वविरहेण विरुद्धत्वासम्भवात्प्राचीनमताभिप्रायकतया तयोर्विरुद्धोक्तिमुपपादयति दीधितौ—अनवगतेति। एवं च साध्य-

❀ विवृतिः ❀

अभिमानं निराकृत्य समाधत्ते-तयोरिति। निरुक्तप्रमेयत्व, तादृशान्यतरत्वहेत्वोरित्यर्थः। साध्यवदवृत्तित्वेन=साध्यवद्वृत्तितयाऽनिश्चितत्वेन। **विरुद्धत्वादिति**। तथाच तयोरलक्ष्यत्वात् तत्र लक्षणाऽसत्त्वेऽविनक्षतिरित्याशयः।

इदमेतद्व्यक्त्यभिन्नं प्रमेयत्वादित्यादौ एतद्व्यभेदरूपसाध्यवति एतद्व्यक्तिरूपपक्षे मेयत्वहेतोर्वृत्तित्वेन, शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यादावपि अनित्यत्ववति शब्दे तादृशान्यतरत्वहेतोर्वर्त्तमानतया साध्यवदवृत्तित्वस्य मेयत्वहेताव सत्त्वेन साध्यवदवृत्तित्वेन तयोर्विरुद्धत्वाभिधानं मौलमसंगतम् अतः **प्राचीनमता** नुसारेण तयोर्विरुद्धत्वमुपपादयितुमाहदीधितौ **अनवगतेति**। अनवगतः अनिश्चितः साध्यसहचारःसाध्याधिकरणवृत्तित्वं यत्र तादृशत्वे सतीत्यर्थः। **अवगतेति**। निश्चितसाध्याभाववद्वृत्तित्वं यत्र तादृशतयेत्यर्थः। सत्यन्तमात्रोक्तौ सर्वमनित्यं मेयत्वादित्यादौ प्रमेयत्वस्यानुपसंहारिणोऽपि विरुद्धत्वापत्तिः तत्रानवगत साध्यसहचारत्वस्य सत्त्वात् अतो विशेष्यदलम्। विशेष्यदलमात्रोक्तौच-साधारणस्यापि तथात्वापत्तिः, तत्रावगतसाध्याभावसहचारत्वस्य सत्त्वात् अतः सत्यन्तदलोपादानमित्यवध्येयम्।

**विरुद्धत्वमेवेति**। तथाचेदमेतद्व्यक्त्यभिन्नं प्रमेयत्वादित्यादौ, शब्दोऽनित्यः शब्दाकाशान्यतरत्वादित्यादौ च मेयत्व,-तादृशान्यतरत्वहेत्वोरनिश्चितसाध्यवद्वृत्तित्वविशिष्टनिश्चितसाध्याभाववद्वृत्तित्ववत्त्वेन, विरुद्धत्वमक्षतमेवेतिहृदयम्।

दीधितिकारोक्तरीत्या मूलं विवृणोति टीकायामे**वञ्चेत्यादि**। तथा च साध्यवदवृत्तित्वेन विरुद्धत्वादितिमूलस्य साध्याधिकरणवृत्तितयाऽनिश्चितत्वेन विरुद्धत्वादित्येवमर्थः करणीय इति भावः। यद्यपि अभेदे साध्ये मेयत्वस्य, अनित्यत्वे साध्ये तादृशान्यतरत्वस्य तादात्म्येन हेतुत्वानुसरणे तयो तेन सम्बन्धेन साध्यवति अवर्तमानतया यथाश्रुतसाध्यवदवृत्तित्वेनैव तयोर्विरुद्धत्वसम्भवेऽनावगतेत्यादिकमसंगतम् तथापि तादृशसम्बन्धेन तयोर्हेतुत्वे तत्र साधारणतायाः शंकानास्पदतया अव्याप्त्यभिधानं निर्युक्तिकं स्यादतस्तावद्दूरानुधावनमिति ध्येयम्॥

❀ दीधितिः ❀

विरुद्धत्वमेव । तयोरिति । इदञ्चाभ्युपगमवादेन । वस्तुतो यथोपव-

❀ गादाधरी ❀

वदवृत्तित्वेनेति मूलस्य साध्यवद्वृत्तितया अनवगतत्वेनेत्यर्थः । तादृशस्थले पक्षतादशायां हेतोः साध्यतदभावोभयसहचारस्याशक्यनिर्णयत्वेऽपि कालान्तरीयतन्निर्णयविषयवास्तवतदुभयसहचारमादाय लक्षणगमनसम्भवादलक्ष्यतयाऽव्याप्तिपरिहारो न घटत इत्यत आह–अभ्युपगमेति । संशयजनकपक्षधर्मताज्ञानस्य विशेषणविधया लक्षणघटकत्वमभ्युपगम्येत्यर्थः । यथाश्रुतलक्षणे व्याप्त्यादिग्रहदशायां सद्धेतावतिव्याप्तिवारणाय

❀ विवृतिः ❀

इदञ्चेत्यादिदीधितिमवतारयति **तादृशस्थले इति** । अभेदसाध्यकप्रमेयत्व हेतुकस्थले, अनित्यत्वसाध्यकशब्दाकाशान्यतरत्वहेतुकस्थले चेत्यर्थः । पक्षतादशायां इदंत्वावच्छिन्ने पक्षे अभेदरूपसाध्यस्य, शब्दे च अनित्यत्वसाध्यस्य संशयदशायामित्यर्थः । हेतोः = मेयत्वस्य, तादृशान्यतरत्वस्य च । **साध्येति** । साध्यवद्वृत्तित्वस्य, हेतावशक्यनिर्णयत्वेन साध्यतदभाववद्वृत्तित्वस्यापि तत्राशक्यनिर्णयत्वमित्याशयः । **कालान्तरीयेति** । पक्षे साध्यादिनिश्चयकालीनसाध्यतदभाववद्वृत्तित्वावच्छिन्ननिरुक्तहेतुप्रकारताकनिश्चयीयप्रकारतावच्छेदकीभूतवास्तवसाध्यतदभाववद्वृत्तित्वमादायेत्यर्थः । लक्षणगमन**सम्भवादिति** । साध्यसंशयजनकपक्षधर्मताज्ञानविरहदशायां अव्याप्तिभिया तादृशज्ञाननिरूपितप्रकारतावच्छेदकधर्मस्योपलक्षणतयैव लक्षणार्थतायाः आवश्यकतया पक्षे साध्यसंदेहदशायां साध्यतदभाववद्वृत्तित्वेन हेतुप्रकारक निश्चयस्याऽसत्त्वेऽपि पक्षे साध्यनिश्चयदशोत्पन्नसाध्यतदभाववद्वृत्तित्वावच्छिन्नहेतुप्रकारकनिश्चयीयप्रकारतावच्छेदकसाध्यतदभाववद्वृत्तित्वधर्मस्य पक्षे साध्यसंदेहदशायामपि हेतौ सत्त्वेन निरुक्तहेतौ लक्षणसमन्वयः सम्भवत्येवेति भावः ।

अलक्ष्यतया = निरुक्तहेतोर्विरुद्धत्वेनालक्षतया । अव्याप्तिपरिहारः=मूलोक्ताव्याप्तिपरिहारः । **संशयेति** । संशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञाननिरूपितप्रकारतावच्छेदकधर्मस्येत्यर्थः । विशेषणविधया=तादृशज्ञानाधिकरणकालावच्छिन्नतया । लक्षणघटकत्वं = सव्यभिचारपदप्रतिपाद्यतावच्छेदकत्वं ।

लक्षणे=यथोपवर्णितत्वविशेषणोपादानप्रयोजनमाह**यथेति** । साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वरूपयथाश्रुतलक्षणे इत्यर्थः । व्याप्त्यादिग्रहदशायां = व्याप्यत्वेन साध्याभाववदवृत्तित्वेन, ज्ञानदशायां । **सद्धेतौ तदानीं**

❀ दीधितिः ❀

र्णितलक्षणस्य न तत्राव्याप्तिरिति ध्येयम्।

❀ गादाधरी ❀

तादृशज्ञानं विशेषणविधयैव निवेशनीयम्, तादृशज्ञानदशायामतिप्रसङ्गश्चास्त्येव तत्र तादृशज्ञानविरहदशायां चागत्या साधारणस्यापि सव्यभिचारत्वं नोपगन्तव्यमित्यत आह-उपवर्णितेति। यथाव्याख्यातेत्यर्थकम्,

❀ विवृतिः ❀

साध्यतदभाववद्वृत्तित्वज्ञानासत्त्वसूचनाय निरुक्तव्याप्त्यादिग्रहदशापर्यन्तानुसरणं। सद्धेतौ=वह्न्यादिसाध्यकधूमादौ। तादृशज्ञानं=पूर्वोक्तपक्षधर्मताज्ञानविषयत्वं। विशेषणविधयैव=तादृशज्ञानाधिकरणकालावच्छिन्नतयैव। **निवेशनीयमिति**। वह्निव्याप्यधूमादौ यदा व्याप्तिज्ञानं वर्तते तदा साध्यसंशयजनककोटिद्वयोपस्थितिजनकीभूतस्य वह्निवह्न्यभाववद्वृत्तित्वेन धूमप्रकारकज्ञानस्य निरुक्तव्याप्तिज्ञानप्रतिबध्यतया तदुत्पादाऽसम्भवेऽपि धूमादौ व्याप्तिग्रहशून्यकालीनवह्निवह्न्यभाववद्वृत्ति धूमवानित्याकारकभ्रमीयविषयत्वोपलक्षितत्वस्य निरुक्तव्याप्तिग्रहकालेऽपि धूमादौ सत्त्वात् तदानीं सद्धेतावतिव्याप्तिः अतः संशयजनकनिरुक्तज्ञानाधिकरणकालावच्छिन्नत्वविशेषिततादृशपक्षधर्मताज्ञानविषयत्वस्यैव लक्षणार्थत्वं वाच्यमेवं च धूमादौ वह्न्यादिव्याप्तिग्रहकाले वह्निवह्न्यभाववद्वृत्तित्वज्ञानस्यैव तत्रासम्भवेन न व्याप्त्यादिग्रहकाले सद्धेतौ यथाश्रुतलक्षणस्यातिव्याप्तिरित्याशयः।

नन्वेवं धूमादौ वह्न्यादिव्याप्तिग्रहशून्यकाले वह्निवह्न्यभाववद्वृत्तित्वेन धूमादिप्रकारकभ्रममादाय तदानीं सद्धेतावतिव्याप्तिः, संशयजनककोटिद्वयोपस्थितिजनकनिरुक्तभ्रमकालावच्छिन्नपक्षधर्मताज्ञानविषयतायाः तदानीं धूमादौ सत्त्वात् अत आह **तादृशेति**। संशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानदशायामित्यर्थः। तत्र=सद्धेतौ। तथा च सद्धेतौ व्याप्तिग्रहशून्यकाले साध्यतदभाववद्वृत्तित्वभ्रमदशायां यथाश्रुतलक्षणस्यातिव्याप्तिरस्त्येवेति भावः। ननु तथापि धूमादिसाध्यकवह्न्यादिसाधारणहेतौ यदा धूमधूमाभावादिमद्वृत्तित्वज्ञानं नास्ति तदा तत्राव्याप्तिरत आह **तादृशेति**। धूमादिसंशयजनकनिरुक्तपक्षधर्मताज्ञानविरहदशायामित्यर्थः। अगत्या=उपायान्तराभावेन। **नोपगन्तव्यमिति**। तथा चोपायान्तराभावेन साधारण्यस्याप्यनित्यदोषत्वमेवाभ्युपगन्तव्यमिति हृदयम्।

**यथाव्याख्यात इति**। दीधितिकृता यथाव्याख्यातलक्षणस्येत्यर्थः, तथाच साध्यसंशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वस्य, फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपिता य-

द्धत्वादिति चेन्न । एतदज्ञानेऽपि साधारण्यादिप्रत्येकस्य ज्ञानादु-द्भावनाच्च स्वपरानुमितिप्रतिबन्धात् उद्भावितैतन्निर्वाहार्थं साधा-

---

❀ विवृतिः ❀

द्रूपावच्छिन्नप्रकारता साध्यसंशयजनकतावच्छेदिका तद्रूपवत्त्वस्यैव वा, लक्षणार्थतायाः पूर्वं व्याख्याततया तादृशव्याख्यातलक्षणे न निरुक्तप्रमेयत्वादिहेतावतिव्याप्तिः कालान्तरीयसंशयजनकतावच्छेदकप्रकारतावच्छेदकधर्मस्य पक्षतादशायामपि प्रमेयत्वादौ सत्त्वात् । नवा सद्धेतावतिव्याप्तिः, तादृशप्रकारतावच्छेदकतापर्य्याप्त्यधिकरणधर्मवत्त्वस्यैव तत्राऽवर्त्तमानत्वात् । एवंसाधारण्यस्यापि नित्यदोषत्वमेव संशयजनकतादृशज्ञानशून्यतादशायामपि कालान्तरीयतादृशज्ञानप्रकारतावच्छेदकधर्मस्यसाधारणहेतौ सत्त्वात् ।

नचैवं शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दादावनित्यत्वनिश्चयदशायां कालान्तरीयनिश्चितसाध्यादिमद्व्यावृत्तत्वमादाय शब्दत्वादावतिव्याप्तिरितिवाच्यम्,साध्यतदभाववद्व्यावृत्तत्वस्यैवासाधारण्यतया तस्य च गगनादिनिष्ठत्वेन नित्यदोषत्वात् शब्दत्वादौ तस्याभावात् इतिसमुदिततात्पर्य्यपर्य्यवसितम् ॥

अथ साध्यसंशयेत्यादिशंकायाः समाधानमाह-मूले **इतिचेन्नेति** । इत्याकारकानुगतसव्यभिचारलक्षणं वक्तुं न शक्यमित्यर्थः । निषेधे हेतुमाह**तदज्ञानेपीति** । एतस्य साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वरूपानुगतधर्मस्याज्ञानेऽपि हेतौ निश्चयाभावदशायामपीत्यर्थः । अपिना तादृशानुगतधर्मज्ञानकालपरिग्रहः । साधारण्यादिप्रत्येकस्य=साध्यतदभाववद्वृत्तित्वादिप्रत्येकस्य । आदिपदात्साध्यतदभाववद्व्यावृत्तत्वादिरूपासाधारण्यपरिग्रहः । प्रत्येकस्येत्यत्र षष्ठ्यर्थः ज्ञानान्वयि प्रकारत्वंबोद्धव्यम् । ज्ञानात्=तादृशवृत्तित्वादिप्रकारेण हेतुनिश्चयात् । प्रयोज्यत्वं पञ्चम्यर्थः । तस्य चाग्रिमस्वपरानुमितिप्रतिबन्धयोः स्वानुमितिप्रतिबन्धपदार्थे-स्वकीयानुमित्यनुत्पादेऽन्वयः । **उद्भावनादिति** । साधारण्यादेःप्रत्येकस्येति पूर्वेणान्वयः । अत्रापि पञ्चम्यर्थः प्रयोज्यत्वं अग्रिमपरानुमितिप्रतिबन्धपदार्थे परकीयानुमित्यनुत्पादेऽन्वयीतिबोध्यम् । साधारण्यादेर्ज्ञानफलं तस्योद्भावनफलं च प्रदर्शयति-**स्वपरेति** । स्वकीयानुमित्यनुत्पादात् परकीयानुमित्यनुत्पादाच्चेत्यर्थः । साधारण्यादिज्ञानफलं स्वानुमित्यनुत्पादः तस्योद्भावनफलं च परकीयानुमित्यनुत्पादइत्याशयः ॥

ननु यदि साधारण्यादिप्रत्येकज्ञानमेवानुमितिप्रतिबन्धकं नतु तादृशानुगतधर्मज्ञानं तदा तादृशानुगतधर्मस्योद्भावनदशायां साधारणादिहेतुकानुमित्युत्पादः स्यादत आह-**उद्भावितेति** । उद्भावितेनानुगतधर्मेण एतन्निर्वाहार्थमनुमितिप्रतिबन्धनि-

रणादेरवश्योद्भाव्यत्वेन तस्यैव दोषत्वाच्च ।

इति श्रीमहामहोपाध्याय गंगेशोपाध्यायविरचितं सव्यभिचार पूर्वपक्षीय संशयजनकताघटित लक्षणं समाप्तम् ॥

---

❀ दीधितिः ❀

यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम्, अन्यथा अतिप्रसङ्ग

❀ गादाधरी ❀

अनुमित्यविरोधिज्ञानविषयस्यापि हेत्वाभासविभाजकत्वे क्षतिविरहात् एतदज्ञानेपीत्यादिनोक्तविभाजकधर्मज्ञानस्यानुमित्यविरोधित्वकथनमकिञ्चित्करमित्याशङ्कायामभिप्रायोपवर्णनेन निराकुरुते—यद्रूपज्ञानमिति । यद्रूपावच्छिन्नविषयकज्ञानमित्यर्थः । तदेव—तद्रूपावच्छिन्नमेव ।

❀ विवृतिः ❀

र्वाहार्थमित्यर्थः । साधारण्यादेः=साध्यादिमद्वृत्तित्वादेः । अवश्योद्भाव्यत्वेन = अवश्यक्लृप्तप्रतिबन्धकतावज्ज्ञानजनकोद्भावनविषयत्वेन । तथाच तादृशानुगतपक्षधर्मताज्ञानविषयत्वस्य उद्भावनाधीनज्ञानस्य ग्राह्याभावानवगाहितया नानुमितिप्रतिबन्धकत्वम्, इतिसामान्यधर्मोद्भावनस्थलेऽनुमित्यनुत्पादनिर्वाहार्थं साधारण्यादेरवश्योद्भाव्यत्वमेव, तादृशोद्भावनं विनाऽनुमितिप्रतिबन्ध एव न सम्भवतीतिहृदयम् ।

**मथुरानाथतर्कवागीशास्तु** उद्भावितस्यैतस्यानुगतधर्मस्य निर्वाहार्थे निश्चयार्थं, तथाच साधारण्यादेरुद्भावनाधीनज्ञानं विना तादृशसामान्यधर्मस्य हेतौ निश्चय एव न सम्भवतीत्याशय इति **प्राहुः** । तस्यैव=साधारण्यादेरेव । एवकारात्तादृशानुगतधर्मस्यदोषत्वव्यवच्छेदः । दोषत्वाच्च = अनुमिति तत्कारणान्यतर प्रतिबन्धकयथार्थज्ञानविषयत्वाच्च । तादृशानुगतधर्मज्ञानस्य कथंचिदनुमितिं प्रति प्रतिबन्धकत्वकल्पनेऽपि साधारण्यादिज्ञानस्य प्रथक् प्रतिबन्धकताया आवश्यकतया तत एवोपपत्तौ तादृशानुगतधर्मज्ञानत्वेन प्रतिबन्धकतायां मानाभावात् अनुमित्यप्रतिबन्धकज्ञानविषयीभूतधर्मेण विभागोऽसिद्ध एवेतिभावः ॥

यद्रूपज्ञानमित्यादिदीधितिमवतारयितुमाह टीकायां—**अनुमित्येति** । अनुमितितत्कारणान्यतराप्रतिबन्धकज्ञानविषयत्वस्य, निरुक्तपक्षधर्मताज्ञानविषयत्वस्यापीत्यर्थः। हेत्वाभासविभाजकत्वे=हेत्वाभासत्वावान्तरीभूतसाधारणत्वादिना धर्मिप्रतिपादनप्रयोजकत्वे । **क्षतिविरहादिति** । अकिञ्चित्करमित्यत्रैवायं हेतुः । उक्तविभाजकधर्मज्ञानस्य = निरुपक्षधर्मताज्ञानविषयतावच्छेदकधर्मज्ञानस्य । **अकिञ्चित्कर-**

❁ दीधितिः ❁

**इत्यभिप्रेत्य-दूषयति नैतदिति ।**

❁ गादाधरी ❁

**एतेन निरुक्तपक्षधर्मताज्ञानविषयतावच्छेदकधर्मवत्त्वस्यैव विभाजकतया साधारण्यादिरूपताद‍ृशधर्मविषयकज्ञानस्य चानुमितिविरोधितया ताद‍ृशनियमोपगमेपि तथाविधधर्मस्य न विभाजकत्वानुपपत्तिरिति परा-**

❁ विवृतिः ❁

**मिति** । तथाचानुमित्यविरोधिज्ञानविषयीभूतधर्मस्य विभाजकत्वसम्भवे ताद‍ृशानुगतधर्मज्ञानस्यानुमित्यविरोधित्वाभिधानं निर्युक्तिकमितिभावः ।

अभिप्रायोपवर्णनेन=अनुगतधर्मज्ञानस्यानुमित्यविरोधित्वकथनस्य तात्पर्य्योपिवर्णनेन । निराकुरुते निरुक्तामाशंकां दीधितिकारइतिशेषः । यद्रूपावच्छिन्नविषयकं ज्ञानं=यद्रूपावच्छिन्नप्रकारताकज्ञानं । तद्रूपावच्छिन्नमेव=तद्रूपावच्छिन्नधर्मवत्त्वमेव । तथा च साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयतावच्छेदकत्वावच्छिन्नधर्मप्रकारकज्ञानस्यानुमित्यप्रतिबन्धकतया ताद‍ृशधर्मवत्त्वस्य हेत्वाभासविभाजकत्वंन सम्भवतीतिहृदयम् ॥

**एतेनेति** । यथाश्रुतार्थं परित्यज्ययद्रूपावच्छिन्नविषयकज्ञानस्यानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नधर्मस्य हेत्वाभासविभाजकत्वमिति व्याख्याकरणेनेत्यर्थः । **निरुक्तेति** । साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयतावच्छेदकधर्मवत्त्वस्यैवेत्यर्थः । विभाजकतया=विभागप्रयोजकतया । **साधारण्यादीति** । आदिनाऽसाधारण्यपरिग्रहः । तथाच साधारण्यादिस्वरूपो यः ताद‍ृशपक्षधर्मताज्ञानविषयतावच्छेदको धर्मस्तद्विषयकज्ञानस्येति पर्य्यवसितार्थः । अनुमितिविरोधितया=अनुमितितत्कारणान्यतरप्रतिबन्धकतया । ताद‍ृशनियमोपगमेऽपि = यद्रूपविषयकंज्ञानमनुमितिप्रतिबन्धकं तद्रूपस्य विभाजकत्वाभ्युपगमेऽपि । तथाविधधर्मस्य = ताद‍ृशपक्षधर्मताज्ञानविषयतावच्छेदकधर्मस्य । न विभाजकत्वानुपपत्तिः=न विभागप्रयोजकत्वव्याघातः । परास्तमिति-एतेनेति पूर्वेणान्वयः । तथा च यदि यद्रूपविषयकं ज्ञानंअनुमितिप्रतिबन्धकं तद्रूपस्य विभाजकत्वमित्युच्यते तदा साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयतावच्छेदकरूपसाधारण्यादिविषयकज्ञानस्यानुमितिप्रतिबन्धकतया ताद‍ृशज्ञानविषयतावच्छेकधर्मस्यविभाजकत्वापत्तिःस्यात् अतो यद्रूपावच्छिन्नविषयकं ज्ञानमनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नस्यैव विभाजकत्वं वाच्यमेवञ्च ताद‍ृशपक्षधर्मताज्ञानविषयतावच्छेदकत्वेन निरुक्तज्ञानविषयतावच्छेदकसाधारण्यादेर्ज्ञानस्यानुमित्यप्रतिबन्धकतया साधारण्यत्वादिनैव साधारण्यादेर्ज्ञानस्यानुमितिप्रति-

❀ गादाधरी ❀

स्तम्। साधारण्यत्वादिनैव साधारण्यादिज्ञानस्य विरोधितया तादृशपक्षधर्मताज्ञानविषयतावच्छेदकत्वेन तस्य विभाजकतानुपपत्तेः, एवं च एतदज्ञानेपीति मूलस्य निरुक्तविभाजकतावच्छेदकावच्छिन्नाज्ञानेपीत्यर्थः। साधारण्यादिप्रत्येकस्येत्यस्य साधारण्यत्वादिरूपप्रत्येकधर्मावच्छिन्नस्येत्यवधेयम्। अन्यथा-अतादृशरूपावच्छिन्नस्यापि विभाजकत्वे। अतिप्रसङ्गः-अनुमितिकारणीभूतज्ञानविरोधिधर्मवत्त्वादिना अन्यतरधर्मवत्त्वादिना वा सव्यभिचारविरुद्धादीनामैक्यप्रसङ्गः॥

मूले प्रतिबन्धादित्यस्य निरुक्तसामान्यधर्मज्ञानस्याप्रतिबन्धकत्वा-

❀ विवृतिः ❀

बन्धकत्वेन तादृशपक्षधर्मताज्ञानविषयतावच्छेदकत्वावच्छिन्नस्य तादृशज्ञानविषयतावच्छेदकधर्मस्यनहेत्वाभासविभाजकत्वं सम्भवतीतिभावः॥

साधारण्यादिनैवेत्यत्रैवकारेण निरुक्तपक्षधर्मताज्ञानविषयतावच्छेदकत्वेन साधारण्यादेर्ज्ञानस्यानुमितिप्रतिबन्धकत्वव्यवच्छेदः, इत्यग्रे स्फुटीभविष्यति। विरोधितया= अनुमितितत्कारणान्यतरप्रतिबन्धकतया। **तादृशेति**। साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयतावच्छेदकत्वेनेत्यर्थः। तस्य=निरुक्तज्ञानविषयतावच्छेदकधर्मस्य। विभाजकत्वानुपपत्तेः=विभाजकत्वस्य वक्तुमशक्यत्वात्। तथा च यद्रूपज्ञानमित्यादिः यथाश्रुतार्थपरित्याग एव समुचित इत्याशयः॥

**एवञ्चेति**। यद्रूपविषयकज्ञानमित्यस्य यद्रूपावच्छिन्नविषयकज्ञानमित्यर्थकरणेनेत्यर्थः। **निरुक्तेति**। साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयतावच्छेदकत्वावच्छिन्नधर्मस्याज्ञानेऽपीत्यर्थः। **साधारण्यत्वादीति**। आदिनाऽसाधारण्यत्वादिपरिग्रहः। **अवधेयमिति**। साधारण्यादेः प्रत्येकज्ञानस्य निरुक्तपक्षधर्मताज्ञानविषयतावच्छेदकधर्मज्ञानात्मकतया यथाश्रुतासंगतिरित्याशयः। अन्यथापदार्थं व्याचष्टे **तादृशेति**। अनुमित्यप्रतिबन्धकज्ञानविषयतावच्छेदकत्वावच्छिन्नधर्मस्यापीत्यर्थः। विभाजकत्वे=विभागप्रयोजकत्वे। **अनुमितीति**। परामर्शप्रतिबन्धकज्ञानविषयतावच्छेदकधर्मवत्त्वादिनेत्यर्थः। प्रकृतसाध्यसाधनसामानाधिकरण्यग्रहाविरोधिपरामर्शविरोधिधर्मवत्त्वस्य विभाजकत्वाभ्युपगमे सव्यभिचारविरुद्धादिना ऐक्यासम्भवात् इष्टापत्तिव्युदासायाहान्यतरेति। सव्यभिचारत्वविरुद्धत्वैतदन्यतरत्वविशिष्टधर्मवत्त्वादिनेत्यर्थः। **ऐक्यप्रसंगइति**। तथाच हेत्वाभासानां पञ्चत्वमेव न स्यादिति हृदयम्॥

प्रतिबन्धादित्यस्य=स्वपरानुमितिप्रतिबन्धादित्यस्य। **निरुक्तेति**। तादृश-

※ गादाधरी ※

दिति शेषः। तस्यैव दोषत्वादित्यस्य प्रत्येकधर्मस्यैव विरोधित्वादित्यर्थः। तत्रैवायं हेतुरिति न सत्, दोषत्वाच्चेति चकारासङ्गतेः। तस्यैव दोषतया उद्भावितुमुचितत्वात् न तु अनुगतधर्मस्येत्यर्थः। एवं च दोषविधया यादृशो धर्म उद्भाव्यते स एव विभाजकः उक्तानुगतधर्मस्य च दोषविधयाऽनुद्भावनीयतया न तथात्वमिति हृदयम्।

※ विवृतिः ※

पक्षधर्मताज्ञानविषयतावच्छेदकत्वविशिष्टधर्मप्रकारकज्ञानस्येत्यर्थः। अप्रतिबन्धकत्वात् =अनुमित्यप्रतिबन्धकत्वात्। तादृशधर्मप्रकारकज्ञानस्य विरुद्धविषयकत्वादितिभावः। प्रत्येकधर्मस्यैव=साधारण्यत्वेन साधारण्यादिधर्मस्यैव। विरोधित्वात् = अनुमितिविरोधित्वात्। तत्रैव=स्वपरानुमितिप्रतिबन्ध एव। अयं=तस्यैव दोषत्वादित्यादिकः। **चकाराऽसंगतेरिति**। चकारस्य दोषान्तरसमुच्चायकत्वादिति हृदयम्। तस्यैव दोषत्वादित्यस्य स्वयं व्याख्यानमाह **तस्यैवेति**। साधारण्यत्वेन साधारण्यादेरित्यर्थः। दोषतया=हेतुदोषतया। नत्वनुगतधर्मस्य = न तु तादृशपक्षधर्मताज्ञानविषयतावच्छेदकत्वावच्छिन्नधर्मस्य।

भावमाह**एवञ्चेति**। यथोक्तमूलस्य निरुक्तव्याख्याकरणे चेत्यर्थः। दोषविधया= दोषत्वेन, अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वेनेति यावत्। यादृशो धर्मः=यद्रूपावच्छिन्नो धर्मः। स एव=तद्रूपावच्छिन्नधर्म एव। उक्तानुगतधर्मस्य= निरुक्तपक्षधर्मताज्ञानविषयतावच्छेदकत्वावच्छिन्नधर्मस्य। अनुद्भाव**नीयतयेति**। निरुक्तधर्मज्ञानस्यानुमित्यप्रतिबन्धकत्वादितिभावः। न तथात्वं=न हेत्वाभासविभाजकत्वम्। हृदयमित्यस्वरससूचनाय, तद्बीजन्तु अग्रेऽनुमित्यप्रतिबन्धकज्ञानविषयीभूतधर्मस्यापि विभाजकत्वस्य वक्ष्यमाणतया इदानीं निरुक्तधर्मस्य विभाजकत्वानुपपत्तिप्रदर्शनं निर्युक्तिकमिति।

निरुक्तानुगतपक्षधर्मताज्ञानविषयत्वस्याज्ञानकाले साधारण्यत्वादिना साधारण्यादेर्ज्ञानस्य अनुमितिप्रतिबन्धकत्वं, तादृशानुगतधर्मज्ञानस्यानुमित्यप्रतिबन्धकत्वे प्रयोजकमिति यत् मूलकृताऽभिहितं तन्न संगच्छते निरुक्तानुगतधर्मो नानुमितिप्रतिबन्धकज्ञानविषयः स्वविषयकज्ञानविरहकालीनस्वभिन्नज्ञाननिष्ठानुमितिप्रतिबन्धकताकत्वात् इत्याद्यनुमानसम्भवेऽपि निरुक्तहेतोर्बाधादौ व्यभिचारित्वापत्तिः, बाधादिज्ञानविरहकालीनबाधादिभिन्नसत्प्रतिपक्षविषयकज्ञाननिष्ठानुमितिप्रतिबन्धकताकत्वस्यबाधादौसत्त्वेन तत्रानुमितिप्रतिबन्धकज्ञानविषयत्वाभावस्यासत्त्वादित्याशंकानिराकरणपरं वस्तुतस्त्वित्यादिदीधितिग्रन्थमवतारयितुं शंकते **नन्विति**। तदज्ञानदशायां=निरुक्तानु-

❀ दीधितिः ❀

**वस्तुतस्तु उपस्थापकत्वादिज्ञानमनुमितेस्तज्जनकस्य वा न प्रति-**

❀ गादाधरी ❀

ननु तदज्ञानदशायामन्यज्ञानादनुमितिप्रतिबन्धस्य तज्ज्ञानीयानुमित्यविरोधिताबीजत्वं मणिकृताभिहितं न घटते तथासति सत्प्रतिपक्षादिज्ञानस्यानुमितिविरोधितया बाधादिज्ञानस्यातथात्वापत्तेः, अतः स्वयं तद्बीजमाह-वस्तुतस्त्विवति । उपस्थापकत्वादीति । कोटिद्वयोपस्थापकज्ञानविषयत्वादीत्यर्थः। आदिपदात्स्वयं निष्कर्षिततादृशज्ञानविषयतावच्छेदकरूपवत्त्वपरिग्रहः। विरोधीविषयकत्वाभावात्-ग्राह्यनिरूपितप्रतियोगितावच्छेदकावच्छिन्नतद्व्याप्यत्वाद्यवच्छिन्नाविषयकत्वात् ।

❀ विवृतिः ❀

गतधर्मादिरज्ञानकाळे । अन्यज्ञानात्=साधारण्यत्वादिना साधारण्यज्ञानात् । प्रयुक्तत्वं च पञ्चम्यर्थः, तस्य चानुमितिप्रतिबन्धेऽन्वयः । अनुमितिप्रतिबन्धस्य=अनुमित्यनुत्पादस्य । **तज्ज्ञानीयेति** । तादृशानुगतधर्मज्ञाननिष्ठानुमित्यप्रतिबन्धकत्वे हेतुत्वमित्यर्थः ।

मणिकाराभिधानस्यासंगतत्वे हेतुमाह **तथासतीति** । तज्ज्ञानविरहकालीनान्यज्ञानप्रत्युक्तानुमितिप्रतिबन्धस्य तज्ज्ञाननिष्ठानुमित्यप्रतिबन्धकतायां प्रयोजकत्वाभ्युपगमे सतीत्यर्थः । सत्प्रतिपक्षज्ञानस्य साध्याभावव्याप्यवत्पक्षादिज्ञानस्य । अनुमितिविरोधितया=अनुमितिप्रतिबन्धकतया बाधादिज्ञानस्य=साध्याभाववत् पक्षादिज्ञानस्य । आदिना स्वरूपासिद्ध्यादिपरिग्रहः । अतथात्वापत्तेः=अनुमित्यप्रतिबन्धकत्वापत्तेः। बाधादिज्ञानविरहकालीनसत्प्रतिपक्षज्ञानस्यानुमितिप्रतिबन्धकत्वस्यावश्यकतया तदानीं बाधादिज्ञानस्यानुमितिप्रतिबन्धकत्वं न सम्भवतीत्याशयः। स्वयं=दीधितिकारः। तद्बीजम्=तादृशानुगतधर्मज्ञानस्यानुमित्यप्रतिबन्धकत्वेबीजम्। **कोटिद्वयविति** । साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वादीत्यर्थः। **निष्कर्षितेति** । निरुक्तपक्षधर्मताज्ञानविषयतावच्छेदकत्वविशिष्टरूपवत्त्वस्य संशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वस्य वापरिग्रहइत्यर्थः। **ग्राह्येति** । ग्राह्यंयत् अनुमितितत्कारणान्यतरविषयीभूतं तन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नं यत् ग्राह्याभावत्वावच्छिन्नं यच्च तादृशग्राह्याभावत्वावच्छिन्ननिरूपितग्राह्याभावव्याप्यत्वावच्छिन्नं तदविषयकत्वादित्यर्थः।

निरुक्तानुगतधर्मज्ञानस्य विरुद्धविषयकत्वेनानुमितितत्कारणान्यतराप्रति-

❀ दीधितिः ❀

**बन्धकं विरोधिविषयकत्वाभावात् एवमुत्तरत्रापि ।**

इति–श्री महामहोपाध्यायरघुनाथशिरोमणि–विरचिता सव्यभिचार पूर्वपक्षीय संशयजनकताघटितलक्षणदीधितिःसमाप्ताः ।

❀ गादाधरी ❀

इदं त्ववधेयम् ! मूले प्रतिबन्धादित्यनन्तरं मानाभावेन निरुक्तधर्मज्ञानस्यानुमितिप्रतिबन्धकत्वादिति शेषः, एवं च प्रत्येकज्ञानस्यानुमितिप्रतिबन्धकत्वं नानुगतधर्मज्ञानस्यानुमित्यप्रतिबन्धकतासंपादकतया मूलेऽभिहितं किन्तु तथात्वेन प्रमाणाभावे कथिते अनन्तरं–ननु प्रत्येकं नानाधर्मज्ञानस्यानुमितिविरोधित्वकल्पनापेक्षया विरोध्यविषयकत्वस्यापि अनुगतधर्मज्ञानस्यैकस्य तथात्वं विशेषदर्शिनां साधारणादिहेतुकानुमितिवारणाय कल्पितुमुचितमित्याशङ्कावतारात्तत्परिजिहीर्षया प्रत्येकज्ञान-

❀ विवृतिः ❀

बन्धकत्वव्यवस्थापनं विनापि एतदज्ञानेऽपीत्यादिमूलं संगमयितुमाह **इदं त्ववधेयमिति** । प्रतिवन्धादित्यनन्तरं = स्वपरानुमितिप्रतिबन्धादित्यनन्तरम् । मानाभावेन प्रमाणाभावेन । **निरुक्तेति** । तादृशपक्षधर्मताज्ञानस्येत्यर्थः । अनुमित्यप्रतिबन्धकत्वात्=अनुमितितत्कारणान्यतराऽप्रतिबन्धकत्वात् । उपसंहरति **एवञ्चेति** । निरुक्तार्थकरणे चेत्यर्थः । प्रत्येकज्ञानस्य=साधारण्यत्वादिनासाधारण्यादिज्ञानस्य । नानुगतधर्मज्ञानस्य=ननिरुक्तपक्षधर्मताज्ञानविषयत्वज्ञानस्य । **अनुमित्येति** । अनुमितिनिरुपितप्रतिबन्धकत्वाभावप्रयोजकतयेत्यर्थः । तथात्वेन=अनुगतधर्मज्ञानस्यानुमित्यप्रतिबन्धकत्वेन । अनन्तरं = प्रमाणाभावस्य कथनानन्तरम् । नानाधर्मज्ञानस्य = साधारण्यत्वादिना साधारण्यादेर्ज्ञानस्य । विरुद्धविषयकस्यापि=ग्राह्याभावतद्व्याप्यत्वावच्छिन्नाविषयकस्यापि । अनुगतधर्मज्ञानस्य=निरूक्तपक्षधर्मताज्ञानविषयत्वज्ञानस्य । तथात्वं=अनुमितिप्रतिबन्धकत्वं । विशेषदर्शिनाम् = अभ्रान्तानाम् । **साधारणेति** । धूमादिसाध्यकवह्न्यादिहेतुकव्याप्तिज्ञानवारणायेत्यर्थः । **उचितमिति** । तथाचधूमवान् वह्नेरित्यादौ वह्न्यादौ धूमादिसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वज्ञानदशायां अभ्रान्तानां तद्धेतुकव्याप्तिज्ञानवारणायावश्यं निरुक्तानुगतधर्मज्ञानम् अनुमितितत्कारणान्यतरप्रतिबन्धकं भवत्येवेति भावः ॥

इत्याशंकापरिजिहीर्षया = निरुक्तानुगतधर्मज्ञानस्यानुमितिप्रतिबन्धकत्वशङ्कापरित्यागेच्छया । प्रत्येकज्ञानस्य = साधारण्यत्वादिना साधारण्यादिज्ञानस्य । **अव-**

❀ गादाधरी ❀

-स्यावश्यकल्पनीयप्रतिबन्धकताकत्वं दोषत्वादित्यन्तेनाभिहितमिति ॥ एवं-तादृशयुक्ते उत्तरत्रापि-निर्वक्ष्यमाणानुगतधर्मान्तरेपि, अनुमितिविरोधिज्ञानाविषयत्वं बोध्यमिति शेषः ।

इति श्रीमहामहोपाध्यायगदाधरभट्टाचार्य्यविरचिता सव्यभिचार पूर्वपक्षीयसंशयजनकताघटितलक्षण व्याख्या समाप्ताः ।

❀ विवृतिः ❀

**श्यक्लृप्तेति** । निरुक्तानुगतधर्मज्ञानस्यानुमितिप्रतिबन्धकत्वेऽपि साधारण्यादिज्ञानदशायां अनुमित्यापत्तिवारणाय तज्ज्ञानस्य अनुमितिप्रतिबन्धकत्वस्यावश्यंकल्पनीयतया तत एवोपपत्तौ अनुगतधर्मज्ञानस्य अनुमितिप्रतिबन्धकत्वकल्पनं निर्युक्तिकमितिभावः ।

अभिहितं मूलकृतेतिशेषः । **इतीति** । अस्येदंत्ववधेयमित्यनेन सम्बन्धः ।

तादृशयुक्तेः = यद्रूपावच्छिन्नज्ञानमनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नस्यैव विभाजकत्वमितियुक्तेः । **निर्वक्ष्यमाणेति** । पक्षवृत्तित्वे सतीत्यादिवक्ष्यमाणानुगतधर्मान्तरेऽपीत्यर्थः । आकांक्षानिवृत्तये **आहानुमितीति** ।

इति श्रीपण्डितप्रवर श्रीवामाचरणभट्टाचार्य्यन्यायाचार्य्यतर्कतीर्थ-विरचिता संशयजनकताघटितसव्यभिचारपूर्वपक्षलक्षण विवृत्तिः समाप्ता ।

—⁓—

॥ अथ ॥

# प्रतिबन्धकताघटितपूर्वपक्षीयसव्यभिचार

## द्वितीयलक्षणम्



एतेन पक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिरनै-

---

दीधितिः

पक्षवृत्तित्वे सतीति । विरोधित्वं-विरोधिज्ञानविषयत्वम् । अव्या-

गादाधरी

( गा० ) विरोधिपदस्य प्रतिबन्धकार्थकत्वे असङ्गतिः साधारण्यादेरतथात्वादतो व्याचष्टे-विरोधित्वमिति । विरोधिज्ञानेति,-प्रतिबन्धकीभूतज्ञानेत्यर्थकम् । अनुमितिविरोधिसम्बन्धनिवेशेनैवोपपत्तौ अव्यावृत्तिपदमनर्थकमित्याशङ्कां निराचिकीर्षुस्तस्य व्यभिचारिणि साध्याभाववद्वृत्तित्वाभावदशायामव्याप्तिवारकतया सार्थकतासंपादनाय तद्व्याचष्टे अव्यावृत्तीति । अत्यन्तायोगः-प्रतियोगिवैय्यधिकरण्यावच्छिन्नोऽभावः।

विवृतिः

साधारण्यादिज्ञानस्यैवानुमितिप्रतिबन्धकतयातद्विषयीभूतसाधारण्यादिसम्बन्धस्यातथात्वेन मूलोक्तलक्षणघटकानुमितिविरोधिपदस्यानुमिति प्रतिबन्धकार्थकत्वे तादृशप्रतिबन्धकत्वस्य साधारण्यादौ बाधात् निरुक्तलक्षणार्थस्यासम्भवादसंगतिरित्याशंकानिराकरणायोत्थितस्य विरोधित्वमित्यादिदीधिति ग्रन्थस्यावतरणमाह **विरोधिपदस्येत्यादि** । प्रतिबन्धकार्थकत्वे = अनुमिति वत्कारणान्यत्तरप्रतिबन्धकार्थकत्वे । असंगतिंविवृणोति **साधारण्यादेरिति** । आदिपदात् असाधरण्यादिपरिग्रहः । अतथात्वात्=अनुमित्यप्रतिबन्धकत्वात् । तज्ज्ञानस्यैवानुमिति प्रतिबन्धकत्वमित्याशयः । व्याचष्टेदीधितकारइतिशेषः ।

**प्रतिबन्धकीभूतेति** । अनुमितिप्रतिबन्धकज्ञानविषयत्वमित्यर्थः । **अनुमितीति** । अनुमितिप्रतिबन्धक ज्ञानविषयीभूतसम्बन्धनिवेशेनैवेत्यर्थः । तस्य=अव्यावृत्तिपदस्य । व्यभिचारिणि = वह्निसाध्यकरासभादौ । **साध्येति** । रासभादौमहानसादिवृत्तित्वकाले वह्न्यभाववद्वृत्तित्वाभावदशायामित्यर्थः । **अव्याप्तीति** । व्यभिचारस्यनित्यदोषतया तदानीमपितस्यलक्ष्यत्वादितिभावः ।

**कान्ति सपक्षविपक्षवृत्तित्वमुभयव्यावृत्तत्वमनुपसंहारत्विश्चानु-**

❀ दीधितिः ❀

**वृत्तिपदमत्यन्तायोगव्यवच्छेदार्थकम्, तेन संयोगसम्बन्धेन व्यभि-चारिणि द्रव्ये हेतौ व्यभिचाराभावदशायां नाप्रसङ्गः। साध्यवद्वृत्तिस्तु**

❀ गादाधरी ❀

**नाप्रसङ्ग इति। रासभादौ महानसादिवृत्तितादशायां वन्ह्यभाववद्वृत्ति-त्वासत्त्वेपि प्रतियोगिवैय्यधिकरण्यावच्छिन्नतदभावस्य तत्रासत्त्वेन तद्व्य-वच्छेदस्य तदानीमपि सत्त्वादिति भावः॥**

❀ विवृत्तिः ❀

तत् व्याचष्टे=अव्यावृत्तिपदार्थंव्याचष्टे। **प्रतियोगीति**। स्वज्ञानविषयप्रकृतहेतु-तावच्छेदकवत्त्वसम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासम्बन्धिवृत्तित्वविशिष्टो-योऽनुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नप्रतियोगि ताकाभावः स अत्यन्तायोगः ताद्दशाभावाभाववत्वं तद्व्यवच्छेदइतिसमुदिततात्प-र्य्यम्। तेन न वह्न्यभाववद्वृत्तित्व विशिष्टप्रमेयाभावप्रतियोगित्वाश्रयासम्बन्धित्वस्या प्रसिद्धावपि वह्निसाध्यकप्रमेयहेतावव्याप्तिः, न वा धूमसाध्यक वह्निहेतुकस्थले धूमाभाववद्वृत्तित्वविशिष्टवह्नेः कालिकादिसम्बन्धेनासम्बन्धिगगनादिवृत्तित्वविशिष्ट ताद्दशाभावाभाववत्वस्यरासभादौसत्त्वेऽपितत्रातिव्याप्तिः। अयंतु निरूक्तलक्षणघ-टकात्यन्तायोगव्यवच्छेदस्यैवार्थ इतिध्येयम्॥

यदातु रासभादौ द्रव्येमहानसवृत्तित्वंवर्त्तते तदानीं रासभादौवह्न्यभाववदवृ-त्तित्वस्यसत्त्वेनवह्न्यभाववद्वृत्तित्वस्य तत्राऽसत्वेऽपिकालान्तरीण वह्न्यभाववद्वृत्ति-त्वविशिष्टरासभादेः स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्वसम्बन्धेनासम्बन्धित्वस्य रासभादावसत्वात् ताद्दशरासभाद्यसम्बन्धि धूमादिनिष्ठस्यताद्दशरासभाद्यभावस्या-भाववत्तायाः रासभादौमहानसादिवृत्तितादशायामपिवर्त्तमानतया तत्रवह्निसाध्यक रासभादौव्यभिचारिणिलक्षणसमन्वयः, इत्याशयवान् भावमाह **रासभादावि-त्यादि**। **प्रतियोगीति**। पूर्वोक्तसम्बन्धेन वह्न्यभाववद्वृत्तित्वविशिष्ट रासभाद्य-सम्बन्धिवृत्तित्वविशिष्टस्य ताद्दशरासभाद्यभावस्येत्यर्थः। तत्रासत्त्वेन=रासभादाव-सत्वेन। तद्व्यवच्छेदस्य=प्रतियोगिवैयधिकरण्यावच्छिन्न वह्न्यभाववद्वृत्तित्वविशि-ष्टरासभाद्यभावाभाववत्वस्य। तदानीमपि=रासभादौमहानसादिवृत्तितादशाया-मपि। **सत्त्वादिति**। तथाचनिरूक्तार्थकाव्यावृत्तिपदं सार्थकमेवेतिभावः॥

प्रतियोगिवैयधिकरण्यावच्छिन्नस्यानुमितिविरोधिसम्बन्धाभावस्ययोऽभावस्त-

❀ दीधितिः ❀

**नासाधारण इति हृदयम्। अपक्षधर्म्मधूमादिवारणाय सत्यन्तम्। पक्षः सन्दिग्धसाध्यो धर्म्मी विशिष्टहेतौ तद्वृतित्वग्रहाविरोधित्वञ्च**

❀ गादाधरी ❀

नन्वव्यावृत्तिपदस्यात्यन्तायोगव्यवच्छेदार्थकत्वे शब्दोऽनित्यः शब्दत्वादित्यादावसाधारण्योत्तीर्णतादशायामतिप्रसङ्ग इत्यत आह—साध्यवद्वृत्तिस्त्विति। नासाधारण इति। निश्चयागर्भितस्य साध्यतदभावव्यावृत्तत्वस्यैवासाधारण्यपदार्थत्वादिति शेषः। तथा च तत्रोक्तस्थले कदाचिदपि असाधारण्यस्यासत्त्वान्नातिप्रसङ्ग इति भावः। बाधादिवारणाय विवक्षणीयस्य पक्षे साध्यग्रहाविरोधित्वस्य लाभाय पक्षपदं व्याचष्टे पक्ष इति। सन्दिग्धसाध्यः—सन्दिग्धसाध्यविशिष्टः। धर्मी—पक्षतावच्छे-

❀ विवृतिः ❀

द्वत्वस्य लक्षणार्थत्वे शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वस्य निश्चयः तदानीमपि शब्दत्वहेतोरसाधारण्यापत्तिः कालान्तरीयनिश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपानुमितिविरोधिसम्बन्धस्य यः प्रतियोगिवैयधिकरण्यावच्छिन्नोऽभावस्तस्य गुणत्वादिनिष्ठतया तदभावस्य शब्दत्वादौ सत्त्वात् इत्याशंक्य साध्यवद्वृत्तिस्त्वित्यादिदीधितिमवतारयति—**नन्विति**। लक्षणघटकीभूतस्याव्यावृत्तिपदस्येत्यर्थः। अत्यन्तायोगव्यवच्छेदार्थकत्वे=प्रतियोगिवैयधिकरण्यावच्छिन्नताद्दशसम्बन्धाभावाभावार्थकत्वे। असाधारण्योत्तीर्णतादशायाम्=शब्दादौ साध्यादिनिश्चयदशायाम्। भावमाह—**तथा चेति**। उक्तस्थले=शब्दोऽनित्यः शब्दत्वादित्यादौ। असाधारण्यासत्त्वात्=निश्चयाघटितकेवलसाध्यतदभाववद्व्यावृत्तत्वस्यासत्त्वात्। **नातिप्रसंगइति**। तथाच गगनादेरेवासाधारणतया निरुक्तशब्दत्वादेरलक्ष्यत्वात् तत्र लक्षणागमनेऽपि न क्षतिरिति भावः॥

नन्वनुमितिपदस्य साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिपरतायाः पूर्वं दीधितिकृताव्याख्याततया ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ह्रदरूपबाधे, धूमाभाववद्ह्रदरूपस्वरूपासिद्धौ च सव्यभिचारलक्षणस्यातिव्याप्तिः बाधादेरपि निरुक्तानुमितिप्रतिबन्धकज्ञानविषयत्वात् इत्यत आह—**बाधादीति**। बाधादेः सव्यभिचारत्वाभावसम्पादनायेत्यर्थः। विवक्षणीयस्य=दीधितकृता विवक्षणीयस्य। **पक्षइतीति**। यथाश्रुतपक्षवृत्तित्वमात्रविवक्षणे ह्रदो धूमवान् वह्नेरित्यादौ वह्न्यादिहेतावव्याप्तिः वह्न्यादौ पक्षवृत्तित्वाभावादतः पक्षपदं तद्वृत्तित्वपदञ्च न यथाश्रुतार्थकमितिभावः।

**संदिग्धेति**। संदेहविषयीभूतसाध्यविशिष्ट इत्यर्थः। धर्मिपदं व्याचष्टे—**पक्ष-**

❀ दीधितिः ❀

तदर्थः । तथाच पक्षतावच्छेदकरूपेण पक्षे साध्यतावच्छेदकरूपेण

❀ गादाधरी ❀

दकावच्छिन्नः । विशिष्टहेतौ-हेतुतावच्छेदकावच्छिन्ने । तद्वृत्तित्वेति,-ताद्दशसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षवृत्तित्वेत्यर्थकम् । वैशिष्ट्यं च वैज्ञानिकम्, तेन बाधादिसङ्करस्थले साध्यविशिष्टपक्षाप्रसिद्धत्वेपि न क्षतिः । बाधादिज्ञानस्य साध्यविशिष्टपक्षतावच्छेदकावच्छिन्नविषयकज्ञानविरोधित्वान्न बाधादिकमादाय ह्रदो वह्निमान्धूमादित्यादावतिव्याप्तिरिति भावः । अत्र च साध्यवदवृत्तित्वरूपासाधारण्यस्यासङ्ग्रहः तज्ज्ञा-

❀ विवृतिः ❀

तेति । ताद्दशेति । सन्देहविषयीभूतसाध्यविशिष्टपक्षतावच्छेदकावच्छिन्नपक्षनिरूपितवृत्तित्वेत्यर्थकमित्यर्थः । ननु ह्रदो धूमवान्वह्नेरित्यादौ वह्निरूपहेतावव्याप्तिः संदिग्धसाध्यीभूतधूमविशिष्टह्रदाद्यप्रसिद्ध्या ताद्दशविशिष्टग्रहाविरोधिव्यभिचारादेरप्यप्रसिद्धत्वादत आह-**वैशिष्ट्यं चेति** । वैज्ञानिकं = ताद्दशसाध्यनिष्ठप्रकारतानिरूपितंविशेष्यताश्रयत्वरूपं । तेन वैज्ञानिकवैशिष्ट्यविवक्षणेन । बाधादिसंकरस्थले=ह्रदपक्षकवह्न्यादिसाध्यक धूमादिहेतुकस्थले, साध्याभाववत्वेन निश्चितपक्षकव्यभिचारिहेतुकस्थले इति यावत् । पर्वतो धूमवान् वह्नेरित्यादौ-साध्यविशिष्टपर्वतादिरूपपक्षस्य प्रसिद्धत्वात् बाधादिसंकरस्थले इत्युक्तम् ।

प्रकृतहेतुधर्मिकसंदिग्धसाध्यविशिष्टपक्षवृत्तित्वग्रहाविरोधित्वविवक्षणे न बाधादावतिव्याप्ति रित्याह-**बाधादिज्ञानस्येति** । साध्याभाववत्पक्षादिनिश्चयस्येत्यर्थः । आदिना स्वरूपासिद्ध्यादिपरिग्रहः । **साध्येति** । प्रकृतसाध्यप्रकारतानिरूपितविशेष्यताश्रयीभूतप्रकृतपक्षनिरूपितवृत्तित्वप्रकारकप्रकृतहेतुधर्मिकज्ञानप्रतिबन्धकत्वादित्यर्थः । बाधादिकमादाय=साध्याभाववत्पक्षादिकमादाय । इत्यादौ=इत्यादिबाधितधूमादिहेतौ । **अतिव्याप्तिरिति** । नेति पूर्वेण सम्बन्धः ।।

ननु हेतौ संदिग्धसाध्यविशिष्टपक्षवृत्तित्वग्रहाविरोधित्वस्यानुमितिप्रतिबन्धकज्ञानविषयविशेषणत्वे साध्यवद्वृत्तित्वाभावघटितासाधारण्यमादायासाधारणहेतोः सव्यभिचारत्वानुपपत्तिः हेतुधर्मिकसाध्यवद्व्यावृत्तत्वनिश्चयस्य तद्धर्मिकताद्दशसाध्यविशिष्टपक्षवृत्तित्वग्रहप्रतिबन्धकतया ताद्दशवृत्तित्वग्रहाविरोधित्वेनानुमितिविरोध्यसाधारण्यसम्बन्धस्य धर्तुमशक्यत्वात् इत्याहात्र**चेति** । निरुक्तरीत्याविवक्षिताविरोधित्वकल्पेचेत्यर्थः । **साध्यवदिति** । साध्यवद्वृत्तित्वाभावघटितासाधारण्यस्येत्यर्थः ।

❀ गादाधरी ❀

नदशायां हेतौ साध्यविशिष्टपक्षवृत्तित्वज्ञानानुदयात्, एवं साध्यांशे संशयविषयत्वरूपविशेषणमनर्थकमित्यतस्तत्परित्यज्य निष्कृष्टार्थमाह तथाचेति। पक्षतावच्छेदकेति । पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारता या च तादृशी हेतुतावच्छेदकावच्छिन्नहेतुप्रकारता तन्निरूपकलौकिकसन्निकर्षाद्यजन्यज्ञानाविरोधित्वस्य लाभादित्यर्थः । तादृशज्ञानाविरोधित्वं न-तादृशज्ञानसामान्यनिरूपित-

❀ विवृतिः ❀

तज्ज्ञानदशायां=निरुक्तासाधारण्यज्ञानदशायाम् । हेतौ = गगनादौ । साध्य**विशिष्टेति** । संदेहविषयीभूतेत्यादिः । साध्यवद्वृत्तित्वाभावज्ञानं साध्यवत्त्वेन पक्षविषयकमिति तादृशज्ञानस्य साध्यवत्पक्षवृत्तित्वग्रहप्रतिबन्धकत्वमित्यभिमानः ॥

ननु हेतुधर्मिकसाध्यविशिष्टपक्षवृत्तित्वग्रहे तादृशपक्षावृत्तित्वनिश्चयस्यैव प्रतिबन्धकत्वं नतु साध्यांशे निर्धर्मितावच्छेदककसाध्यवद्वृत्तित्वाभावज्ञानं तथा, निरुक्तज्ञानस्य पक्षतावच्छेदकरूपेण पक्षाविषयकतया भिन्नप्रकारकत्वेन ग्राह्याभावानवगाहित्वात् ।नच साध्यतद्व्याव‍ृत्तत्वरूपासाधारण्यस्य किञ्चिन्निरूपितवृत्तित्वविरुद्धतया तादृशासाधारण्यज्ञानदशायां पक्षनिरूपितवृत्तित्वज्ञानमपि हेतौ न सम्भवतीति वाच्यम्, तादृशासाधारण्यज्ञानस्य वृत्तित्वविरुद्धविषयकत्वेऽपि तदभावव्याप्यत्वानवगाहित्वेन विरोधाविषयकतया निरुक्तासाधारण्यज्ञानदशायामपिसाध्यविशिष्टपक्षवृत्तित्वग्रहोत्पत्तौ बाधकाभावात् इति यदि ब्रूयात् तदाप्याह-**एवमिति** । अनर्थकम्=निष्प्रयोजनकम् । नतु व्यर्थम्=अखण्डाभावघटकतयैव निरुक्तविशेषणस्य सार्थक्यसम्भवादिति ध्येयम् ॥

तत्परित्यज्य = साध्यांशे संशयविषयत्वविशेषणं परित्यज्य । तादृशी = पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरुपिता । **तन्निरूपकेति** । निरूक्तसाध्यप्रकारतायाः निरुक्तहेतुप्रकारतायाश्च निरूपकं यत् लौकिकसन्निकर्षाजन्यं दोषविशेषाजन्य ञ्ज्ञानंतदविरोधित्वस्येत्यर्थः । तादृशज्ञानाविरोधित्वम् = पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्ना प्रकारता या चतादृशविशेष्यतानिरूपिता हेतुतावच्छेदकावच्छिन्नप्रकारतातन्निरूपकंयत् लौकिकसन्निकर्षाद्यजन्यंज्ञानं तदविरोधित्वम् । **तादृशेति** । निरुक्तपक्षविशेष्यकसाध्यहेतुप्रकारकज्ञानत्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकत्वं यादृशविशिष्टविषयित्वव्यापकं तादृशविषयित्वाऽनिरूपकत्वमित्यर्थः ।

❀ मनोरमा ❀

**तादृशज्ञानसामान्येत्यादि** । नचात्र व्यापकत्वार्थकसामान्यपदोपादानं व्यर्थमितिवाच्यम्, व्यभिचारेऽव्याप्त्यापत्तेः, प्रकृतहेतुधर्मिकसाध्यव्याप्तिविषयकसमूहालम्बनपक्षे साध्य-

❀ दीधितिः ❀

**साध्यस्य हेतुतावच्छेदकरूपेण हेतोर्वा यज्ज्ञानं तदविरोधित्वस्य ला-**

❀ गादाधरी ❀

**प्रतिबन्धकतानतिरिक्तवृत्तिविषयित्वानिरूपकत्वं हेतुमन्निष्ठसाध्याभावादि-रूपव्यभिचारस्यापि पक्षनिष्ठसाध्याभाववत्वादिना बुद्धेस्तादृशज्ञानं प्रति प्र-**

❀ विवृतिः ❀

निषेधे हेतुमाह—**हेतुमन्निष्ठेति**। धूमादिसाध्यकवह्न्यादिरूपहेतुमद्वृत्तित्वविशिष्टधूमाभावादिस्वरूपव्यभिचारस्यापीत्यर्थः। **पक्षनिष्ठेति**। अयोगोलकादिरूपपक्षवृत्तिधूमाभावत्वादिप्रकारेणेत्यर्थः। बुद्धेः=निश्चयस्य। तादृशज्ञानं प्रति=प्रकृतपक्षे प्रकृतसाध्यहेतुप्रकारताकज्ञानं प्रति। प्रतिबन्धकत्वात्=प्रतिबन्धकतानतिरिक्तवृत्तिविषयितावत्वात्। तादृशविषयितानिरूपकत्वेन = पक्षनिष्ठसाध्याभावत्वाद्यवच्छिन्ननिरूपितविषयितानिरूपकत्वेन। हेतुमन्निष्ठसाध्याभावस्येतिपूर्वेणान्वयः॥

**अव्याप्तेरिति**। हेतुमन्निष्ठसाध्याभावरूपव्यभिचारज्ञानस्य पक्षवृत्तिसाध्याभावत्वादिप्रकारकस्य पक्षधर्मिकसाध्यप्रकारकबुद्धौ प्रतिबन्धकत्वेऽपि साध्याभाववद्वृत्तित्वविशिष्टहेतौ—साध्यतदभाववद्वृत्त्यावृत्तत्वविशिष्टगगनादौ च लक्षणसमन्वयात् तत्रैवाव्याप्तिरिति भावः॥

ननु साध्याभाववद्वृत्तित्वादिघटितव्यभिचारनिश्चयस्य साध्याभावांशे पक्षवृत्तिसाध्याभावत्वाद्यवच्छिन्नविषयकस्य साध्याभावव्यापकाभावाप्रतियोगित्वरूपानुपसंहारित्वनिश्चयस्यापि साध्याभावांशे पक्षनिष्ठसाध्याभावत्वाद्यवच्छिन्नविषयकस्य पक्षे साध्यविरोधित्वेन, साध्यतदभाववद्वृत्त्यावृत्तत्वविशिष्टहेतुरूपासाधारण्यस्यपक्षावृत्तित्वादिना हेतुविषयकनिश्चयस्य पक्षधर्मिकहेतुप्रकारकज्ञानविरोधित्वेन च यथोक्तज्ञानप्रतिबन्धकत्वात् तत्र तत्र लक्षणगमनाऽसम्भवेनासम्भवः।

न च हेतुमन्निष्ठसाध्याभावादेः पक्षवृत्तिसाध्याभावत्वादिना ज्ञानविरहदशायां निरुक्तव्यभिचारेलक्षणसमन्वयः सम्भवतीति वाच्यम्। भेदस्य व्याप्यवृत्तितया कदाचित् तादृशज्ञानप्रतिबन्धकतावच्छेदकविषयितानिरूपकत्वस्य हेतुमन्निष्ठसा-

❀ मनोरमा ❀

हेतु वैशिष्ट्यावगाहि'ग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयिता निरूपकतावच्छेदकधर्मवत्त्वस्यैव व्यभिचारे सत्वात्।

सामान्यपदोपादाने तु न तत्राव्याप्तिः, व्याप्त्यविषयक पक्षः साध्यवान् 'हेतुमांश्चे'त्याकारकज्ञानस्य तादृशज्ञानसामान्यान्तर्गततया तत्र व्यभिचारनिश्चयप्रतिबध्यतायाः अभावात्॥

अथ पक्षे साध्यहेतुवैशिष्ट्यावगाहि यत्किंचिज्ज्ञाननिष्ठप्रतिबध्यताघटितसत्यन्तानुसरणे नैवोपपत्तौ सामान्यपदं व्यर्थम्, व्याप्त्याद्यविषयकतादृशज्ञानस्यैव यत्किंचित्पदेन धर्त्तव्यतया व्याप्ति-

❀ गादाधरी ❀

तिबन्धकत्वात्तादृशविषयितानिरूपकत्वेनाऽव्याप्तेरसम्भवस्य वा प्रसङ्गात्, किन्तु तादृशविषयितानिरूपकतानवच्छेदकधर्मवत्त्वम् । तदनवच्छेदकत्वं

❀ विवृतिः ❀

ध्याभावे सत्त्वे तादृशविषयितानिरूपकभेदस्य तत्रावर्त्तमानत्वात् तादृशविषयितानिरूपकत्वात्यन्ताभावनिवेशे तत्राप्यव्याप्तिदानस्याप्यनौचित्यापत्तेः। अतएव पर्वतो धूमवान् वह्नेरित्यादौ पर्वतवृत्तिधूमाभावत्वस्याप्रसिद्ध्या तेन रूपेण वह्निमन्निष्ठधूमाभावस्य ज्ञानाऽसम्भवेऽपि न तत्र लक्षणसंगतिः, वह्निमन्निष्ठधूमाभावस्य भेदविरहात् इत्याशयेनाह **असम्भवस्य वेति**। क्वचित् अव्याप्तेरिति पाठो नास्ति असम्भवस्यैव प्रसंगादित्येव पाठः स तु यथोक्तरीत्यैव संगनीयः। न सम्भवोऽसम्भव इति व्युत्पत्या असम्भवपदं हेतुमन्निष्ठसाध्याभावेऽव्याप्तिपरमिति तु साम्प्रदायिकाः ॥

**किन्तु तादृशेति** । पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नसाध्यप्रकारताकत्वे सति, तादृशविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताकं यत् लौकिकसन्निकर्षाद्यजन्यं ज्ञानं तादृशज्ञानत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं यद्रूपावच्छिन्नविषयित्वव्यापकं तद्रूपभिन्नधर्मवत्त्वमित्यर्थः । नैतादृशं यद्रूपं साधारणत्वादिकम् तदवच्छिन्नविषयित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्य पक्षः साध्यवान् हेतुमांश्चेत्याकारकग्रहत्वाऽव्यापकत्वात् अपि तु बाधत्वादिकमेव तदवच्छिन्नविषयित्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः तादृशग्रहत्वव्यापकत्वादिति यद्रूपपदेन बाधत्वादेर्धर्तुं शक्यतया तादृशबाधत्वादिभिन्नसाधारणत्वादिकमादाय साधारणादौ लक्षणसमन्वय इत्यवध्येयम् ।

अत्र च 'या च हेतुप्रकारते'त्यादिना समूहालम्बनपक्षविशेष्यकसाध्यप्रकारकहेतुप्रकारकश्च यः साध्यवान् हेतुमांश्चेत्याकारकग्रहस्तदविरोधित्वमिति सूचितम्, नतु

❀ मनोरमा ❀

विषयकसमूहालम्बनतथाविधज्ञानस्य यत्किंचित्पदेनोपादातुमशक्यतया व्यभिचारादावव्याप्तिप्रसक्तेरसम्भवात् । नचैवमननुगमः, पक्षधर्मिकसाध्यहेतुप्रकारकज्ञानविशिष्टधर्मवत्त्वस्यैव सत्यन्तार्थत्वोपगमात् । वैशिष्ट्यं धर्मे स्वनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिधर्मवत्त्वसंसर्गावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, प्रतिबन्धकतावृत्तित्वं स्वावच्छिन्नविषयित्वव्यापकत्वसम्बन्धेनेति चेन्न, यादृशस्थले 'पक्षः साध्यवान् हेतुमांश्चे'त्याकारकंज्ञानं समूहालम्बनात्मकं कदाचिद्व्याप्तिविषयकं कदाचिच्च व्याप्यविषयकमेव भवति न स्वन्यादृशं तादृशज्ञानं तादृशस्थले व्यभिचारेऽव्याप्त्यापत्तेः, व्याप्तिविषयकतादृशयत्किंचित् ज्ञाननिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य व्यभिचारे सत्त्वेन तत्र सत्यन्तार्थाभावात् । अस्माकन्तु तादृशग्रहत्वस्य व्याप्यविषयकेऽपि तादृशज्ञाने विद्यमानतया तत्र व्यभिचारादिनिश्चयप्रतिबध्यताविरहान्न व्यभिचारादावव्याप्तिरितिध्येयम् ॥

## ❀ विवृतिः ❀

हेतुविशिष्टसाध्यप्रकारकग्रहाविरोधित्वं वक्तव्यम् , तथा सति पर्वतत्वावच्छेदेन वह्निसाध्यकस्थले पर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्पर्वतरूपबाधेऽतिव्याप्तिः स्यात् , धूमादिविशेषितपर्वतादिधर्मिकवह्न्यादिग्रहस्य पर्वतत्वादिसामानाधिकरण्यावगाहितया तं प्रति सामानाधिकरण्यावगाहिवह्न्यभावनिश्चयस्याविरोधित्वात् । नच पक्षः साध्यवान् हेतुमांश्चेत्याकारकानुमितित्वव्यापकप्रतिबध्यतानिवेशेनैव लाघवसम्भवात् लौकिकसन्निकर्षाजन्यतादृशग्रहत्वव्यापकप्रतिबध्यतानिवेशोऽनुचित इति वाच्यम् , यादृशसाधारणादिहेतुकस्थले तादृशानुमितेरप्रसिद्धिस्तादृशसाधारणादावव्याप्त्यापत्तेः । अस्माकन्तुतादृशस्थलेऽपि तादृशपक्षसाध्यहेतुकशाब्दबोधाद्युपनीतभानादिकमादायलक्षणसमन्वयसम्भवादितिध्येयम् ॥

पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकवैशिष्ट्यलाभाय द्वितीयं पक्षपदं अन्यथा काञ्चनमयपर्वतो वह्निमान् , ह्रदो वह्निमान् वेत्यादावाश्रयासिद्धिबाधादावतिव्याप्तिः, कालिकसम्बन्धेन काञ्चनमयत्वह्रदत्वाद्यवच्छिन्नकालधर्मिकसाध्यादिग्रहस्यापि तादृशग्रहसामान्यान्तर्गततया तं प्रति काञ्चनमयत्वाद्यभाववत्पर्वतनिश्चयस्य,वह्न्यभाववद्ह्रदनिश्चयश्चाप्रतिबन्धकत्वात् । साध्याप्रसिद्धौ बाधे चातिव्याप्तिवारणाय द्वितीयं साध्यपदम् साध्यतावच्छेदकताघटकसम्बन्धेन साध्यतावच्छेदकवैशिष्ट्यलाभार्थकम् । अन्यथा ह्रदा दौकाञ्चनमयवह्न्यादिसाध्यकस्थले—कालिकसम्बन्धेन काञ्चनमयत्वाद्यवच्छिन्नकालप्रकारकग्रहस्यापि तादृशयावद्ग्रहान्तर्गततया तत्र काञ्चनमयत्वाभाववद् वह्न्यादिनिश्चयस्य वह्न्यभाववद्ह्रदादिनिश्चयश्चाप्रतिब-

## ❀ मनोरमा ❀

ननु तथापि तादृशग्रहसामान्यप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत् विषयिताघटितसत्यन्तार्थनिर्वचनेनैवोपपत्तौ तादृशप्रतिबन्धकतानतिरिक्तवृत्तित्वनिवेशो व्यर्थः इति चेन्न । वह्निपक्षकधूमसाध्यकवह्निहेतुकस्थले धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽव्याप्त्यापत्तेः । धूमाभाववद्वृत्तितावान् धूमाभाववान् धूमाभाववद्वृत्तितावांश्च वह्निरित्याकारकनिश्चयविशिष्टनिश्चयीयधूमाभाववद्वृत्तिताविशिष्टवह्निविषयितायाः वह्निधर्मिकधूमप्रकारकबुद्धिप्रतिबन्धकतावच्छेदकतया धूमाभाववद्वृत्तिवह्नित्वस्य पक्षः साध्यवान् हेतुमांश्चेत्याकारकग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वात् । नच तादृशग्रहप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वविवक्षणान्नेयमव्याप्तिरिति वाच्यम् । तथा सति जलव्यापकवह्न्यभावसमानाधिकरण जलवत्ह्रदरूपसत्प्रतिपक्षेऽतिव्याप्त्यापत्तेः । ज्ञानवैशिष्ट्यानवच्छिन्नपक्षधर्मिकसाध्यादिग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकत्वस्य सत्प्रतिपक्षतावच्छेदकधर्मे सत्वात्, निरुक्तसत्प्रतिपक्षनिश्चयनिष्ठतादृशप्रतिबन्धकताया ज्ञानवैशिष्ट्यावच्छिन्नत्वादिति तु विभावनीयम् ॥

नच तथापि पक्षः साध्यवान् हेतुमांश्चेत्याकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्त्वमेव लाघवात् सत्यन्तमस्तु किं नञ्द्वयप्रवेशेनेति वाच्यम् । अननुगमात् यथासन्निवेशे वैयर्थ्याऽसम्भवाच ॥

## ❀ विवृत्तिः ❀

न्धकतया काञ्चनमयत्वाभाववद्वह्न्यादिरूपसाध्याप्रसिद्धौ वह्न्यभाववद् ह्रदादिरूपबाधादौ चातिव्याप्तिः स्यात् । ह्रदपक्षककाञ्चनमयधूमादिहेतौ काञ्चनमयत्वाभाववद् धूमादिरूपसाधनाप्रसिद्धौ धूमाभाववद्ह्रदरूपस्वरूपासिद्धौ चातिव्याप्तिः कालिकसम्बन्धेन काञ्चनमयत्वाद्यवच्छिन्नकालप्रकारकबुद्धौ तादृशसाधनाप्रसिद्ध्यादिनिश्चयस्याप्रतिबन्धकत्वात् अतो हेतुतावच्छेदकताघटकसम्बन्धेन हेतुतावच्छेदकवैशिष्ट्यलाभाय द्वितीयं हेतुपदम् ॥

वैशिष्ट्यं च सर्वत्र वैज्ञानिकं ग्राह्यम्, तेन पक्षतावच्छेदकताघटकसम्बन्धेन काञ्चनमयत्वादिवैशिष्ट्यस्य पर्वतादावप्रसिद्धावपि न काञ्चनमयपर्वतो धूमवान् वह्नेरित्यादौ व्यभिचारेऽव्याप्तिः वस्तुतो यादृशसाध्यहेतुकव्यभिचारज्ञानं पक्षाद्यवृत्तिधर्मावच्छिन्नपक्षकस्थल एव भवति तादृशव्यभिचारेऽव्याप्तिवारणाय सर्वत्र वैशिष्ट्यं वैज्ञानिकं वक्तव्यम् । एतेन काञ्चनमयपर्वतो धूमवान् वह्नेरित्यादावपि पर्वतो धूमवान् वह्नेरित्यादिस्थलीयव्यभिचारमादाय लक्षणसमन्वयसम्भवात् वैज्ञानिकवैशिष्ट्यंविवक्षणं निरर्थकमित्यपिपूर्वपक्षोनिरस्त इतिध्येयम् ॥

केवलसाध्यादिप्रकारकग्रहविवक्षणे आश्रयासिद्धौ बाधादौचातिव्याप्तिः, केवलसाध्यादिप्रकारकबुद्धौ आश्रयासिद्ध्यादिनिश्चयस्याप्रतिबन्धकत्वात् यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकसाध्यादिप्रकारकग्रहविवक्षणेऽपि आश्रयासिद्धिबाधस्वरूपासि-

## ❀ मनोरमा ❀

केचित्तु यादृशस्थले व्यभिचारज्ञानं नियमतो बाधस्वरूपासिद्ध्याद्यन्यतरविषयकमेव भवति तादृशस्थले व्यभिचारेऽव्याप्त्यापत्तेः निरुक्तव्यभिचारविषयितायां पक्षे साध्यादिग्रहप्रतिबन्धकतातिरिक्तवृत्तित्वविरहादित्याहुस्तच्चिन्त्यम्, तादृशग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वविवक्षणेऽपि तादृशस्थले व्यभिचारेऽव्याप्त्यापत्तेरशक्यपरिहारत्वादिति ध्येयम् ॥

परेतु–तादृशग्रहप्रतिबन्धकतातिरिक्तवृत्तिविषयिताघटितसत्यन्तानुसरणे यादृशस्थले व्यभिचारविषयकं ज्ञानं नियमतो बाधादिविषयकमेव भवति तादृशस्थले व्यभिचारेऽव्याप्तिः । नचानतिरिक्तवृत्तित्वविवक्षणेऽपि तत्राऽव्याप्तिरस्त्येवेतिवाच्यम् । तादृशग्रहप्रतिबन्धकतानिरिक्तवृत्तिविषयिताया तादृशग्रहप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन विवक्षणीयतया तादृशस्थले व्यभिचारेऽव्याप्तिवारणसम्भवात् व्यभिचारविषयितायां पक्षधर्मिकसाध्यादिग्रहप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहात । अत एवास्माकं न बाधविशिष्टव्यभिचारेऽतिव्याप्तिः निरुक्तव्यभिचारविषयितायां तादृशग्रहप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वस्याऽसत्वादित्यपिवदन्ति ॥

नन्वत्र कल्पे अभाववदवृत्तिवह्निर्धूमवान् वह्नेरित्यत्राभाववद्वृत्तिवह्निरूपाश्रयासिद्धिघटितधूमाभाववद्वृत्तिवह्निस्वरूपे व्यभिचारेऽव्याप्तिः धूमाभाववद्वृत्तिवह्निरूपव्यभिचारविषयितायाः प्रकृतपक्षे साध्यादिग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वेन सत्यन्तदलाक्रान्तत्वात् अभाववदवृत्तिवह्निविषयक-

## ❀ विवृतिः ❀

द्धिष्वतिव्याप्तिः काञ्चनमयह्रदो वह्निमान् धूमादित्यत्र काञ्चनमयत्वाभाववद्ह्रदादिनिश्चयस्य द्रव्यधर्मिकवह्न्यादिप्रकारकबुद्धावप्रतिबन्धकत्वादतः पक्षतावच्छेदकपर्य्यन्तनिवेशः। पक्षतावच्छेदकावच्छिन्नत्वं च पक्षतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नत्वम्, तेनकाञ्चनमयपर्वतपक्षकस्थले काञ्चनमयत्वाभाववत्पर्वतनिश्चयस्य पर्वतधर्मिकवह्न्यादिग्रहाप्रतिबन्धकत्वेऽपि न काञ्चनमयत्वाभाववत्पर्वतरूपाश्रयासिद्ध्यादावतिव्याप्तिः।

पक्षधर्मिकहेतुप्रकारकबुद्धौ बाधनिश्चयस्य साध्याऽप्रसिद्धिनिश्चयस्य चाविरोधित्वात् बाधादावतिव्याप्तिः। यत्किञ्चिद्धर्मावच्छिन्नसाध्यप्रकारकत्वविवक्षणेऽपि ह्रदः काञ्चनमयवह्निमान् इत्यत्र तेजस्त्वादिना वह्न्यादिबुद्धौ काञ्चनमयत्वाभाववद्वह्न्यादिनिश्चयस्य वह्न्यभाववद्ह्रदादिनिश्चयस्य चाप्रतिबन्धकत्वात् बाधसाध्याप्रसिद्ध्योरतिव्याप्तिरतः साध्यतावच्छेदकपर्य्यन्तनिवेशः। काञ्चनमयवह्निसाध्यकस्थले केवलवह्निप्रकारकबुद्धौ काञ्चनमयत्वाभाववद्वह्निनिश्चयस्याप्रतिबन्धकतयासाध्याप्रसिद्धावतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नत्वमपि—साध्यतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नत्वं विवक्षणीयम्॥

पक्षधर्मिकसाध्यादिप्रकारकबुद्धौ साधनाऽप्रसिद्धिनिश्चयस्य स्वरूपासिद्धिनिश्चयस्याप्रतिबन्धकत्वात् हेतुप्रकारकत्वनिवेशः। यत्किञ्चिद् धर्मावच्छिन्नहेतुप्रकारकत्वविवक्षणे ह्रदो वह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्ह्रदानिश्चयस्य धूमाभाववद्ह्रदनिश्चयस्य च द्रव्यत्वादिना प्रकृतपक्षधर्मिकधूमादिप्रकारकग्रहाविरोधित्वात् साधनाऽप्रसिद्धिस्वरूपासिद्ध्यादावतिव्याप्तिः अतः हेतुतावच्छेदकपर्य्यन्तनिवेशः। हेतुतावच्छेदकावच्छिन्नत्वमपि, हेतुतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नत्वम्, तेन काञ्चनमयहेतुकस्थले केवलधूमप्रकारकबुद्धौ काञ्चनमयत्वाभाववद्धूमादिनिश्चयस्याप्रतिबन्धकत्वेऽपि न काञ्चनमयत्वाभाववद्धूमेऽतिप्रसंगः।

## ❀मनोरमा ❀

बुद्धौ धूमाभाववद्वृत्तिवह्निविषयकज्ञानस्य प्रतिबन्धकत्वादिति चेन्न। विशिष्टपक्षग्रहप्रतिबन्धकतानतिरिक्तवृत्तिस्वावच्छिन्नविषयिताकधर्मवत्त्वेन निरुक्तधूमाभाववद्वृत्तिवह्नेराश्रयासिद्धिस्वरूपतया तस्याऽलक्ष्यत्वात्।

स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वानवच्छिन्नाया प्रकृतपक्षे साध्यहेतुवैशिष्ट्यग्रहप्रतिबन्धकतातदनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत् यत् स्वम् तत्तत्भेदकूटवत्वस्य सत्यन्तार्थत्वोपगमेन वा तत्राऽव्याप्तिवारणसम्भवात्। धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नाऽनिरूपिताऽभाववद्वृत्तिवह्नित्वावच्छिन्नविशिष्टविषयित्वानवच्छिन्नत्वस्य निरुक्तव्यभिचारनिश्चयनिष्ठायां तादृशग्रहप्रतिबन्धकतायां विरहेण स्वपदेन तादृशवह्नित्वस्य धर्तुमशक्यत्वात्॥

नचैवं मेयत्वविशिष्टबाधेऽतिव्याप्तिः, मेयत्वविशिष्टबाधत्वावच्छिन्नाऽनिरूपितबाधत्वावच्छिन्न-

❀ गादाधरी ❀

च तदवच्छेदकतापर्याप्त्यनधिकरणत्वम्, तेन हेतुमन्निष्ठसाध्याभावत्वा-

❀ विवृत्तिः ❀

तथा च पक्षतावच्छेदकप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यतानिरूपित-साध्यतावच्छेदकप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारताकत्वे सति तादृशविशेष्यतानिरूपितहेतुतावच्छेदकप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारताकं यल्लौकिकसन्निकर्षाद्यजन्यं ज्ञानं तादृशज्ञानत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं यद्रूपावच्छिन्नविषयित्वव्यापकं तद्रूपभिन्नधर्मवत्त्वमित्यर्थः पर्य्यवसितः इत्यन्यत्र विस्तारः ॥

नन्वेवमपि हेतुमन्निष्ठसाध्याभावत्वस्य पक्षनिष्ठसाध्याभावत्वाऽभिन्नतया हेतुमन्निष्ठसाध्याभावरूपव्यभिचारेऽव्याप्तिः पक्षधर्मिकसाध्यादिप्रकारग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकपक्षनिष्ठसाध्याभावत्वभिन्नत्वस्य हेतुमन्निष्ठसाध्याभावत्वे विरहादित्यत आह–तदनवच्छेदकत्वं चेति। पक्षः साध्यवान् हेतुमांश्चेत्याकारकग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतानवच्छेदकत्वञ्चेत्यर्थः। तदवच्छेदकतेति। तादृशविषयितानिरूपकतावच्छेदकता पर्य्याप्त्यनधिकरणत्वम् इत्यर्थः। यद्रूपावच्छिन्नविषयित्वव्यापकं पक्षःसाध्यवान् हेतुमांश्चेत्याकारकग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तद्रूपावच्छिन्नविषयित्वावृत्तिरूपाश्रयधर्मवत्वम् इति तु फलितार्थः। वृत्तित्वं-स्वावच्छिन्नानुयोगिताकपर्य्याप्तिकावच्छेदकताकनिरूपकताकत्व सम्बन्धेन–स्वं हेतुमन्निष्ठ साध्याभावत्वादिगतमेकत्वम्। यथाश्रुते पक्षनिष्ठसाधाभावत्वाऽभिन्ने हेतुमन्निष्ठसाध्याभावत्वे तादृशविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यनधिकरणत्वस्यापि दुर्लभत्वापत्तिरिति ध्येयम् ॥

तेन = निरुक्तविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यनधिकरणत्वविवक्षणेन।

❀ मनोरमा ❀

विषयित्वानवच्छिन्नत्वस्य मेयत्वविशिष्टबाधनिश्चयनिष्ठतादृशप्रतिबन्धकतायामसत्वेन स्वपदेन मेयत्वविशिष्टबाधत्वस्य धर्त्तुमशक्यत्वादितिवाच्यम्। बाधत्वस्य स्वदेनोपादातुं शक्यतया तत्भेदस्य मेयत्वविशिष्टबाधत्वे बिरहेण तत्राऽतिव्याप्त्यनवकाशादितिध्येयम्॥

अत्र मेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिवारणाय विशिष्टान्तराऽघटितत्वमपि विवक्षणीयम्। तच्च प्रकृतपक्षे प्रकृतसाध्यहेतुवैशिष्ट्यग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतानवच्छेदकीभूतं यत्स्वावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं तदवच्छिन्नाविषयक प्रतीतिविषयतावच्छेदक कत्वरूपं विशेष्यदल घटक यद्रूप विशेषणम्। स्वं लक्ष्यतावच्छेदकत्वेनाभितरूपम्। तेन न प्रमेयत्वमवृत्तिप्रमेयत्वादित्यत्र वृत्तित्ववद्वृत्तिप्रमेयत्वरूपबाधघटितव्यभिचारेऽव्याप्तिः, बाधत्वस्य निरुक्तविशिष्टान्तरतानवच्छेदकत्वादित्यवधेयम्॥

❀ दीधितिः ❀

**भात् पक्षसाध्यसाधनाप्रसिद्धिस्वरूपासिद्धिबाधप्रतिरोधानां निरासोऽ**

❀ गादाधरी ❀

**दिरूपव्यभिचारत्वस्यापि तादृशप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकपक्षनिष्ठसाध्याभावत्वादितोऽनतिरिक्तत्वेपि न क्षतिः। बाधादिनिष्ठानामनुमितिविरोधितानवच्छेदकधर्माणां प्रमेयत्वादीनां तादृ-**

❀ विवृतिः ❀

**तादृशेति**। पक्षःसाध्यवान् हेतुमांश्चेत्याकारकग्रहार्थकम्। अनतिरिक्तत्वेऽपि = अभिन्नत्वेऽपि। न क्षतिः = न हेतुमन्निष्ठसाध्याभावादावव्याप्तिः॥

नन्वेतावन्मात्रस्य लक्षणार्थत्वे बाधादौ सर्वत्रातिव्याप्तितादवस्थ्यमेव, ह्रदो वह्निमान् धूमादित्यादौ ह्रदादिधर्मिकवह्न्यादिप्रकारकग्रहप्रतिबन्धकतानतिरिक्त वृत्तिविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यनधिकरणप्रमेयत्ववत्त्वस्य वह्न्यभावव-द्ह्रदादौ सत्त्वात् अतआह **बाधादिनिष्ठानामिति**। प्रमेयत्वादीनामित्यग्रेणान्वयः। आदिना स्वरूपासिद्ध्यादिपरिग्रहः। इदुमुपलक्षणम्,—तावन्मात्रस्य लक्षणार्थत्वे उदासीनघटाभाववद्भूतलमित्यादावतिव्याप्तिरित्यपि द्रष्टव्यम्। **अनुमितीति**। पक्षः साध्यवान्-साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकधर्माणामित्यर्थः। **प्रमेयत्वादीनामिति**। आदिना वाच्यत्वादिपरिग्रहः। **तादृशेति**। पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतानवच्छेदकत्वेऽपीत्यर्थः। **तादृशेति**। यथोक्तग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यनधिकरणीभूतं यत् पक्षः साध्यवान् साध्यव्याप्य हेतुमाश्चेत्याकारकसमूहालम्बनानुमितिप्रतिबन्धकतावच्छेदक-विषयितानिरूपकतावच्छेदकं रूपं तदवच्छिन्नत्वस्येत्यर्थः समुदायार्थत्वात् = समुदितलक्षणार्थत्वात्॥

**इदं तु तत्त्वम्**। प्रकृतपक्षधर्मिकप्रकृतसाध्यप्रकारकप्रकृतहेतुप्रकारकलौकिकसन्निकर्षाद्यजन्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता नतिरिक्तवृत्ति वि-

❀ मनोरमा ❀

पक्षः साध्यवान् हेतुमांश्चेत्याकारकलौकिकसन्निकर्षाद्यजन्यग्रहत्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकताविशिष्टधर्मवत्वम् लक्षणार्थः। वैशिष्ट्यं धर्मे स्वानतिरिक्तवृत्तिविषयिता निरूपकतावच्छेदकत्वपर्याप्त्यधिकरणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताक भेदवत्वस्वकालीन प्रकृतानुमितित्वव्यापक प्रतिबध्यतानिरूपित प्रतिबन्धकतावत्वोभयसम्बन्धेन। प्रतिबन्धकतावत्वञ्च, स्वनिष्ठ व्यापकतारूपाभावीय प्रतियोगितानिरूपित परम्परया अवच्छिन्नत्व सम्बन्धावच्छिन्नावच्छेदकतावत्वसम्बन्धेनेति तु यथाश्रुतग्रन्थानुरोधिनः॥

❀ गादाधरी ❀

शविषयितानिरूपकतानवच्छेदकत्वेऽपि तादृशविषयितानिरूपकतानवच्छेदकीभूतानुमितिविरोधितावच्छेदकरूपावच्छिन्नत्वस्य समुदायार्थत्वान्नातिप्रसङ्गः तादृशं यत्किञ्चिज्ज्ञानं यादृशरूपावच्छिन्नविषयकनिश्चयसामा-

❀ विवृतिः ❀

षयितानिरूपकतावच्छेदकतापर्य्याप्त्यनधिकरणत्वे सति यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतपक्षधर्मिकसाध्यप्रकारकसाध्यान्वयव्याप्तिविशिष्टहेतुप्रकारकसाध्यव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तद्रूपावच्छिन्नोऽनैकान्तिको दोषः प्रतियोगिव्यधिकरणतादृशदोषाभावाभाववत्त्वं सव्यभिचारत्वमिति फलितम्। भवति हि धूमवान्वह्नेरित्यादौ वह्निमन्निष्ठधूमाभावादिरूपव्यभिचारे लक्षणसमन्वयः। तादृशधूमाभावत्वादेः पक्षसाध्यवान् हेतुमान् इत्याकारकग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यनधिकरणत्वेन सत्यन्तदलाक्रान्ततया अन्वयव्याप्तिविषयकपक्ष.साध्यवान्साध्यव्याप्यहेतुमानित्याकारकानुमितिप्रतिबन्धकतानातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वेन विशेष्यदलाक्रान्ततया च यद्रूपपदेन तस्यधर्तुं शक्यत्वात्। वह्निमान् गगनादित्यादौ गगननिष्ठवह्नितदभाववद्वृत्तित्वाभावत्वस्यापि पक्षेसाध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतानवच्छेदकत्वेन सत्यन्तदलाक्रान्ततया-साध्यसामानाधिकरण्यघटितव्याप्तिविषयकसमूहालम्बनानुमितिं प्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वेन विशेष्यदलाक्रान्ततया च यद्रूपपदेन गगनवृत्तित्वविशिष्टवह्नितदभाववद्वृत्तित्वाभावत्वमादाय गगननिष्ठसाध्यतदभाववद्व्यावृत्तत्वरूपासाधारण्येऽपि लक्षणसमन्वयः। एवं सर्वमनित्यं मेयत्वादित्यादौ मेयत्वनिष्ठनित्यत्वव्यापकीभूताभावाप्रतियोगित्वरूपानुपसंहारित्वेऽपि लक्षणसमन्वयः, तादृशसाध्याभावव्यापकाभावाप्रतियोगित्वत्वे पक्षःसाध्यवान् हेतुमान् इत्याकारकग्रहप्रतिबन्धकतावच्छेदक विषयितानिरूपकतानवच्छेदकत्वस्यसाध्याभावव्यापकाभावप्रतियोगित्वरूपव्यातिरेकव्याप्तिविषयकसमूहालम्बनानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरुपकतावच्छेदकत्वस्य च सत्त्वेन तस्य सत्यन्तदल विशेष्यदलाक्रान्तत्वादिति ध्येयम्॥

विशेष्यदले पक्षतावच्छेदकादिनिवेशनं तु सत्यन्तदले सार्थक्यसम्पादनायेत्यवधेयम्। **नातिप्रसंगइति**। तथा च प्रमेयत्वादेः पक्षधर्मिकसाध्यादिप्रकारक-

❀ मनोरमा ❀

**तादृशं यत्किञ्चिज्ज्ञानमित्यादि**। अत्र यत्किंचित्पदं पक्षः साध्यवान् हेतुमांश्चेत्याकारक

❀ दीधितिः ❀

**सिद्धिसङ्कीर्णसंग्रहः । विरोधोऽपि फलतः प्रतिरोध एव । तदन्यत्वेन**

❀ गादाधरी ❀

**न्याप्रतिबध्यं तादृशो योऽनुमितिविरोधितावच्छेदको धर्मस्तदवच्छिन्नत्वं वा समुदितार्थः ।**

❀ विवृतिः ❀

ग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतानवच्छेदकत्वेऽपि पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वस्य तत्र विरहात् न प्रमेयत्वादिकमादाय बाधादावतिव्याप्तिरिति भावः ।

ननु पर्वतो धूमवान् वह्नेरित्यत्र व्यभिचारेऽव्याप्तिः, तत्र बाधाद्यप्रसिद्ध्या पक्षः साध्यवान्हेतुमाश्चेत्याकारकग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपाऽप्रसिद्धेः । यद्यपि एतस्य दुष्टलक्षणतया बाधप्रसिद्धिस्थलीयव्यभिचारमादाय हेतौ लक्षणसमन्वयः सम्भवतीत्युच्यते, तथापि तत्पक्षकतत्साध्यक—तद्धेतुकसव्यभिचारत्वस्य तत्पक्षधर्मिकसाध्यादिप्रकारकग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतानवच्छेदकप्रकृतानुमितिप्रतिबन्धकतावच्छेदकस्वावच्छिन्नविषयिताकधर्मावच्छिन्नसम्बन्धित्वस्वरूपतया पर्वतपक्षकधूमादिसाध्यकस्थले च तादृशधर्माऽप्रसिद्ध्या हेतौ तादृशधर्मावच्छिन्नसम्बन्धित्वोपपादनं दुःशक्यमेव स्यादित्याशयेनाह **तादृशमितीति** ॥

**केचित्तु** । पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहत्वव्यापकत्वार्थकसामन्यपदोपादाने गौरवमाशंक्याहतादृ**शमितीत्**यवतारयन्ति । यत्किञ्चिज्ज्ञानं = प्रकृतपक्षधर्मिकप्रकृतसाध्यप्रकारकप्रकृतहेतुप्रकारकलौकिकसन्निकर्षाद्यजन्यं पदार्थान्तराऽविषयकं ज्ञानम् । **यादृशेति** । यादृशरूपावच्छिन्नविषयकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिवध्यत्वाभाववदित्यर्थः। **अनुमितीति** पक्षसाध्यवान् हेतुःमाश्चेत्याकारकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकइत्यर्थः। तदवच्छिन्नत्वम् = तादृशधर्मवत्त्वम् । **समुदितार्थइति** । तथा च पक्षधर्मिक-

❀ मनोरमा ❀

ज्ञानत्वसामानाधिकरण्येन यद्रूपावच्छिन्ननिश्चयसामान्याऽप्रतिवध्यत्वलाभार्थम् अन्यथा तादृशज्ञानत्वावच्छेदेन निरुक्तनिश्चयसामान्याऽप्रतिबध्यत्वविवक्षणे असम्भवापत्तिः स्यात्, पक्षे साध्यहेतुवैशिष्ट्यावगाहिसमूहालम्बनव्याति विषयकज्ञाने व्यभिचारत्वाद्यवच्छिन्न निश्चयसामान्याऽप्रतिबध्यत्वविरहात् ॥

यद्रूपावच्छिन्ननिश्चयसामान्याऽप्रतिबध्यमित्यत्र सामान्यपदं विहाय तादृशनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावविवक्षणे पुनरसम्भवः, बाधादिविषयकसमूहालम्बनव्यभिचारादिनिश्चयनिष्ठप्रतिबन्धकतानिरूपित प्रतिबध्यत्वाभावस्य पक्षधर्मिकसाध्यादिग्रहेऽसत्वात् अतः सामान्यपदम् ॥

मितिविरोधि, तत्सम्बन्धः प्रत्येकमस्ति, विरुद्धोऽप्यनेन रूपेण

❀ दीधितिः ❀

वा विरोधि विशेषणीयम्। वक्ष्यते च सिद्धान्ते विरुद्धान्येति हेतुसा-

❀ गादाधरी ❀

वस्तुतस्तु निरुक्तताद्दशज्ञानाविरोधित्वम् अनुमितिविरोधिनि ताद्दश-ज्ञानविरोधितानवच्छेदकत्वं वा अनुमितिविरोधितावच्छेदके न निवेशनीयम्, परन्त्वनुमितिविरोधिताघटकानुमितिनिष्ठप्रतिबध्यतायामेव ताद्द-

❀ विवृतिः ❀

साध्यादिप्रकारकं यत्किंचिज्ज्ञानम् यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभाववत् तत्त्वे सति प्रकृतानुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतावद्यद्रूपं तद्रूपवत्वम् लक्षणार्थइति फलितम्। वाधादिवारणाय प्रथमदलम्। घटाभाववद्भूतलादिरूपोदासीनेऽतिव्याप्तिवारणाय द्वितीयदलम्। यद्रूपपदेन व्यभिचारत्वादिकमादाय सर्वत्र पूर्वोक्तदिशा लक्षणसमन्वयः स्वयमूहनीयः। सर्वमन्यदन्यत्रानुसन्धेयमितिसंक्षेपः॥

लाघवमभिप्रेत्याह–वस्तुतस्त्विति। निरुक्तेति। 'पक्षः साध्यवान् हेतुमांश्चे इत्याकारकलौकिकसन्निकर्षाद्यजन्यग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयित्वानिरूपकत्वमित्यर्थः। अनुमितिविरोधिनि=पक्षः साध्यवान् साध्यव्याप्यहेतुमान् इत्याकारकानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपके व्यभिचारादौ। ताद्दशेति। पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकत्वमित्यर्थः। अनुमितीति। प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकव्यभिचारत्वादावित्यर्थः। अनुमितीति। प्रकृता-

❀ मनोरमा ❀

अथ यद्रूपावच्छिन्नविषयित्वनिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावनिवेशेनैव पूर्वोक्ताऽसम्भववारणसम्भवे सामान्यपदंव्यर्थम्। बाधादिविषयकसमूहालम्बनव्यभिचारादिनिश्चयीयव्यभिचारत्वाद्यवच्छिन्नविषयितायाः पक्षधर्मिकसाध्यादि ग्रहप्रतिबन्धकतानवच्छेदकतया ताद्दशविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावस्य पक्षः साध्यवान् हेतुमांश्चेत्याकारकयत्किञ्चिज्ज्ञाने सत्वादितिचेन्न। वह्निर्धूमवान् वह्नेरित्यत्र धूमा भाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्त्यापत्तेः, धूमाभाववद्वृत्तितावान् धूमाभाववान् धूमाभाववद्वृत्तितावांश्चवह्निरित्याकारकज्ञानविशिष्टज्ञानीयधूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयितासामान्यस्यैव वह्निरूपपक्षे धूमादिप्रकारकबुद्धिप्रतिबन्धकतावच्छेदकतया निरुक्तव्यभिचारविषयित्वावच्छिन्न प्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावस्य ताद्दशयत्किञ्चिज्ज्ञाने विरहादितिध्येयम्॥

❀ दीधितिः ❀

ध्यसामानाधिकरण्यग्रहाविरोध्यर्थकम् । सम्बन्धपदबलेन प्रकृतहेतुस-

❀ गादाधरी ❀

शज्ञानत्वन्यूनवृत्तित्वं निवेशनीयं लाघवात्, बाधादिज्ञाननिरूपितप्रतिब-
ध्यतानां च तादृशसकलज्ञानसाधारणतया न तादृशज्ञानत्वन्यूनवृत्तित्व-

❀ विवृतिः ❀

नुमितिप्रतिबन्धकताघटकानुमितित्वव्यापकप्रतिबध्यतायामित्यर्थः । **तादृशेति** । पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहत्वाऽव्यापकत्वमित्यर्थः ।

**निवेशनीयमिति** । तथाच प्रकृतपक्षविशेष्यतानिरूपिता या प्रकृतसाध्यप्रकारता या च तादृशविशेष्यतानिरूपिता हेतुप्रकारता तन्निरुपकलौकिकसन्निकर्षाद्यजन्यग्रहत्वाऽव्यापिका या पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकानुमितित्वव्यापिका प्रतिबध्यतातन्निरूपितप्रतिबन्धकत्वम् यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यपाकं तद्रूपवत्त्वं लक्षणार्थ इति भावः ।

**लाघवादिति** । तादृशग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यधिकरणभेदनिवेशापेक्षेत्यादि । निरुक्तविवक्षायाम् बाधादावतिव्याप्तिं वारयति **बाधादीति** । आदिना स्वरुपासिद्ध्यादिपरिग्रहः । बाधादिनिश्चयनिरूपितप्रतिबध्यतानामित्यर्थः । **तादृशेति** । पक्षः साध्यवान् हेतुमांश्चेत्याकारकपदार्थान्तरविषयकसमूहालम्बनज्ञाने पदार्थान्तराविषयकसमूहालम्बन तादृशज्ञाने च वर्त्तमानतयेत्यर्थः । न तादृशज्ञानत्वन्यूनवृत्तित्वम् = नपक्षे साध्यहेतुवैशिष्ट्यावगाहिज्ञानत्वाऽव्यापकत्वम् । तादृशप्रतिबध्यतानामिति पूर्वेणान्वयः । **नातिप्रसंग इति** । तथाच पक्षः साध्यवान् हेतुमांश्चेत्याकारकलौकिक सन्निकर्षाद्यजन्यज्ञानत्वं यत्र यत्र तत्र तत्रैव बाधादिनिश्चयनिरूपितप्रतिबध्यतायाः सत्त्वेन बाधादिनिश्चयप्रतिबध्यत्वस्य तादृशज्ञानत्वाऽव्यापकत्वविरहेण न बाधादिज्ञानमादाय बाधादावतिव्याप्तिरिति भावः ।

❀ मनोरमा ❀

ननु तथापि ह्रदो वह्निमानित्यत्र वह्न्यभाववत्ह्रदरूपबाधेऽतिव्याप्तिः वह्न्यभाववत्ह्रदनिश्चयसामान्यान्तर्गते जातित्वेन ह्रदत्वावगाहिजातिमान् वह्न्यभाववानित्याकारकनिश्चये ह्रदादि धर्मिकवह्न्यादिप्रकारक बुद्धिप्रतिबन्धकत्वाभावेन तादृशनिश्चयसामान्याऽप्रतिबध्यत्वस्य तादृश यत्किञ्चिज्ज्ञाने सत्वात् । नच ह्रदधर्मिकवह्न्याद्यभावप्रकारकनिश्चयसामान्यप्रतिबध्यत्वस्याऽप्रसिद्ध्यैव नातिव्याप्तिरितिवाच्यम् । अभावधर्मिकप्रतियोगित्वसम्बन्धावच्छिन्नवह्न्यभावप्रकारक बुद्धौ ह्रदो वह्न्यभाववान्, जातिमान्वह्न्य भाववानित्याद्याकारकसकलनिश्चयस्यैव प्रतिबन्धकतया तादृशबुद्धावेव निरुक्तबाधादिनिश्चिय सामान्यप्रतिबध्यत्वस्य प्रसिद्धिसम्भवात् ॥

❀ गादाधरी ❀

मतो नातिप्रसङ्गः। व्यभिचारज्ञानप्रतिबध्यत्वं च तन्न्यूनवृत्त्येव व्याप्त्यविषयकताहशज्ञानावृत्तित्वात्। अग्रेपि सर्वत्रैवैताहशदिशा निष्कर्षणीयमिति। अत्र च यत्र प्रकृतपक्षे व्यभिचाराभावो निविष्टस्तत्र व्यभिचारोऽसिद्धिमध्ये निवेश्यत इति हृदयम्। पक्षसाध्यसाधनानामप्रसिद्ध्या

❀ विवृतिः ❀

लक्ष्ये लक्षणसमन्वयं प्रदर्शयति-**व्यभिचारेति**। व्यभिचारनिश्चयनिरूपितप्रतिबध्यत्वं चेत्यर्थः। तन्न्यूनवृत्त्येव=पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहत्वन्यूनवृत्त्येव। कथमित्याकांक्षायामाह-**व्याप्त्येति**। व्यभिचारिनिश्चयनिरूपितप्रतिबध्यत्वस्य व्याप्तिविषयिताशून्यपक्षः साध्यवान् हेतुमांश्चेत्याकारकज्ञानेऽवर्तमानत्वात् इत्यर्थः। पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहत्वस्य व्याप्तिविषयिताशून्येऽपि ताहशज्ञाने वर्तमानतया तत्र व्यभिचारादिनिश्चयप्रतिबध्यत्वस्यासत्त्वात् निरुक्तज्ञानत्वाव्यापकत्वं व्यभिचारिनिश्चयप्रतिबध्यत्वस्य निर्विवादमित्याशय:। अग्रेऽपि=प्रतिबन्धकताघटितसिद्धान्तलक्षणेऽपि-सत्प्रतिपक्षादिग्रन्थेऽपि च॥

ननु द्रव्यत्वाभाववदवृत्तिप्रमेयत्वम्, द्रव्यम् प्रमेयत्वादित्यादौ द्रव्यत्वाभाववद्वृत्तिप्रमेयत्वरूपव्यभिचारेऽव्याप्तिः, निरुक्त व्यभिचारस्य पक्षतावच्छेदकविशिष्टपक्षेसाध्यादिग्रहत्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताकतया ताहशग्रहत्वाव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताकत्वस्य तत्र विरहात् अत **आहात्र चेति**। निरुक्तलक्षणकर्तृमते चेत्यर्थः। यत्र=याहशस्थले। प्रकृतपक्षे=पक्षतावच्छेदविशिष्टे पक्षे, तद्घटकीभूते विशेषणे वा। व्यभिचाराभावः=साध्याभाववदवृत्तित्वम्। तत्र=ताहशस्थले। व्यभिचारः=साध्याभाववद्वृत्तित्वविशिष्टो हेतुः। **निवेश्यत इति**। तथाच ताहशस्थले द्रव्यत्वाभाववद्वृत्तित्वविशिष्टप्रमेयत्वादेः आश्रयासिद्धिस्वरूपतया तस्यालक्ष्यत्वेन तत्र लक्षणस्यासत्त्वेऽपि न क्षतिरितिभावः।

विशिष्टपक्षग्रहादिप्रतिबन्धकताभिन्नत्वेन प्रकृतानुमितिप्रतिबन्धकताया विवक्षणे नोक्तव्यभिचारेऽव्याप्तिः, निरुक्तव्यभिचारनिश्चयनिष्ठायां व्याप्तिग्रहप्रतिबन्धकतायां

❀ मनोरमा ❀

नच तथापि यद्रूपावच्छिन्नविषयित्वाऽव्यापकविषयिताशून्ययद्रूपावच्छिन्न विषयकनिश्चयसामान्याऽप्रतिबध्यत्वविवक्षणान्न बाधादावतिव्याप्तिरिति वाच्यम्। तथा सति सामान्यपदोपादानस्य व्यर्थतापत्तेः, बाधादिविषयसमूहालम्बनव्यभिचारादिनिश्चये व्यभिचारत्वाद्यवच्छिन्न विषयित्वाव्यापकविषयिताशून्यत्वविरहेणाऽसम्भवानवकाशादितिचेदत्र केचित्, सामान्यपदानुपादाने धूमाभाववदवृत्तिवह्निपक्षकधूमसाध्यकजातिमद्धेतुकस्थले धूमाभाववद्वृत्तिजातिमद्रूपव्यभिचारेऽव्याप्तिः, तद्रूपव्यभिचारत्वावच्छिन्न विषयित्वाऽव्यापकीभूतविषयिताशून्यं यत् धूमाभाववद्वृत्तिवह्निरूपा-

❀ दीधितिः ❀

**न्वन्धितया विरोधित्वे तात्पर्य्योपवर्णनेन प्रायशो बाधादिवारणेपि**

❀ गादाधरी ❀

**समन्वयः । निरास इति । तेषां ज्ञानस्य यथोक्तज्ञानप्रतिबन्धकत्वादिति भावः । असिद्धिसंकीर्णो ह्रदादौ धूमादिसाधने वह्न्यादिहेतुः । तत्सङ्ग्रहः— तत्र यथाश्रुतपक्षवृत्तित्वस्यासत्त्वेपि यथोक्तज्ञानाविरोधित्वादिविशिष्टानुमितिविरोधिसाध्याभाववद्वृत्तित्वाद्यादाय लक्षणगमनसम्भवादिति भावः।**

**ननु विरोधोपि यथोक्तज्ञानाविरोधी अनुमितिविरोधी चेत्यति-**

❀ विवृतिः ❀

विशिष्टपक्षग्रहप्रतिबन्धकताभेदस्य सत्त्वेन व्याप्तिग्रहप्रतिबन्धकताया एव लक्षणघटकत्वसम्भवात् ह्रदयमित्युक्तमिति ध्येयम् ।

**समन्वयइति** । तथा च सत्यन्तदलेन पक्षाऽप्रसिद्धौ साध्याऽप्रसिद्धौ साधनाऽप्रसिद्धौ चातिव्याप्तिवारणमित्याशयः । तेषाम्=पक्षाऽप्रसिद्ध्यादीनाम् । यथोक्तज्ञानप्रतिबन्धकत्वात्=प्रकृतपक्षे प्रकृतसाध्यादिप्रकारकज्ञानप्रतिबन्धकत्वात् । आश्रयासिद्ध्यादिनिश्चयकाले पक्षतावच्छेदकविशिष्टपक्षादिग्रहानुत्पादादित्याशयः । तत्र = ह्रदपक्षकधूमादिसाध्यकवह्न्यादिहेतौ । **यथोक्तेति** । पक्षःसाध्यवान् हेतुमांश्चेत्याकारकज्ञानप्रतिबन्धकतानवच्छेदकविषयितानिरूपकत्वविशिष्टप्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकत्ववद्धूमाभाववद्वृत्तित्वमादायेत्यर्थः । तथाच ह्रदो धूमवान् वह्नेरित्यत्र व्यभिचारेऽव्याप्तिभयेनैव यथा श्रुतसत्यन्तार्थस्य परित्याग इति भावः ॥

विरोधोऽपि=साध्यासामानाधिकरण्यमपि । यथोक्तज्ञानाऽविरोधी=पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदकविषयितनिरूपकतानवच्छेदकधर्मवान् । अनुमितिविरोधी = पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकसमूहालम्बनानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवान् । साध्यासामानाधिकरण्यज्ञानस्य साध्यसामानाधिकरण्यघटितव्याप्तिग्रहप्रतिबन्धकत्वादित्याशयः ॥

❀ मनोरमा ❀

श्रयाऽसिद्धिविषयकसमूहालम्बनव्यभिचारज्ञानं तन्निष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावस्य प्रकृतपक्षेप्रकृतसाध्यहेतुवैशिष्ट्यावगाहिज्ञाने विरहादतः सामान्यपदमित्याहुस्तच्चिन्त्यम् ॥

वस्तुतो ह्रदोवह्न्यभाववनित्याकारकनिश्चयत्वव्यापक प्रतिबन्धकत्वाऽप्रसिद्धेव बाधादौ नातिव्याप्तिः, तादृशनिश्चयत्वस्य जातित्वेन ह्रदत्वावगाहिजातिमान् वह्न्यभाववानित्याकारकज्ञानेऽव जातित्वेनवह्नित्वावगाहिह्रदो जातिमदभाववानित्याकारक निश्चयेऽपिवर्त्तमानतया तत्राऽभावो नवह्नीय इत्याकारकज्ञान प्रतिबन्धकत्वस्याऽप्यसत्वात् । नचैव मुक्तरीत्या व्यभिचारादिनिश्चयत्वव्यापक प्रति-

❀ दीधितिः ❀

**घटत्वमनित्यं घटत्वादित्यादौ प्रयत्नसाध्यमिव तत् प्रतिभाति। वस्तु-**

❀ गादाधरी ❀

**प्रसङ्गः। न च विरुद्धो हेतुः साध्यवद्व्यावृत्ततया असाधारण एवेति न तत्र सव्यभिचारलक्षणातिव्याप्तिप्रसक्तिरिति वाच्यम्। यथोक्तज्ञानाविरोधित्वविशिष्टानुमितिविरोधित्वस्य विरोधसाधारण्ये तस्य सव्यभिचारपद-**

❀ विवृत्तिः ❀

न चेति वाच्यमिति परेणान्वयः। विरूद्धो हेतुः=साध्यासामानाधिकरण्यविशिष्टगोत्वादिसाध्यकाश्वत्वरूपो हेतुः। साध्यवद्व्यावृत्ततया = गोत्वादिरूपसाध्यवद्वृत्तित्वाभाववत्त्वेन। असाधारण **एवेति**। न च साध्यतदभाववद्व्यावृत्तस्यैवासाधारणतया कथं विरुद्धस्यासाधारणत्वम्, तत्र साध्याभाववद्व्यावृत्तत्वस्यासत्त्वात् इति वाच्यम्। असाधारणघटकधर्मवत्त्वेन विरुद्धस्य असाधारणस्वरूपत्वाभिधानात्, साध्यवद्व्यावृत्तत्वमात्रस्यासाधारण्यस्वरूपत्वेऽपि क्षत्यभावाच्चेतिध्येयम्। अतिव्या**प्तिप्रसक्तिरिति**। तथा च गोत्वसाध्यकाश्वत्वहेतौ लक्षणसमन्वय इष्ट एवेति भावः ॥

**यथोक्तेति**। प्रकृतपक्षे प्रकृतसाध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकधर्मविशिष्टप्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मस्येत्यर्थः। विरोधसाधारण्ये=विरोधवृत्तित्वे। तस्य=

❀ मनोरमा ❀

बन्धकत्वस्याप्यप्रसिद्धया यद्रूपपदेन व्यभिचारत्वादेर्धर्तुमशक्यत्वादसम्भव इतिवाच्यम्। यद्रूपावच्छिन्नविषयितायामेव यद्रूपावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितत्वस्य विवक्षणीयत्वात्, अन्यथा यदा पदार्थान्तरादिविषयकमेव नियमतो व्यभिचारविषयकं ज्ञानं भवति तदा व्यभिचारेऽव्याप्तिः स्यात् व्यभिचारत्वाद्यवच्छिन्नविषयित्वाऽव्यापकविषयिताशून्यव्यभिचारनिश्चयाऽप्रसिद्धेः। एवञ्च बाधादिविषयकसमूहालम्बनव्यभिचारज्ञानमादायाऽसम्भववारणाय सामान्यपदोपादानमिति तु युक्त मुत्पश्यामः ॥

अथैवमपि यद्रूपावच्छिन्नविषयकयत्किञ्चिन्निश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभावविवक्षणेनैव सामञ्जस्ये सामान्यपदोपादानं निरर्थकम्, समूहालम्बनानात्मकव्यभिचारादिविषयकनिश्चयमादायैव सर्वत्र लक्षणसमन्वयसम्भवादिति चेन्न,–यादृशस्थले बाधसत्प्रतिपक्षाद्यन्यतरविषयकमेव व्यभिचारज्ञानं भवति तादृशस्थले व्यभिचारेऽव्याप्त्यापत्तेः। अस्माकन्तु यद्रूपावच्छिन्नविषयकनिश्चयत्वनिष्ठस्वरूपसम्बन्धरूपावच्छेदकतानिरूपिता या तादृशनिश्चयत्वव्यापिका प्रतिबन्धकता तन्निरूपितप्रतिबध्यत्वाभाववत्त्वस्य तादृशयत्किञ्चिज्ज्ञाने विवक्षणात् तादृशस्थलेऽपि व्यभिचारे नाऽव्याप्तिरिति वदन्ति ॥

अत्राऽपि कल्पे अभाववद्वृत्तिर्वह्निर्धूमवान् वह्नेरित्यादौ आश्रयासिद्धिघटितधूमाभाववद्वृत्तिवह्नि-

सव्यभिचार एव उपाधेश्च न सङ्कर इति वक्ष्यत इति निरस्तम् ।

❀ दीधितिः ❀

तत्त्वनुमितिपदं तत्कारणज्ञानपरम् । आश्रयासिद्ध्यादिवारणाय सत्यन्तं

❀ गादाधरी ❀

प्रवृत्तिनिमित्तत्वासम्भवात्तदवच्छिन्नवतः सव्यभिचारपदार्थत्वे तत्पदस्य पारिभाषिकत्वापत्तेः व्यभिचारलक्षणातिव्याप्तेश्चाशक्यपरिहारत्वादत आह विरोधोपीति । फलतः—तदभावव्याप्यवत्ताज्ञानविधया अनुमिति-

❀ विवृतिः ❀

पूर्वोक्तज्ञानाविरोधित्वविशिष्टानुमितिविरोधित्वस्य । **व्यभिचारेति** । व्यभिचारपद-शक्यतावच्छेदकत्वाऽसम्भवादित्याशयः । व्यभिचारपदशक्यत्वाभाववति विरोधे यथोक्तज्ञानाविरोधित्वविशिष्टानुमितिविरोधित्वस्य सत्त्वेन तस्यातिप्रसक्तत्वा-दित्याशयः ॥ यथोक्तज्ञानाविरोधित्वविशिष्टानुमितिविरोधित्वस्य सव्यभिचारपदशक्य-तावच्छेदकत्वमपि न संभवतीत्याह **तदवच्छिन्नेति** । विरोधसाधारणतादृशविरो-धित्वरूपधर्मावच्छिन्नवत इत्यर्थः । तत्पदस्य = सव्यभिचारपदस्य । पारिभाषिक-**त्वापत्तेरिति** । तथा च सव्यभिचारपदं यदि लक्षणाग्रहमन्तरेणापि साधारणाद्यन्य वृत्तिधर्मावच्छिन्नवदर्थकम् स्यात् तदा शास्त्रकारीयसंकेतविशेष्यीभूतं स्यादित्यापत्तिः, न चेष्टापत्तिस्तथा सति सव्यभिचारपदस्य साधारणादौ पूर्वपूर्वप्रयोगानुपपत्ते रिति भावः ॥

यथोक्तज्ञानाऽविरोधित्वविशिष्टानुमितिविरोधित्वस्य विरोधे वर्त्तमानत्वे तादृश-विरोधमादाय विरुद्धस्यापि सव्यभिचारत्वं दुर्वारमित्याह **सव्यभिचारेति** । **तदभावेति** । साध्याभावव्याप्यवत्तानिश्चयत्वेनेत्यर्थः । **अनुमितीति** । अनुमि-

❀ मनोरमा ❀

रूपव्यभिचारादावव्याप्तिवारणाय स्वावच्छिन्नाऽनिरूपितविशिष्टविषयित्वानवच्छिन्नतादृशयत् किञ्चि-ज्ज्ञानप्रतिबन्धकताकं यत् यत् तावच्छेदककूटवत्त्वस्यैव पूर्ववत् सत्यन्तार्थत्वमभ्युपगन्तव्यम् । पूर्ववदेव मेयत्वविशिष्टबाधेऽतिव्याप्तिवारणोपायोऽपि चिन्तनीय इति संक्षेपः ॥

केचित्तु यद्रूपावच्छिन्नविषयकनिश्चयसामान्यनिष्ठप्रतिबन्धकतायां यद्रूपविशिष्टधर्मविशिष्टान्यत्व-विवक्षया निरुक्तव्यभिचारेऽव्याप्तिवारणीया, धर्मे यद्रूपवैशिष्ट्यम्—स्वावच्छिन्नाऽविषयकप्रतोति-विषयतावच्छेदकत्व,—स्वघटकतावच्छेदकत्वोभयसम्बन्धेन । धर्मवैशिष्ट्यञ्च, स्वावच्छिन्नविषयकनि-श्चयत्वव्यापकत्वसम्बन्धेन । मेयत्वविशिष्टबाधादावतिव्याप्तिस्तु स्वावच्छिन्नाऽनिरूपितविशिष्टविष-यित्वानवच्छिन्नप्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकत्वरूपविशेष्यदलार्थस्य बाधत्वादा-वभावादेव वारणीयेत्याहुः ।

प्रकृतपक्षे प्रकृतसाध्यहेतुवैशिष्ट्यावगाहि ग्रहविशिष्टरूपवत्त्वं लक्षणार्थः वैशिष्ट्यं रूपे स्वग्र

❀ दीधितिः ❀

त्तादृशपक्षकतादृशहेतुकग्रहाविरोध्यर्थकम् । अनया च वाचोभङ्ग्या

❀ गादाधरी ❀

प्रतिबन्धरूपफप्रलयोजकज्ञानविषयत्वेन, प्रतिरोधः-प्रतिरोधतुल्य एव । तथाच पक्षे साध्यवत्ताज्ञानप्रतिबन्धकत्वान्न तत्रातिप्रसङ्ग इति शेषः । पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वं विरोधः, तादृशाभावप्रतियोगित्वं च साध्याभावस्य व्यतिरेकव्याप्तिरिति तज्ज्ञानं तदभावव्याप्यवत्ताज्ञानविधया पक्षे साध्यवत्ताज्ञानं विरुणद्धीति हृदयम् ।

साध्यासामानाधिकरण्यस्यैव चिन्तामणिकारमते विरोधतया तस्य

❀ विवृतिः ❀

स्यनुत्पादप्रयोजकज्ञानविषयत्वेनेत्यर्थः । विरोधतुल्य एव = सत्प्रतिपक्षतुल्य एव । सत्प्रतिपक्षनिश्चयवत् वक्ष्यमाण-विरोधनिश्चयस्यापि पक्षे साध्यवत्ताज्ञानप्रतिबन्धकत्वेन विरोधस्य सत्यन्तदलानाक्रान्तत्वात् न तत्रातिव्याप्तिरित्याह-**तथाचेति** । ननु यदि साध्यासामानाधिकरण्यं विरोधस्तदा तज्ज्ञानस्य पक्षधर्मिकसाध्यग्रहाऽप्रतिबन्धकतया तत्रातिव्याप्तिर्दुर्वारैवेत्यत आह-**पक्षवृत्तित्वे सतीति** । तथा च पक्षवृत्तित्वविशिष्टसाध्यव्यापकीभूताभावप्रतियोगिहेतुरूपविरोधनिश्चयस्य साध्याभावव्यतिरेकव्याप्यवत्तानिश्चयत्वेन पक्षे साध्यवत्ताबुद्धिप्रतिबन्धकतया पक्षः—साध्यवान् हेतुमांश्चेत्याकारकग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकधर्मस्य विरोधादौ विरहेण न विरोधमादाय विरुद्धस्य सव्यभिचारत्वापत्तिरितिभावः।

तज्ज्ञानम्=पक्षवृत्तित्वविशिष्टसाध्यव्यापकीभूताभावप्रतियोगित्वज्ञानम् । **तदभावेति** । साध्याभावव्याप्यवत्तानिश्चयत्वेनेत्यर्थः । पक्षवृत्तित्वविशिष्टसाध्यव्यापकीभूताभावप्रतियोगित्वं न विरोधः तस्य विशिष्टद्वयघटितत्वेन हेत्वाभाससामान्यलक्षणानाक्रान्तत्वादित्यस्वरससूचनाय हृदयमित्युक्तम् ।

साध्यासामानाधिकरण्यमेव मणिकारमते विरोधः तज्ज्ञानं च न पक्षे साध्यप्रकारकज्ञानप्रतिबन्धकमिति पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकधर्मवत्त्वस्य प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य च निरुक्तविरोधेसत्त्वात्तत्रातिव्याप्ति-

❀ मनोरमा ❀

त्तित्व,-स्वकालीनप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वोभयसम्बन्धेन । वृत्तित्वम्, स्वविशिष्टनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभाववत्त्वसम्बन्धेन । स्ववैशिष्ट्यं निश्चये स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन । प्रतिबन्धकतावत्त्वञ्च, स्वनिष्ठव्यापकतारूपाभावीयप्रतियोगितानिरूपितपरम्परया अवच्छेदकतावत्त्वसम्बन्धेनेत्यादिरीत्याऽनुगमो बोध्य इति ध्येयम् ॥

एतदज्ञाने ज्ञानेऽपि वाऽऽवश्यकप्रत्येकज्ञानस्य दोषत्वात्

❀ दीधितिः ❀

व्याप्तिग्रहविरोधित्वमेवाभिधित्सितम्, तेन वह्निमान् वह्निमान् ह्रदत्वा-

❀ गादाधरी ❀

पक्षे साध्यवत्ताज्ञानाविरोधितयाऽतिव्याप्तिर्दुर्धरैवेति, अतस्तन्मताभिप्रा-येण तद्वारणाय प्रकारान्तरमनुसरति तदन्यत्वेन वेति। विरोधान्यत्वेन वेत्यर्थः। विरोधि—अनुमितिविरोधि।

अथतन्मते किमसाधारण्यम्? न तावत्पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वम्—तज्ज्ञानस्य पक्षे साध्यवत्ताज्ञानं प्रति साध्याभावव्याप्यवत्ताज्ञानमुद्रया विरोधित्वेन सत्यन्तार्थविरहात्।

❀ विवृतिः ❀

रशक्य परिहारा स्यादित्याह—**साध्येति**। तन्मताभिप्रायेण = चिन्तामणिकारमताभिप्रायेण। तद्वारणाय = निरुक्तसाध्यासामानाधिकरण्यरूपविरोधवारणाय। **अनुमितीति**। पक्षः साध्यवान् हेतुमांश्चेत्याकारकग्रहप्रतिबन्धकतावच्छेदकविषयिता निरूपकतानवच्छेदकत्वविशिष्टप्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकतावद्धर्मवानित्यर्थः। वस्तुतो यादृशं विरोधान्यत्वमादाय लक्षणसमन्वयः सम्भवति तादृशं विरोधान्यत्वं चाग्रे स्फुटी भविष्यति॥

शंकते अथै**तन्मतइति**। साध्यासामानाधिकरण्यस्य विरोधत्वमभ्युपगच्छतां चिन्तामणिकाराणांमते इत्यर्थः। किम**साधारण्यमिति**। यादृशा साधारण्यमादायलक्षणसमन्वयः कर्तव्यस्तादृशासाधारण्यं किमित्यर्थः। **नतावदिति**। तथा च साध्यव्यापकीभूताभाव प्रतियोगि हेतुमत् पक्षरूपमासाधारण्यं नयुक्तिसहमिति भावः।

निशेधे हेतुमाह तज् **ज्ञानस्येति**। साध्यव्यापकीभूताभाव प्रतियोगि हेतुमत् पक्षज्ञानस्येत्यर्थः। **साध्याभावेति**। साध्याभाव निरूपित व्यातिरेक व्याप्यवत्ता निश्चयत्वेनेत्यर्थः। विरोधित्वेन=प्रतिबन्धकत्वेन। सत्य **न्तार्थ विरहादिति**।

❀ मनोरमा ❀

**विरोधान्यत्वेन वेत्यर्थ इति**। अत्रकेचित् ननु साध्या सामानाधिकरण्यस्य विरोधरूपत्वे=विरोधान्यत्वविशेषणदानमनुचितम्, सत्यन्तार्थस्य हेतुधर्मिकसाध्यवत्पक्षवृत्तित्वप्रकारकग्रहाऽविरोधित्वरूपतां स्वीकृत्य तादृशविरोधेऽतिव्याप्तिवारणस्यैव युक्तत्वादितिचेन्न। सत्यन्तस्य निरुक्ताऽर्थकत्वे पर्वतो वह्निमान् पर्वताऽवृत्तिजलादित्यादौ व्यभिचारेऽव्याप्त्यापत्तेः, प्रकृतहेतुधर्मिकप्रकृतसाध्यवत् पक्षवृत्तित्वज्ञानस्याऽहार्यतया तद्विरोधित्वाऽप्रसिद्धेरतोविरोधान्यत्वेनेत्युक्तमितिवदन्ति

❀ दीधितिः ❀

दित्यादौ हेतोः साध्यवदवृत्तित्वादेर्नासंग्रहः । विवेचयिष्यते चेदमुप-

❀ गादाधरी ❀

नापि निश्चितसाध्यवद्व्यावृत्तत्वं—तज्ज्ञानस्यानुमितौ तत्कारणीभूतज्ञाने वा प्रतिबन्धकताविरहेण हेत्वाभाससामान्यलक्षणस्यैतल्लक्षणस्य च तत्साधारण्यविरहात्, अनुमितिकारणीभूतसाध्यसामानाधिकरण्यज्ञानं प्रति साध्यवद्व्यक्तिविशेषावृत्तित्वज्ञानस्याप्रतिबन्धकत्वात्, कथंचित्प्रतिबन्धकत्वे साध्यासामानाधिकरण्यग्रहाविरोधित्वरूप-

❀ विवृतिः ❀

पक्षः साध्यवान् हेतुमांश्चेत्याकारक ग्रह प्रतिवन्धकतावच्छेदक विषयितांनिरूपकतानवच्छेदकधर्मवत्वरूपसत्यन्तार्थस्य यथोक्तासाधारण्ये विरहादित्यर्थः । इदमुपलक्षणम्, साध्यव्यापकीभूताभाव प्रतियोगिहेतुमत् पक्षस्य विशिष्टद्वय घटिततया सामन्य लक्षणानाक्रान्तत्वेन तस्य लक्ष्यत्वमेव न सम्भवतीत्यपि द्रष्टव्यम् ॥

**नापीति** । निश्चित् साध्यतदभाववद्वृतित्वाभावोऽप्य साधारण्यं नेत्यर्थः । तज्ज्ञानस्य=निरूक्तवृत्तित्वा भावज्ञानस्य । तत्कारणी भूतज्ञानेवा = अनुमितिकारणीभूते परामर्शेवा । **हेत्वाभासेति** । अनुमिति तत्कारणान्यतर विरोधित्वरूप हेत्वाभाससामान्यलक्षणात्मकधर्मस्येत्यर्थः । ननु विशेषलक्षणे हेत्वाभासत्वेसतीति विशेषणं न दीयत एवेत्यत आहै**तल्लक्षणस्येति** । निरूक्त सव्यभिचारसामान्य लक्षणस्येत्यर्थः । तत्साधारण्य विरहात्=निश्चितसाध्य तदभाव वद्व्यावृत्व साधारण्यविरहात् । तथा चोक्त सव्यमिचार लक्षणघटक विशेष्यदलस्यानुमितितत्कारणान्यतर विरोधित्व स्वरूपतया तस्यच साध्यतदभाववद्व्यावृत्तत्वेविरहान्न तस्याऽसाधारण्य स्वरूपत्वं सम्भवतीति हृदयम् । नन्वनुमितिकारणीभूतायाः व्याप्तेः साध्य सामानाधिकरण्य घटिततया तज्ज्ञानंप्रति साध्यसामानाधिकरण्याभाव ज्ञानत्वेन निश्चित्साध्यतदभाववद्व्यावृत्तत्वज्ञान मपि प्रतिवन्धकं भवत्येवेत्यत आहा**नुमितोति** । अनुमिति कारणीभूत साध्यसामानाधिकरण्यघटित व्याप्तिज्ञानं प्रतीत्यर्थः । अनुमितिंप्रति केवल साध्य सामानाधिकरण्य ज्ञानत्वेन हेतुताया अप्रामाणिकत्वेन यथा श्रुता संगतेरिति ध्येयम् ।

साध्य**वद्व्यक्तीति** । साध्यवत्वेन निश्चय विषयीभूत व्यक्ति निरूपित वृत्तित्वाभावज्ञानस्ये त्यर्थः । **अप्रतिवन्धकत्वादिति** । निश्चितसाध्यवद्व्यक्ति विशेष

❀ मनोरमा ❀

तन्न साध्यांशे निर्धर्मितावच्छेदककसाध्यवद्वृत्तित्वाभावरूपविरोधज्ञ,नस्य हेतुधर्मिकसाध्यवत्पक्षवृत्तित्वग्रहाऽप्रतिबन्धकत्वेन पूर्वपक्षस्यैवाऽसंगतत्वापत्तेरितिध्येयम् ॥

**असाधकतानुमितौ व्यर्थविशेषणत्वाच्च ।**

---

❀ दीधितिः ❀

**परिष्टात् । सपक्षेति सम्पातायातम्, अत एवानुपदं विरुद्धोऽपीत्यादिकम् । व्यर्थेति । विशेषणं-पक्षवृत्तित्वम् ।**

❀ गादाधरी ❀

**विरोधान्यत्वरूपस्य तत्रासत्त्वेन प्रकृतलक्षणस्य तत्साधारण्यासम्भवात् । नापि पक्षवृत्तित्वाविशेषितं साध्यव्यापकीभूताभावप्रतियोगित्वं तज्ज्ञानस्यापि अनुमितौ तज्जनकज्ञाने वाऽविरोधित्वात् । यदि**

❀ विवृतिः ❀

निरूपित वृत्तित्वा भाव ज्ञानं हि ताद्दशव्यक्ति विशेषनिरूपित वृत्तित्व ज्ञानं प्रति प्रतिवन्धकम् नतु सामान्यतः साध्याधिकरण वृत्तित्व ज्ञानं प्रति, असमान प्रकारक ज्ञानस्याप्रतिवन्धक त्वादित्याशयः ।

ननु प्राचांमते समान विशेष्यक ज्ञानस्यैव प्रतिवन्धकतया असमान प्रकारकमपि साध्यवद्व्यक्ति विशेषाऽवृत्तित्वज्ञानं केवल साध्यसामानाधिकरण्यधियं प्रतिवध्नात्येवेत्यत आह **कथंचिदिति ।** समानविशेष्यकत्वेन साध्यवद्व्यक्तिविशेषाऽवृत्तित्व ज्ञानस्य केवल साध्यसामानाधिकरण्य ज्ञान प्रतिवन्धकत्वे इत्यर्थः । **साध्येति ।** साध्यसामानाधिकरण्य ग्रह प्रतिवन्धकता नवच्छेदक विषयिता निरूपकतावच्छेदक धर्मवत्वरूप विरोधान्यत्व रूपस्येत्यर्थः । तत्रासत्त्वेन=निश्चितसाध्यतदभाववद्व्यावृत्तत्वेऽसत्वेन । प्रकृतलक्षणस्य = विरोधान्यत्वघटित सव्यभिचार सामान्यलक्षणस्य । तत्साधारण्याऽसम्भवात् = निश्चित साध्य तदभाव वद्व्यावृत्तत्व साधारण्याऽसम्भवात् । तथा च निश्चित साध्यतदभाव वद्व्यावृत्तत्वस्य अनुमिति–तत्कारणान्यतर विरोधित्वेन हेत्वाभास सामान्य लक्षणाऽक्रान्तत्वेऽपि साध्य सामानाधिकरण्य ग्रहा विरोधित्वरूप विरोधान्यत्वस्य तत्राऽसत्वेन तद्घटित सव्यभिचार सामान्यलक्षणस्य तत्रासत्वात्निश्चित साध्यतदभाववद्व्यावृत्तत्व स्वरूपमपि नासाधारण्यमितिभावः ॥

ननु हेतुमत्पक्षाऽघटितं केवल साध्य व्यापकीभूताभाव प्रतियोगि हेतुरूयमेवासाधारण्यमस्तीत्यत आह **नापीति ।** पक्षवृत्तित्वेति । सामानाधिकरण्य सम्बन्धेनेत्यादिः । हेतुनिष्ठत्वसहितमित्यपि पूरणीयम् तेननोत्तर ग्रन्थविरोध इति–ध्येयम् । निशेषेहेतुमाह**तज्ज्ञानस्येति ।** हेतुनिष्ठ साध्यव्यापकीभूता भाव प्रतियोगित्व ज्ञानास्यापीत्यर्थः । तज्जनकज्ञानेवा = अनुमिति जनक परामर्शेवा । अविरोधित्वा-

## ❀ गादाधरी ❀

धर्मिक प्रकृतहेतुमत्ताज्ञानसहकृतं प्रकृतहेतौ साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानमनुमितिं प्रतिबध्नाति स्थाणुत्वाभावव्याप्यंकरादिकरादिमांश्चायमित्यादिज्ञानद्वयदशायामपि अयं स्थाणुरिति.ज्ञानानुदयात् धर्मिविशेष्यकतद्वत्ताज्ञानविशिष्टतद्धर्मिकग्राह्याभावव्याप्तिनिश्चयत्वेनैव तदभावव्याप्य-

## ❀ विवृतिः ❀

**दिति ।** तथा च हेतुनिष्ठसाध्यव्यापकीभूताभाव प्रातियोगित्वस्य अनुमित्तितत्कारणान्यतर प्रतिबन्धकज्ञान विषयत्वाभावेन तत्र हेत्वाभास सामान्य लक्षणस्य सव्यभिचार सामान्य लक्षणघटक विशेष्यदलस्य चासत्त्वात् हेतुनिष्ठ साध्यव्यापकीभूताभावप्रतियोगित्वरूपमसाधारण्यं भवितुं नार्हतीतिभावः ॥

ननु हेतुमान्पक्षः साध्यव्यापकीभूताभावप्रतियोगि हेतु रित्याकारक ज्ञानविशिष्ट ज्ञानस्यापि तदभावव्याप्यवत्ता निश्चयत्वेन साध्यग्रह प्रतिवन्धकताया आवश्यकतया साध्यव्यापकीभूताभाव प्रतियोगित्वस्यापि अनुमित्यादि प्रतिवन्धकज्ञान विषयत्वेन हेत्वाभाससामान्यलक्षणा क्रान्तत्वमव्याहतमेवेति तस्यैवासाधारण्य स्वरूपत्वमस्तु, न च साध्यव्यापकीभूताभाव प्रतियोगित्वविषयिताया: हेतुमत्पक्षज्ञानासमानकालीनेऽपि तादृशज्ञाने वर्तमानतया तस्याः अनुमिति प्रतिवन्धकतातिरिक्त वृत्तित्वेन कथं साध्यव्यापकीभूताभाव प्रतियोगिहेतोः सामान्यलक्षणा क्रान्तत्वमितिवाच्यम् पक्षधर्मिक हेतुमत्तानिश्चयविशिष्ट यादृश विशिष्टविषयक निश्चयत्वं प्रकृतानुमितिप्रतिवन्धकता नतिरिक्तवृत्ति तादृश विशिष्टत्वस्यैव सामान्यलक्षणत्वादित्याह **यदि चेति ।**

**पक्षेति ।** पक्षतावच्छेदकावच्छिन्नविशेष्यकहेतुतावच्छेदकावच्छिन्नप्रकारकनिश्चयविशिष्टमित्यर्थः । प्रकृतहेतौ=हेतुतावच्छेदकावच्छिन्नेहेतौ । अनुमितिम्=पक्षधर्मिकसाध्यविधेयकानुमितिम् । निरुक्तज्ञानविशिष्टज्ञानस्य साध्यग्रहप्रतिबन्धकत्वं दृष्टान्तेन दृढीकरोति–**स्थाणुत्वेति । ज्ञानानुदयादिति ।** तथा च स्थाणुत्वाभाव व्याप्यं करादि करादिमांश्चायमित्याकारकज्ञानविशिष्टज्ञानस्य यथा स्थाणुत्वाभावव्याप्यवत्तानिश्चयत्वेन स्थाणुत्वप्रकारकग्रहप्रतिबन्धकत्वं तथा हेतुमान् पक्षः साध्यव्यापकीभूताभावप्रतियोगिहेतुरित्याकारकज्ञानविशिष्टज्ञानस्यापि साध्याभावव्यतिरेकव्याप्यवत्तानिश्चयत्वेन साध्यप्रकारकबुद्धौ प्रतिबन्धकत्वं निर्विवादमेवेत्याशयः ॥

तदभावव्याप्यवत्तानिश्चयस्य ज्ञानविशिष्टज्ञानत्वेनैकैव प्रतिबन्धकता कल्प्यते न तु ज्ञानविशिष्टज्ञानत्वानवच्छिन्नापि काचित् प्रतिबन्धकता स्वीकर्त्तव्या प्रतिबन्धकताद्वयकल्पने गौरवादित्याह–**धर्मीति ।** इदन्त्वावच्छिन्नविशेष्यकजलत्वादिमत्तानिश्चय

## ❀ गादाधरी ❀

वत्ताज्ञानस्य प्रतिबन्धकत्वादित्युच्यते, तदा तादृशधर्मस्य पक्षे साध्यवत्ताज्ञानविरोधित्वात् सत्यन्तार्थविरहादिति ॥

अत्र केचित् पक्षवृत्तित्वविशेषितं साध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यम्, सत्यन्तदले च विरोधिताघटकप्रतिबन्कतायास्तादृशासाधारण्यविषयकत्वानवच्छिन्नत्वविशेषणं प्रक्षिप्य तत्साधारण्यं प्रकृतलक्षणस्योपपादनीयमित्याहुः ।

## ❀ विवृतिः ❀

विशिष्टजलत्वादिधर्मिकग्राह्यीभूतवह्न्यादेरभावव्याप्तिनिश्चयत्वेनेत्यर्थः । प्रतिबन्धकत्वादिति । तथा च हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वस्य प्रकृतानुमिति प्रतिबन्धकज्ञानविषयत्वेन हेत्वाभाससामान्यलक्षणाक्रान्ततया तस्यासाधारण्यस्वरूपत्वेऽपि क्षतिविरह इतिभावः । तादृशधर्मस्य=हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपधर्मस्य । साध्येति । साध्यग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवत्त्वादित्यर्थः। सत्यन्तार्थविरहः=पक्षः साध्यवान् हेतुमांश्चेत्याकारकग्रहाऽविरोधित्वरूपसत्यन्तार्थस्य विरहः । तथा च सत्यन्तार्थाभावादेव हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वस्य नासाधारण्यस्वरूपत्वमित्याशयः ॥

अत्र=निरुक्तपूर्वपक्षे ॥ केचिदिति ॥ आहुरिति परेणान्वयः । पक्षवृत्तित्वविशेषितं=पक्षनिरूपितवृत्तित्वविशिष्टम् । साध्येति । हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवेत्यर्थः । ननु पक्षवृत्तित्वविशिष्टसाध्यव्यापकीभूताभावप्रतियोगित्वस्य पक्षधर्मिकसाध्यग्रहविरोधितया सत्यन्तार्थाभावेन कथं तत्र सव्यभिचारसामान्य लक्षणसमन्वयः, इत्यत आह–सत्यन्तदले चेति । सव्यभिचारसामान्यलक्षणघटकीभूतेत्यादिः । अविरोधितेति । पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकधर्मवत्त्वघटकीभूतायां प्रतिबन्धकतायामित्यर्थः । तादृशेति । साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षरूपासाधारण्यविषयकत्वानवच्छिन्नत्वात्मकं विशेषणमित्यर्थः। तत्साधारण्यम्=पक्षवृत्तित्वसहितसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यसाधारण्यम् । प्रकृतलक्षणस्य=सव्यभिचारसामान्यलक्षणस्य । उपपादनीयमिति । तथा च साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षरूपासाधारण्यस्य पक्षधर्मिकसाध्यग्रहविरोधित्वेऽपि तादृशासाधारण्यविषयकत्वानवच्छिन्नसाध्यादिग्रहप्रतिबन्धकतापदेन बाधादिनिश्चयनिष्ठप्रतिबन्धकताया एव धर्तव्यतया तादृशप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकधर्मवत्त्वस्य यथोक्तासाधारण्ये सत्त्वात् तत्र लक्षणसमन्वय इति हृदयम् ॥

❀ गादाधरी ❀

**परेतु** हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यं तद्विषयकत्वस्य पक्षधर्मिकहेतुमताज्ञानविरहकालीनानुमित्यप्रतिबन्धक-

❀ विवृतिः ❀

अत्र कल्पे पक्षवृत्तित्वसहितसाध्यव्यापकीभूताभावप्रतियोगित्वस्य विशिष्टद्वय-घटिततया तस्य हेत्वाभाससामान्यलक्षणानाक्रान्तत्वेन लक्ष्यत्वमेव न सम्भवति। किञ्च साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षरूपासाधारण्यविषयकत्वानवच्छि-न्नत्वं न तादृशाऽसाधारण्यविषयकत्वाऽव्यापकत्वम्, तादृशासाधारण्यविषयकत्वव्याप-कत्वस्यैव साध्यग्रहप्रतिबन्धकतायां सत्त्वेन तादृशाऽव्यापकत्वस्याऽप्रसिद्धेः, नापि तादृशासाधारण्यविषयकत्वनिष्ठस्वरूपसम्बन्धरूपावच्छेदकत्वाऽनिरूपकत्वम्, ह्रदो वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदकालीनवह्निमान् इत्यादिस्थलेवाऽधेति व्याप्त्यापत्तेः तत्रत्यबाधनिश्चयप्रतिबन्धकताया यथोक्तासाधारण्यविषयकत्वावच्छिन्न-त्वेनअसाधारण्यविषयकत्वानवच्छिन्नप्रतिबन्धकतापदेन तस्याधर्तुमशक्यत्वादित्यस्व-रसः आहुरित्यन्तेन सूचितः॥

**परे त्विति**। हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यमित्य-त्रैवकारेण पक्षवृत्तित्वविशेषिततादृशप्रतियोगित्वस्यासाधारण्यत्वव्यवच्छेदः।

ननु यादृशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टत्वस्यैव हेत्वाभाससामान्यलक्षणतया सव्यभिचारलक्षणघटकविशेष्यद-लात्मकतया च कथं साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपासाधारण्ये लक्षणसमन्वयः निरुक्तासाधारण्यनिश्चयत्वस्य हेतुमत्पक्षज्ञानाऽसमानकालीनेऽपिज्ञाने वर्त्तमानतया तत्र अनुमितिप्रतिबन्धकताया विरहेण साध्यव्यापकीभूताभावप्रतियोगिहेतुनिश्चयत्वस्य अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वादतआह—**तद्विषयकत्वस्येत्यादि**। हेतुनिष्ठ-साध्यव्यापकीभूताभावप्रतियोगित्वविषयकनिश्चयत्वस्येत्यर्थः। **पक्षधर्मिकेति**। हेतुमान् पक्षः इत्याकारकनिश्चयविरहकालीनेसाध्यव्यापकीभूताभावप्रतियोगिहेतुरि-

❀ मनोरमा ❀

**परे त्विति**। नन्वत्र कल्पे ह्रदः काञ्चनमयह्रदवान् धूमादित्यत्र काञ्चनमयत्वव्यापकीभूताभाव-प्रतियोगिधूमेऽतिव्याप्तिः, ह्रदरूपे पक्षे धूमादिमत्तानिश्चयविशिष्टकाञ्चनमयत्वव्यापकीभूताऽभाव-प्रतियोगिधूमनिश्चयस्य काञ्चनमयत्वाभावव्याप्यवत्तानिश्चयत्वेन ह्रदधर्मिककाञ्चनमयत्वप्रकारकबुद्धौ प्रतिबन्धकतया प्रकृतानुमितिप्रतिबन्धकत्वात॥

एवं ह्रदो वह्निमान् जलादित्यत्र वह्न्यभाववज्जलवत्यप्यतिव्याप्तिः, ह्रदे जलादिमत्तानिश्चयसहितस्य वह्न्यभाववज्जलवत्त्वाऽवच्छिन्नविषयकनिश्चयस्य ज्ञानविशिष्टज्ञानत्वेन ह्रदधर्मिकवह्निप्रकारकबुद्धौ प्रतिबन्धकतया प्रकृतानुमितिप्रतिबन्धकत्वात्। पक्षधर्मिकहेतुमत्तानिश्चयाऽसहकृते केवलवह्न्य-

❀ गादाधरी ❀

ज्ञानसाधारणतया अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेऽपि पक्षधर्मिक-हेतुमत्तानिश्चय विशिष्टयादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धक-तानतिरिक्तवृत्ति तादृशत्वस्य सामान्यलक्षणेऽत्र च लक्षणे विवक्षणीयतया सामान्यलक्षणस्य प्रकृतलक्षणविशेषदलस्य च तत्साधारण्यनिर्वाहः। पक्ष-

❀ विवृतिः ❀

त्याकारकानुमित्यप्रतिबन्धकज्ञाने वर्तमानतयेत्यर्थः । **अनुमितीति**। अनुमिति-प्रतिबन्धतायास्तादृशासाधारण्यविषयकत्वाऽव्यापकत्वेऽपीत्यर्थः ।

**पक्षधर्मिकेत्यादि** । हेतुमान् पक्षइत्याकारकनिश्चयविशिष्टयादृशविशिष्ट-विषयकनिश्चयत्वव्यापकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तादृशत्वस्येत्यर्थः । अत्र निश्चयवैशिष्ट्यम् एकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन बोध्यम् । तेन कालान्तरीयपुरुषान्तरीयहेतुमत्तानिश्चयविशिष्टसाध्यव्यायकीभूता-भावप्रतियोगित्वनिश्चयत्वस्य अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वेऽपि न क्षतिः। सामान्यलक्षणे = हेत्वाभाससामान्यलक्षणे। अत्र च लक्षणे = सव्यभिचारसामान्य-लक्षणे। सामान्यलक्षणस्य = हेत्वाभाससामान्यलक्षणस्य। **प्रकृतेति**। सव्यभिचार-सामान्यलक्षणघटकीभूतविशेष्यदलस्य चेत्यर्थः । तत्साधारण्यनिर्वाहः = साध्यव्या-पकीभूताभावप्रतियोगिहेतुरूपासाधारण्ये वर्त्तमानत्वनिर्वाहः । सव्यभिचारलक्षणघ-टकविशेष्यदलस्यापि निरुक्तार्थकत्वादिति भावः ।

ननूक्तरीत्या पक्षधर्मिकहेतुप्रकारकनिश्चयविशिष्टनिश्चयविषयीभूते हेतुनिष्ठसा-ध्याभावव्यापकीभूताभावप्रतियोगित्वे सव्यभिचारलक्षणघटकविशेष्यदलस्य सत्त्वेऽपि कथं तत्र सत्यन्तदलस्य सत्त्वनिर्वाहः? पक्षधर्मिकहेतुमत्तानिश्चयविशिष्टतादृशासा-

❀ मनोरमा ❀

भाववद्वृत्तित्ववत्तावच्छिन्ननिश्चये ह्रदादिधर्मिकवह्न्यादिबुद्धिप्रतिबन्धकत्वस्याऽसत्त्वेन तत्र तत्र सत्य-न्तार्थस्यापि सम्भवादिति चेदत्र ब्रूमः।

सत्यन्तदलघटकयद्रूपावच्छिन्नविषयकनिश्चयसामान्ये प्रकृतानुमित्यप्रतिबन्धकत्व यथोक्ताऽसा-धारण्यविषयिताशून्यत्वोभयाभावं निवेश्याऽतिव्याप्तेर्वारयितुंशक्यतया निरुक्तपूर्वपक्षानवकाशः, पक्षे हेतुमत्तानिश्चयसहकृतस्यैव वह्न्यभाववद्वृत्तित्ववत्तावच्छिन्न विषयकनिश्चयस्य निरुक्तोभयाभाव-वन्निश्चयसामान्यान्तर्गततया तत्र पक्षे साध्यादिग्रहप्रतिबन्धकतायाः सत्वेन वह्न्यभाववद्वृत्तित्ववदादेः सत्यन्तदलानाक्रान्तत्वात्। पक्षधर्मिकहेतुमत्तानिश्चयाऽसहकृतस्यापि साध्यव्यापकीभूताऽभाव प्रतियोगिहेतुनिश्चयस्य यथोक्तोभयाभाववन्निश्चयसामान्यान्तर्गतत्वेन धर्तुंशक्यतया तत्र पक्षे साध्या-दिग्रहप्रतिबन्धकत्वाभावेन निरुक्ताऽसाधारण्यस्य सत्यन्तदलाऽक्रान्तत्वात् तत्राऽपि लक्षणसमन्वयः सम्भवतीति ध्येयम्॥

वस्तुतस्तु पक्षधर्मिकहेतुमत्तानिश्चयविशिष्टयादृशविशिष्टविषयकनिश्चये तादृशहेतुमत्तानिश्चय

❀ गादाधरी ❀

**तावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवत्तादिज्ञानाविरोधित्वस्य च तादृशं यत्किञ्चिज्ज्ञानं यादृशधर्मावच्छिन्नविषयकनिश्चय-**

❀ विवृतिः ❀

धारण्यनिश्चयस्य पक्षे साध्यग्रहं प्रति प्रतिबन्धकतया पक्षः साध्यवान्हेतुमांश्चेत्याकारकग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकधर्मवत्त्वरूपसत्यान्तार्थस्य हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वे विरहाद् इत्यत आह **पक्षतावच्छेदकेति**। पक्षः साध्यवान् हेतुमांश्चेत्याकारकलौकिकसन्निकर्षाद्यजन्यज्ञानाऽविरोधित्वस्य चेत्यर्थः। तादृशं यत्किञ्चिज्ज्ञानम्=पक्षधर्मिकसाध्यप्रकारकं हेतुप्रकारकं च यल्लौकिकसन्निकर्षाद्यजन्यं पदार्थान्तराविषयकंऽज्ञानम् । **यादृशेति** । यादृशधर्मावच्छिन्नविषयकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभाववदित्यर्थः । तादृशधर्मवत्त्वस्य = तादृशधर्मवत्त्वरूपसत्यन्तार्थस्य । शरीरे = घटके । **पक्षेति** । प्रकृतपक्षविशेष्यकप्रकृतहेतुप्रकारकनिश्चयवैशिष्ट्यमनिवेश्य केवलयादृशधर्मावच्छिन्नविषयकनिश्चयसामान्यस्य प्रवेशादित्याशयः ।

❀ मनोरमा ❀

कालीनत्वप्रयुक्ताऽनुमितिप्रतिबन्धकत्व,-तादृशाऽसाधारण्यविषयिताशून्यत्वोभयाभावविवक्षणान्न तादृशस्थले काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिधूमादौ विशेषलक्षणस्यसामान्यलक्षणस्याप्यतिव्याप्ति, एतेनपूर्वोक्तनिवेशे तादृशधूमादौ सामान्यलक्षणस्याप्यतिव्याप्तिर्दुर्वारैवेत्यपि पूर्वपक्षो निरस्त इत्यस्माकं नवीनः पन्था सुधीभिः विवेचनीयः ॥

अथोक्तकल्पे अभावो गगनत्ववान् आधेयत्वादित्यत्र गगनत्वव्यापकीभूताभावप्रतियोग्याधेत्वरूपाऽसाधारण्येऽव्याप्तिः निरुक्ताऽसाधारण्यनिश्चयस्य व्यापकता-घटकगगनत्ववद्वृत्त्याभावविषयकतया—हेतुमत्पक्षविषयकत्वेन पक्षधर्मिकसाध्यादिग्रहस्य तदप्रतिबध्यत्वाऽसम्भवेन तत्रसत्यन्तदलविरहात् ।

एवं ह्रदो जलवद्ध्रदकालीनवह्निमान् जलादित्यत्र जलवद्ध्रदकालीनवह्निव्यापकीभूताऽभावप्रतियोगिजलरूपाऽसाधारण्येऽपि सुतरामव्याप्तिः, तादृशाऽसाधारण्यनिश्चयस्यापि जलवद्ध्रदरूपहेतुमत्पक्षनिश्चयात्मकतया प्रकृतसाध्यादिग्रहप्रतिबन्धकत्वादितिचेन्न । तादृशाऽसाधारण्यविषयकत्वानवच्छिन्ना या प्रकृतपक्षे प्रकृतसाध्यहेतुवैशिष्ट्यावगाहिग्रहप्रतिबन्धकता तदनतिरिक्तवृत्तिस्वावच्छिन्नविषयिताकं यत यत् स्वं तत्तद्भेदकूटवत्त्वस्यैव सत्यन्तार्थत्वोपगमेनोक्तस्थले अव्याप्तिवारणसम्भवात् स्वपदेन बाधत्वादेरेव धर्त्तुं शक्यत्वादिति केचित् तच्चिन्त्यम् ।

वस्तुतो निरुक्तविशिष्टस्य सत्प्रतिपक्षरूपतामंगीकृत्य लक्ष्यत्वानभ्युपगमेऽपि न क्षतिरिति ध्येयम् ॥

प्रकृतपक्षे प्रकृतसाध्यहेतुवैशिष्ट्यावगाहिग्रहविशिष्टरूपवत्त्वं सव्यभिचारत्वमित्यादिरीत्या लक्षणार्थोऽनुगमनीयः । वैशिष्ट्यं रूपे स्ववृत्यभावीयप्रतिबध्यत्वनिष्ठप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रतिबन्धकत्वनिष्ठाऽवच्छेदककतानिरूपिताभावनिष्ठाऽवच्छेदकता निरूपितावच्छेदकत्वनिष्ठाऽवच्छेदकतानिरूपितप्रतियोगित्वनिष्ठाऽवच्छेदकतानिरूपितभेदनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपिता-

❀ गादाधरी ❀

सामान्याप्रतिबध्यं तादृशधर्मवत्त्वरूपस्य शरीरे निश्चयांशे पक्षधामकहेतुमत्तानिश्चयवैशिष्ट्यानिवेशात्तादृशनिश्चयविरहकालीनहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वविषयकनिश्चयस्यापि तद्विषयकनिश्चयसामान्यान्तर्गतत्वेन पक्षे साध्यवत्ताज्ञानस्य च तदप्रतिबध्यतया तद्दलस्याप्येतत्साधारण्योपपत्तिरित्याहुः ॥

❀ विवृतिः ❀

**तादृशेति** । पक्षधर्मिकहेतुप्रकारकनिश्चयविरहकालीनहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वत्वावच्छिन्नविषयकनिश्चयस्यापीत्यर्थः । **तद्विषयकेति** । निरूक्तासाधारण्यविषयकनिश्चयसामान्यान्तर्गतत्वेनेत्यर्थः । पक्षे साध्यवत्ताज्ञानस्य च = पक्षधर्मिकसाध्यप्रकारकज्ञानात्मकपक्षः साध्यवान् हेतुमांश्चेत्याकारकयत्किंचिज्ज्ञानस्य च । तदप्रतिबध्यतया=पक्षे हेतुमत्तानिश्चयविरहकालीनहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयाप्रतिबध्यतया । तद्दलस्य=सत्यन्तदलस्य । एतत्साधारण्योपपत्ति:=हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वसाधारण्योपपत्तिः । तथा च हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयत्वस्य हेतुमान्पक्षइत्याकारकनिश्चयासमानकालीनेऽपि तादृशासाधारण्यनिश्चये वर्त्तमानतया तत्र च पक्षः साध्यवान् हेतुमांश्चेत्याकारकयत्किञ्चिद्ग्रहप्रतिबन्धकताया विरहेण निरुक्तसत्यन्तदलघटक यादृशविशिष्टविषयकनिश्चयपदेन निरुक्तासाधारण्यनिश्चयमादाय यथोक्तासाधारण्ये सत्यन्तदलस्य, हेतुमान् पक्षइत्याकारकनिश्चयविशिष्टसाध्यव्यापकीभूताभावप्रतियोगिहेतुरित्याकारकनिश्चयस्य पक्षे साध्यग्रहप्रतिबन्धकत्वेन प्रकृतानुमितिप्रतिबन्धकतया पक्षधर्मिकहेतुमतानिश्चयसहकृतयादृशविशिष्टविषयकनिश्चयपदेनापि हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयस्यधर्तुं शक्यतया तादृशत्व रूपविशेष्यदलस्य च तादृशासाधारण्ये सत्त्वात् तत्र लक्षणसमन्वय इतिभावः ।

❀ मनोरमा ❀

वच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व, —स्वकालीनप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्वोभयसम्बन्धेन । प्रतिबन्धकतावत्त्वञ्च, स्वनिष्ठव्यापकताभावीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगित्वनिष्ठाऽवच्छेदकतानिरूपितभेदुनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिता या प्रकृतपक्षे प्रकृतहेतुमत्तानिश्चयनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकता तन्निरूपितविषयित्वनिष्ठावच्छेदकता निरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वसम्बन्धेन ॥

प्रथमवैशिष्ट्यघटकाभावस्तु लक्ष्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नविषयिताविशिष्टनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववत्प्रतिबन्धकतानिरूपितप्रतिबध्यत्वं नास्तीत्याकारकः । द्विती-

❀ गादाधरी ❀

**वस्तुतो यादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताशून्यपक्ष-**

❀ विवृतिः ❀

साध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यं तत्र लक्षणसमन्वयार्थं हेत्वाभाससामान्यलक्षणं सव्यभिचारसामान्यलक्षणघटकविशेष्यदलं च प्रकारान्तरेण स्वयम् निर्वक्ति–**वस्तुतवितिा यादृशेति**। तथाच पक्षः साध्यवान् साध्यव्याप्यहेतुमांश्चेत्याकारकयत्किञ्चिद्अनुमितिप्रतिबन्धकतासामान्यशून्यं यत् पक्षधर्मिकहेतुमत्ताज्ञानकालीनं ज्ञानं तत्रावर्त्तमानं यद्रूपावच्छिन्नविषयकनिश्चयत्वं तद्रूपवत्वस्यैव हेत्वाभाससामान्यलक्षणार्थतया सव्यभिचारसामान्यलक्षणघटकविशेष्यदलार्थतया च विवक्षणीयमिति फलितम् ।

ह्रदो वह्निमान् वह्निव्याप्यधूमवान् घटवच्च भूतलमित्याकारकसमूहालम्बनानुमितिप्रतिबन्धकताशून्यत्वस्य पक्षधर्मिकहेतुमत्ताज्ञानकालीने घटाभाववद्भूतलज्ञाने विरहात् तादृशानुमितिप्रतिबन्धकत्वाभाववति पटादिज्ञाने घटाभाववद्भूतलनिश्चयत्वस्यावर्त्तमानतया ह्रदो वह्निमान् धूमादित्यादौ घटाभाववद्भूतलेऽतिव्याप्तिरतोऽनुमितौ यत्किञ्चित्त्वनिवेशः । प्रकृतानुमितिप्रतिबन्धकत्वघटोभयाभावस्य कामिनीजिज्ञासादिनिष्ठप्रकृतानुमिति प्रतिबन्धकताविरहस्य च पक्षधर्मिकहेतुमत्ताज्ञानकालीने वह्न्यभाववद्ध्रदनिश्चये सत्त्वात्तत्र च वह्न्यभाववद्ध्रयादिनिश्चयत्वस्य वर्त्तमानतया सर्वत्रासम्भवापत्तेरतोऽनुमितिप्रतिबन्धकतासामान्याभावनिवेशः । नचैवं स्वरूपासिद्ध्यादि निश्चयवृत्तित्वविशिष्टप्रकृतानुमितिप्रतिबन्धकत्वाभावस्य पक्षधर्मताज्ञानकालीनबाधादिनिश्चये सत्त्वात् पुनरसम्भवतादवस्थ्यमितिवाच्यम्, प्रकृतानुमितिप्रतिबन्धकत्वनिष्ठप्रतियोगिताया वैशिष्ट्यानवच्छिन्नत्वेन प्रतियो गित्वाश्रयप्रतियोगिव्यधिकरणत्वेन तादृशप्रतिबन्धकत्वाभावस्य वा विवक्षणीयतयाऽसम्भवानवकाशादिति ध्येयम् । अनुमितिप्रतिबन्धकतात्वस्य सर्वसाधारणानुगतस्याप्रामाणिकत्वे तु प्रकृतानुमितिप्रतिबन्धकत्वं यद्यत् तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्त्वमेव पक्षधर्मताज्ञानकालीने ज्ञाने निवेश्यमिति न कोऽपि दोषः ।

❀ मनोरमा ❀

यव्यापकतारूपाऽभावश्च पक्षधर्मिकहेतुमत्तानिश्चयविशिष्टो यो लक्ष्यतावच्छेदकत्वेनाभिमतः धर्मावावविच्छन्नविषयिताविशिष्टनिश्चयविशिष्टो यो लक्ष्यतावच्छेदकत्वेनाभिमतधर्मावच्छिन्नविषयिताविशिष्टनिश्चय स्तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वं नास्तोत्याकारक इति ध्येयम् ॥

**वस्तुतो यादृशेति ।** नन्वत्र कल्पद्वये एव पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वनिवशो व्यर्थः, यादृशविशिष्टविषयकनिश्चयत्वम् प्रकृतानुमितिप्रतिबन्धकताशून्यपक्षधर्मिकहेतुमत्ताज्ञानाऽवृत्तितादृशत्वस्य यादृशविशिष्टषिषयकनिश्चयत्वव्यापकः प्रकृताऽनुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुम-

❀ विवृतिः ❀

अत्र च यद्रूपावच्छिन्नविषयकनिश्चयत्वम् अनाहार्य्याप्रामाण्यज्ञानानास्कंदितसंशयान्यज्ञानत्वरूपं ग्राह्यम् तेना नुमितिप्रतिबन्धकताशून्ये पक्षधर्मताज्ञानकालीनाप्रामाण्यज्ञानाद्यास्कंदितबाधादिनिश्चये अप्रामाण्यज्ञानाद्यास्कंदितबाधादिनिश्चयत्वस्य वर्तमानत्वेऽपि नाऽसम्भवः। पक्षधर्मताज्ञानकालीनमपि ज्ञानं पक्षधर्मताज्ञानसमानाधिकरणत्वेन विशेषणीयम्, तेन स्वव्यधिकरणपक्षधर्मताज्ञानकालीनहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वज्ञानेऽनुमितिप्रतिबन्धकताशून्ये तादृशप्रति योगित्वनिश्चयत्वस्य सत्त्वेऽपि न तादृशाऽसाधरण्येऽव्याप्तिः॥

भवति हि ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ह्रदादिनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकताशून्ये धूमवद्ध्रदादिज्ञानकालीनघटादिज्ञानेऽसत्त्वाद् वह्न्यभाववद्ध्रदादौ हेत्वाभाससामान्यलक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ पक्षः साध्यवान् हेतुमांश्चेत्याकारकयत्किञ्चिज्ज्ञानस्य धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारत्वावच्छिन्नविषयकनिश्चयसामान्याऽप्रतिबध्यतया तादृशव्यभिचारत्वरूपधर्मवत्त्वेन यथोक्तसत्यन्तदलाऽक्रान्ते तादृशव्यभिचारत्वावच्छिन्नविषयकनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकताशून्यपक्षधर्मताज्ञानकालीनघटादिज्ञानाऽवृत्तितया तादृशव्यभिचारत्वरूपधर्मवत्त्वेन यथोक्तविशेष्यदलाक्रान्ते च धूमाभाववद्वृत्तित्वविशिष्टवह्निव्यभिचारे सव्यभिचारसामान्यलक्षणसमन्वयः। एवं वह्निमान् जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्यनिश्चयस्य तादृशासाधारण्यनिश्चयसामान्यान्तर्गततया वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्ननिश्चयसामान्याऽप्रतिबध्यतायाः पक्षे साध्यहेतुवैशिष्ट्यावगाहियत्किञ्चिज्ज्ञाने सत्त्वात् सत्यन्तघटकयद्रू-

❀ मनोरमा ❀

त्वाविषयकत्वोभयाभावस्तादृशत्वस्य वा विवक्षणेनैव सामञ्जस्यादिति चेन्न। निरुक्तरीत्या लक्षणार्थस्य निर्वचने पर्वतो द्रव्यं वह्न्यभावव्याप्यादित्यत्र वह्निमत्पर्वतेऽतिव्याप्तिः वह्न्यभावव्याप्यवत्पर्वतविषयकवह्निमत्पर्वतज्ञानस्याऽहार्यत्वेन अनाहार्याऽनुमितिप्रतिबन्धकताशून्यकेवलवह्न्यभावव्याप्यवत्पर्वतरूपपक्षधर्मताज्ञाने वह्निमत्पर्वतविषयकनिश्चयत्वस्यावर्त्तमानत्वात् अनाहार्यवह्निमत्पर्वतनिश्चयत्वव्यापकत्वस्य प्रकृताऽनुमित्यप्रतिबन्धकत्व,—पक्षधर्मताविषयकत्वोभयाभावेऽक्षतत्वाच्च।

अस्माकन्तु वह्निमत्पर्वतनिश्चयद्वितीयक्षणोत्पन्नं यद्वह्न्यभावव्याप्यवत्पर्वतरूपपक्षधर्मताज्ञानं तत्कालीने वह्निमत्पर्वतनिश्चये वह्निमत्पर्वतनिश्चयत्वस्य वृत्तित्वान्न तत्राऽतिव्याप्तिः॥

ननु तथाप्युभयत्र पक्षधर्मताज्ञानकालीनत्वं पक्षतावच्छेदकावच्छेदेन पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वरूपं वाच्यम्। अन्यथा ह्रदत्वसामानाधिकरण्येन वह्निसाध्यकजलहेतुकस्थले वह्निव्यापकीभूताऽभावप्रतियोगिजलरूपाऽसाधारण्येऽव्याप्तिः, ह्रदत्वसामानाधिकरण्येन जलरूपहेतुमत्तानिश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलरूपाऽसाधारण्यज्ञाने अनुमितिप्रतिबन्धकताशून्ये तादृशाऽसाधारण्यनिश्चयत्वस्य वृत्तित्वात्, तादृशपक्षधर्मताज्ञानकालीनाऽसाधारण्यनिश्चये अनुमित्यप्रति-

❀ गादाधरी ❀

धर्मताज्ञानकालीनज्ञानवृत्ति तादृशत्वस्य स्वव्यापकतत्कत्वरूपानतिरिक्त-

❀ विवृतिः ❀

पपदेन तादृशजलत्वस्य धर्तुं शक्यतया पक्षधर्मताज्ञानकालीनवह्निव्यापकीभूताभाव-प्रतियोगिजलत्वावच्छिन्नविषयकनिश्चयस्य च पक्षधर्मिकसाध्यप्रकारकत्वघटितप्रकृ-तानुमितिप्रतिबन्धकत्वेन तादृशानुमितिप्रतिबन्धकताशून्ये घटादिज्ञाने वह्निव्यापकी-भूताभावप्रतियोगिजलत्वनिश्चयत्वस्याऽवृत्तित्वाद् विशेष्यदलघटकयद्रूपपदेनापि तादृ-शजलत्वस्य धर्तुं शक्यतया च वह्निव्यापकीभूताभावप्रतियोगिजलत्वरूपधर्ममादाय तादृशजलरूपासाधारण्ये लक्षण समन्वयः। सर्वमनित्यं मेयत्वादित्यादौ नित्यत्व-व्यापकीभूताभावाऽप्रतियोगिमेयत्वरूपानुपसंहारित्वनिश्चयाऽप्रतिबध्यत्वस्य पक्षः साध्यवान्हेतुमांश्चेत्याकारकज्ञानेसत्त्वेन सत्यन्तदलघटकयद्रूपपदेन तादृशमेयत्वत्वस्य धर्तुं शक्यतया पक्षधर्मताज्ञानकालीनतादृशानुपसंहारित्वनिश्चयस्य च साध्याभा-वव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिविशिष्टहेतुप्रकारकत्वघटितप्रकृतानुमिति-प्रतिबन्धकतया तद्दशप्रतिबन्धकताशून्यघटादिज्ञाने तादृशानुपसंहारित्वनिश्चयत्व-स्यावर्त्तमानतया विशेष्यदलघटकयद्रूपदेनापि नित्यत्वव्यापकीभूताभावाऽप्रति-योगिमेयत्वत्वस्य धर्तुं शक्यतया च तादृशमेयत्वत्वधर्ममादाय नित्यत्वव्यापकीभूता-भावाऽप्रतियोगिमेयत्वरूपानुपसंहारित्वे लक्षणसंगतिरित्यन्यत्र विस्तारः॥

नन्वत्र कल्पे केवलवह्न्यभावादावतिव्याप्तिः ह्रदो वह्न्यभाववानित्याकारलज्ञानीय वह्न्यभावादिनिश्चयत्वस्य प्रकृतानुमितिबन्धकताशून्यपक्षधर्मताज्ञानकालीनघटादि-ज्ञानावृत्तित्वात्। किञ्च विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिकाभावानभ्युपगमे सर्व-त्राऽसम्भवः, केवलनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकताशून्यपक्षधर्मताज्ञानकाली-नघटादिज्ञानवृत्तितया व्यभिचारादिविषयकनिश्चयत्वे तादृशघटादिज्ञानाऽवृत्तित्वस्य दुर्लभत्वाद् इत्यत आह-**स्वव्यापकेति**। स्वं यद्रूपावच्छिन्नविषयकनिश्चयत्वम्

❀ मनोरमा ❀

बन्धकत्व, पक्षधर्मिक हेतुमत्ताज्ञानकीनत्वयो. द्वयोः सत्वाच्च। एवञ्च ह्रदत्व सामानाधिकरण्येन धूमाभाववत् ह्रदेऽतिव्याप्तिः, ह्रदत्वावच्छेदेन धूमवत्तानिश्चयकालीन तादृश धूमाभाववत् ह्रदनि-श्चयस्या हार्यतया, अनुमिति प्रतिबन्धकता शून्यानाहार्य पक्ष धर्मताज्ञानकालाने घटज्ञाने तादृश धूमाभाववत् ह्रदनिश्चयत्व स्याऽवर्त्तमानत्वात्, अनाहार्य निरुक्त धूमाभाववत् ह्रदनिश्चयत्व व्यापकतायाः पक्षधर्मिकहेतुमत्ताज्ञानकालोनत्व, अनुमित्यप्रतिबन्धकत्वोभया भावे सत्वाच्चेतिचेन्न। प्रकृतानुमित्यवृत्ति विषयिता शालि यादृश विशिष्ट विषयक निश्चयत्वस्य विवक्षणान्न तत्राऽति व्याप्तिः, सामानाधिकरण्येन साध्यहेतुकस्थले हेत्वभाववत्पक्षविषयितायाः प्रकृतानुमित्यवृत्तित्व विरहेण निरुक्तविषयिताया लक्षणाऽघटकत्वात्।

❀ गादाधरी ❀

वृत्तित्वनिवेशे यादृशविशिष्टविषयकनिश्चयत्वव्यापकः पक्षधर्मताज्ञानकालीनत्वानुमित्यप्रतिबन्धकत्वोभयाभावः तादृशत्वस्य वा निवेशान्न दोषः,

❀ विवृत्ति ❀

तद्व्यापकीभूतं यत्प्रकृतानुमितिप्रतिबन्धकत्वम्, तत्कत्वरूपानतिरिक्तवृत्तित्वस्य निवेशे इत्यर्थः। **यादृशेति** । यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापक इत्यर्थः। अस्योभयाभावइत्यनेन सम्बन्धः।

**पक्षधर्मतेति**। प्रकृतप्रक्षधर्मिकहेतुमत्ताज्ञानकालीनत्व,—प्रकृतानुमित्यप्रतिवन्धकत्वोभयाभाव इत्यर्थः।

तादृशत्वस्य = तद्रूपवत्त्वस्य । **निवेशादिति**। हेत्वाभाससामान्यलक्षणार्थतया सव्यभिचारसामान्यलक्षणघटकविशेष्यदलार्थतया चेत्यादिः। तथा च पक्षः साध्यवान् हेतुमांश्चेत्याकारयत्किंचिज्ज्ञानं यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वाभाववत् तद्रूपवत्त्वे सति यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकः पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वप्रकृतानुमित्यप्रतिबन्धकत्वोभयाभावः तद्रूपवत्त्वम् सव्यभिचारत्वम् हेत्वाभाससामान्यलक्षणं तु विशेष्यदलमात्रमित्याशयः। ह्रदो वह्निमान्धूमादित्यादौ पक्षधर्मताज्ञानकालीनेऽपि वह्न्यभाववद्ह्रदादिनिश्चये प्रकृतानुमित्यप्रतिबन्धकत्वविरहेण उभयाभावसत्त्वात् निरुक्तोभयाभावस्य वह्न्यभाववद्ह्रदत्वाद्यवच्छिन्नविषयकनिश्चयत्वव्यापकतया वह्न्यभाववद्ध्रदत्वादिरूपधर्ममादाय वह्न्यभाववद्ह्रदादौ हेत्वाभाससामान्यलक्षणसमन्वयः। हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयो यदि पक्षधर्मताज्ञानकालीनस्तदा तत्र प्रकृतानुमित्यप्रतिबन्धकत्वविरहेणोभयाभावोऽक्षतएव, यदिच तादृशनिश्चयो न पक्षधर्मताज्ञानकालीनस्तदा तत्र पक्षधर्मताज्ञानकालीनत्वाभावेन उभयाभावो वर्ततएवेति निरुक्तोभयाभावस्य हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगितात्वावच्छिन्नविषयकनिश्चयत्वव्यापकतया तादृशप्रतियोगितात्वरूपधर्ममादाय हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्ये सव्यभिचारसामान्यलक्षणसमन्वयः। एवं व्यभिचारादावपि यथोक्तरीत्या सव्यभिचारसामान्यलक्षणसमन्वयः स्वयमूहनीयः।

केवलपक्षधर्मताज्ञानकालीनत्वाभावे यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्व-

❀ मनोरमा ❀

पक्षे साध्यप्रकारक साध्यव्याप्यहेतुप्रकारकानुमितौतु साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपाऽसाधारण्य विषयितायावृत्तित्वाऽसम्भवेन तादृशाऽसाधारण्यविषयिताया लक्षणघटकत्वसम्भवान्न-कोऽपिदोप इति वदन्ति ॥

नचात्राऽपि ह्रदः काञ्चनमयह्रदवान् धूमादित्यादौ काञ्चनमयत्वव्यापकीभूताऽभावप्रतियोगि

॥ विवृतिः ॥

विवक्षणे ह्रदो वह्निमान् धूमादित्यादौ सर्वत्रासम्भवोऽव्याप्तिर्वा स्यात्, पक्षधर्मताज्ञानकालीनेऽपि वह्न्यभाववद्ध्रदादिनिश्चये तादृशनिश्चयत्वस्य वर्त्तमानतया तत्र पक्षधर्मताज्ञानकालीनत्वाभावस्यासत्त्वेन तादृशाभावस्य वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकनिश्चयत्वाऽव्यापकत्वात्। केवलप्रकृतानुमितिप्रतिबन्धकत्वाभावेऽपि यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वविवक्षणे हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्येऽव्याप्तिः, पक्षधर्मताज्ञानकालीनेऽपि हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चये तादृशनिश्चयत्वस्य वर्तमानतया तत्रानुमित्यप्रतिबन्धकत्वस्यैव सत्त्वेन अनुमित्यप्रतिबन्धकत्वाभावस्य तादृशासाधारण्यनिश्चयत्वाऽव्यापकत्वात्। एवं तादृशान्यतराभावस्य तादृशनिश्चयत्वव्यापकत्वविवक्षणेऽपि पूर्वोक्त एव दोषोऽवसेयः इत्यतस्तादृशोभयाभावे यथोक्तनिश्चयत्वव्यापकत्वं विवक्षितम्।

यद्यपि पक्षधर्मताज्ञानकालीनत्वविशिष्टप्रकृतानुमित्यप्रतिबन्धकत्वाभावविवक्षयैव सामञ्जस्ये तादृशोभयाभावे तादृशनिश्चयत्वव्यापकत्वनिवेशो निरर्थकः, न चोभयाभावनिष्ठयद्रूपावच्छिन्नविषयकनिश्चयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावात्तादृशविशिष्टाभावनिष्ठव्यापकतारूपाभावस्यातिरिक्ततया अखण्डाभावघटकतयैवोभयाभावे व्यापकत्वनिवेशः सार्थकः सम्भवतीति वाच्यम्, उभयाभावे व्यापकत्वनिवेशस्य गौरवग्रस्ततया लाघवात् विशिष्टाभावे तन्निवेशस्य सयुक्तिकत्वसम्भवादित्युच्यते तथापि विशिष्टाभावस्य विशेषणीभूतपक्षधर्मताज्ञानकालीनत्वमात्रप्रतियोगिकत्वे पूर्वोक्तासम्भवादिदोषः, विशेष्यीभूतानुमित्यप्रतिबन्धकत्वमात्रप्रतियोगिकत्वे तु हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वे पूर्वोक्तरीत्याऽव्याप्तिरतस्तादृशोभयाभाव एव यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकत्वनिवेश इति ध्येयम्॥

वस्तुतो यादृशस्थले यादृशदोषविषयकानुमितिप्रतिबन्धकज्ञानसमानकालीनमेव तादृशज्ञानसमानाधिकरणं पक्षधर्मताज्ञानं भवति नतु अनुमित्यप्रतिबन्धकज्ञानादिसमानकालीनं तादृशस्थले तादृशदोषेऽव्याप्तिः, पक्षधर्मताज्ञानकालीनत्वविशिष्टानुमित्यप्रतिबन्धकत्वस्याप्रसिद्धेरतो विशिष्टाभावमपहायोभयाभावो निवेशित इत्यवधेयम्। नच तथापि यद्रूपावच्छिन्नविषयकनिश्चयत्वसामानाधिकरण्यमेव तादृशोभयाभावे निवेश्यताम् किं व्यापकत्वविवक्षयेति वाच्यम्, ह्रदो वह्निमान् इत्यत्र घटवद्भूतलादावतिव्याप्त्यापत्तेः, वह्न्यभाववद्ध्रदविषयकसमूहालम्बने घटवद्भूतलत्वाद्यवच्छिन्नविषयकनिश्चयत्वसामानाधिकरण्यस्य तादृशोभयाभावेऽक्षतत्वात्।

अत्रापि पक्षधर्मताज्ञानकालीनत्वं तादृशज्ञानसामानाधिकरण्यसहितं वाच्यम्, अन्यथा पुरुषान्तरीयपक्षधर्मताज्ञानमात्रकालीनहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयविषये तादृशप्रतियोगित्वेऽव्याप्तिः स्यात्, निरुक्तनिश्चये पक्षधर्मता-

❀ गादाधरी ❀

**अन्यथा स्वरूपासिद्धिवारकस्य हेतुमत्ताग्रहाविरोधित्वदलस्य वैयर्थ्यापत्तेः, पक्षधर्मिकहेतुमत्तानिश्चयकालीनतद्विषयकनिश्चयस्याप्रसिद्धया यादृशविशिष्टविषयकपदेन तस्योपादानासंभवात्। एवं सामान्यलक्षणस्याप्यव्याप्तिः।**

❀ विवृतिः ❀

ज्ञानकालीनत्वानुमित्यप्रतिबन्धकत्वयोर्द्वयोः सत्त्वात्। अनुमित्यप्रतिबन्धकत्वमपि प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वसामान्याभावः, तेन न ह्रदो वह्निमान् इत्यादौ घटवद्भूतलविषयकसमूहालम्बनप्रकृतानुमितिप्रतिबन्धकघटाभाववद्भूतलनिश्चयविषये घटाभाववद्भूतलेऽतिव्याप्तिः, नवा यत्किञ्चित्प्रतिबन्धकत्वाभावमादाय सर्वत्राऽसम्भव इति दिक् ॥

यथाश्रुत-परे तु-कल्पस्य परित्यागे बीजमाहान्य**थेति**। वस्तुतस्तु इत्यादिरीत्या लक्षणार्थस्य निर्वचने इत्यर्थः। स्वरूपासिद्धिवारकस्य = हेत्वाभाववत्पक्षादौ सव्यभिचारसामान्यलक्षणातिव्याप्तिवारकस्य। **हेतुमत्तेति**। यद्रूपावच्छिन्नविषयकनिश्चयसामान्याऽप्रतिबध्यं तादृशं यत्किञ्चिज्ज्ञानं तद्रूपवत्त्वमित्यर्थकसत्यन्तदलघटकयत्किञ्चिज्ज्ञाने हेतुप्रकारकत्वनिवेशस्येत्यर्थः। वैयर्थ्या**पत्तेरिति**। विशेष्यदलेनैव स्वरूपासिद्धिवारणसम्भवादित्याशयः।

वैयर्थ्यापत्तौ हेतुमाह पक्ष**धर्मिकेति**। हेतुमान्पक्षइत्याकारकनिश्चयकालीनानाहार्यहेत्वभावत्पक्षरूपस्वरूपासिद्धिविषयकनिश्चयस्याप्रसिद्धयेत्यर्थः। **यादृशेति**। यद्रूपावच्छिन्नविषयकनिश्चयपदेनेत्यर्थः। तस्य = हेत्वभाववत्पक्षतावच्छेदकरूपस्य। उपादानाऽ**सम्भवादिति**। तथाच पक्षः साध्यवान् हेतुमांश्चेत्याकारकयत्किञ्चिज्ज्ञानं यद्रूपावच्छिन्नविषयकनिश्चयसामान्याऽप्रतिबध्यं तद्रूपवत्त्वे सति पक्षधर्मिकहेतुमत्ताज्ञानकालीनयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वमिति परेतु—कल्पाभिप्रेतम् सव्यभिचारसामान्यलक्षणम् तत्र सत्यन्तदलघटकीभूते यत्किञ्चिज्ज्ञाने हेतुप्रकारकत्वनिवेशनं तु हेत्वभाववत्पक्षरूपस्वरूपासिद्धावतिव्याप्तिवारकम् तत्तु न संगच्छते विशेष्यदलेनैव स्वरूपासिद्ध्यादावतिव्याप्तिवारणसम्भवात् 'हेतुमान् पक्षः' इत्याकारकपक्षधर्मिकहेतुमत्ताज्ञानकालीनानाहार्यहेत्वभाववत्पक्षरूपस्वरूपासिद्धिनिश्चयस्याप्रसिद्धया विशेष्यदलघटकयद्रूपपदेन हेत्वभाववत्पक्षतावच्छेदकरूपस्य स्वरूपासिद्धिदोषतावच्छेदकधर्मस्य धर्तुमशक्यत्वादिति भावः।

सामान्यलक्षणस्य = हेत्वाभाससामान्यलक्षणस्य। तत्र = स्वरूपासिद्धौ। अव्या·

❀ मनोरमा ❀

**धूमे, ह्रदो वह्निमान् जलादित्यादौ वह्न्यभाववज्जलवत्यतिव्याप्तिः, पक्षधर्मिकहेतुमत्तानिश्चयकालीने**

❀ गादाधरी ❀

यथाविवक्षिते तु तद्विषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकताशून्यपक्षधर्मिकहेतुमत्तानिश्चयकालीनज्ञानावृत्तित्वेन तत्रातिव्याप्तिवारकतया तत्सा-

❀ विवृतिः ❀

प्तिरिति । पक्षधर्मिकहेतुमत्ताज्ञानकालीनयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकम् प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपवत्त्वस्यैव सामान्यलक्षणतया पक्षधर्मिकहेतुमत्ताज्ञानकालीनानाहार्य्यस्वरूपासिद्धिनिश्चयस्याप्रसिद्ध्या स्वरूपासिद्धित्वस्य यद्रूपपदेनोपादानाऽसम्भवादित्याशयः ॥

ननु वस्तुतस्तु-कल्पस्यादरे वा कथमुक्तदोषनिरासइत्यतआह—**यथेति** । तादृशं यत्किञ्चिज्ज्ञानं यद्रूपावच्छिन्नविषयकनिश्चयसामान्याप्रतिवध्यं तद्रूपत्त्वेवसति । यद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकताशून्यपक्षधर्मताज्ञानकालीनज्ञानाऽवृत्ति तद्रूपवत्त्वादेरेव सव्यभिचारसामान्यलक्षणार्थत्वे सत्यन्तदलपरित्यागेन विशेष्यदलमात्रस्य हेत्वाभाससामान्यलक्षणार्थत्वे च विवक्षिते त्वित्यर्थः । तद्विषयकनिश्चयत्वस्य = स्वरूपासिद्धिविषयकनिश्चयत्वस्य। **अनुमितीति ।** प्रकृतानुमितिप्रतिबन्धकताशून्यं यत्पक्षधर्मिकहेतुमत्तानिश्चयकालीनम् घटादिज्ञानम् तद्वृत्तित्वेनेत्यर्थः । तत्र = स्वरूपासिद्धौ । **तत्सार्थकत्वादिति** । तथाच विशेष्यदलघटकयद्रूपपदेन स्वरूपासिद्धित्वस्यापि धर्तुं शक्यतया स्वरूपासिद्धौ सव्यभिचारसामान्यलक्षणस्यातिव्याप्तिः, अतस्तद्वारणाय सत्यन्तदलघटकयत्किञ्चिज्ज्ञाने हेतुप्रकारकत्वनिवेशनं सार्थकं सम्भवतीतिभावः ।

❀ मनोरमा ❀

तादृशविशिष्टविषयकनिश्चये अनुमित्यप्रतिबन्धकत्वविरहात्, तादृशहेतुमत्तानिश्चयाऽसहकृते च तादृशविशिष्टनिश्चये पक्षधर्मिकहेतुमत्तानिश्चयकालीनत्वविरहादिति वाच्यम् । पक्षधर्मिकहेतुमत्तानिश्चयकालीनत्वप्रयुक्ताऽनुमितिप्रतिबन्धकत्व,—तादृशाऽसाधारण्यविषयिताशून्यत्वोभयाभाववद् यद्रूपावच्छिन्नविषयकनिश्चयस्य विवक्षिततया तादृशतादृशविशिष्टेऽतिव्याप्त्यसम्भवादित्यस्य पूर्वमभिहितत्वात् ॥

**यथाविवक्षिते त्विति** । ननु परेतु कल्पेऽपि सव्यभिचारलक्षणे न स्वरूपासिद्धिवारकविशेषणस्य वैयर्थ्यम् नवा सामान्यलक्षणे स्वरूपासिद्धावव्याप्तिः पक्षधर्मिकहेतुमत्तानिश्चयविशिष्टस्य अनाहार्यलौकिकसन्निकर्षादिजन्यहेत्वभाववत्पक्षनिश्चयस्य प्रसिद्धत्वादिति चेन्न । यादृशस्थले यादृशपक्षहेत्वादेरतीन्द्रियत्वं तादृशपक्षे तादृशहेत्वभावज्ञानस्य लौकिकसन्निकर्षजन्यत्वाऽप्रसिद्धया तादृशस्थलीयस्वरूपासिद्धौ विशेषलक्षणस्यातिव्याप्तिवारकविशेषण व्यर्थम्, सामान्यलक्षणस्यापि तत्राऽव्याप्तिरित्यस्यैव विवक्षणीयत्वादित्यास्तां विस्तरः ॥

प्रथमलक्षणाऽनुगमस्तु, प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपवत्त्वम् हेत्वाभासत्वम् । वृत्तित्वम् स्वविशिष्टनिश्चयत्ववत्त्वसम्बन्धेन । स्ववैशिष्ट्यं निश्चये स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन । निश्चयत्ववत्त्वञ्च स्वनिष्ठाऽभावीयवृत्तित्वनिष्ठप्रतियोगितानिरूपिता या पक्षधर्मिकहेतुमत्तानिश्चयकालीनत्व-

❀ गादाधरी ❀

र्थकत्वात् सामान्यलक्षणस्यापि सङ्गमाच्च । 'अत्र वदन्ती' त्यादिनिष्कृष्ट-

❀ विवृतिः ❀

सामान्यलक्षणस्यापि=हेत्वाभाससामान्यलक्षणस्यापि। **संगमाच्चेति** । यद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकताशून्यपक्षधर्मताज्ञानकालीनज्ञानाऽवृत्ति तद्रूपवत्त्वमित्यस्यैव हेत्वाभाससामान्यलक्षणतया स्वरूपासिद्धित्वावच्छिन्नविषयकनिश्चयत्वस्य प्रकृतानुमितिप्रतिबन्धकताशून्यपक्षधर्मताज्ञानकालीनघटादिज्ञानाऽवृत्तित्वेन स्वरूपासिद्धित्वमादायैव स्वरूपासिद्धौ लक्षणसंगतिरित्याशयः ॥

ननु निर्धूमःपर्वतो धूमवान् वह्नेरित्यादौ व्यभिचारेऽव्याप्तिः, निर्धूमपर्वते धूमप्रकारकज्ञानस्याहार्य्यत्वेन तादृशपक्षसाध्यकानुमितेरप्रसिद्धतया प्रकृतानुमितिप्रतिबन्धकताशून्यत्वादिघटितलक्षणस्य तत्राऽसत्त्वादतो यद्रूपावच्छिन्नविषयितासामान्याप्रयुक्तो यद्रूपावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वाभाववान् वा प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्वाभावः प्रकृतपक्षे प्रकृतहेतुवैशिष्ट्यावगाहित्वाभावश्च तद्रूपवत्त्वे सति यद्रूपावच्छिन्नविषयकनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तप्रकृतपक्षे—प्रकृतसाध्यवैशिष्ट्यावगाहित्व-साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वोभयाभावस्तद्रूपवत्त्वस्यैव सव्यभिचारसामान्यलक्षणतायाः सत्यन्तदलं परित्यज्य विशेष्यदलमात्रस्यैव च हेत्वाभाससामान्यलक्षणतायाः अवश्यं विवक्षणीयतया उक्ताव्याप्तिवारणेऽपि वह्निमान् गगनादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिगगनरूपासाधारण्येऽव्याप्तिः पक्षधर्मताज्ञानाऽकालीननिरुक्तासाधारण्यनिश्चयस्यानुमित्यप्रतिबन्धकतया तादृशासाधारण्यत्वावच्छिन्नविषयकनिश्चयोत्तरमनुमितिसामान्यान्तर्गतायां हेतुमत्ताज्ञानाकालीनासाधारण्यनिश्चयोत्तरजायमानायां अयं वह्निमान् वह्निव्याप्यगगनवांश्चेत्याकारकानुमितौ पक्षेसाध्यवैशिष्ट्यावगाहित्व,-साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वयोः सत्वात् इत्याशंक्य समाधत्ते—**अत्र वदन्तीति** ।

❀ मनोरमा ❀

निष्ठाऽवच्छेदकतानिरूपितनिश्चयनिष्ठावच्छेदकता तन्निरूपिताभावनिष्ठावच्छेकतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतावत्वसम्बन्धेन । विशेषलक्षणस्य सत्यन्तदलाऽनुगमस्तु पूर्ववदेवध्यः ।

द्वितीयलक्षणाऽनुगमस्तु, प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपिताऽप्रतिबन्धकत्व,-पक्षधर्मिक हेतुमत्तानिश्चयकालीनत्वोभयाभाववृत्तिधर्मवत्त्वं हेत्वाभासत्वम् ! वृत्तित्वम्, स्वविशिष्टनिश्चयत्ववत्त्वसम्बन्धेन । स्ववैशिष्ट्यं निश्चये स्वावच्छिन्नविषयितावत्त्व,-स्वावच्छिन्नविषयित्वाऽव्यापकीभूतविषयिताशून्यज्ञानीयत्वोपलक्षितविषयितावत्वोभयसम्बन्धेन । तादृशनिश्चयत्ववत्वञ्च, स्वाश्रयवृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकभेदेवत्वसम्बन्धेनेति ध्येयम् ॥

## ❀ गादाधरी ❀

कल्पे च पक्षवृत्तित्वासहितोक्तरूपस्य स्वविषयकनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये उभयाभावसत्त्वात् सामान्यलक्षणाक्रान्तत्वं विशेषलक्षणाक्रान्तत्वं च निर्वहति हेतौ साध्यव्यापकीभूताभावप्रतियोगित्वज्ञानानन्तरं हेतुमान् साध्यवानित्यनाहार्यज्ञानस्य कदाप्यनुदयात् । एतादृशविशेषणप्रक्षेपे मूलकृतः सम्मतिमाह—यद्वक्ष्यतीति ॥

ननु हेतुनिष्ठसाध्यसामानाधिकरण्यात्यन्ताभावतद्वद्भेदसाध्यनिष्ठहेतु-

## ❀ विवृतिः ❀

**पक्षवृत्तित्वेति ।** पक्षवृत्तित्वाऽविशेषितकेवलहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपस्येत्यर्थः ।

**स्वविषयकेति ।** हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वनिश्चयोत्तरमनुमितिसामान्ये इत्यर्थः । उभयाभावसत्त्वात् = पक्षे साध्यवैशिष्ट्यावगाहित्व साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वयोर्द्वयोरभावसत्त्वात् । सामान्यलक्षणाक्रान्तत्वम्=अत्रवदन्तिकल्योक्तरीत्या निर्वाच्यहेत्वाभाससामान्यलक्षणाक्रान्तत्वम् । विशेषलक्षणाक्रान्तत्वं च=अत्रवदन्तिकल्पोक्तरीत्या सव्यभिचारसामान्यलक्षणाक्रान्तत्वं च । तत्र हेतुमाह-**हेताविति ।** हेतुमान्=साध्यव्याप्यहेतुमान् । कदाप्य**नुदयादिति ।** तथा च हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वज्ञानस्य साध्याभावव्यतिरेकव्याप्तिनिश्चयात्मकतया तस्य तदुत्तरक्षणेऽपि सत्त्वेन तदानीं साध्यव्याप्यहेतुमान् पक्षःसाध्यवांश्चेत्याकारकानुमित्यात्मकंज्ञानं कदापि भवितुं नार्हति, तद्वत्ताबुद्धौ बाधनिश्चयवत् तदभावव्याप्यवत्तानिश्चयस्यापि कार्य्यकालवृत्तितया प्रतिबन्धकत्वात्, एवं च वह्निव्यापकीभूताभावप्रतियोगिगगनरूपासाधारण्यनिश्चयोत्तरजायमानानुमितिसामान्ये एव प्रकृतपक्षे वह्निवैशिष्ट्यावगाहित्ववह्निव्याप्यगगनरूपहेतुवैशिष्ट्यावगाहित्वयोः द्वयोरभावसत्त्वात् न तादृशासाधारण्येऽव्याप्तिरितिभावः ।

एतादृशविशेषणप्रक्षेपे=अनुमितिविरोधिनि विरोधान्यत्वविशेषणप्रक्षेपे ॥

हेतुसाध्येत्यादि दीधितिमवतारयितुं शंकते **नन्विति ।** धर्मात्यन्ताभावधर्मिभेद-

## ❀ मनोरमा ❀

**अत्रवदन्तीति ।** अत्र कल्पे काञ्चनमयह्रदो वह्निमान् जलादित्यत्र काञ्चनमयत्वव्यापकीभूताऽभावप्रतियोगिजलादावतिव्याप्तिवारणाय तृतीयक्षणसाधारणाऽव्यवहितोत्तरत्वस्य लक्षणे निवेशनीयतयायथोक्ताऽसाधारणेऽव्याप्तिः, तद्विषयकनिश्चयाऽव्यवहितोत्तरतृतीक्षणोत्पन्नाऽनुमितिसामान्येतादृशोभयाभावासत्त्वादितिचेन्न । साध्यव्यापकीभूताऽभावप्रतियोगिप्रकृतहेतुमत्पक्षज्ञानभिन्नत्व, असाधारण्यविषयितावत्त्वैतदुभयाभाववदुयद्रूपावच्छिन्नविषयिताशालिनिश्चयाऽव्यवहितोत्तरानुमितिसामान्ये उभयाभावस्य विवक्षितत्वात् । अव्यापकीभूतविषयिताशून्यत्वमपि यद्रूपावच्छिन्नविषयित्वे यद्रूपा-

❀ गादाधरी ❀

सामानाधिकरण्याभावादिसाध्यासामानाधिकरण्यविशिष्टसाधनादिरूपविविधविरोधानामेकस्य भेदनिवेशेऽन्यत्रातिव्याप्तिर्दुर्वारैव। एवं साध्यासामानाधिकरण्यादिविशिष्टसाधनादिरूपविरोधभेदनिवेशे साध्याभाववद्वृत्तित्वविशिष्टसाधनादिरूपस्य विरुद्धस्थलीयव्यभिचारस्यासंग्रहः—गोत्ववदवृत्तित्वविशिष्टाश्वत्वादितो गोत्वाभाववद्वृत्तित्वविशिष्टाश्वत्वा-

❀ विवृतिः ❀

योरभिन्नत्वमते केवलहेतुनिष्ठसाध्यसामानाधिकरण्याभावरूपविरोधभिन्नत्वस्य साध्यसामानाधिकरण्यवद्भेदरूपविरोधभिन्नत्वस्य वा निवेशे न तादृशैकविधविरोधेऽतिव्याप्तिरतः साध्यनिष्ठहेतुसामानाधिकरण्याभावपर्य्यन्तानुसरणम्। तथा च हेतुनिष्ठसाध्यसामानाधिकरण्याभावरूपविरोधभिन्नत्वस्य निवेशे साध्यनिष्ठहेतुसामानाधिकरण्याभावेऽतिव्याप्तिरितिभावः। हेतुनिष्ठसाध्याऽसामानाधिकरण्यमेव विरोधः नतु साध्यनिष्ठहेत्वसामानाधिकरण्यम्, इत्युक्तौ केवलहेतुनिष्ठसाध्यसामानाधिकरण्याभावरूपविरोधभेदनिवेशेनैवोपपत्तिः स्यादतः साध्यासामानाधिकरण्यविशिष्टसाधनपर्य्यन्तानुसरणम्। **अतिव्याप्तिरिति**। तथा च हेतुनिष्ठसाध्यसामानाधिकरण्याभावरूपविरोधभिन्नत्वनिवेशे साध्यसामानाधिकरण्याभावविशिष्टहेतुरूपविरोधेऽतिव्याप्तिः, साध्यसामानाधिकरण्याभावविशिष्टहेतुरूपविरोधभिन्नत्वनिवेशे तु हेतुनिष्ठसाध्यसामानाधिकरण्याभावेऽतिव्याप्तिरित्याशयः॥

ननु यावन्तो विरोधाः प्रत्येकं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वमेवानुमितिविरोधिनि विवक्षणीयमिति न कोऽपि दोषः इत्यत **आहैवमिति**। साध्याधिकरणवृत्तित्वाभावविशिष्टहेतुरूपविरोधभेदस्य अनुमितिविरोधिविशेषणत्वे गोत्ववान् अश्वत्वादित्यत्र गोत्वाभाववद्वृत्त्यश्वत्वरूपव्यभिचारेऽव्याप्तिः, गोत्ववद्वृत्तित्वाभावविशिष्टाश्वत्वभेदस्य प्रकृतानुमितिविरोधिनि गोत्वाभाववद्वृत्तित्वविशिष्टाश्वत्वे विरहादित्याह **साध्येति**। साध्याधिकरणवृत्तित्वाभावविशिष्टहेतुरूपविरोधभेदनिवेशे इत्यर्थः। विरुद्धस्थलीयव्यभिचारस्य=गोत्वसाध्यकाश्वत्वहेतुकस्थलीयगोत्वाभाववद्वृत्तित्वविशिष्टाश्वत्वरूपव्यभिचारस्य। असंग्रहे हेतुमाह—**गोत्वेति**। गोत्वाधिकरणवृत्तित्वाभावविशिष्टाश्वत्वादित इत्यर्थः। अनतिरिक्तत्वात्=अभिन्नत्वात्।

❀ मनोरमा ❀

वच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वोपलक्षिततत्वरूपं वाच्यमेवञ्च वह्निव्यापकीभूताऽभावप्रतियोगिजलं वह्निव्यापकीभूताऽभावप्रतियोगिजलवांश्च ह्रद इत्याकारकसमूहालम्बनज्ञानमादायैव असाधारणे लक्षणसमन्वय इत्यस्मद्गुरुचरणाः॥

अनुगमस्तु—प्रकृत पक्षविशेष्यतानिरुपितप्रकृतसाध्यप्रकारताकत्वप्रकृतहेतुप्रकारताकत्वो भया

❀ गादाधरी ❀

देरनतिरिक्तत्वादित्यत आह—हेत्विति । हेतुतावच्छेदकावच्छिन्नधर्मिकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यप्रकारकज्ञानाविरोध्यर्थकमित्यर्थः । तेन विरोधग्रहदशायामपि रूपान्तरेण साध्ये हेतुविषयकसामानाधिकरण्यग्रहोत्पत्तावपि न क्षतिः । न वा अवृत्तिहेतुकस्थले तदुभयसामानाधिकरण्याप्रसिद्ध्या तत्स्थलीयासाधारण्यासङ्ग्रहः । सामानाधिकर-

❀ विवृत्तिः ❀

**हेतुतेति** । हेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपिता अधिकरणत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितवृत्तितात्वावच्छिन्नविशेष्यत्वावच्छिन्ना प्रकारता तन्निरूपकलौकिकसन्निकर्षाद्यजन्यज्ञानाऽविरोध्यर्थकमित्यर्थः । तथा च तादृशं यत्किंचिज्ज्ञानं यद्रूपावच्छिन्नविषयकनिश्चयसामान्याऽप्रतिबध्यं तादृशं यत् अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं तद्रूपवत्त्वं लक्षणार्थोऽवसेय इतिभावः ।

तेन = साध्यतावच्छेदकपर्य्यन्तनिवेशेन । विरोधग्रहदशायाम् = गोत्ववद्वृत्तित्वाभाववदश्वत्वमित्याकारकज्ञानदशायाम् । रूपान्तरेण=प्रमेयत्वादिना । **साध्येति** । प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यग्रहोत्पत्तावपीत्यर्थः । न क्षतिः = न विरोधेऽतिव्याप्तिः । गोत्ववान्–अश्वत्वादित्यादौ गोत्ववद्वृत्तित्वाभाववदश्वत्वमित्याकारकज्ञानस्य प्रमेयत्वावच्छिन्नगोत्ववद्वृत्त्यश्वत्वमित्याकारकज्ञानाऽप्रतिबन्धकतया यद्रूपपदेन गोत्ववद्वृत्तित्वाभावविशिष्टाश्वत्वत्वमादाय विरोधेऽतिव्याप्तिरितः साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यग्रहाऽविरोधित्वपर्य्यन्तनिवेश इत्यभिप्रायः ।

साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यमपि साध्यतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नसामानाधिकरण्यं वक्तव्यम्, तेन नित्यरूपवान् पृथिवीत्वादित्यादौ नित्यरूपवद्वृत्तित्वाभाववत्पृथिवीत्वमित्याकारकज्ञानदशायां रूपवद्वृत्तिपृथिवीत्वमित्याकारकग्रहोत्पत्तावपि न नित्यरूपवद्वृत्तित्वाभावविशिष्टपृथिवीत्वरूपविरोधेऽतिव्याप्तिः॥

निरूप्यनिरूपकभावापनसामानाधिकरण्यविषयताविशेषफलमाह—**न वेति** । अवृत्तिहेतुकस्थले = वह्न्यादिसाध्यकगगनादिहेतुकस्थले । **तदुभयेति** । साध्यसामानाधिकरण्यविशिष्टगगनादेरप्रसिद्ध्येत्यर्थः । **तत्स्थलीयेति** । अवृत्तिहेतुकस्थ-

❀ मनोरमा ❀

भावाधिकरणताविशिष्टधर्मवत्त्वं सव्यभिचारत्वम् । वैशिष्ट्यम् स्ववृत्तित्व, स्वकालीनप्रकृतपक्षविशेष्यतानिरूपितप्रकृतसाध्यप्रकारताकत्वप्रकृतसाध्यव्याप्यहेतुप्रकारताकत्वोभयाभाववत्त्वोभयसम्बन्धेन । न्प्रथमसम्बन्धघटकवृत्तित्वम् स्वावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयुज्यत्वसम्बन्धावच्छिन्नस्वनिष्ठाऽवच्छेदकतानिरूपितप्रतियोगिताकभेदवत्त्वसम्बन्धेन । उभयाऽभाववत्त्वञ्च,

❀ गादाधरी ❀

ण्येपि साध्यतावच्छेदकावच्छिन्नीयत्वं वैज्ञानिकमेव न तु वास्तवम्; तेन नावृत्तिसाध्यकसाधारण्यासंग्रहः। अविरुद्धहेतुकस्थलीयव्यभिचार-

❀ विवृतिः ❀

लीयसाध्यव्यापकीभूताभावप्रतियोगिहेतुरूपासाधारण्यासंग्रह इत्यर्थः। वह्निमान् गगनादित्यत्र वास्तवसाध्यसामानाधिकरण्यविशिष्टहेतुग्रहाऽप्रसिद्ध्या तदविरोधित्वेन निरूक्तासाधारण्यस्य धर्तुमशक्यत्वात् तत्राव्याप्तिरतः साध्यसामानाधिकरण्यप्रकारतानिरूपितहेतुविशेष्यताशालिग्रहाऽविरोधित्वमनुमितिविरोधिनि विवक्षणीयमित्याशयः।

इदमुपलक्षणम् 'गोत्ववान् अश्वत्वा'दित्यादौ गोत्वासामानाधिकरण्यविशिष्टाश्वत्वज्ञानदशायां मेयत्वादिरूपेणाश्वत्वहेतौ गोत्वसामानाधिकरण्यग्रहोत्पादात् तादृशविरोधेऽतिव्याप्तिरतो हेतुतावच्छेदकपर्य्यन्तनिवेश इत्यपि बोद्धव्यम् ॥

ननु साध्यसामानाधिकरण्यग्रहाविरोधित्वं यदि वास्तवसाध्याधिकरणनिरूपितवृत्तित्वप्रकारतानिरूपितहेतुविशेष्यताशालिग्रहाविरोधित्वं तदा गगनवान् धूमादित्यादौ गगनाभाववद्वृत्तित्वविशिष्टधूमरूपव्यभिचारेऽव्याप्तिः, गगनस्याधिकरणाऽप्रसिद्ध्या साध्यसामानाधिकरण्यग्रहाविरोधित्वस्य तत्रोपपादयितुमशक्यत्वादित्यत आह—**सामानाधिकरण्येऽपीति**। घटकत्वं सप्तम्यर्थः, तस्य च साध्यतावच्छेदकावच्छिन्नीयत्वेऽन्वयः। साध्यतावच्छेदकावच्छिन्नीयत्वम्=साध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपितत्वम्। वैज्ञानिकमेव=ज्ञानीयसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयत्वरूपमेव।

एवकारव्यवच्छेद्यमाह **नत्विति**। वास्तवं=साध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपितत्वविशिष्टाधिकरणत्वरूपं। तेन=वैज्ञानिकसाध्यतावच्छेदकावच्छिन्नीयत्वविवक्षणेन। **नाऽवृत्तीति**। गगनवान् धूमादित्यत्र गगनाभाववद्वृत्तित्वविशिष्टधूमरूपसाधारण्यस्य नाऽसंग्रहइत्यर्थः॥

ननु साध्यसामानाधिकरण्यग्रहाविरोधित्वं हि यथाश्रुतं तादृशग्रहसामान्यनिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकतापर्य्याप्त्यनधिकरणत्वं लक्ष्यतावच्छेदके निवेशनीयम् तथा च धूमवान्वह्नेरित्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निरूपव्यभिचारेऽव्याप्तिः; धूमादिसाध्यकवह्न्यादिहेतुकस्थले साध्यसामानाधिकरण्यग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपस्याऽप्रसिद्ध्या तद्भेदस्य लक्ष्यतावच्छेदकतादृशव्यभिचारत्वे दुरुपपादत्वादित्यत आहा-

❀ मनोरमा ❀

स्वनिष्ठव्यापकताऽरूपाऽभावीयप्रतियोगितानिरूपितपरम्परया अनुमितिनिष्ठावच्छेदकतानिरूपिताऽव्यवहितोत्तरत्व निष्ठावच्छेदकतानिरूपित निश्चयनिष्ठाऽवच्छेदकतानिरूपित विषयित्वनिष्ठाऽवच्छेदक

❀ गादाधरी ❀

लक्षणे च एतद्विशेषणमनुपादेयमेव, तेन तत्र हेतुसाध्यसामानाधिकरण्यग्रहविरोध्यप्रसिद्धावपि न क्षतिः ॥

वस्तुतस्तु तादृशसामानाधिकरण्यग्रहत्वन्यूनवृत्तित्वस्यैवानुमितिविरो-

❀ विवृतिः ❀

**विरुद्धेति** । धूमादिसाध्यकवह्न्यादिहेतुकस्थलीयव्यभिचारलक्षणे इत्यर्थः । एतद्विशेषणम्=निरुक्तहेतुधर्मिकसाध्यसामानाधिकरण्यग्रहाऽविरोधित्वरूपं विशेषणम् । **अनुपादेयमेवेति** । लक्ष्यभेदेन लक्षणभेदस्य नानात्वेन शब्दाऽभेदस्याऽकिंचित्करत्वादित्याशयः ।

तेन=निरुक्ताऽविरोधित्वविशेषणानुपादानेन । तत्र=विरुद्धहेतुकस्थले । **हेतुसाध्येति** । हेतुधर्मिकसाध्यसामानाधिकरण्यप्रकारकग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकरूपस्याप्रसिद्धावपीत्यर्थः । न क्षतिः=न तत्रत्यव्यभिचारेऽव्याप्तिः ॥

ननु लक्ष्यभेदेनापि लक्षणमनुगतमेकमेव वक्तव्यमन्यथा लक्षणहेतुकेतरभेदानुमाने भागासिद्धिः स्यादत आह—**वस्तुतस्त्विति** । यद्यपि तादृशसामानाधिकरण्यावगाहि यत्किंचिज्ज्ञानं यद्रूपावच्छिन्नविषयकनिश्चयसामान्याऽप्रतिबध्यमित्यादिरीत्या सर्वसाधारणमनुगतमेकमेव लक्षणम् भवितुमर्हति तथापि लाघवममिप्रेत्याह **तादृशेति** । तथा च प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यप्रकारकग्रहत्वाऽव्यापिका या प्रकृतानुमितित्वव्यापकप्रतिबध्यता तन्निरूपितप्रतिबन्धकताननतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपवत्त्वमेव लक्षणार्थः । धूमवान् वह्नेरित्यादौ तादृशसाध्यसामानाधिकरण्यग्रहप्रतिबन्धकताननतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपस्याप्रसिद्धावपि न तत्स्थलीयव्यभिचारेऽव्याप्तिः, व्यभिचारनिश्चयप्रतिबध्यतायां साध्यसामानाधिकरण्यग्रहत्वाऽव्यापकत्वस्याऽक्षतत्वादितिभावः ॥

न क्षतिः=न तत्स्थलीयव्यभिचारेऽव्याप्तिः । न चैवं हेतुसामानाधिकरण्याभावविशिष्टसाध्यरूपविरोधेऽतिव्याप्तिः, तन्निश्चयप्रतिबध्यताया हेतुधर्मिकसाध्यसामानाधिकरण्याप्रकारकग्रहत्वाऽव्यापकत्वादिति वाच्यम्—साध्ये हेतुसामानाधिकरण्याभावग्रहस्य तुल्यवित्तिवेद्यत्वेन हेतौ साध्यसामानाधिकरण्याभावावगाहिताया आवश्यकतया तन्निश्चयकालेऽपि हेतुधर्मिकसाध्यसामानाधिकरण्यग्रहानुत्पादेन तादृशविरोध-

❀ मनोरमा ❀

तानिरूपिताऽवच्छिन्नत्वसम्बन्धावच्छिन्नाऽवच्छेदकतावत्त्वस्वाधिकरणतावृत्तित्वोभयसम्बन्धेन । अत्र वृत्तित्वम् स्वावच्छिन्नविषयितात्वावच्छिन्नप्रयोजकतानिरूपितप्रयुज्यत्वसम्बन्धेनेति तु नव्याः ॥

❀ गादाधरी ❀

धित्वघटकानुमितिनिष्ठप्रतिबध्यतायां निवेशनीयतया धूमवान्वह्नेरित्यादौ सामानाधिकरण्यग्रहविरोधिनोऽप्रसिद्धावपि न क्षतिः।

केचित्तु सत्यन्तस्य विशिष्टहेतौ विशिष्टपक्षवृत्तित्वग्रहाविरोधित्वमेवार्थं वर्णयन्तो बाधादिवारणाय पन्थानमन्यमेवाश्रयन्ते तन्मतमाक्षिपति—सम्बन्धपदेति। प्रकृतहेतुसन्बन्धितया विरोधित्वे इति। प्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालि—

❀ विवृत्ति ❀

निश्चयप्रतिबध्यतायाः हेतुधर्मिकसाध्यसामानाधिकरण्यग्रहत्वव्यापकत्वात्। हेतुसामानाधिकरण्याभावविशिष्टसाध्यादे विंरोधत्वानभ्युपगमेऽपि क्षत्यभावाच्चेतिध्येयम्॥

सामानाधिकरण्येति। हेतुधर्मिकसाध्यसामानाधिकरण्यग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपस्येत्यर्थः। न क्षतिः=न धूमसाध्यकवह्न्यादिहेतौ व्यभिचारेऽव्याप्तिः॥

बाधादिवारणाय प्रकारान्तरमाश्रयतां मतं व्याख्यातुमुपन्यस्यति—केचित्त्विति। सत्यन्तस्य=पक्षवृत्तित्वे सतीत्यन्तस्य। विशिष्टहेतौ=हेतुतावच्छेदकावच्छिन्नेहेतौ। विशिष्टेति। पक्षतावच्छेदकावच्छिन्ननिरूपितवृत्तित्वग्रहाऽविरोधीत्ययमेवार्थ इत्यर्थः। बाधादिवारणाय=साध्याभाववत्पक्षादावतिव्याप्तिवारणाय। आदिपदात् आश्रयासिद्ध्यादिपरिग्रहः। प्रकृतेति। तथा च हेतुतावच्छेदकावच्छिन्नहेतुधर्मिकपक्षतावच्छेदकावच्छिन्नपक्षनिरूपितवृत्तित्वप्रकारकग्रहत्वाऽव्यापिका या प्रकृतानुमितित्वव्यापिका प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकं हेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वं तद्रूपवत्त्वं सव्यभिचारत्वमिति फलितम्। प्रकृतहेतुधर्मिकयत्किंञ्चिद्धर्मावच्छिन्नपक्षवृत्तित्वग्रहत्वाऽव्यापकत्वस्य प्रकृतपक्षवृत्तित्वप्रकारकयत्किंचिद्धर्मावच्छिन्नहेतुविशेष्यकग्रहत्वाऽव्यापकत्वस्य वा विवक्षणे ह्रदो वह्निमान् धूमादित्यादौ धूमनिष्ठह्रदवृत्तित्वाभावेऽति व्याप्तिः, धूमधर्मिकह्रदवृत्तित्वाभावनिश्चयस्य द्रव्यत्वादिना ह्रदवृत्तित्वप्रकारकधूमविशेष्यकग्रहे, द्रव्यत्वादिना धूमविशेष्यके प्रकृतह्रदवृत्तित्वप्रकारके वा ग्रहेऽप्रतिबन्धकतया तादृशनिश्चयप्रतिबध्यतायाः तादृशपक्षादिवृत्तित्वग्रहत्वाऽव्यापकत्वात् अतोऽव्यापकत्वघटकतया पक्षतावच्छेदकाद्यनुसरणम्॥

❀ मनोरमा ❀

प्रकृतहेतुतेति। तथा च प्रकृतानुमितिप्रतिबन्धकतावृत्तिरूपवत्त्वं सव्यभिचारत्वम् इति लक्षणार्थः; वृत्तित्वं स्वविशिष्टनिश्चत्वयवत्त्वसम्बन्धेन; स्ववैशिष्ट्यं निश्चये हेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छिन्नप्रकारताकत्वसम्बन्धेन, निश्चयत्ववत्त्वं च स्वावच्छिन्नत्वसम्बन्धेनेति बोध्यम्।

❀ गादाधरी ❀

त्वमनुमितिप्रतिबन्धकतावच्छेदकं तद्रूपावच्छिन्नत्वे इत्यर्थः। यत्किंचिद्रूपावच्छिन्नहेतुविशेष्यतानिवेशे द्रव्यं वह्निमद्धूमादित्यादौ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावुद्देश्यायां द्रव्यत्वाद्यवच्छिन्नधूमादिविशेष्यतानिरूपितसाध्याभावादिप्रकारताशालिनिश्चयत्वस्यानुमितिप्रतिबन्धकतावच्छेदकत्वात् साध्याभावादिवारणासम्भव इत्यतः प्रकृतेति,–प्रकृतहेतुतावच्छेदकावच्छिन्नेत्यर्थकम्॥

❀ विवृतिः ❀

तादृशग्रहत्वाऽव्यापकत्वमनुक्त्वा तादृशग्रहत्वाऽसामानाधिकरण्यविवक्षणे धूमवान् वह्नेरित्यादौ व्यभिचारेऽव्याप्तिः, व्यभिचारनिश्चयस्य व्याप्तिविषयकसमूहालम्बनतादृशपक्षवृत्तित्वग्रहं प्रति प्रतिबन्धकतया तन्निश्चयप्रतिबध्यतायां निश्चयहेतुधर्मिकपक्षवृत्तित्वग्रहत्वाऽसामानाधिकरण्यविरहात्। धूमवान् वह्नेरित्यादौ वह्न्यादिनिष्ठघटाभावेऽतिव्याप्तिः, वह्न्यादिविशेष्यकघटाभावनिश्चयत्वस्य घटवद्वह्निविषयकसमूहालम्बनप्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतायामवच्छेदकत्वात् अतः प्रकृतानुमितित्वव्यापकत्वनिवेशः।

निरुक्तनिश्चयत्वनिष्ठं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वं स्वरूपसम्बन्धरूपं न त्वनतिरिक्तवृत्तित्वरूपं तन्निवेशे प्रयोजनविरहादिति ध्येयम्॥

प्रकृतहेतुसम्बन्धितयेत्यत्र प्रकृतपदव्यावृत्तिमाह—**यत्किंचिद्रूपेति**। द्रव्यत्वादियत्किंचिद्रूपावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयविवक्षणे इत्यर्थः। **पक्षतेति**। पक्षतावच्छेदकीभूतद्रव्यत्वावच्छेदेनेत्यर्थः। **साध्य—सिद्धेति**। द्रव्यत्वसामानाधिकरण्येन वह्नेः साध्यत्वे द्रव्यत्वसामानाधिकरण्येन वह्न्यभावादेरनुमित्यविरोधितया द्रव्यत्वावच्छेदेन तु वह्न्यभाववत्त्वस्याप्रसिद्ध्या पक्षतावच्छेदकद्रव्यत्वावच्छेदेन वह्न्यादेः साध्यत्वानुसरणम्। **अनुमितीति**। समूहालम्बनप्रकृतानुमितेः पक्षविशेष्यकसाध्यप्रकारकत्वशालित्वात् इत्याशयः।

साध्याभावादिवारणाऽसम्भवः=वह्न्यभावादिवारणाऽसम्भवः। तथा च हेतुनिष्ठविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वविवक्षणे द्रव्यत्वावच्छेदेन वह्निसाध्यकधूमादिहेतुकस्थले द्रव्यत्वसामानाधिकरण्येन द्रव्यं वह्न्यभाववदित्याकारकनिश्चयस्यापि द्रव्यनिष्ठविशेष्यताकत्वेन धूमरूपहेतुनिष्ठविशेष्यताकनिश्चयपदेन धर्तुं शक्यतया तादृशनिश्चयत्वस्य च द्रव्यत्वावच्छेदेन वह्निप्रकारकाऽनुमितिप्रतिबन्धकतावच्छेदकत्वात् द्रव्यत्वसामानाधिकरण्येन वह्न्यभावादावतिव्याप्तिरतः हेतुतावच्छेदकावच्छिन्नार्थकं प्रकृतपदम् एवं च द्रव्यादौ वह्न्यभावनिश्चयस्य च

❀ गादाधरी ❀

**अथैवं हेत्वघटितसाध्याभाववद्वृत्तित्वादिकमेव व्यभिचारः स्यात्। न चेष्टापत्तिः, तस्य सामान्यलक्षणानाक्रान्तत्वात्। हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठत्वस्य विरोधिविशेषणत्वोपगमेन तादृशातिप्रसङ्गवारणेपि साध्याभाववद्वृत्तित्वादिविशिष्टसाधनादेः साध्याभावनिष्ठसाधनसामा-**

❀ विवृतिः ❀

धूमविशेष्यकत्वेऽपि धूमत्वावच्छिन्नविशेष्यकत्वविरहात् न तादृशनिश्चयमादाय तादृशवह्न्यभावादावतिव्याप्तिरितिभावः ॥

धूमवान् वह्नेरित्यादौ हेतुतावच्छेदकवह्नित्वावच्छिन्नविशेष्यतानिरूपितधूमाभाववद्वृत्तित्वत्वावच्छिन्नप्रकारताकनिश्चयत्वस्य अनुमितिप्रतिबन्धकतावच्छेदकतया यद्रूपपदेन धूमाभाववद्वृत्तित्वत्वमादाय हेत्वघटिते धूमाभाववद्वृत्तित्वेऽतिव्याप्तिरित्याशंकते—**अथैवमिति**। एवं=तादृशतद्रूपवत्त्वस्य लक्षणार्थत्वे। इष्टापत्तौबाधकमाह—**तस्येति**। हेत्वघटितसाध्यवद्वृत्तित्वादेरित्यर्थः। सामान्यलक्षणानाक्रान्तत्वात्=हेत्वाभाससामान्यलक्षणानाक्रान्तत्वात्। केवलसाध्याभाववद्वृत्तित्वविषयकत्वस्य हेत्वविषयकेऽपि ज्ञाने सत्त्वात् तत्रानुमितिप्रतिबन्धकताया विरहेण तादृशविषयकत्वस्य अनुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात् इत्याशयः। ननु हेतुसम्बन्धितया विरोधित्वं न पूर्वोक्तहेतुतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वघटितमपि तु हेतुनिष्ठत्वविशिष्टयद्रूपावच्छिन्नविषयताशालिनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं हेतुनिष्ठत्वसहिततद्रूपवत्वं सव्यभिचारत्वं तथा च न केवलसाध्याभाववद्वृत्तित्वेऽतिव्याप्तिः अतआह—**हेतुतावच्छेदकेति**। केवलहेतुनिष्ठत्वस्य विरोधिविशेषणत्वे द्रव्यं वह्निमाद् धूमादित्यादौ द्रव्यनिष्ठत्वविशिष्टवह्न्यभावेऽतिव्याप्तिरतो हेतुतावच्छेदकपर्य्यन्तानुसरणम्।

विरोधिविशेषणत्वोपगमेन=तादृशतद्रूपावच्छिन्नत्वविशेषणत्वोपगमेन। तादृशातिप्रसंगवारणेऽपि=केवलसाध्याभाववद्वृत्तित्वेऽतिप्रसंगवारणेऽपि। **साध्याभावेति**। तथा च साध्याभाववद्वृत्तित्वविशिष्टसाधनत्वादेः हेतुनिष्ठत्वविशिष्टतादृशयद्रूपपदेनोपादातुमशक्यत्वात् हेतुनिष्ठत्वस्य विरोधिविशेषणत्वे साध्याभाववद्वृत्तित्वविशिष्टसाधनेऽव्याप्तिरितिभावः॥

ननु तुल्यवित्तिवेद्यत्वन्यायेन साध्याभाववद्वृत्तित्वविशिष्टसाधनविषयकनिश्चयस्य साधनवृत्तित्वविशिष्टसाध्याभाववद्वृत्तित्वविषयकतया तादृशयद्रूपावच्छिन्नविषयकनिश्चयपदेन साध्याभाववद्वृत्तित्वविशिष्टसाधनत्वावच्छिन्न विषयकनिश्चयस्यापि धर्तुं शक्यतयान साध्याभाववद्वृत्तित्वविशिष्टसाधनेऽव्याप्तिरतआह—**साध्याभावनि-**

❀ गादाधरी ❀

नाधिकरण्यादेश्चासङ्ग्रहः। न च हेतुतावच्छेदकावच्छिन्नघटितत्वे सति विरोधित्वमेव प्रकृतहेतुसम्बन्धितया विरोधित्वम्, तच्च विशेष्यविशेषणभावभेदभिन्नसकलव्यभिचारसाधारणमेवेति वाच्यम्। तथा सति ह्रदो वह्निमानभावादित्यादौ वन्ह्यभाववत्ह्रदादिरूपबाधादौ गगनवान् अभावादित्यादौ अवृत्तित्ववत् गगनादिरूपव्याप्यत्वासिद्धौ चातिव्याप्त्यापत्तेः।

मैवम्, व्यभिचारलक्षणस्य नैतादृशरीत्या परिष्कारः, अपि तु व्यभिचारिलक्षणस्यैवेति न साध्याभावनिष्ठप्रकृतसाधनसामानाधिकरण्याद्यसङ्ग्रहे हेत्वघटितसाध्याभाववद्वृत्तित्वादेः संग्रहे वा क्षतिः।

❀ विवृतिः ❀

**ष्टेति**। साध्याभाववृत्तित्वविशिष्टसाधनाधिकरणवृत्तित्वादेरित्यर्थः। **असंग्रहइति**। हेतुनिष्ठत्वविशिष्टयद्रूपपदेन साध्याभावनिष्ठसाधनाधिकरणवृत्तित्वादेः धर्तुमशक्यत्वादित्याशयः॥

ननु हेतुतावच्छेदकावच्छिन्नघटितत्वविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तादृशहेतुघटितत्वविशिष्टतद्रूपवत्त्वं सव्यभिचारत्वमित्युक्तौ न कोऽपि दोषः, साध्याभाववद्वृत्तित्वविशिष्टसाधनादेः, साध्याभावनिष्ठसाधनसामानाधिकरण्यादेश्च हेतुघटिततया तत्र तत्र लक्षणसमन्वये बाधकाभावादित्याशंकते–**नचेति**। वाच्यमिति परेणान्वयः। **हेतुतावच्छेदकेति**। हेतुतावच्छेदकावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वे सतीत्यर्थः। विरोधित्वमेव = तादृशतद्रूपवत्त्वरूपं विषयनिष्ठविरोधित्वमेव। तच्च = हेतुघटितत्वविशिष्टविरोधित्वं च। **विशेष्येति**। हेत्वादिनिष्ठविशेष्यत्वविशेषणत्वयोर्भेदेन विभिन्नसकलव्यभिचारवृत्त्येवेत्यर्थः॥ समाधत्ते–**तथासतीति**। हेतुतावच्छेदकावच्छिन्नप्रतीतिविषयतावच्छेदकयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं हेतुतावच्छेदकावच्छिन्नप्रतीतिविषयतावच्छेदकतद्रूपवत्त्वमित्यस्य लक्षणार्थत्वे सतीत्यर्थः। हेतुघटितत्वस्येव पक्षाऽघटितत्वस्यापि विरोधिविशेषणत्वे वह्न्यभाववद्ध्रदादौ नातिव्याप्तिः तस्य पक्षघटितत्वात् इति यदि ब्रूयात् तदाप्याह–**गगनवान् इत्यादि**। **अतिव्याप्त्यापत्तेरिति**। तथा च हेतुघटितत्वस्यानुमितिविरोधिविशेषणत्वे ह्रदो वह्निमान् अभावादित्यत्र वह्न्यभाववद्ह्रदरूपबाधे गगनवान् अभावादित्यत्र च वृत्तित्वाभाववद्गगनरूपव्याप्यत्वाऽसिद्धौ अतिव्याप्तिः तयोरभावरूपहेतुघटितत्वादतो हेतुघटितत्वे सति विरोधित्वमपि न लक्षणार्थ इतिभावः॥

अथेत्यादेरुत्तरं**मैवमिति**। व्यभिचारलक्षणस्य = व्यभिचाररूपदोषलक्षणस्य। नैतादृशरीत्या = न हेतुतावच्छेदकावच्छिन्नविशेष्यतेत्यादिरीत्या। व्यभिचारिलक्षण-

❀ गादाधरी ❀

अथवा हेतुनिष्ठत्वविशेषिततादृशविरोध्येव व्यभिचारपदार्थः, अन्यविधोपदर्शितव्यभिचारस्तु तन्मते व्याप्यत्वासिद्धावेवान्तर्भवतु तावता क्षतिविरहात्। प्रायश इत्यस्य प्रयोजनं स्वयमेव प्रकाशयिष्यते। बाधादीत्यादिना सत्प्रतिपक्षपरिग्रहः। तत्साध्यतद्धेतुकानुमितिसामान्यं प्रति

❀ विवृतिः ❀

स्यैव=व्यभिचाररूपदोषविशिष्टहेतुलक्षणस्यैव। साध्याभावनिष्ठसाधनवद्वृत्तित्वस्य व्यभिचारत्वेन व्यभिचारिलक्षणस्यालक्ष्यतया तस्यासंग्रहो न क्षतिकरः, केवलस्य सध्याभाववद्वृत्तित्वादेः कदाचित् व्यभिचारिहेतुत्वस्यावश्यकतया तत्र लक्षणसमन्वयेऽपि न क्षतिरित्याह-साध्या**भावनिष्ठेति**। क्षतिरिति नेति पूर्वेणान्वयः।

ननु यदि प्रकृतहेतुविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वमेव व्यभिचारित्वं तदा धूमवान् वह्नेरित्यादौ धूमाभाववद्वृत्तित्वस्य व्यभिचारित्वापत्तिः वह्निविशेष्यकधूमाभाववद्वृत्तित्वत्वावच्छिन्नप्रकारकनिश्चयस्यानुमितिप्रतिबन्धकत्वात् वह्न्यादेः धूमव्यभिचारित्वानुपपत्तिश्च वह्निविशेष्यकतादृशवह्नित्वावच्छिन्नविषयकनिश्चयस्यानुमित्यप्रतिबन्धकतया यद्रूपपदेन धूमव्यभिचारिवह्नित्वस्योपादानाऽसम्भवादत **आहाथवेति। हेतुनिष्ठत्वेति**। हेतुनिष्ठत्वविशेषितयद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकंहेतुनिष्ठत्वविशिष्टतद्रूपवत्त्वमेवेत्यर्थः। **व्यभिचारपदार्थ इति।** तथा चोक्तरीत्या व्यभिचारलक्षणस्यैव परिष्करणीयतया साध्याभाववद्वृत्तित्वादेर्न व्यभिचारित्वापत्तिः, नवा वह्न्यादेर्व्यभिचारित्वानुपपत्तिः, हेतुनिष्ठत्वविशेषितधूमाभाववद्वृत्तित्वस्य वह्न्यादौ सत्त्वादितिभावः॥

नन्वेवं साध्याभाववद्वृत्तित्वविशिष्टसाधनादौ साध्याभावनिष्ठसाधनसामानाधिकरण्यादौ चाव्याप्तिरित्यतआह-**अन्यविधवेति**। हेतुनिष्ठत्वविशिष्टसाध्यवद्वृत्तित्वातिरिक्तनिरुक्तव्यभिचारस्त्वित्यर्थः। **व्याप्यत्वाऽसिद्धेति**। तथा च साध्याभाववद्वृत्तित्वविशिष्टसाधनादेरलक्ष्यत्वात् तत्र लक्षणागमनेऽपि न क्षतिरिति हृदयम्॥

**सत्प्रतिपक्षपरिग्रहइति**। साध्याभावव्याप्यवत्पक्षरूपसत्प्रतिपक्षस्यापि हेतुसम्बन्धितया विरोधित्वाभावात् बाधादाविव तत्रापि नातिव्याप्तिरित्याशयः।

ननु घटत्वमनित्यं घटत्वादित्यादौ नित्यत्ववद्धटत्वरूपबाधस्य अनुमितिप्रतिबन्धकघटत्वात्मकहेतुविशेष्यतानिरूपितनित्यत्वप्रकारताकनिश्चयविषयतया तादृशबाधादौ निरुक्तलक्षणस्यातिव्याप्तिवारणमसाध्यमित्यनुक्त्वा प्रयत्नसाध्यमिवेत्यभिधानमसंगतमित्यतआह-**तत्साध्येत्यादि**। प्रकृतसाध्यप्रकृतसाध्यव्याप्यप्रकृतहेतुप्रकारकानु-

❀ गादाधरी ❀

हेतुसम्बन्धितया विरोधित्वविवक्षणे तादृशबाधादिवारणसम्भवादसाध्यत्वकथनम् । न चैवं हेतुसम्बन्धितयेत्यस्य वैय्यर्थ्यमिति वाच्यम् । तदनुपादाने साध्यनिष्ठावृत्तित्वरूपव्याप्यत्वासिद्धावतिप्रसङ्गापातात्तस्यास्तत्साध्यकानुमितिमात्र एव विरोधित्वात् । न च तदुपादानेपि हेतुनिष्ठा-

❀ विवृतिः ❀

मितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं प्रकृतहेतुविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्वं तद्रूपवत्त्वमित्यस्य विवक्षणे इत्यर्थः । एतेन व्याप्त्यविषयकहेतुप्रकारकानुमितिसामान्यविरोधित्वविवक्षणे व्यभिचारादावसम्भवः, व्यभिचारादिनिश्चयस्य केवलहेतुप्रकारकानुमित्यप्रतिबन्धकत्वादित्याक्षेपोपि निरस्तः ॥

**तादृशेति** । घटत्वमनित्यं घटत्वादित्यत्र नित्यत्ववद्घटत्वरूपबाधादिवारणसम्भवादित्यर्थः । आदिपदात् तत्स्थलीयनित्यत्वव्याप्यबघटत्वरूपसत्प्रतिपक्षपरिग्रहः । **प्रयत्नसाध्यत्वकथनमिति** । तथा च घटत्वनित्यं घटत्वा दित्यत्र अनित्यत्वरूपसाध्यप्रकारकघटत्वरूपहेतुप्रकारकानुमितित्वस्य पक्षाऽविशेष्यकघटपटादिधर्मिकानित्यत्वसाध्यकानुमितावपि सत्त्वेन तत्र च नित्यत्ववद्घटत्वरूपबाधनिश्चयप्रतिबध्यत्वाभावात् न निरुक्तबाधादावतिव्याप्तिरतोऽतिव्याप्तिवारणस्यासाध्यत्वमनुत्वा प्रयत्नसाध्यत्वमभिहितं दीधितिकृतेत्याशयः ॥

ननु तत्साध्यकतद्धेतुकानुमितिसामान्यविरोधित्वविवक्षणेनैव बाधादिवारणसम्भवे हेतुसम्बन्धितया विरोधित्वाभिधानमसंगतं तस्य बाधादिमात्रवारणप्रयोजनकत्वादित्येवं न चैवमित्यादिनाऽशंक्य समाधत्ते-**तदनुपादानेति** । हेतुसम्बन्धितयेत्यस्यानुपादाने इत्यर्थः । **साध्यनिष्ठेति** । गगनवान् धूमादित्यादौ वृत्तित्वाभाववद्गगनात्मकसाध्यरूपव्याप्यत्वाऽसिद्धावित्यर्थः । अतिप्रसंगे हेतुमाह-**तस्या इति** । निरुक्तव्याप्यत्वाऽसिद्धेरित्यर्थः । **तत्साध्येति** । पक्षविशेष्यकसाध्यप्रकारकानुमितौ पक्षाऽविशेष्यकसाध्यप्रकारकानुमितौ चेत्यर्थः । **विरोधित्वादिति** । तथा च हेतुसम्बन्धितया विरोधित्वानुपादाने ततसाध्यकतत्साध्यव्याप्यहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं यद्रूपावच्छिन्नविषयकनिश्चयत्वं तद्रूपवत्त्वमित्यस्यैव लक्षणार्थतायाः पर्य्यवसिततया गगनवान्धूमादित्यादौ वृत्तित्त्वाभाववद्गगनरूपव्याप्यत्वाऽसिद्धावतिव्याप्तिः तादृशव्याप्यत्वासिद्धिनिश्चयस्य पक्षविशेष्यकगगनानुमितौ पक्षाऽविशेष्यक-गगनवान् इत्यमितौ च प्रतिबन्धकत्वात् अतो हेतुसन्बन्धितया विरोधित्वोपादानम्, तथा सति हेतुविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताकनिश्चयत्व एव तादृशानुमितिसामान्यप्रतिबन्धकतावच्छेदकतायाः विवक्षिततया न वृत्तित्वाभाववद्गगनेऽतिव्याप्तिः, निरुक्तगगननिश्चयस्य हेतुविशेष्यताकत्वविरहादितिभावः ॥

❀ गादाधरी ❀

वृत्तित्वातिप्रसङ्गो दुर्वार इति वाच्यम्। सत्यन्तदलेनैव तद्वारणात्। अत एव हेतुनिष्ठपक्षावृत्तित्वादेस्तादृशानुमितिसामान्यविरोधित्वादेव वारणं सत्यन्तवैय्यर्थ्यमित्यपि परास्तम्। काञ्चनमयवन्हिमान् वह्नेरित्यादौ साध्याप्रसिद्धिवारणं तु विशिष्टसाध्यग्रहाविरोधित्वविशेषणप्रक्षेपेणैव

❀ विवृतिः ❀

नन्वेवमपि वह्निमान् गगनादित्यत्र वृत्तित्वाभाववद्गगनरूपव्याप्यत्वासिद्धावतिव्याप्तिः, तादृशव्याप्यत्वासिद्धिनिश्चयस्य तत्साध्यकतद्धेतुकानुमितिमात्रे एव हेतुविशेष्यताकत्वेन प्रतिबन्धकत्वादित्याशंकते—**न चेति**। वाच्यमिति परेणान्वयः। तदुपादानेऽपि हेतुसम्बन्धितया विरोधित्वोपादानेऽपि। तत्साध्यकतद्धेतुकानुमितिसामान्यप्रतिबन्धकतावच्छेदकप्रकारतायां हेतुविशेष्यतानिरूपितत्वस्य विवक्षणेऽपीति यावत्। **हेतुनिष्ठेति** वह्निमान् गगनादित्यत्र गगननिष्ठवृत्तित्वाभावेऽतिप्रसंग इत्यर्थः। समाधत्ते—**सत्यन्तेति**। पक्षवृत्तित्वग्रहाऽविरोधित्वरूपसत्यन्तदलेनैवेत्यर्थः। एवकारात् प्रकारान्तरेणातिव्याप्तिवारणव्यवच्छेदः॥

तद्वारणात्=हेतुनिष्ठाऽवृत्तित्वेऽतिप्रसंगवारणात्। हेतुधर्मिकपक्षवृत्तित्वग्रहं प्रति सामान्यतो हेतौ वृत्तित्वाभावनिश्चयस्यापिप्रतिबन्धकत्वादित्याशयः॥

**अतएवेति**। परास्तमितिपरेणान्वयः। सत्यन्तदलेनैव हेतुनिष्ठाऽवृत्तित्वेऽतिप्रसंगवारणादेवेत्यर्थः **हेतुनिष्ठेति**। हेतुधर्मिकपक्षवृत्तित्वाभावप्रकारकज्ञानविषयीभूतहेतुनिष्ठपक्षवृत्तित्वाभावादेरित्यर्थः। आदिना हेतुनिष्ठाधेयत्वसम्बन्धावच्छिन्नपक्षाभावादेरुपग्रहः। **तादृशेति**। तत्साध्यकतद्धेतुकानुमितिसामान्यप्रतिबन्धकज्ञानाऽविषयत्वादित्यर्थः। सत्यन्तदलवैयर्थ्यम्=पक्षवृत्तित्वग्रहाविरोधित्वरूपसत्यन्तदलवैयर्थ्यम्। **परास्तमिति**। तथाच हेतुधर्मिकपक्षवृत्तित्वाभावनिश्चयस्य तत्साध्यकतद्धेतुकानुमितिसामान्यन्तर्गतायां पक्षाऽविशेष्यकहेतुप्रकारकानुमितौ अप्रतिबन्धकतया विशेष्यदलेनैव हेतुनिष्ठपक्षाऽवृत्तित्वेऽतिव्याप्तिवारणसम्भवे पक्षवृत्तित्वग्रहाविरोधित्वरूपसत्यन्तदलं व्यर्थं स्यात् इति तु नाशंकनीयम् तादृशसत्यन्तदलानुपादाने वह्निमान् गगनादित्यत्र पूर्वोक्तयुक्त्या गगननिष्ठाऽवृत्तित्वेऽतिव्याप्तिरतः सत्यन्तदलोपादानं सार्थकमिति भावः॥

ननु तथापि काञ्चनमयवह्निमान् वह्नेरित्यत्र वह्निनिष्ठकाञ्चनमयत्वाभावरूपसाध्याऽप्रसिद्धावतिव्याप्तिस्तादृशसाध्याऽप्रसिद्धिनिश्चयस्य तत्साध्यकतद्धेतुकानुमितिमात्रं प्रत्येव हेतुविशेष्यताकत्वेन प्रतिबन्धकत्वादित्यतआह—**काञ्चनमयेति**। साध्याऽप्रसिद्धिवारणम्=वह्निनिष्ठकाञ्चनमयत्वाभाववारणम्। तुरप्यर्थे। **विशिष्टेति**। साध्यतावच्छेदकविशिष्टसाध्यग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वस्य विशेष्यदल-

❀ गादाधरी ❀

संभवतीति हृदयम् । तत्–बाधादिवारणम् ॥

अत्र च व्यभिचारज्ञानस्य प्रकृतपक्षे प्रकृतसाध्यानुमित्यविरोधितयाऽनुमितिपदस्य प्रकृतपक्षे प्रकृतसाध्यतद्व्याप्यप्रकृतहेतुवैशिष्ट्यावगाह्यनुमितिपरत्वमावश्यकम् । तत्र निष्प्रयोजनकं साध्यवैशिष्ट्यावगाहित्वं निवेश्य तन्निबन्धनबाधाद्यतिव्याप्तिवारकविशेषणान्तरप्रक्षेपः 'प्रक्षालनाद्धी'त्यादिन्यायेनायुक्त इत्यतो ज्ञाने साध्यवैशिष्ट्यावगाहित्वं विरो-

❀ विवृतिः ❀

घटकयद्रूपे विशेषणत्वप्रक्षेपेणैवेत्यर्थः । विशिष्टसाध्यग्रहाऽविरोधित्वपक्षवृत्तित्वग्रहाविरोधित्वनिवेशापेक्षया प्रकृतपक्षे प्रकृतसाध्यहेतुवैशिष्ट्यावगाहिग्रहाऽविरोधित्वं निवेश्यैव बाधादिवारणं युक्तमित्याशयेन हृदयमित्युक्तमिति ध्येयम् ।

प्रयत्नसाध्यमिवतत् प्रतिभातीत्यत्र तत्पदपरामर्शणीयं व्याचष्टे **बाधादीति** । आदिपदात् सत्प्रतिपक्षपरिग्रहः ॥

मूलोक्तलक्षणघटकानुमितिपदस्य पक्षः साध्यवान् साध्यव्याप्यहेतुमान् इत्याकारकानुमितिपरत्वाभ्युपगम एव बाधादावतिव्याप्तिवारणार्थं पक्षेसाध्यहेतुवैशिष्ट्यावगाहिग्रहाऽविरोधित्वं विवक्षणीयम् तादृशानुमितिपदस्य लक्षणया अनुमितिकारणपरामर्शपरत्वे तु न बाधादावतिव्याप्तिः बाधादिनिश्चयस्य परामर्शाऽप्रतिबन्धकत्वादतो बाधादिवारकविशेषणस्य सार्थक्यसम्पादनायानुमितिपदस्य तादृशसाध्यादिप्रकारकपरत्वाभिधानमनुचितमेवेत्येवं दीधितिकृतां वस्तुतस्त्वित्यादेराशयं वर्णयितुमाह—**अत्र चेति** । निरुक्तमूललक्षणे चेत्यर्थः । घटकत्वं सप्तम्यर्थः, तस्य च अनुमितिपदस्येत्यत्र अनुमितिपदपदार्थेऽन्वयः व्यभिचारज्ञानस्य=व्यभिचारनिश्चयस्य । **प्रकृतपक्षेइत्यादि** । प्रकृतपक्षधर्मिकप्रकृतसाध्यविधेयकानुमित्यप्रतिबन्धकतयेत्यर्थः, व्यभिचारनिश्चयस्य व्याप्तिग्रहं प्रत्येव प्रतिबन्धकत्वादित्याशयः ।

**प्रकृतसाध्येति** । साध्यव्याप्यहेतुमान्पक्ष इत्याकारकानुमितिपरत्वमावश्यकमित्यर्थः । तत्र=अनुमितौ । साध्यवैशिष्ट्यावगाहित्वम्=साध्यप्रकारकत्वं । **तन्निबन्धनेति** । अनुमितौ साध्यवैशिष्ट्यावगाहित्वप्रवेशप्रयुक्ता या बाधादावतिव्याप्तिस्तद्वारकपक्षे साध्यहेतुवैशिष्ट्यग्रहाऽविरोधित्वरूपविशेषणान्तरप्रक्षेप इत्यर्थः । **प्रक्षालनाद्धीति** । 'प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरमि'त्यादिन्यायेनेत्यर्थः । **अयुक्त इति** । अनुमितौ साध्यवैशिष्ट्यावगाहित्वं निवेश्य पुनस्तादृशग्रहाऽविरोधित्वं बाधादिवारणाय निवेशनमयुक्तं किन्तु अनुमितावेव साध्यवैशिष्ट्यावगाहित्वं न देयमित्याशयः ।

❀ गादाधरी ❀

धिनि बाधादिवारकविशेषणं च परित्यजति-वस्तुतस्त्विति । आश्र-यासिद्ध्यादीत्यादिना स्वरूपासिद्धिसाधनाप्रसिद्धिपरिग्रहः । यथाश्रुते आश्रयासिद्ध्यादिवारणासम्भवादसिद्धिसङ्कीर्णव्यभिचारासङ्ग्रहाच्च सत्य-

❀ विवृतिः ❀

ज्ञाने=अनुमितौ । विरोधिनि च=अनुमितिविरोधिनि च व्यभिचारादौ । **बाधादीति** । पक्षे साध्यहेतुवैशिष्ट्यावगाहिग्रहाऽविरोधित्वरूपं च विशेषणमित्यर्थः । परित्यजति दीधितिकार इति शेषः ॥

अनुमितिकारणीभूतपरामर्शविरोधित्वविवक्षणेऽपि काञ्चनमयह्रदो वह्निमान् काञ्चनमयधूमादित्यादौ ह्रदनिष्ठकाञ्चनमयत्वाद्यभावरूपाश्रयासिद्धौ धूमनिष्ठकाञ्चनमयत्वाद्यभावरूपसाधनाऽप्रसिद्धौ ह्रदवृत्तिधूमाभावरूपस्वरूपासिद्धौ चातिव्याप्तिः, तादृशाश्रयासिद्ध्यादिनिश्चयस्यापि वह्निव्याप्यकाञ्चनमयधूमवान् काञ्चनमयह्रदइत्याकारकपरामर्शप्रतिबन्धकत्वादतस्तद्वारणाय सत्यन्तदलं सार्थकीकुर्वतां दीधितिकृतां आश्रयासिद्ध्यादिवारणाय इत्यादिग्रन्थघटकादिपदोपादानप्रयोजनमाह—**स्वरूपासिद्धीति** । यथाश्रुतपक्षवृत्तित्वे सतीत्युक्तावपि नाश्रयासिद्ध्यादिवारणं ह्रदनिष्ठकाञ्चनमयत्वाभावादेः पक्षीभूतह्रदवृत्तित्वादित्याह **यथा श्रुत इत्यादि** । आश्रयासिद्ध्यादीत्यत्रादिपदात् स्वरूपासिद्धिपरिग्रहः ॥

ननु हेतुतावच्छेदकसम्बन्धेन पक्षवृत्तित्वविवक्षणात् यथाश्रुतपक्षवृत्तित्वस्य सत्यन्तार्थत्वेऽपि नाश्रयासिद्ध्यादावतिव्याप्तिः, ह्रदनिष्ठकाञ्चनमयत्वाभावादेः हेतुतावच्छेदकीभूतसंयोगसम्बन्धेनह्रदाऽवृत्तित्वात् , यद्यपि काञ्चनमयह्रदो वह्निमान् घटाभावादित्यादौ काञ्चनमयत्वाभावादेः स्वरूपेण ह्रदवृत्तित्वात् यथाश्रुते ह्रदनिष्ठकाञ्चनमयत्वाभावादावतिव्याप्तिदुर्वारैव, नच हेतुप्रतियोगिकहेतुतावच्छेदकसम्बन्धेन पक्षवृत्तित्वविवक्षणान्नेयमतिव्याप्तिरिति वाच्यम्, तथासति धूमवान् ह्रदो वह्निमान् धूमाभावादित्यत्र ह्रदनिष्ठधूमाभावेऽतिव्याप्त्यापत्तेः, धूमाभावस्य हेतुप्रतियोगिकस्वरूपसम्बन्धेन ह्रदवृत्तित्वात् तथापि पक्षतावच्छेदकाभाववत्पक्षादेरेवाश्रयासिद्धिस्वरूपत्वे यथाश्रुतपक्षवृत्तित्वनिवेशेऽपि तादृशाश्रयासिद्ध्यादौ नातिव्याप्तिः, तादृशपक्षादेर्हेतुतावच्छेदकसम्बन्धेन पक्षाऽवृत्तित्वात् अतो यथाश्रुतसत्यन्तार्थपरित्यागे बीजमाह**ासिद्धीति** । स्वरूपासिद्धिसंकीर्णव्यभिचारेऽव्याप्तेश्चेत्यर्थः ।

तथा च यथाश्रुतपक्षवृत्तित्वे सतीत्युक्तौ ह्रदो धूमवान् वह्नेरित्यत्र धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिः तादृशवह्न्यादेः परामर्शविरोधित्वेऽपि हेतुतावच्छेदकीभूतसंयोगसम्बन्धेन ह्रदाऽवृत्तित्वादिति भावः ॥

❀ गादाधरी ❀

न्तार्थं व्याचष्टे–तादृशेति। प्रथमं तादृशेति पक्षतावच्छेदकविशिष्टेत्यर्थकम्। उदीच्यम् तद्धेतुतावच्छेदकविशिष्टार्थकम्। ननु वह्निमान् वह्निमान् ह्रदत्वादित्यादौ हेतुनिष्ठसाध्यासामानाधिकरण्यादिरूपासाधारण्यासङ्ग्रहः तज्ज्ञानस्य साध्यात्मकपक्षतावच्छेदकविशिष्टे हेतुमत्ताग्रहविरोधित्वादत

❀ विवृतिः ❀

**पक्षतावच्छेदकेति**। अन्यथा पक्षनिष्ठविशेष्यताकत्वमात्रविवक्षणे आश्रयासिद्ध्यादावतिव्याप्तिः, काञ्चनमयपर्वतो वह्निमान् इत्यादौ पर्वतनिष्ठकाञ्चनमयत्वाभावादेः पर्वतमात्रविशेष्यकहेतुप्रकारकग्रहाऽविरोधित्वात्। उदीच्यं तत्=उदीच्यं तादृशेतिपदं। **हेतुतावच्छेदकेति**। अन्यथा हेतुनिष्ठप्रकारताकत्वमात्रविवक्षणं साधनाऽप्रसिद्ध्यादावतिव्याप्तिः, काञ्चनमयधूमादिहेतुकस्थले धूमनिष्ठकाञ्चनमयत्वाभावादेः काञ्चनमयत्वाद्यविशेषितधूमादिप्रकारकबुद्धावविरोधित्वादिति भावः।

तथा च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताकग्रहत्वाऽव्यापिका या प्रकृतपरामर्शत्वव्यापकप्रतिबध्यता तन्निरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्वं लक्षणार्थः। न चैवं साध्याऽप्रसिद्धावतिव्याप्तिः, काञ्चनमयवह्निसाध्यकस्थले वह्निनिष्ठकाञ्चनमयत्वाभावस्य हेतौ पक्षवृत्तित्वग्रहाऽविरोधित्वात् परामर्शविरोधित्वाच्चेति वाच्यम्, साध्यतावच्छेदकविशिष्टसाध्यग्रहाऽविरोधित्वेनापि अनुमितिविरोधिनो विशेषणीयत्वादिति भावः॥

अत्र कल्पे हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वं नाऽसाधारण्यम् न वा पक्षवृत्तित्वसहितं साध्यव्यापकीभूताभावप्रतियोगित्वं तथा, तादृशासाधारण्यनिश्चयस्य परामर्शाऽप्रतिबन्धकत्वात्, किन्तु हेतुनिष्ठसाध्यवद्वृत्तित्वाभावस्यैवासाधारण्यस्वरूपत्वं वाच्यम् तज्ज्ञानस्य साध्यसामानाधिकरण्यघटितव्याप्तिविषयकपरामर्शप्रतिबन्धकत्वात्। तथा च वह्निमान् वह्निमान् ह्रदत्वादित्यादौ ह्रदत्वनिष्ठवह्निमद्वृत्तित्वाभावरूपासाधारण्येऽव्याप्तिः, तज्ज्ञानस्य वह्निरूपपक्षतावच्छेदकविशिष्टे ह्रदत्वरूपहेतुप्रकारकग्रहप्रतिबन्धकतया हेतौ पक्षवृत्तित्वग्रहाविरोधित्वरूपसत्यन्तदलस्य तत्राऽसत्वात् इत्येवमनयेत्यादेरवतरणमाह–**नन्वित्यादि**। **हेतुनिष्ठेति**। ह्रदत्वादिनिष्ठवह्निमद्वृत्तित्वाभावादिरूपासाधारण्यासंग्रह इत्यर्थः। तज्ज्ञानस्य=ह्रदत्वनिष्ठवह्निमद्वृत्तित्वाभावज्ञानस्य। **साध्यात्मकेति**। वह्निरूपपक्षतावच्छेदकविशिष्टे वह्निमतीत्यर्थः। हेतुमत्ताग्रहविरोधित्वात्=हेतुप्रकारकग्रहप्रतिबन्धकत्वात्।

❀ गादाधरी ❀

आह अनयेति । अनुमितिकारणीभूतं व्याप्तेः पक्षधर्मतायाश्च ज्ञानम् । तथा च पक्षधर्मताज्ञानाविरोधित्वकथनेन परिशेषाद्व्याप्तिग्रहविरोधित्वमेव लभ्यत इति भावः । ननु एतत्साध्यसाधनयोरप्रसिद्धावतिव्यापक-मन्योन्यात्यन्ताभावगर्भव्याप्त्योरेकतरोपादानेऽन्यतरासङ्ग्राहकं साध्या-व्यभिचरितत्वविशिष्टसामानाधिकरण्याभावरूपव्याप्यत्वासिद्धावतिव्या-

❀ विवृतिः ❀

अनुमितिकारणीभूतं=परामर्शात्मकम् । **व्याप्तेरित्यादि** । व्याप्तिप्रकारक-पक्षधर्मताज्ञानमित्यर्थः । **पक्षधर्मतेति** । पक्षे हेतुमत्ताग्रहाऽविरोधित्वकथनेने-त्यर्थः । **परिशेषादित्यादि** । तथा च पक्षधर्मताग्रहाऽविरोधित्वमनिवेश्य केवल-व्याप्तिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकता-वच्छेदकधर्मवत्त्वं लक्षणार्थइतिभावः ॥

एतत् = व्याप्तिग्रहाऽविरोधित्वरूपं सव्यभिचारलक्षणम् । अप्रसिद्धौ=साध्याऽ-प्रसिद्धौ, साधनाऽप्रसिद्धौ च । **अतिव्यापकमिति** । काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्वह्न्यादेः काञ्चनमयत्वाभाववद्धूमा-देश्च व्याप्तिग्रहविरोधित्वादित्याशयः ॥

साध्यतावच्छेदकादिविशिष्टसाध्यादिग्रहाऽविरोधिव्याप्तिग्रहविरोधिरूपवत्त्वस्य लक्षणार्थत्वे साध्यसाधनयोरप्रसिद्धावतिव्याप्त्यभावादा**हान्योन्येति** । तथा च साध्या-भाववदवृत्तित्वरूपव्याप्तिग्रहविरोधित्वविवक्षणे साध्यवदन्यवृत्तित्वविशिष्टहेतुरूप-व्यभिचारेऽव्याप्तिः, साध्यवदन्याऽवृत्तित्वरूपव्याप्तिग्रहविरोधित्व विवक्षणेऽपि साध्यात्यन्ताभाववद्वृत्तित्वविशिष्टहेतुरूपव्यभिचारेऽव्याप्तिः समानप्रकारकज्ञान-स्यैव प्रतिबन्धकतया अन्योन्याभावादिघटितव्याप्तिज्ञानेऽत्यन्ताभावादिघटितव्यभि-चारज्ञानस्याप्रतिबन्धकत्वादित्याशयः ॥

समूहालम्बनान्योन्यात्यन्ताभावगर्भव्याप्तिग्रहविरोधित्वविवक्षणेऽपि न निस्तार इत्याह **साध्येति** । साध्याभाववदवृत्तित्वविशिष्टं यत् साध्याधिकरणाऽवृत्तित्वं तत्-स्वरूपव्याप्यत्वासिद्धावित्यर्थः। **अतिव्यापकमिति** । तथा च गगनादौ व्याप्यत्व व्यवहारवारणाय साध्याभाववदवृत्तित्वविशिष्टसाध्यसामानाधिकरणस्यैव व्याप्ति-त्वेन विवक्षणीयतया तादृशव्याप्तिग्रहे च साध्याभाववदवृत्तित्वविशिष्टसाध्यसामा-नाधिकरण्याभावनिश्चयस्य प्रतिबन्धकत्वात् , वह्निमान् गगनादित्यादौ वह्न्यभाव-वदवृत्तित्वविशिष्टवह्निसामानाधिकरण्याभावविशिष्टगगनरूपव्याप्यत्वाऽसिद्धावति— व्याप्तिः, तस्य तादृशव्याप्तिग्रहविरोधित्वादिति भावः ॥

❀ गादाधरी ❀

पकं चेत्यत आह–विवेचयिष्यत इति। विशिष्टसाध्यसाधनग्रहाविरोधित्वं निवेश्य साध्याप्रसिद्ध्यादिकं वारयिष्यते। विशिष्टसाधनग्रहविरोधी व्यभिचारोऽसिद्धावेवान्तर्भावनीयः। समूहालंबनात्मकनानाविधव्याप्तिज्ञानमादायात्यन्तान्योन्याभावगर्भा विविधा व्यभिचाराः सङ्ग्रहीष्यन्ते। व्याप्त्यभावो व्यभिचार एवान्तर्भावयिष्यते। तस्य बहिर्भावनीयत्वे विशकलितयोरेवाऽव्यभिचारसामानाधिकरण्ययोर्ज्ञानमुपादेय-

❀ विवृतिः ❀

**विशिष्टेति**। साध्यतावच्छेदकविशिष्टसाध्यग्रहाऽविरोधित्वं, साधनतावच्छेदकविशिष्टसाधनग्रहाऽविरोधित्वं चेत्यर्थः। साध्याप्रसिद्ध्यादिकम्=साध्यतावच्छेदकाभाववत्साध्यादिकम्। **वारयिष्यत इति**। दीधितिकारेणेति शेषः।

नन्वेवं धूमवान् अवृत्तिवह्नेरित्यत्र धूमाभाववद्वृत्तिवह्निरूपव्यभिचारेऽव्याप्तिः, तादृशव्यभिचारनिश्चयस्य साधनतावच्छेदकाऽवृत्तित्वविशिष्टवह्निग्रहप्रतिबन्धकत्वादित्यत आह **विशिष्टेति**। साधनतावच्छेदकविशिष्टसाधनग्रहप्रतिबन्धकज्ञानविषयीभूतइत्यर्थः। व्यभिचारः=निरुक्तस्थलीयधूमाभाववद्वृत्तिवह्निरूपव्यभिचारः। अप्रसिद्धावेव=साधनाऽप्रसिद्धावेव। **अन्तर्भावनीय इति**। तथा च धूमवान् अवृत्तिवह्नेरित्यत्र धूमभाववद्वृत्तिवह्नेः साधनाऽप्रसिद्धिस्वरूपतया तस्य सव्यभिचारसामान्यलक्षणाऽलक्ष्यत्वात्, तत्र लक्षणाऽगमनेऽपि न क्षतिरितिहृदयम्॥

**समूहालम्बनेति**। साध्याभाववदवृत्तित्वसाध्यवदन्याऽवृत्तित्वादिरूपनानाविधव्याप्तिविषयकसमूहालम्बनज्ञानमादायेत्यर्थः। अन्योन्यात्यन्ताभावगर्भाः= साध्यात्यन्ताभावगर्भाः साध्यवदन्योन्याभावगर्भाश्च व्यभिचाराः= साध्याभाववद्वृत्तित्वविशिष्टहेत्वादिरूपाः साध्यवदन्यवृत्तित्वविशिष्टहेत्वादिस्वरूपाश्च व्यभिचाराः। **संग्रहिष्यन्त इति**। साधारणग्रन्थे इत्यादिः। दीधितिकारेणेति शेषः। व्याप्त्यभावः=साध्याव्यभिचरितत्वविशिष्टसाध्यसामानाधिकरण्याभावः। **व्यभिचार एवेति**। तथा च तस्य लक्ष्यत्वान्न तत्रातिव्याप्तिरितिभावः। **अन्तर्भावयिष्यत इति**। साधारणग्रन्थे इत्यादिः॥

ननु व्याप्त्यभावस्य व्यभिचारस्वरूपत्वे असिद्धेस्त्रैविध्यं न स्यात् इत्यत आह **तस्येति**। निरुक्तव्याप्त्यभावस्येत्यर्थः। बहिर्भावनीयत्वे=व्यभिचारभिन्नत्वे। **विशकलितयोरित्यादि**। परस्परनिरूप्यनिरूपकभावानापन्नविषयताशालिसाध्याव्यभिचरितत्वसाध्यसामानाधिकरण्ययोः समूहालम्बनात्मकं यज्ज्ञानं तदित्यर्थः। **उपादेयमिति**। प्रतिबध्यव्याप्तिज्ञानत्वेनेत्यादिः। **अयं भावः**–साध्याऽव्यभिच-

❀ गादाधरी ❀

मिति न कस्यचिदपि दोषस्यावकाश इति भावः ।

❀ विवृतिः ❀

रितत्वविशिष्टसाध्यसामानाधिकरण्याभावरूपव्याप्यत्वासिद्धिनिश्चयस्तु साध्याऽव्यभिचरितत्वविशिष्टसाध्यसामामानाधिकरण्यधियमेव प्रतिबध्नाति नतु साध्यसामानाधिकरण्यप्रकारकं साध्याव्यभिचरितत्वप्रकारकं च समूहालम्बनात्मकं ज्ञानं, एवञ्च साध्यसामानाधिकरण्यप्रकारकं साध्याऽव्यभिचरितत्वादिरूपनानाविधव्याप्तिप्रकारकं च यत् समूहालम्बनं ज्ञानं तद्विरोधित्वस्य लक्षणार्थत्वेन साध्याऽव्यभिचरितत्वविशिष्टसाध्यसामानाधिकरण्याभावादावतिव्याप्तिरिति ॥

**न कस्यचिदपि दोषस्यावकाश इति ।** तथा च साध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाऽव्यापिका साधनतावच्छेदकविशिष्टसाधनग्रहत्वाऽव्यापिका च या साध्यसामानाधिकरण्यप्रकारकनानाविधव्याप्तिप्रकारकसमूहालम्बनग्रहत्वव्यापिका प्रतिबध्यता तन्निरूपितप्रतिबन्धकत्वम् यद्रूपावच्छिन्नविषयक निश्चयत्वव्यापकं तद्रूपवत्वमित्यस्यैव सव्यभिचारसामान्यलक्षणार्थतायाः पर्य्यवसिततया न पूर्वोक्त साध्याऽप्रसिद्ध्यादौ कुत्राप्यतिव्याप्तिः, नवा विविधव्यभिचारादेरसंग्रह इतिभावः ।

मूले **सपक्षेति** । इदं च सम्पातायातमित्यनुपदम् दधितिकृतैव वक्ष्यते । तथा च विपक्षवृत्तित्वमात्रमेव साधारण्यमितिपर्य्यवसितोऽर्थः। **उभयेति** । निश्चिते साध्यवति तद्भिन्ने च वर्तमानत्वमित्यर्थः । अनुपसंहारित्वं च=साध्यव्यापकीभूताभावाप्रतियोगित्वं च ! अनुमितिविरोधि=प्रकृतानुमितिप्रतिबन्धकतावच्छेदक विषयितानिरूपकतावच्छेदकधर्मवान् । तत्सम्बन्धः=तदात्मको विपक्षवृत्तित्वादिरूपः सम्बन्धः । **प्रत्येकमस्तीति** । साधारणे विपक्षवृत्तित्वसम्बन्धः, असाधारणे उभयव्यावृत्तत्वसम्बन्धः, अनुपसंहारिणि च साध्यव्यापकीभूताभावाऽप्रतियोगित्वरूपः सम्बन्धोऽस्तीत्यर्थः । सपक्षवृत्तित्वाऽघटितविपक्षवृत्तित्वमात्रस्यैव व्यभिचारत्वंस्फुटीकर्त्तुमाह—**विरुद्धाविति** । गोत्वादिसाध्यकाऽश्वत्वादिहेतुरित्यर्थः अनेन रूपेण = विपक्षवृत्तित्वमात्ररूपेण । **व्यभिचारएवेति** । तथा च विरुद्धस्य लक्ष्यतया तत्र लक्षणसत्वेऽपि न क्षतिरिति भावः ।

ननु विरुद्धस्य सव्यभिचारत्वे तस्य पृथग् विभागो न स्याद् इत्यत आह—**उपाधेश्चेति** । विरुद्धत्वसव्यभिचारत्वरूपोपाधेश्चेत्यर्थः न संकरः=नाऽभेदः । **वक्ष्यत इति** । विरुद्धत्वादेः विभागेऽपि न क्षतिरित्याशयः । टीकायां **नन्विति** । **सपक्षेति** । निश्चितसाध्यवद्वृत्तित्वज्ञानस्येत्यर्थः । अनुमित्यविरोधितया = अनुमित्यप्रतिबन्धकतया । अनुमितिविरोधित्वोक्तिः = अनुमितिप्रतिबन्धकतावच्छेदक-

❀ गादाधरी ❀

ननु सपक्षवृत्तित्वज्ञानस्यानुमित्याद्यविरोधितया सपक्षविपक्षवृत्तित्वस्यानुमितिविरोधित्वोक्तिर्न सङ्गच्छते। न च विपक्षवृत्तित्वज्ञानस्यानुमितिप्रतिबन्धकतया तद्घटितविशिष्टस्यानुमितिविरोधित्वमक्षतमेवेति वाच्यम्। तथासत्यपि विपक्षवृत्तित्वमात्रस्यापि तथात्वात्तदायैव लक्षणगमनसम्भवे विशिष्टमादाय लक्षणसङ्गमनस्यानुचितत्वात् विपक्षवृत्तित्वमात्रस्यातथात्वे तदादाय विरुद्धेऽतिव्याप्तेरप्रसक्तेः विरुद्धेत्यग्रिमग्रन्थासङ्गतिश्चेत्यत आह–सपक्षेतीति। तथाच विपक्षवृत्तित्वमात्रं विवक्षितमिति भावः। अतएव—सपक्षवृत्तित्वस्याविवक्षितत्वादेव। मूले एतदज्ञानेपीति दृष्टान्तविधयोक्तम्। तथासति–एतादृशानुगतधर्माज्ञानदशाया-

❀ विवृतिः ❀

विषयितानिरूपकत्वोक्तिः। **न संगच्छत इति**। मूलकृत इत्यादिः। **न चेति**। वाच्यमिति परेणान्वयः। **विपक्षेति**। निश्चितसाध्याभाववद्वृत्तित्वज्ञानस्येत्यर्थः। **अनुमितिप्रतिबन्धकतयेति**। अनुमितेः साध्याभाववदवृत्तित्वरूपव्याप्तिप्रकारकत्वघटितत्वादित्याशयः।

तद्घटितविशिष्टस्य = विपक्षवृत्तित्वघटितविशिष्टस्य सपक्षवृत्तित्वविशिष्टविपक्षवृत्तित्वस्येति यावत्। अनुमितिविरोधित्वम्=अनुमितिप्रतिबन्धकज्ञानविषयत्वम्। **अक्षतमेवेति**। तथा च तादृशविशिष्टस्य व्यभिचारत्वं सम्भवत्येवेति भावः। तथा सत्यपि = निरुक्तविशिष्टस्य व्यभिचारत्वसम्भवे सत्यपि। तदादायैव =विपक्षवृत्तित्वमादायैव। विशिष्टमादाय=सपक्षवृत्तित्वविशिष्टविपक्षवृत्तित्वमादाय। **अनुचितत्वादिति**। विपक्षवृत्तित्वमात्रस्यैव दूषकत्वे तन्त्रतया तादृशविशिष्टस्य दोषत्वाभ्युपगमो नोचित इत्याशयः।

ननु विरुद्धेऽतिव्याप्तिवारणायैव सपक्षवृत्तित्वघटितस्य व्यभिचारत्वं वाच्यम् अत आह **विपक्षेति**। तथा च सपक्षवृत्तित्वसहितविपक्षवृत्तित्वस्य सव्यभिचारपदार्थत्वे तस्य विरुद्धहेतावसत्त्वेन विरुद्धेऽतिव्याप्त्यसम्भवात् विरुद्धोऽपीत्यादिना विरुद्धस्य लक्ष्यत्वाभिधानं मूलकृतो न संगच्छते इत्यकामेनापि विपक्षवृत्तित्वमात्रस्य व्यभिचारत्वं वक्तव्यम्–तथा सति तदादायैव विरुद्धेऽतिव्याप्तिसम्भवात् तस्य लक्ष्यत्वाभिधानं समीचीनमिति हृदयम्॥

भावमाह–**तथाचेति**। **विवक्षितमिति**। व्यभिचारत्वेनेत्यादिः। एतदज्ञानेऽपीतीत्यादिमूलं व्याचष्टे—**एतदज्ञानेऽपीति**। दृष्टान्तविधया=दृष्टान्तत्वेन। तथा सति = एतदज्ञानेऽपीत्यस्य दृष्टान्तत्वाऽनुसरणे सति। **एतादृशेति**। पक्षवृत्तित्व-

## ❀ गादाधरी ❀

**मिव तज्ज्ञानदशायामपि, अवश्यकल्प्यप्रतिबन्धकताकप्रत्येकज्ञानस्यैव दोषत्वात्—अनुमित्यनुत्पादप्रयोजकत्वादित्यर्थः। तथा चानुगतधर्मज्ञानदशायां प्रत्येकज्ञानस्यासत्त्वेऽनुमितिरिष्टैव तत्सत्त्वे तत एवानुमित्यनुत्पाद इति तज्ज्ञानस्य प्रतिबन्धकताया अप्रामाणिकत्वान्न तस्य विभाजकत्वमिति भावः।**

## ❀ विवृतिः ❀

सहितानुमितिविरोधिसम्बन्धाव्यावृत्तिमत्वरूपानुगतधर्माज्ञानदशायामिवेत्यर्थः। तज्ज्ञानदशायामपि=निरुक्तानुगतधर्मज्ञानदशायामपि। अनुगतधर्मज्ञानमात्रस्यानुमितिप्रतिबन्धकत्वे तज्ज्ञानविरहदशायां साधारण्यादिज्ञानात् अनुमित्युत्पादापत्तिः अतः साधारण्यादिज्ञानस्या अनुमितिप्रतिवन्धकत्वमवश्यक्लृतम् एवञ्च तादृशसाधारण्यादिज्ञानादेवानुमित्यनुत्पादनिर्वाहसम्भवे निरुक्तानुगतधर्मज्ञानस्य प्रतिबन्धकतायाः निर्युक्तिकतया तादृशधर्मेण विभाग एव न सम्भवति, यद्रूपावाच्छिन्नविषयकज्ञानमनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नस्यैव विभाजकतायाः पूर्वमुक्तत्वात्। इत्याशयेना—**हावश्यक्लप्तेति**। अवश्यक्लृप्ता प्रतिबन्धकता—यस्य साधारण्यादिप्रत्येकज्ञानस्य तस्यैवेत्यर्थः। **अनुमित्येति**। अनुमितिप्रतिवन्धकत्वादित्यर्थः॥

भावमाह—**तथा चेति**। प्रत्येकज्ञानस्य = साधारण्यादिप्रत्येकज्ञानस्य। अनुमितिरिष्टैवेति। अनुमितौ अनुगतधर्मज्ञानस्याप्रतिबन्धकत्वादित्याशयः। तत्सत्त्वे=साधारण्यादिप्रत्येकज्ञानस्य सत्त्वे। तत एव=साधारण्यादिज्ञानत एव। तज्ज्ञानस्य = अनुगतधर्मज्ञानस्य। प्रति**वन्धकताया इति**। अनुमितीत्यादिः। **अप्रामाणिकत्वादिति**। अनुगतधर्मज्ञानस्य ग्राह्याभावानवगाहित्वादित्याशयः॥

तस्य = अनुगतधर्मस्य। **विभाजकत्वमिति**। यद्रूपावच्छिन्नविषयकज्ञानं अनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नस्यैव विभाजकतायाः पूर्वमभिहितत्वादिति हृदयम्।

अयमसाधकः पक्षवृत्तित्वे सति अनुमितिविरोधिसम्हन्धाव्यावृत्तिमत्त्वात् इत्यत्र हेतुघटकानुमितिविरोधित्वदलानुपादाने पर्वतपक्षकवह्निसाध्यकधूमादिसद्धेतौ व्यभिचारः। यथाश्रुतस्य पक्षवृत्तित्वस्य पक्षे साध्यादिग्रहाऽविरोधिसम्बन्धवत्त्वरूपस्य वा तस्य निरुक्तधूमादौ सत्त्वेन तत्रासाधकतारूपसाध्यस्यासत्त्वात् अतो निरुक्तहेतुघटकीभूतं पक्षवृत्तित्वविशेषणमेव व्यर्थं वाच्यम् तादृशविशेषणस्य स्वरूपासिद्धहेत्वादिवारणमात्रप्रयोजनकतया तदसत्त्वेऽपि केवलानुमितिविरोधिसम्बन्धाऽव्यावृत्तिमतः स्वरूपासिद्धादेरसाधकत्वेन तत्र व्यभिचाराप्रसक्तेर्व्यभिचारवारकविशेषणस्यैव सार्थ-

❀ गादाधरी ❀

व्यर्थविशेषणत्वादिति मूले विशेषणपदस्यानुमितिविरोधित्वरूपविशेषणपरत्वं न सम्भवति तदनुपादाने सद्धेतौ व्यभिचारादतो व्याचष्टे विशेषणमिति । स्वरूपासिद्धादिहेतोरप्यसाधकतया तत्र व्यभिचाराप्रसक्तेस्तद्वारकं विशेषणं व्यर्थमेवेति भावः ॥

सद्धेतोः साध्यव्याप्यतया तत्रातिव्याप्त्यप्रसक्तेः हेत्वाभासपदं व्यर्थमित्याशङ्कां निराचिकीर्षुर्दोषलक्षणेऽसिद्धिविशेषात्मकावृत्तित्वा-

❀ विवृत्ति ❀

कतायाः मणिकारादिसम्मतत्वात् इत्याह **व्यर्थेति। मूलेइति**। घटकत्वं सप्तम्यर्थः। तस्य च विशेषणपदस्येत्यत्र विशेषणपदेऽन्वयः। **अनुमितीति**। लक्षणघटकसम्बन्धविशेषणानुमितिविरोधित्वविशेषणबोधेच्छयोच्चरितत्वमित्यर्थः । **तदनुपादाने**=अनुमितिविरोधित्वानुपादाने । सद्धेतौ=पर्वतपक्षकवह्न्यादिसाध्यकधूमादौ । **व्यभिचारादिति**। अनुमितिविरोधित्वाऽघटितलक्षणस्य तत्र सत्त्वेन तत्र असाधकत्वस्याबाधितत्वासत्प्रतिपक्षितत्वव्याप्तिपक्षधर्मत्वैतच्चतुष्टयशून्यत्वरूपस्य विरहादित्याशयः ॥

पक्षवृत्तित्वघटितासाधकतासाधकहेतोः पक्षवृत्तित्वांशस्य व्यभिचारावारकत्वं स्फुटीकर्तुं भावमाह-**स्वरूपासिद्धादीति**। आदिना बाधितहेत्वादेः परिग्रहः ह्रदादिपक्षकवह्न्यादिसाध्यकधूमादिहेतोरित्यर्थः। असाधकतया=पूर्वोक्ताबाधितत्वादिचतुष्टयशून्यतया। तादृशसाध्यसत्त्वेनेति यावत्। तद्वारकम्=स्वरूपसिद्धादिहेतुवारकम्। विशेषणं=पक्षवृत्तित्वम्। **व्यर्थमेवेतीति**। असाधकतानुमापकस्य=पक्षवृत्तित्वसहिताऽनुमितिविरोधिसम्बन्धाव्यावृत्तिमत्त्वस्य हेतोः पक्षवृत्तित्वघटितहेतुतावच्छेदकसमानाधिकरणासाधकताव्याप्यतावच्छेदककेवलानुमितिविरोधिसम्बन्धाव्यावृत्तिमत्त्वत्वरूपधर्मान्तरघटिततादृशहेतुतावच्छेदकवत्त्वेन व्यर्थत्वमेवेतिभावः ॥

साध्येत्यादिमूलोक्तलक्षणस्य साध्यनिरूपितव्याप्तिशून्यत्वे सति साध्याभावनिरूपितव्याप्तिशून्यत्वार्थकत्वे सद्धेतावतिव्याप्तिवारकं लक्षणघटकहेत्वाभासत्वदलं व्यर्थं स्यात् सद्धेतोः साध्यनिरूपितव्याप्तिमत्त्वेन तच्छून्यत्वस्य तत्राऽसम्भवात् अतो हेत्वाभासत्वमित्यस्य व्याख्यानमाचक्षाणानां दीधितिकाराणां हेतुवदित्यादिग्रन्थमवतारयितुमाह-**सद्धेतोरिति**। वह्न्यादिसाध्यकधूमादिहेतोरित्यर्थः। साध्यव्याप्यतया=साध्यनिरूपितव्याप्तिमत्त्वेन। तत्र=सद्धेतौ। **व्यर्थमिति**। इतरभेदानुमाने इत्यादिः। **दोषलक्षणे इति**। दुष्टस्य दोषघटितत्त्वेन प्रथमं दोषलक्षणस्यैव वक्तव्यत्वादित्याशयः।

**असिद्धीति**। व्याप्यत्वासिद्धिरूपगगनादिनिष्ठाऽवृत्तित्वेऽतिव्याप्तिवारकतये-

**अतएव साध्याव्याप्यत्वे सति साध्याभावाव्याप्यहेत्वाभा-**

---

❀ दीधितिः ❀

**साध्याव्याप्यत्व इति । हेत्वाभासत्वं हेतुवदाभासमानत्वं वत्य-र्थश्च वृत्तिमत्त्वम् , एवञ्च साध्यतदभावव्याप्यत्वग्रहविरोधिवृत्ति-**

❀ गादाधरी ❀

तिव्याप्तिवारकतया तत्सार्थकीकर्तुं तदर्थमाह–हेतुवदिति । दशाविशेषे व्याप्यविरुद्धयोरप्यसाधारणत्वात्तयोः प्रत्येकं यथाश्रुतलक्षणघटकदल-द्वयविरहादव्याप्तिः, एवं हेत्वाभासपदस्य वृत्तिमदर्थकत्वेऽवृत्तेरपि साध्य-तदभाववद्व्यावृत्तत्वेनासाधारणतया तत्राऽव्याप्तिरतः पर्यवसितार्थमाह एवञ्चेति । ननु साध्याभाववद्वृत्तित्वं साधारण्यं साध्यवदवृत्ति चासा-

❀ विवृत्तिः ❀

त्यर्थः । तत्सार्थकीकर्तुं = हेत्वाभासत्वदलं सार्थकीकर्तुं । तदर्थमाह = हेत्वाभास-त्वमित्यस्यार्थमाह । दीधितिकार इतिशेषः ॥

शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वरूपसाध्यस्य संशयस्तदा शब्दत्वस्यासाधारणतया यथाश्रुतलक्षणे तत्राव्याप्तिः शब्दत्वस्यानित्यत्वरूपसाध्यव्या-प्यतया तत्रसाध्यनिरूपितव्याप्तिशून्यत्वस्यासत्त्वात् , एवं शब्दो नित्यः शब्दत्वादित्या-दावपि पक्षे साध्यसंशयदशायां शब्दत्वादेरसाधारण्यस्येष्टतया तत्राऽव्यव्याप्तिः नित्य-त्वसाध्यकशब्दत्वरूपहेतौ साध्याऽव्याप्यत्वदलसत्त्वेऽपि साध्याभावाऽव्याप्यत्वस्य तत्र विरहात् साध्याभावव्याप्यस्यैवविरुद्धत्वादित्याह–**दशाविशेषे इति** । पक्षे साध्यसंशयदशायामित्यर्थः व्याप्यविरुद्धयोः=शब्दपक्षकानित्यत्वसाध्यकशब्दत्वरूपा-नित्यत्वव्याप्यताहशपक्षकनित्यत्वसाध्यकशब्दत्वरूपनित्यत्वविरुद्धयोः । **असाधा-रणत्वादिति** । निश्चितसाध्यतदभाववद्व्यावृत्तस्यैवासाधारणत्वमित्याशयः ॥

तयोः = व्याप्यविरुद्धयोः । **प्रत्येकमित्यादि** । अनित्यत्वसाध्यकशब्दत्वहेतौ यथाश्रुतसाध्याऽव्याप्यत्वस्य नित्यत्वसाध्यकशब्दत्वहेतौ च यथाश्रुतसाध्याभावाऽव्या-प्यत्वस्य विरहादित्यर्थः ॥

नन्ववृत्तिगगनादेरेव साध्यतदभाववद्व्यावृत्तत्वेनासाधारणतया शब्दोऽनित्यः शब्दत्वादित्यस्य सद्धेतुत्वमेव, शब्दो नित्यः शब्दत्वादित्यस्य तु विरुद्धत्वमेव वाच्यम् तथा च तयोरलक्ष्यत्वात् तत्र लक्षणागमनमिष्टमेवेत्याशयेनाह**एवमिति**।तथा च हेत्वाभासपदोपादानात् वृत्तिमत्त्वविशिष्टसाध्यतदभावव्याप्तिशून्यत्वस्यैव यथाश्रुत-लक्षणार्थतया वह्निमान् गगनादित्यादौ वह्नितदभाववद्व्यावृत्तगगनरूपासाधारणेऽ-

❀ दीधितिः ❀

मत्त्वग्रहाविरोधिरूपवत्त्वमर्थः । साध्यतदभाववद्वृत्तित्वं साधारण्यम् निश्चितसाध्यतदभाववद्व्यावृत्तत्वमसाधारण्यम् तच्च व्याप्तिद्वयग्रहविरो-

❀ गादाधरी ❀

धारण्यम् तच्च साध्यव्याप्तिग्रह एव विरोधि न तु साध्याभावव्याप्तिग्रहे-पीति कथं तत्सङ्ग्रह इत्यत आह—साध्येति । साध्यतदभाववद्व्यावृत्तत्वस्य वृत्तिमत्त्वविरुद्धतया तज्ज्ञानं वृत्तिमत्त्वग्रहप्रतिबन्धकमित्यभिप्रेत्य नि-

❀ विवृतिः ❀

व्याप्तिः गगनादौ साध्यतदभावव्याप्तिशून्यत्वसत्त्वेऽपि वृत्तिमत्त्वविरहेण यथाश्रुतलक्ष-णस्य तत्रासत्त्वादितिभावः ॥

अतः=निरुक्तगगनादावतिव्याप्तिभयतः । **तच्चेति** । साध्याभाववद्वृत्तित्वरूपं साधारण्यं साध्यवदवृत्तित्वरूपासाधारण्थं चेत्यर्थः । **साध्यव्याप्तिग्रहेति** । हेतौ साध्याभाववद्वृत्तित्वज्ञानकाले साध्याभावेऽपिं हेतुमद्वृत्तित्वग्रहात् साध्ये हेतुव्याप-कताग्रहोत्पत्त्यसम्भवेन व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहेऽपि तादृशव्यभिचार-ज्ञानस्य प्रतिबन्धकत्वं सम्भवतिं, साध्यवदवृत्तित्वरूपासाधारण्यज्ञानं च साक्षादेव साध्यसामानाधिकरण्यघटिततादृशव्याप्तिज्ञानं प्रति भवत्येव प्रतिबन्धकमित्याशयः । विरोधि = साध्यनिरूपितव्याप्तिग्रहप्रतिबन्धकज्ञानविषयीभूतं ।

**नन्वित्यादि** । निरुक्तसाधारण्यादेर्ज्ञानस्य ग्राह्याभावानवगाहितया साध्याभा-वव्याप्तिग्रहं प्रति प्रतिबन्धकत्वे मानाभाव इत्याशयः । तत्संग्रहः = निरुक्तसाधारणा-साधारणयोः संग्रहः ।

निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्यासाधारण्यस्वरूपत्वाभिधाने बीजमाह—**साध्येति** । निश्चितत्वाऽविशेषितसाध्यतदभाववद्व्यावृत्तत्वस्येत्यर्थः । वृत्तिमत्त्ववि-रुद्धतया = वृत्तिमत्त्वाधिकरणाऽवृत्तितया । तज्ज्ञानम् = साध्यतदभाववद्व्यावृत्तत्व-ज्ञानम् । **वृत्तिमत्त्वग्रहप्रतिबन्धकमिति** । तथा च वृत्तिमत्त्वग्रहाविरोधित्वस्य, साध्यतदभाववद्व्यावृत्तत्वे विरहात् न तस्यासाधारण्यरूपतेति भावः ।

**निश्चितेतीति** । निश्चितसाध्यतदभाववद्व्यावृत्तत्वं च न वृत्तिमत्त्वविरुद्धं, शब्दोऽनित्यः शब्दत्वादित्यादौ शब्देऽनित्यत्वसंशयदशायां शब्दत्वादौ निश्चित-साध्यादिमद्व्यावृत्तत्वस्य वृत्तिमत्त्वस्य च सत्त्वादित्याशयः ॥

**इदमत्रावधेयम्**—साध्यतदभाववद्व्यावृत्तत्वस्य वृत्तिमत्त्वविरुद्धत्वेऽपि तज्ज्ञानं न वृत्तिमत्त्वग्रहप्रतिबन्धकम् , वृत्तिमत्त्वाभावव्याप्यत्वाद्यविशेषितसाध्यतदभावव-

❀ दीधितिः ❀

**धीति हृदयम् । असिद्धिविशेषस्त्ववृत्तित्वं वृत्तिमत्त्वग्रहविरोधि, साध्य-**

❀ गादाधरी ❀

श्चितेति । तच्च-तादृशं साधारण्यमसाधारण्यं च । व्याप्तिद्वयेति । साध्य-व्याप्तिसाध्याभावव्याप्तीत्यर्थः । साध्यस्य साध्याभावाभावतया साध्याभावनिरूपितव्याप्तिग्रहे साध्यवद्वृत्तित्वस्य ज्ञानं प्रतिबन्धकमिति तद्घटितस्य साधारण्यस्य साध्याभावव्याप्तिग्रहविरोधित्वम्, एवं साध्याभाववद्व्यावृत्तत्वस्य ज्ञानमपि साध्याभावसामानाधिकरण्यघटितसाध्याभावव्याप्तिग्रहे प्रतिबन्धकमिति तद्घटितस्यासाधारण्यस्यापि तथात्वमिति

❀ विवृतिः ❀

द्व्यावृत्तत्वज्ञानस्य वृत्तिमत्त्वग्रहप्रतिबन्धकत्वे प्रमाणाभावात्, साध्यतदभाववद्व्यावृत्तत्वस्यैवासाधारण्यस्वरूपत्वं स्वीकर्तव्यमिति ॥

तादृशंसाधारण्यम्=साध्यतदभाववद्वृत्तित्वरूपं साधारण्यम् । असाधारण्यं च=निश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपमसाधारण्यं च । निरुक्तसाधारण्यासाधारण्यज्ञानस्य साध्यसाध्याभावव्याप्तिग्रहप्रतिबन्धकत्वं व्यवस्थापयितुं भावमाह-**साध्यस्येत्यादि** । अयमाशयः-साध्याभावनिरूपिता व्याप्तिस्तु साध्यवदवृत्तित्वरूपा-तज्ज्ञानं प्रति साध्यवद्वृत्तित्वज्ञानं प्रतिबन्धकम्-साध्यनिरूपिता च व्याप्तिः साध्याभाववदवृत्तित्वादिरूपा तज्ज्ञानं प्रति साध्याभाववद्वृत्तित्वज्ञानं प्रतिबन्धकम्, ग्राह्याभावावगाहित्वात्, एवं च साध्यतदभाववद्वृत्तित्वरूपसाधारण्यज्ञानस्य निरुक्तव्याप्तिद्वयग्रहप्रतिबन्धकत्वं निर्विवादम् । एवं गगनादौ साध्यसाध्याभावव्याप्यत्वव्यवहारवारणाय साध्याभावसामानाधिकरण्यविशिष्टसाध्यवदवृत्तित्वमेव साध्याभावव्याप्यत्वं साध्यसामानाधिकरण्यविशिष्टसाध्याभाववदवृत्तित्वमेव साध्यव्याप्यत्वं वक्तव्यम्, तथा च साध्याभाववद्व्यावृत्तत्वज्ञानं साध्याभावसामानाधिकरण्यघटित साध्याभावव्याप्तिग्रहे प्रतिबन्धकम् साध्यवद्व्यावृत्तत्वज्ञानं च साध्यसामानाधिकरण्यघटितव्याप्तिग्रहे प्रतिबन्धकम् । इति निश्चितसाध्यतदभाववद्व्यावृत्तत्वज्ञानस्य व्याप्तिद्वयग्रहप्रतिबन्धकत्वं सर्ववादिसिद्धं ग्राह्याभावावगाहिताया एव प्रतिबन्धकताया तन्त्रत्वादिति ॥

**साध्याभावेति** । साध्यवदवृत्तित्वरूपसाध्याभावनिरूपितव्याप्तिग्रहे इत्यर्थः । तद्घटितस्य = साध्यवद्वृत्तित्वघटितस्य । साध्याभावव्याप्तिग्रहविरोधित्वं = साध्यवदवृत्तिग्रहप्रतिबन्धकज्ञानविषयत्वम् । साध्याभाववद्व्यावृत्तित्वस्य = निश्चितसाध्याभाववद्व्यावृत्तत्वस्य । तद्घटितस्य = साध्याभाववद्व्यावृत्तत्वघटितस्य । तथात्वम्=साध्याभावसामानाधिकरण्यघटितसाध्याभावव्याप्तिग्रहप्रतिबन्धकज्ञानविषयत्वं ।

❀ गादाधरी ❀

भावः। हृदयमित्यस्वरससूचनाय। स च साध्याभावाभावत्वेन साध्यविषयकतद्वृत्तित्वज्ञानस्यैव साध्याभावाभाववदवृत्तित्वघटितस्य साध्याभावे हेतुसमानाधिकरणाभावाप्रतियोगित्वघटितस्य वा साध्याभावव्याप्यत्वस्य ग्रहे प्रतिबन्धकतया साध्यतावच्छेदकसाध्यविषयकतद्वृत्तित्वज्ञानस्य तदप्रतिबन्धकत्वम्, निश्चितसाध्यादिमद्व्यावृत्तत्वज्ञानस्य

❀ विवृतिः ❀

**सचेति**। अस्वरसश्चेत्यर्थः। **साध्याभावाभावेत्यादि**। साध्याभावाभावत्वावच्छिन्ना या साध्यप्रकारता तन्निरूपकं यत् साध्याधिकरणनिरूपितवृत्तित्वज्ञानं तस्यैवेत्यर्थः। **साध्येति**। साध्याभावाभावत्वावाच्छिन्नाधिकरणाऽवृत्तित्वघटितस्येर्थः अग्रिमग्रन्थाऽसंगतिभयेन आह—**साध्याभावेइति**। साध्याभावव्याप्यत्वस्य साध्याभावसामानाधिकरण्यविशिष्टसाध्याभावाभाववदवृत्तित्वरूपस्य हेतुसमानाधिकरणाभावाऽप्रतियोगिसाध्याभावसामानाधिकरण्यरूपस्यवेत्यर्थः। **प्रतिबन्धकतयेति**। साध्याभावाभावत्वेन साध्यविषयकतद्वृत्तित्वज्ञानस्येत पूर्वेण सम्बन्धः। **साध्यतेति**। साध्यतावच्छेदकावच्छिन्ना या साध्यप्रकारता तन्निरूपिताधिकरणविशेष्यत्वावच्छिन्नप्रकारतानिरूपितवृत्तित्वविशेष्यत्वावच्छिन्नप्रकारताशालिज्ञानस्येत्यर्थः। **तदप्रतिबन्धकत्वमिति**। पूर्वोक्तव्याप्तिग्रहाऽप्रतिबन्धकत्वमित्यर्थः। तथा च साध्याभावाभावत्वावच्छिन्नाधिकरणाऽवृत्तित्वरूपसाध्याभावव्याप्तिज्ञाने, हेतुसमानाधिकरणाभावाऽप्रतियोगिसाध्याभावसामानाधिकरण्यरूपसाध्याभावव्याप्ति ज्ञाने वा साध्याभावाभावत्वावच्छिन्नाधिकरणवृत्तित्वज्ञानस्यैव प्रतिबन्धकतया साध्याभावाभावत्वेन रूपेण साध्यवद्वृत्तित्वघटितसाधारण्ये लक्षणसमन्वयेऽपि (साध्यतावच्छेदकरूपेण साध्यवद्वृत्तित्वघटि तसाधारण्ये लक्षणसमन्वयेऽपि) साध्यतावच्छेदकरूपेण साध्यवद्वृत्तित्वघटित साध्यसाध्याभाववद्वृत्तिरूप साधारण्येऽव्याप्तिः, निरुक्तसाधारण्यज्ञानस्य पूर्वोक्तव्याप्तिग्रहेऽप्रतिबन्धकत्वात्। इत्येवं हृदयमित्युक्त्वाऽस्वरसः सूचित इति भावः॥

ननु साध्याभावाभाववदवृत्तित्वज्ञाने साध्यतावच्छेदकरूपेण साध्यवद्वृत्तित्वज्ञानस्य भिन्नप्रकारकत्वेऽपि अनुभवबलात् कथञ्चित् प्रतिबन्धकत्वं स्वीकर्तव्यमेव कथमन्यथा हेतुसमानाधिकरणाभावाऽप्रतियोगिसाध्यसामानाधिकरण्यरूपव्याप्तिग्रहे साध्याभाववद्वृत्तित्वज्ञानस्य प्रतिबन्धकत्वं भिन्नप्रकारकत्वस्य तुल्यत्वादिति यदि ब्रूयात् तदाप्याह **निश्चितेति**। निश्चितसाध्यतदभाववद्व्यावृत्तत्वज्ञानस्येत्यर्थः। **साध्यादीति**। आदिना साध्याभावपरिग्रहः। तथा च साध्याधिकरणवृत्तित्वसामान्या-

सत्वं साध्यवन्मात्रवृत्त्यन्यत्वे सतिसाध्याभाववन्मात्र वृत्त्यन्यत्वं

---

❀ दीधितिः ❀

तदभाववद्व्यावृत्तत्वमपि यदीदृशं तदा असिद्धिरेव नो चेदिदमेवासा-

❀ गादाधरी ❀

साध्यादिसामानाधिकरण्यसामान्याभावाविषयकतया साध्यादिव्याप्ति-ग्रहाप्रतिबन्धकत्वमिति च ।

विशेष्यदलप्रयोजनं स्फुटयति—असिद्धिविशेष इति । स्वरूपासिद्धि-र्व्याप्यत्वासिद्धिर्वेत्यर्थः । एतच्चालक्ष्यतालाभाय ।

ननु निश्चयाघटितस्य साध्यतदभाववद्व्यावृत्तत्वस्य वृत्तिमत्त्वग्रह-विरोधितया एतदनन्तर्भावे तस्याधिकहेत्वाभासत्वापत्तिरित्यत आह सा-

❀ विवृतिः ❀

भावाविषयकतया साध्याभावाधिकरणवृतित्वसामान्याभावाविषयकतयेत्यर्थः पर्य्यव-सितः । **साध्यादीति** । साध्यसाध्याभावव्याप्तिग्रहाऽप्रतिबन्धकत्वमित्यर्थः ।

अयमाशयः । निश्चितसाध्यतदभाववद्व्यावृत्तत्वमसाधारण्यम् तज्ज्ञानं च साध्यादिमद्व्यक्तिविशेषवृत्तित्वाभावविषयकम् । न तु साध्यादिमद्वृत्तित्व सामान्याभावविषयकम् एवं च निरुक्तलक्षणे निरुक्तासाधारण्येऽव्याप्तिः साध्याधिकरणवृत्तित्वघटितस्य साध्यव्याप्यत्वस्य ग्रहेसाध्याभावाधिकरणवृतित्वघटितस्य साध्याभावव्याप्यत्वस्य च ग्रहे निरुक्तव्यक्तिविशेषाऽवृत्तित्वरूपासाधारण्यज्ञानस्याप्रतिबन्धकत्वात् , सामान्यधर्मावच्छिन्नप्रकारकबुद्धौ विशेषधर्मावच्छिन्नाभावनिश्चयस्याप्रतिबन्धकतायाः सर्ववादिसिद्धित्वात् इति । **इति चेति** । स चा स्वरस इति पूर्वेण सम्बन्धः ॥

विशेष्यदलप्रयोजनम्=वृत्तिमत्वग्रहाऽविरोधित्वरूपविशेष्यदलप्रयोजनम् । स्वरूपासिद्धिः=हेतुनिष्ठाऽवृत्तित्वरूपस्वरूपासिद्धिविशेषः । ननु स्वरूपासिद्धिसामान्यम् तस्य साध्यादिव्याप्तिग्रहाऽविरोधित्वात् । पक्षाघटितहेतुनिष्ठाऽवृत्तित्वस्य स्वरूपासिद्धित्वानभ्युपगमे त्वाह **व्याप्यत्वासिद्धिर्वेति** । हेतुनिष्ठावृत्तित्वरूपव्याप्यत्वासिद्धावित्यर्थः । तथा च वृत्तिमत्वग्रहाऽविरोधित्वानुपादाने वह्निमान् गगनादित्यत्र गगननिष्ठाऽवृत्तित्वरूपव्याप्यत्वाऽसिद्धावतिव्याप्तिः गगननिष्ठाऽवृत्तित्वस्य साध्यादिसामानाधिकरण्यघटितसाध्यादिव्याप्तिग्रहविरोधित्वेन साध्यादिव्याप्ति ग्रहविरोधित्वरूप विशेषणदलस्य तत्र सत्त्वादतस्तदुपादानम् । एवं सति तादृशाऽवृत्तित्वस्य वृत्तिमत्वग्रहविरोधितया वृत्तिमत्वग्रहाऽविरोधिधर्मपदेन तस्योपादानाऽसम्भवान्नातिव्याप्तिरिति भावः ॥

**नन्वित्यादि** । वृत्तिमत्वग्रहविरोधितया=वृत्तिमत्वज्ञानप्रतिबन्धकग्रहविषयतया ।

❀ दीधितिः ❀

**धारण्यं बोध्यम् । साध्याप्रसिद्ध्यादिवारणाय विशिष्टसाध्यसाधनग्र-**

❀ गादाधरी ❀

ध्येति । यदीदृशं-यदि वृत्तिमत्त्वग्रहविरोधि । वृत्तिमत्त्वग्रहे ग्राह्याभावावगाहितया तत्सामान्याभावावगाहिज्ञानमेव विरोधि न त्वेकविशिष्टापरविशेषाभावरूपसाध्यतदभाववद्व्यावृत्तत्वज्ञानमित्यस्वरसाद्यदीति। निष्कृष्टमताभिप्रायेणाह—नोचेदिति । इदमेव निश्चयाघटितं साध्यतदभाववद्व्यावृत्तत्वमेव । एवकारेण निश्चयघटितस्य व्यवच्छेदः ॥

नन्वत्र साध्यादिव्याप्यत्वं यदि साध्यादिमदन्यावृत्तित्वे सति साध्या-

❀ विवृतिः ❀

**एतदनन्तर्भावे इति ।** साध्यतदभाववद्व्यावृत्तत्वे वृत्तिमत्वग्रहविरोधित्वविरहात् तस्य निरुक्तसव्यभिचारसामान्यलक्षणलक्ष्यत्वमेव न सम्भवतीति हृदयम् ॥

तस्य=साध्यादिमद्व्यावृत्तत्वस्य **अधिकहेत्वाभासत्वापत्तिरिति** । व्याप्तिग्रहविरोधित्वेनेत्यादिः पञ्चातिरिक्तहेत्वाभासत्वापत्तिरित्यर्थः । एतेनाधिकहेत्वाभासस्याऽप्रसिद्ध्यातदापत्तिरेव न सम्भवतीति पूर्वपक्षो निरस्तः ॥

यदीत्यभिधानप्रयोजनमाह-**वृत्तिमत्वग्रहे इति** । ग्राह्याभावावगाहितया=ग्राह्यस्य वृत्तिमत्त्वादेर्योऽभावस्तदवगाहितया । **तत्सामान्येति** । वृत्तिमत्वसामान्याभावावगाहिज्ञानमेवेत्यर्थः । विरोधि=प्रतिवन्धकम् । **न त्वेकेति** । नतु साध्यवदत्तित्वविशिष्टसाध्याभाववद्वृत्तित्वाभावरूपसाध्यतदभाववद्व्यावृत्तत्वज्ञानमित्यर्थः । प्रतिबन्धकमिति पूर्वेणान्वयः । **इत्यस्वरसादिति** । तथा च वृत्तिमत्वाग्रहाविरोधित्वं यदि साध्यतदभाववद्व्यावृत्तत्वेऽपि वर्त्तते तदा तस्य उक्तलक्षणलक्ष्यत्वेऽपि न क्षतिरिति भावः ।

**निष्कृष्टेति**। परे तु कल्पाभिप्रायेणाहेत्यर्थः । **इदमेवेति** । तथा च निश्चयाऽघटितसाध्यतदभाववद्व्यावृत्तत्वस्यैवासाधारण्यस्वरूपतया न तत्राधिकहेत्वाभासत्वापत्तिरित्याशयः।

ननु काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभावविशिष्टवह्न्यादावतिव्याप्तिः तस्य साध्यादि व्याप्तिग्रहविरोधित्वात । वृत्तिमत्वग्रहाऽविरोधित्वाच्चेत्यत आह दीधितौ **साध्याप्रसिद्ध्यादीति**। आदिना साधनाऽप्रसिद्धिपरिग्रहः । वारणाय=सव्यभिचारत्वाभावसम्पादनाय । **विशिष्टेति** । तथा च साध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाऽव्यापिका साधनतावच्छेदकविशिष्टसाधनग्रहत्वाऽव्यापिका वृत्तिमत्वग्रहत्वाऽव्यापिका च या साध्यतदभावव्याप्तिग्रहत्वव्यापकप्रतिबध्यता तन्निरूपितप्रतिबन्धकतानातिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकधर्मवत्वं लक्षणार्थ इति भावः ।

टीकायां **साध्यादिव्याप्यत्वमिति** । साध्यनिरूपितव्याप्यत्वं साध्याभावनिरू-

## ❀ गादाधरी ❀

दिमद्वृत्तित्वं तदा द्वितीयलक्षणाभेदः साध्यवन्मात्रवृत्त्यादिपदस्यापि तादृशव्याप्तिमदर्थकत्वादित्यत आह व्यापकेति। द्वितीयलक्षणस्यापि यथाश्रुतार्थपरत्वे पूर्ववद्व्याप्यविरुद्धयोर्दशाविशेषेऽसाधारणयोरसंग्रह इत्यत आह रीतिरिति। तत्रापि साध्यतदभाववन्मात्रवृत्तित्वग्रहविरोधिवृत्तिमत्त्वग्रहाविरोधिधर्मवत्त्वमेव विवक्षणीयमित्यर्थः।

उपाध्यायमतमाह केचित्त्विति। असाधारण्याभावकालः-प्रकृतहेतुनिष्ठासाधारण्याभावस्यावच्छेदकक्षणः। तेन यदा शब्दत्वादेरसाधारण्यं

## ❀ विवृतिः ❀

पित व्याप्यत्वं चेत्यर्थः। साध्यनिरूपितां व्याप्तिमाह—**साध्यवदन्येति**। साध्याभावनिरूपितां व्याप्तिमाह—**साध्यादीति**। द्वितीयलक्षणाऽभेदं प्रदर्शयति **साध्यवन्मात्रेति। तादृशेति**। साध्यवदन्यावृत्तित्वसहितसाध्यादिमदवृत्तित्वरूपव्याप्तिमदर्थकत्वादित्यर्थः। **व्यापकतेति**। तथा च हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टहेतुव्यापकसाध्याभावसमानाधिकरण्यरूपैव साध्यसाध्याभावव्याप्तिरत्रलक्षणे प्रवेशनीयेति न द्वितीयलक्षणाऽभेद इत्याशयः।

यथाश्रुतार्थपरत्वे = साध्यवन्मात्रवृत्त्यन्यत्वविशिष्टसाध्याभाववन्मात्रवृत्त्यन्यत्वरूपार्थपरत्वे। **व्याप्यविरुद्धयोरिति**। शब्दोऽनित्यः शब्दत्वादित्यत्र शब्दत्वरूपव्याप्ये शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वरूपविरुद्धे चेत्यर्थः। दशाविशेषे=पक्षे शब्दादौ साध्यसंदेहदशायां। **असंग्रह इति**। शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वस्यसाध्यवन्मात्रवृत्तित्वेन तत्र साध्यवन्मात्रवृत्त्यन्यत्वविरहात् शब्दो नित्यःशब्दत्वादित्यादौ च शब्दत्वस्य साध्याभाववन्मात्रवृत्तित्वेन तत्र साध्याभाववन्मात्रवृत्त्यन्यत्वविरहात्। पक्षे साध्यसंदेहदशायां अनित्यत्वसाध्यकशब्दत्वस्य व्याप्यस्य नित्यत्वसाध्यकशब्दत्वस्य विरुद्धस्य चासंग्रह इति हृदयम्। तत्रापि=द्वितीयलक्षणेऽपि। **साध्यतदभावेति**। वृत्तिमत्वग्रहत्वाव्यापिकाया साध्यतदभाववन्मात्रवृत्तित्वग्रहत्वव्यापिका प्रतिबध्यता तन्निरुपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयतानिरूपकतावच्छेदकधर्मवत्वमेवेत्यर्थः।

एवकारेण यथाश्रुतार्थ विवक्षाव्यवच्छेदः। **प्रकृतहेतुनिष्ठेति**। हेतुतावच्छेदकावच्छिन्ननिष्ठस्यासाधारण्याभावस्यावच्छेदकक्षण इत्यर्थः। शब्दधर्मिकसाध्यसंदेहक्षणस्यापि प्रमेयत्वावच्छिन्ननिष्ठासाधारण्याभावावच्छेदकतया साध्यसंदेहदशायां शब्दत्वादेरसाधारण्योपपत्तये हेतुतावच्छेदकावच्छिन्नार्थकं प्रकृतपदमित्यवध्येयम्। तेन=हेतुनिष्ठासाधारण्याभावावच्छेदकछणस्य विवक्षणेन। यदा=शब्दादौ पक्षेऽनित्यत्वरूपसाध्यस्य संदेहदशायाम् असाधारण्यम् = निश्चितसाध्यतदभाववद्व्यावृत्तत्वम्। तादृशक्षणस्य = शब्दत्वादिनिष्ठासा-

❀ गादाधरी ❀

तादृशक्षणस्य घटत्वादिनिष्ठासाधारण्याभावावच्छेदकत्वेपि न क्षतिः ॥

अथ शब्दादौ साध्यसन्देहदशायां शब्दत्वादावसाधारण्यव्यवहार-प्रयोजकस्य तत्कालीनसाध्यादिनिश्चयविषयीभूतघटादिवृत्तित्वविरहस्य शब्दादौ साध्यादिनिश्चयदशायामपि तत्र सत्त्वात् प्रकृतहेतुनिष्ठासाधारण्याभावस्याप्रसिद्ध्याऽव्याप्तिः । न च तत्कालीनसाध्यादिनिश्चयविषयीभूतधर्मिव्यावृत्तत्वरूपासाधारण्यघटकतत्कालादिविरहात् तदानीं तद्धटि-

❀ विवृतिः ❀

धारण्यक्षणस्य । **घटत्वादीति** । शब्दत्वादिभिन्नघटत्वादौ वर्तमानस्यासाधारण्याभावस्यावच्छेदकत्वेऽपीत्यर्थः । न क्षतिः=न तदानीम् शब्दत्वादेरसाधारण्यानुपपत्तिः । हेतुनिष्ठासाधारण्याभावावच्छेदकक्षणाऽविवक्षणे शब्दोऽनित्यः शब्दत्वादित्यत्र यदा पक्षेऽनित्यत्वस्य संदेहस्तदा शब्दत्वादावव्याप्तिः, शब्दत्वनिष्ठासाधारण्यक्षणस्यापि घटत्वनिष्ठासाधारण्याभावावच्छेदकतया तादृशक्षणावच्छिन्नसाध्यादिव्याप्तिशून्यत्वस्य शब्दत्वेऽसत्त्वादतो हेतुनिष्ठासाधारण्याभावावच्छेदकक्षणनिवेशः, तथासति शब्दत्वादिनिष्ठासाधारण्यावच्छेदककालस्य शब्दत्वादिनिष्ठासाधारण्याभावाच्छेदकत्वासम्भवात् , शब्दत्वादिनिष्ठासाधारण्याभावावच्छेदककालान्तरावच्छिन्नव्याप्तिद्वयशून्यत्वस्य शब्दत्वादेर्यदाऽसाधारण्यं तदानीं सत्त्वेन तत्र लक्षणसमन्वयः इत्याशयः ॥

प्रकृतहेतुनिष्ठासाधारण्याभावस्याप्रसिद्धिमाशंकते—**अथेति** । शब्दादौ=शब्दोऽनित्यः शब्दत्वादित्यादिस्थलीयपक्षीभूते शब्दान्तरे । साध्यसंदेहदशायाम् = अनित्यत्वसंदेहदशायाम् । शब्दत्वादौ = हेतुभूते शब्दत्वादौ । **असाधारण्ये इति** । शब्दत्वमिदानीमसाधारणमित्याकारकशब्दप्रयोगात्मकव्यवहारप्रयोजकस्येत्यर्थः । **तत्कालीनेति** । तत्कालावच्छिन्नसाध्यतदभावनिश्चयविषयीभूतघटगगनवृत्तित्वविरहस्येत्यर्थः । शब्दप्रयोगात्मकव्यवहारं प्रति व्यवहर्तव्यज्ञानस्य जनकतया तादृशजनकतावच्छेदकत्वेन निरुक्तवृत्तित्वविरहस्य तादृशव्यवहारप्रयोजकत्वमित्याशयः ॥

साध्यादिनिश्चयदशायामपि=अनित्यत्वादिनिश्चयदशायामपि । तत्र=शब्दत्वादौ । **सत्त्वादिति** । घटगगनवृत्तित्वविरहस्य सर्वदैव शब्दत्वे विद्यमानत्वादिति भावः । **प्रकृतेति** । प्रकृतशब्दत्वरूपहेतुनिष्ठासाधारण्याभावस्येत्यर्थः । **अव्याप्तिरिति** । तथा च शब्दत्वरूपहेतुनिष्ठासाधारण्याभावस्याप्रसिद्ध्या तादृशाभावकालावच्छिन्नव्याप्तिद्वयशून्यत्वस्य तत्रोपपादनमसम्भवीति हृदयम् ।

**नचेति** । वाच्यमिति परेणान्वयः । **तत्कालीनेति** । शब्दादौ साध्यसंशयकालीनसाध्यादिनिश्चयविषयघटादिवृत्तित्वाभावरूपासाधारण्यघटकीभूतस्य पक्षादौ साध्यसंदेहकालरूपतत्कालस्य विरहादित्यर्थः । तदानीं=शब्दादौ साध्यनिश्चयकाले ।

❀ दीधितिः ❀

हाविरोधित्वं वाच्यम्। व्यापकसामानाधिकरण्यमिह व्याप्यत्वम् तेन

❀ गादाधरी ❀

तासाधारण्यविरहोऽक्षत एवेति वाच्यम्। प्रतियोगिकोटिप्रविष्टविशेषणासत्त्वस्याभावीयविशिष्टाभावाप्रयोजकत्वात् अन्यथा दण्डाद्यसत्त्वे दण्डविशिष्टपुरुषाभावादेरिव दण्डविशिष्टपुरुषाभावाद्यभावस्यापि सत्त्वप्रसङ्गात्। यदि च प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतरनिश्चयक्षण एवासाधारण्याभावकालेत्यनेन विवक्षितमित्युच्यते,'तदा शब्दोऽनित्यः,शब्द-

❀ विवृतिः ❀

**तद्घटितेति**। पक्षे साध्यसंशयकालरूपतत्कालघटितसाध्यादिनिश्चयविषयधर्मिवृत्तित्वाभावरूपासाधारण्याभाव इत्यर्थः। **अक्षत एवेति**। तथा च यदा शब्दादौ अनित्यत्वादेर्निश्चयः तदा पक्षे साध्यसंदेहकालरूपतत्कालाभावात् तदानीं शब्दत्वादौ तत्कालावच्छिन्नत्वविशेषितसाध्यादिनिश्चयविषयधर्मिवृत्तित्वाभावाभावरूपासाधारण्याभावस्य वर्त्तमानत्वात् कुतः प्रकृतहेतुनिष्ठासाधारण्याभावस्याऽप्रसिद्धिरित्याशयः।

**प्रतियोगीति**। साक्षात्परम्परासाधारणप्रतियोगितावच्छेदकतापन्नविशेषणाऽसत्वस्येत्यर्थः। **अभावीयेति**। तादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकाभावविशिष्टाभाबाऽप्रयोजकत्वादित्यर्थः। अन्यथा अभावप्रतियोगिविशेषणाऽसत्त्वस्य प्रतियोगिविशेषिताभावाभावप्रयोकत्वे। दण्डाद्यसत्त्वे=दण्डाभावदशायां। **दण्डेति**। दण्डिपुरुषो नास्तीत्याकारकप्रतीतिसिद्धाभावादेरिवेत्यर्थः। **दण्डविशिष्टेति**। दण्डविशिष्टपुरुषाभावो·नास्तीत्याकारकप्रतीतिसिद्धदण्डिपुरुषाभावाभावस्यापीत्यर्थः।

**सत्वप्रसंगादिति**। दण्डशून्यपुरुषवति देशे इत्यादिः। तथा च दण्डविशिष्टपुरुषाभावाभावो यदि दण्डाभावप्रयुक्तः स्यात् तदा दण्डशून्यपुरुषयुक्तदेशवृत्तितावानपि स्यात् दण्डिपुरुषाभाववदित्याकारकापत्तिभिया स्वप्रतियोगिविशेषणाभावस्य स्वाभावाभावप्रयोजकत्वं नांगीकर्त्तव्यम्। एवं च तत्कालावच्छिन्नसाध्यादिनिश्चयविषयधर्मिवृत्तित्वाभावाभावरूपासाधारण्याभावस्य तत्कालविरहाप्रयोज्यतया प्रकृतहेतुनिष्ठासाधारण्याभावस्याप्रसिद्धिरस्त्येवेति भावः।

**यदि चेति**। इत्युच्यते इति परेणान्वयः। **प्रकृतेति**। हेतुतावच्छेदकावच्छिन्नवद्विशेष्यको यः साध्यतदभावान्यतरनिश्चयस्तदधिकरण क्षण एवेत्यर्थः। शब्दादौ साध्यसंदेहदशायां घटत्वावच्छिन्नवति प्रमेयत्वावच्छिन्नवति वार्थसाध्यादिनिश्चयसत्त्वेऽपि शब्दत्वादेरसाधारण्यस्येष्टतया हेतुतावच्छेदकावच्छिन्नाकम् प्रकृतपदमिति ध्येयम्। **असाधारण्याभावकालइति**। प्रकृतहेतुनिष्ठेत्यादिः। **विवक्ष-**

❀ गादाधरी ❀

त्वादित्यादौ यदा क्वचिदपि साध्यस्य साध्याभावस्य वा निश्चयो नास्ति तदा सव्यभिचारत्वप्रसङ्गः-तादृशक्षणस्य प्रकृतहेतुमद्विशेष्यकसाध्यादिनिश्चयस्याप्यनधिकरणत्वेन तदा तादृशनिश्चयक्षणावच्छिन्नसाध्यादिव्याप्त्यभावस्य हेतौ सत्त्वात् तदा चासाधारण्यघटकसाध्यादिनिश्चयासत्त्वेनासाधारण्यस्य साधारण्यस्य च विरहेणेष्टापत्तेरयोगात्। प्रकृतहेतुनिष्ठा-

❀ विवृतिः ❀

**त्तामिति**। तथा च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा साध्यसंदेहस्तदा हेतुमद्विशेष्यकसाध्यादिनिश्चयस्यासत्त्वात् कालान्तरीणशब्दादिविशेष्यकसाध्यादिनिश्चयाधिकरणक्षणावच्छिन्नव्याप्तिद्वयशून्यत्वस्य साध्यसंशयकाले शब्दत्वे सत्त्वादुक्तविवक्षायाम् असाधारणे लक्षणसमन्वय इत्याशयः।

यदा = यस्मिन्क्षणे। क्वचिदपि=हेतुमति तद्भिन्नेऽपि च। इदञ्चेष्टापत्तिव्युदासायाभिहितम्। तदा = तस्मिन् क्षणे। सव्यभिचारत्वप्रसंगः=तदानीं शब्दत्वादौ अतिव्याप्तिः। सव्यभिचारत्वप्रसंगे हेतुमाह **तादृशक्षणस्येत्यादि**। साध्यादिनिश्चयानधिकरणक्षणस्येत्यर्थः। **प्रकृतेति**। शब्दत्वादिमद्विशेष्यकसाध्यसाध्याभावनिश्चयस्याप्यनधिकरणत्वेनेत्यर्थः। अपिना तादृशक्षणस्य हेतुमद्भिन्नविशेष्यकसाध्यादिनिश्चयानधिकरणत्वं सूचितम्। तदा = तादृशनिश्चयानधिकरणक्षणे। **तादृशेति**। कालान्तरीणसाध्यादिनिश्चयक्षणावच्छिन्नसाध्यादिव्याप्त्यभावस्येत्यर्थः। हेतौ= शब्दत्वादौ। तथा च यस्मिन्क्षणे शब्दत्ववति शब्दादौ साध्यादिनिश्चयो नास्ति तदानीं शब्दत्वादेरसाधारण्यापत्तिः। कालान्तरीणशब्दादिविशेष्यकसाध्यादिनिश्चयक्षणावच्छिन्नसाध्यादिव्याप्तिशून्यत्वस्य साध्यादिनिश्चयानधिकरणक्षणे शब्दत्वादौ सत्त्वादिति हृदयम्।

ननु तदानीमसाधारण्यमिष्टमेवेत्यत आह **तदेति**। शब्दादिधर्मिकसाध्यादिनिश्चयानधिकरणक्षणे चेत्यर्थः। **असाधारण्येति**। तत्कालावच्छिन्नसाध्यादिनिश्चयविषयधर्मिव्यावृत्तत्वरूपासाधारण्यघटकतत्कालावच्छिन्ननिश्चयासत्त्वेनेत्यर्थः। साधारण्यस्यापि असाधारण्याभावघटिततया शब्दत्वादेरसाधारण्यस्येष्टापत्त्यसम्भवेन साधारण्यस्यापि इष्टापत्तिर्न सम्भवतीत्याशयेनाह–**साधारण्यस्येति**। **अयोगादिति**। तथा च शब्दत्ववति साध्यादिनिश्चयविरहकाले शब्दत्वादेरलक्ष्यताध्रौव्ये उक्तविवक्षायां तदानीं शब्दत्वादौ अतिव्याप्तिःकालान्तरीणतादृशसाध्यादिनिश्चयक्षणावच्छिन्नसाध्यादिव्याप्तिशून्यत्वस्य शब्दत्वादौ सत्त्वादिति भावः।

उक्तातिव्याप्तिनिरासाय पुनः शंकते–**प्रकृतेति**। हेतुतावच्छेदकावच्छिन्ननिष्ठं

❀ गादाधरी ❀

साधारण्यघटको यो यस्तदन्यक्षणस्य विवक्षणे तु यादृशसाध्यकस्थले यादृशसाधारणस्य हेतोः कदापि नासाधारण्यं तत्राव्याप्तिः—प्रकृतहेतुनिष्ठस्यासाधारण्यस्याप्रसिद्धेः ।

मैवम् । तत्तत्कालावच्छिन्नत्वविशिष्टस्य तत्तत्कालीनसाध्यादिनिश्चय-

❀ विवृतिः ❀

यदसाधारण्यं तद्घटको यो य इत्यर्थः । सामान्यतोऽसाधारण्यघटकभिन्नत्वविवक्षणेऽप्रसिद्धिः, सर्वस्यापि क्षणस्यान्ततो गगनादिनिष्ठासाधारण्यघटकत्वात् । किञ्चिन्निष्ठासाधारण्यघटकभिन्नत्वविवक्षणे शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्दत्वादेरसाधारण्यं तत्कालस्यापि घटत्वादिनिष्ठासाधारण्यघटकभिन्नतया पक्षे साध्यसंदेहदशायामपि शब्दत्वादावव्याप्तिः । हेतुनिष्ठासाधारण्यघटकभिन्नत्वविवक्षणेऽपि जातित्वावच्छिन्ननिष्ठासाधारण्यघटकभिन्नत्वस्य शब्दत्वत्वावच्छिन्ननिष्ठासाधारण्यघटकक्षणे सत्त्वादव्याप्तिरतो हेतुतावच्छेदकावच्छिन्नार्थकं प्रकृतहेतुपदम् । कालान्तरीणशब्दत्वादिनिष्ठासाधारण्यघटकभिन्नत्वस्य एतत्कालरूपे शब्दत्वनिष्ठासाधारण्यघटकक्षणे सत्त्वात्तदानीं शब्दत्वादाव्याप्तिरतो यो य इति वीप्सानुसरणमिति ध्येयम् ।

**विवक्षणे त्विति** । तथा च यदा क्वचिदपि साध्यस्य तदभावस्यापि निश्चयो नास्ति तदापि शब्दत्वादेर्न सव्यभिचारत्वप्रसंगः, तादृशनिश्चयक्षणस्य कालान्तरीणशब्दत्वनिष्ठासाधारण्यघटकभिन्नतया तत्कालावच्छिन्नसाध्यादिव्याप्तिशून्यत्वस्य शब्दत्वादौ विरहादिति भावः ।

यादृशसाध्यकस्थले = धूमादिसाध्यकस्थले । यादृशसाधारणस्य हेतोः = वह्न्यादिरूपसाधारणस्य हेतोः । नासाधारण्यम् = निश्चितसाध्यतदभाववद्व्यावृत्तत्वम् । तत्र = साधारणे हेतौ । **प्रकृतेति** । वह्नित्वाद्यवच्छिन्ननिष्ठस्य निश्चितसाध्यादिमद्व्यावृत्तत्वस्याप्रसिद्धेरित्यर्थः । उक्तविवक्षायाम् यादृशस्थले धूमादिसाध्यकवह्न्यादिहेतौ कदापि न निश्चितसाध्यतदभाववद्व्यावृत्तत्वं तादृशस्थले निरुक्तवह्निरूपसाधारणहेतावव्याप्तिः, वह्निरूपहेतुनिष्ठासाधारण्यस्याप्रसिद्ध्या प्रकृतहेतुनिष्ठासाधारण्यघटकक्षणस्याप्यप्रसिद्धेरित्याशयः ।

अथेत्यादेरुत्तरं **मैवमिति** । **तत्तत्कालेति** । यद्यत्काले यस्यासाधारण्यं तत्तत्कालावच्छिन्नत्वविशिष्टस्येत्यर्थः । यदा शब्दत्वादेरसाधारण्यं तदानीमपि कालान्तरविरहेण कालान्तरावच्छिन्नत्वविशिष्टस्यासाधारण्यस्य शब्दत्वादावभावसत्त्वात्तदानीं शब्दत्वादाव्याप्तिरतः तत्तत्कालावच्छिन्नत्वविशिष्टस्येत्युक्तम् । तत्तदित्यनुक्तावपि

※ गादाधरी ※

विषयव्यावृत्तत्वरूपासाधारण्यस्य प्रकृतहेतुनिष्ठाभावावच्छेदककाल एवासाधारण्याभावकालः हेतुमति साध्यादिनिश्चयदशायां कालान्तरावच्छिन्नस्य कालान्तरघटितासाधारण्यस्याभावकूटो हेतौ सुलभ एव। यादृशसाधारणहेतोः कदापि नासाधारण्यं तत्राप्यन्ततो गगनादिनिष्ठप्रकृतसाध्यकासाधारण्यस्याभावकालः प्रसिद्ध एवेति न दोषः।

※ विवृतिः ※

उक्तदोषतादवस्थ्यम्, किञ्चित्कालावच्छिन्नत्वविशेषितस्य शब्दत्वादिनिष्ठासाधारण्यस्यासाधारण्यकालेऽपि शब्दत्वादौ सत्त्वादतस्तत्तदित्युक्तम्।

**तत्तत्कालीनेति**। तत्तत्कालावच्छिन्नो यः साध्यादिनिश्चयः तद्विषयधर्मिव्यावृत्तत्वरूपासाधारण्यस्येत्यर्थः **प्रकृतेति**। हेतुतावच्छेदकावच्छिन्ननिष्ठाभावावच्छेदककाल एवेत्यर्थः। शब्दत्वादिनिष्ठासाधारण्यकालस्यापि घटत्वादिनिष्ठस्य जातित्वावच्छिन्ननिष्ठस्य वा असाधारण्याभावस्यावच्छेदकतया असाधारण्यकालेऽपि शब्दत्वादेरसाधारण्यानुपपत्तिः अतः प्रकृतहेतुनिष्ठेत्युक्तम्। **हेतुमतीति**। शब्दत्ववति शब्दे इत्यर्थः। **साध्यादीति**। शब्दोऽनित्यः शब्दत्वादित्यादौ शब्देऽनित्यत्वरूपसाध्यस्य शब्दो नित्यः शब्दत्वादित्यादौ च शब्दे नित्यत्वाभावरूपसाध्याभावस्य निश्चयदशायामित्यर्थः। कालान्तरावच्छिन्नस्य = निरुक्तनिश्चयकालातिरिक्तकालावच्छिन्नस्य। **कालान्तरेति**। कालान्तरावच्छिन्नसाध्यादिनिश्चयविषयव्यावृत्तत्वाभावरूपस्यासाधारण्यस्याभावकूट इत्यर्थः। हेतोः=शब्दत्वादौ। **सुलभ इति**। शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षीभूते शब्दे साध्यादिनिश्चयस्तदा कालान्तरावच्छिन्नासाधारण्याभावस्य शब्दत्वादौ सत्त्वेन तादृशाभावकालावच्छिन्नसाध्यादिव्याप्तिशून्यत्वस्य शब्दत्वादौ विरहात् न तदानीं तत्रातिव्याप्तिरित्याशयः।

नन्वेवम् यादृशासाधारणहेतोः कदापि नासाधारण्यम् प्रसिद्धम् तत्र का गतिरित्यत आह—**यादृशेति**। तत्रापि=तादृशसाधारणहेतावपि। गगनाद्यतिरिक्ते सर्वत्र निश्चितसाध्यादिमद्व्यावृत्तत्वसत्त्वेऽपि गगनादेस्तथात्वं कदापि न सम्भावनीयमित्याशयेनाह—**गगनादीति**। गगनादौ वर्त्तमानं यत् निश्चितसाध्यादिमद्व्यावृत्तत्वरूपमसाधारण्यं तस्येत्यर्थः। अभावकालः=अभावावच्छेदककालः। **न दोष इति**। तथा च यादृशसाधारणहेतौ असाधारण्यं कदापि न प्रसिद्धं तत्रापि साधारणहेतौ गगनादौ वर्त्तमानस्यासाधारण्यस्याभावसत्त्वात्तादृशाभावकालावच्छिन्नसाध्यादिव्याप्तिशून्यत्वस्य सर्वदैव साधारणहेतोरिति तत्र लक्षणसमन्वय इति भावः।

ननूक्तकल्पे यदा शब्दत्वादेरसाधारण्यं तदानीमपि घटत्वादिनिष्ठासाधारण्या-

❀ दीधितिः ❀

**च द्वितीयस्य भेदः। रीतिस्तुल्यैव।**

❀ गादाधरी ❀

अथवा प्रकृतहेतुमद्विशेष्यकसाध्यतदभावान्यतरनिश्चयानधिकरणत्व-किञ्चिद्विशेष्यकसाध्यतदभावनिश्चयवत्त्वोभयाभाववान् क्षण एवासाधारण्याभावकालेत्यनेन विवक्षितः,। शब्दोऽनित्यः शब्दत्वादित्यादौ यदा क्वचिदपि साध्यस्य तदभावस्य वा न निश्चयः तत्क्षणे प्रकृतहेतुमद्विशेष्य-कसाध्यतदभावान्यतरनिश्चयानधिकरणत्वसत्त्वेपि साध्यतदभावनिश्चय-

❀ विवृतिः ❀

भावस्य हेतौ सत्त्वादव्याप्तिः, न च तत्तत्कालावच्छिन्नत्वविशेषितं यद्यत् असाधारण्यं तत्तत्प्रत्येकाभावकूटस्य प्रकृतहेतौ विवक्षणान्नेयमव्याप्तिरिति वाच्यम्, हेतुभिन्ननि-ष्ठस्य तादृशासाधारण्याभावकूटस्य विवक्षणे पूर्वोक्ताव्याप्त्यापत्तेः हेतुनिष्ठस्य तस्या-भावकूटविवक्षणे तु यादृशसाधारणहेतोः कदापि नासाधारण्यं तादृशसाधारणेऽव्या-प्त्यापत्तेः। नच हेतुनिष्ठं हेतुभिन्ननिष्ठं च यत्यत् तादृशासाधारण्यं तत्तत् प्रत्येका-भावकूटविवक्षणान्नदोष इति वाच्यम्,तथा सति यादृशस्थलविशेषे शब्दत्वादेः कदापि नासाधारण्यं तादृशस्थलविशेषे प्रकृतहेतुरूपशब्दत्वनिष्ठतादृशासाधारण्यस्याप्रसिद्ध्या तदभावस्य शब्दत्वादावुपपादयितुमशक्यत्वादिति विभाव्याहाथवेति॥ **प्रकृतेति।** हेतुतावच्छेदकावच्छिन्नवद्विशेष्यको यः साध्यतदभावान्यतरनिश्चयस्तदनधिकरणत्व किञ्चिद्धर्मावच्छिन्नविशेष्यको यः साध्यस्य तदभावस्य वा निश्चयस्तद्वत्त्वोभयाभाव-वानित्यर्थः। शब्दोऽनित्यः शब्दत्वादित्यादौ यदा क्वचिदपि साध्यादेर्न निश्चयः तदा विशिष्टस्याप्रसिद्ध्या विशिष्टाभावमपहायोभयाभावो विवक्षितः, अन्यतराभाव-निवेशेऽपि यदा क्वचिदपि साध्यादेर्न निश्चयस्तत्क्षणेऽन्यतराभावस्यासत्त्वात्। तदानीं शब्दत्वादावतिव्याप्तिरतोऽन्यतराभावो नाभिहितः। नच किञ्चिद्विशेष्यकसाध्यतद-भावनिश्चयवत्त्वाभाववान् क्षण एवासाधारण्याभावकाल इत्यनेन विवक्ष्यताम् किमु-भयाभावनिवेशेनेति वाच्यम्, यदा शब्दादौ साध्यादेर्निश्चयःतत्क्षणे किञ्चिद्विशेष्यक-साध्यादिनिश्चयवत्त्वस्य सत्त्वेन तदभाववत्क्षणपदेन तादृशक्षणस्य धर्तुमशक्यत्वात् तदानीं शब्दत्वादावतिव्याप्त्यापत्तेरितिध्येयम्।

ननु शब्दोऽनित्यः शब्दत्वादित्यादौ यदा क्वचिदपि साध्यादेर्न निश्चयस्तदा का गतिरित्यत आह- **शब्दोऽनित्य इति।** तत्क्षणे=साध्यादिनिश्चयानधिकरणक्षणे। **प्रकृतेति।** शब्दादिविशेष्यकसाध्यतदभावान्यतरनिश्चयानधिकरणत्वसत्वेऽपीत्यर्थः। **साध्येति।** कालान्तरे वर्त्तमानस्य साध्यतदभावनिश्चयवत्त्वस्याभावेनेत्यर्थः। तदा=

✻ गादाधरी ✻

वत्त्वाभावेनोभयाभावोऽक्षत एवेति तदा न सव्यभिचारिताप्रसङ्गः।

प्रकृतहेतुनिष्ठासाधारण्यघटको यो यत्तदन्यक्षण एव विवक्षणीयः यत्साध्यकस्थले यस्य साधारणहेतोः कदापि नासाधारण्यं तत्साध्यके तत्स्थलीयलक्षणेऽसाधारण्याभावकालावच्छिन्नत्वं नोपादेयमेव साध्यसाधनभेदेन लक्षणभेदादित्यपि कश्चित्।

विशेषणाभावात्–असाधारण्याभावकालावच्छिन्नत्वरूपं यद्व्याप्तिद्वयस्य विशेषणं तदभावात्। संग्रहः—तादृशविंशेषणविशिष्टव्याप्तिद्वयस्या-

✻ विवृतिः ✻

तादृशक्षणे। न **सव्यभिचारताप्रसंग इति**। तथा च निरुक्तोभयाभाववत्तादृशक्षणावच्छिन्नसाध्यादिव्याप्तिशून्यत्वस्य शब्दत्वादौ विरहान्न तदानीं शब्दत्वादावतिव्याप्तिरिति भावः।

मतान्तरमाह–**प्रकृतेति**। नन्वेवं यादृशसाधारणहेतोः कदापि नासाधारण्यं तत्राव्याप्तिरत आह–**यत्साध्यकस्थलेति**। तत्स्थलीयलक्षणे=तादृशसाध्यहेतुकस्थलीयलक्षणे। **नोपादेयमेवेति**। तथाच तादृशस्थलेऽसाधारण्याभावकालावच्छिन्नत्वाविशेषितसाध्यादिव्याप्तिशून्यत्वमेव लक्षणं वक्तव्यम्, साधारणहेतौ कदाचिदापि साध्यादिव्याप्तिविरहात् तत्र लक्षणसमन्वय इति भावः। लक्ष्यभेदेन लक्षणस्य नानात्वं न युक्तिसहमित्यस्वरसः कश्चिदित्युक्त्वा सूचितः। अधिकमभिहितम् प्राक्॥

शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्दत्वादेरसाधारण्यं तदा शब्दत्वादौ साध्यनिरूपितव्याप्तेः सत्त्वेऽपि असाधारण्याभावकालावच्छिन्नत्वविशेषिततादृशव्याप्तेरसाधारण्याभावकालावच्छिन्नत्वरूपविशेषणाभावेन तदानीं शब्दत्वादावभावसत्त्वात् लक्षणसमन्वयार्थं विशेषणाभावादित्यस्य व्याख्यान**माहासाधारण्येति**। तदभावात्=असाधारण्यकालावच्छिन्नत्वरूपविशेषणस्याभावात्। **तादृशेति**। असाधारण्याभावकालावच्छिन्नत्वरूपविशेषणविशिष्टसाध्यादिव्याप्त्यभाववत्त्वमित्यर्थः। अत्र च मते तादृशविशेषणावच्छिन्नसाध्यव्याप्तिशून्यत्वे सति साध्याभावव्याप्तिशून्यत्वमेव विवक्षणीयम्, नतु तादृशव्याप्तिद्वयत्वावच्छिन्नाभावत्वं, तथा सति यदा शब्दत्वादेर्नासाधारण्यं तदापि साध्याभावव्याप्यत्वस्य शब्दत्वादौ विरहेण तादृशव्याप्तिद्वयत्वावच्छिन्नाभावस्य तत्राक्षतत्वात् तदानीं शब्दत्वादेरसाधारण्यापत्तिः। स्यात् नचैवं प्रकृतहेतुनिष्ठं साध्यतदभावव्याप्यत्वमप्रसिद्धम् एकस्योभयाव्याप्यत्वात्, हेतुभिन्ननिष्ठ तादृशव्याप्यत्वाभावविवक्षणे तु सर्वदैव तादृशव्याप्यत्वाभावस्य प्रकृतहेतुनिष्ठतया असाधारण्याभावकालेऽपि शब्दत्वादेरसाधारण्यापत्तिदुर्वारैवेति वाच्यम्, असाधार-

❀ दीधितिः ❀

**केचित्तु असाधारण्याभावकालावच्छिन्नसाध्यतदभावव्याप्तिशून्य-**

❀ गादाधरी ❀

**भाववत्त्वम्। एतन्मते च पूर्वलक्षणे साध्याभाववदवृत्तित्वघटितायां उत्तरत्र च तद्वदन्यावृत्तित्वघटिताया व्याप्तेरनुप्रवेशान्न लक्षणयोरभेदः। स्वव्यापकसामानाधिकरण्यरूपव्याप्तेरभावश्च निवेशयितुमशक्यः तादृश-व्याप्तेः स्वत्वघटिततया हेतुभेदेन भेदात् साधारणहेतुकस्थले तदप्रसि-**

❀ विवृतिः ❀

ण्याभावकालावच्छिन्नहेत्वघटितसाध्याभाववदवृत्तित्वरूपसाध्यव्याप्यत्वसामान्याभाव-वत्त्वे सति हेत्वघटिततादृशसाध्यवदवृत्तित्वरूपसाध्याभावव्याप्यत्वसामान्याभावस्य विवक्षितत्वात्। असाधारण्याभावकाले शब्दोऽनित्यः शब्दत्वादित्यादौ सत्यन्तार्थ-स्य शब्दत्वादौ विरहेण तदानीं शब्दत्वादेरसाधारण्यापत्त्यनवकाशादिति ध्येयम्।

ननूक्तलक्षणे स्वव्यापकसाध्यसामानाधिकरण्यरूपैव व्याप्तिर्वाच्या अन्यथा द्विती-यलक्षणस्य साध्यवदन्यावृत्तित्वादिरूपव्याप्तिघटिततया तेन पौनरुक्त्यप्रसंगः स्यात्। तथाच स्वव्यापकसाध्यसामानाधिकरण्यरूपायाः व्याप्तेस्तत्तद्धेतुभेदेन भिन्नतया तादृ-शतच्छून्यत्वस्य लक्षणार्थत्वे धूमवान् वह्नेरित्यादौ वह्निहेतावव्याप्तिः वह्निव्यापक धूमसामानाधिकरण्यरूपव्याप्तेरप्रसिद्ध्या तदभावस्य प्रकृतहेतावुपपादयितुमशक्य-त्वादित्यत आह **एतन्मते चेति**। निरुक्तोपाध्यायमते चेत्यर्थः। पूर्वलक्षणे=साध्या-व्याप्यत्वादिलक्षणे। **साध्याभावेति**। तथा च निरुक्तव्याप्तेः साधनभेदेऽप्यभिन्न-तया असाधारण्याभावकालावच्छिन्नसाध्याभाववदवृत्तित्वशून्यत्वे सति साध्यवद-वृत्तित्वशून्यत्वमित्यस्यैव लक्षणार्थतायाः पर्य्यवसिततया न धूमवान् वह्नेरित्यादाव-व्याप्तिः। आर्द्रेन्धनसंयोगादौ प्रसिद्धायाः धूमाभाववदवृत्तित्वरूपायाः व्याप्तेरभावस्य वह्न्यादौ सत्त्वादिति भावः।

उत्तरत्र च = साध्यवन्मात्रेत्यादिलक्षणे च। **तद्वदन्येति**। तथा चासाधार-ण्याभावकालावच्छिन्नसाध्यवदन्यावृत्तित्वशून्यत्वे सति साध्याभाववदन्यावृत्तित्व-शून्यत्वमेव द्वितीयलक्षणार्थ इति भावः। **न लक्षणयोरभेद इति**। पूर्वलक्षणस्य साध्यात्यन्ताभावघटितव्याप्तिघटितत्वात्, द्वितीयलक्षणस्य तु साध्यवदन्योन्याभाव-रूपव्याप्ति घटितत्वात् पूर्वोत्तरलक्षणयोर्भेद इत्याशयः।

ननु तादृशस्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिशून्यत्वविवक्षणे को दोष इत्यत आह-**तादृशव्याप्तेरिति**। स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तेरित्यर्थः। स्वत्वघटिततया=तत्तद्व्यक्तित्वघटिततया। हेतुभेदेन=धूमालोकादिहेतुभेदेन। सा-

❀ दीधितिः ❀

त्वं विवक्षितं विशेषणाभावात् । वस्तुतो व्याप्यस्य विरुद्धस्य वा असा-

❀ गादाधरी ❀

द्ध्याऽभावग्रहाऽसंभवात् । शिरोमणिव्याख्यायां च तादृशव्याप्तेर-प्रसिद्धत्वेपि तद्घटकपदार्थानां परस्परोपश्लेषावगाहिज्ञानविरोधिताया एव निवेशेनानुपपत्त्यभावात् व्यापकसामानाधिकरण्यमिह व्याप्यत्व-मित्युक्तत्वात् । एवमेतन्मते दुष्टलक्षणपर एवायं ग्रन्थो न तु दोषलक्षणप-रोपि तादृशव्याप्तिद्वयशून्यत्वस्य व्यभिचारपदार्थत्वाभावादित्यवधेयम् ।

❀ विवृतिः ❀

धारणहेतुकस्थले = धूमादिसाध्यकवह्न्यादिहेतुकस्थले । तदप्रसिद्ध्या = वह्निव्यापक-धूमसामानाधिकरण्यरूपव्याप्त्यप्रसिद्ध्या । **अभावग्रहाऽसम्भवादिति** । अभा-वग्रहे प्रतियोगिप्रसिद्धेर्हेतुत्वात् तादृशाभावस्य प्रमाणसिद्धत्वमेव न सम्भवतीति हृदयम् ।

इदमुपलक्षणम्—शब्दोऽनित्यः शब्दत्वादित्यादौ धूमवान् वह्नेरित्यादौ च स्वव्यापकसाध्याभावसामानाधिकरण्यरूपसाध्याभावव्याप्तेरप्यप्रसिद्धिर्द्रष्टव्या ।

ननु दीधितिकारमते प्रथमलक्षणस्य स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्ति-घटिततया तन्मते कथं न साधारणहेतुकस्थले तादृशव्याप्तेरप्रसिद्धिरत आह-**शिरोमणीति** । तादृशव्याप्तेः = स्वव्यापकसाध्यसामानाधिकरण्यरूपायाः व्याप्तेः । तद्घटकपदार्थानाम् = निरुक्तव्याप्तिघटकपदार्थानां । **परस्परोपश्लेषेति** । हेतुवि-षयतानिरूपितव्यापकत्वविषयतानिरूपितसाध्यविषयतानिरूपितसामानाधिकरण्यविष-यताशालिग्रहविरोधिताया इत्यर्थः । **अनुपपत्त्यभावादिति** । साधारणहेतुकस्थले तादृशव्याप्तेरप्रसिद्धत्वेऽपि निरुक्तविषयताशालिविरोधित्वमादायैव दीधितिकारमते साधारणादौ लक्षणसमन्वयसम्भव इति भावः । इह = प्रथमलक्षणे ॥

एतन्मते = उपाध्यायमते । दुष्टलक्षणपरः = दुष्टलक्षणबोधेच्छयोच्चरितः । **अयं-ग्रन्थः** = असाधारण्याभावेत्यादिग्रन्थः । न तु दोषलक्षणपरोपि = नतु दोषलक्षणबो-धेच्छयोच्चरितोऽपि । अयं ग्रन्थ इतिपूर्वेणान्वयः ।

निषेधे हेतुमाह—**तादृशेति** । असाधारण्याभावकालावच्छिन्नत्वविशेषितव्याप्ति-द्वयशून्यत्वस्येत्यर्थः । **व्यभिचारपदार्थत्वाभावादिति** । व्याप्त्यभावस्यकथंचिद् व्यभिचारपदार्थत्वसम्भवेऽपितादृशविशेषणविशिष्टव्याप्तिद्वयविरहस्य, केवलव्याप्ति-द्वयविरहस्य वा व्यभिचारपदार्थत्वं नास्त्येवेत्याशयः ॥

❀ दीधितिः ❀

**धारणस्य सङ्ग्रह इत्याहुः । तच्चिन्त्यम् ।**

❀ गादाधरी ❀

**तच्चिन्त्यमिति । चिन्ताबीजं चासाधारण्यशरीरे तत्तत्पुरुषीयनिश्चयनिवेशस्यावश्यकतया सामान्यलक्षणस्य पुरुषविशेषनियन्त्रितत्वापत्तिः । न चेष्टापत्तिः । तथासति साधारणहेतावप्यसाधारणहेताविवामुकं प्रत्ययं व्यभिचारीति व्यवहारप्रसङ्गात् । एवं सव्यभिचारपदस्य पारिभाषिकत्वमपि ।**

❀ विवृतिः ❀

**चिन्ताबीजं चेति** । दीधितिकृतामिति शेषः । असाधारण्यशरीरे = निश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपासाधारण्यशरीरे । घटकत्वं सप्तम्यर्थः । तस्य च तत्तत्पुरुषीयनिश्चयेऽन्वयः । **तत्तत्पुरुषीयेति** । तत्तत्पुरुषीयत्वेन निश्चयनिवेशस्येत्यर्थः । **आवश्यकतयेति** । तथा च तत्तत्पुरुषीयनिश्चयविषयीभूतसाध्यादिमद्व्यावृत्तत्वमेवासाधारण्यं वक्तव्यम् , निश्चये तत्तत्पुरुषीयत्वाऽनिवेशे शब्दोऽनित्यः शब्दत्वादित्यादौ चैत्रस्य शब्दादौ साध्यनिश्चयदशायां शब्दत्वादेः शब्दादौ साध्यसंदेहवत्पुरुषान्तरं प्रत्यप्यसाधारण्यं न स्यात् शब्दत्वादौ सामान्यतः साध्यादिनिश्चयविषयीभूतधर्मिव्यावृत्तत्वस्याभावादिति भावः ।

सामान्यलक्षणस्य = तत्तत्पुरुषीयनिश्चयविषयीभूतसाध्यादिमद्व्यावृत्तत्वाभावकालावच्छिन्नसाध्यादिव्याप्तिशून्यत्वरूपसामान्यलक्षणस्य । पुरुषविशेषनियन्त्रितत्वापत्तिः = तत्तत्पुरुषनियन्त्रितत्वापत्तिः । चिन्ताबीजमिति पूर्वेण सम्बन्धः । इष्टापत्तौ बाधकमाह—**तथा सतीति** । सामान्यलक्षणस्य पुरुषविशेषनियन्त्रितत्वे सतीत्यर्थः । **साधारणहेताविवत्यादि** । तथा च सामान्यलक्षणस्य पुरुषविशेषनियन्त्रितत्वे यथाऽसाधारणोहेतुरमुकं प्रति व्यभिचारीति व्यवहारो भवति तथा साधारणोऽपि हेतुः अमुकं प्रति व्यभिचारीतिव्यवहारोऽपि स्यात् । न चेष्टापत्तिः साधारणस्य नित्यदोषतया सकलं प्रत्येव साधारणहेतोः व्यभिचारित्वादित्याशयः । निरुक्तव्यवहारस्य कदाचिदिष्टापत्तिसम्भवे**ऽप्याहैवमिति** । पारिभाषिकत्वमपि = शास्त्रकारीयसंकेतितत्वमपि । चिन्ताबीजमिति पूर्वेणान्वयः ।

यद्यप्ययमसाधकः वृत्तिमत्त्वग्रहाऽविरोधिसाध्यतदभावव्याप्तिग्रहविरोधिधर्मावच्छिन्नवत्त्वादित्यनुमाने हेतुघटकनिरुक्तधर्मविशेषणीभूतंवृत्तिमत्त्वग्रहाविरोधित्वदलं, साध्याभावव्याप्तिग्रहविरोधित्वदलं च व्यर्थम् अवृत्त्यादेर्विरुद्धस्याप्यसाधकतया तत्र तत्र व्यभिचाराप्रसक्त्या निरुक्तविशेषणयोर्व्यभिचारावारकत्वात् , तथापि व्यभिचाराः स्वे-

**वेति परास्तम्। व्यर्थविशेषणत्वात् प्रथमं हेत्वाभासत्वाज्ञानाच्च। गगनमनित्यं शब्दाश्रयत्वादित्यादिबाधविरुद्धसङ्कीर्णासाधारणाव्याप्तिरिति कश्चित्॥**

---

❀ दीधितिः ❀

व्यर्थेति। विरोधादेर्वारकं साध्याभावेत्यादि व्यर्थं तस्य पार्थक्ये प्रमाणाभावादिति भावः। प्रथममित्यादि गगनमित्यादि च दूषणं यथाश्रुते॥

❀ गादाधरी ❀

इतरभेदानुमाने वैय्यर्थ्यसंभवे असाधकतानुमाने वैय्यर्थ्यपरतया व्यर्थविशेषणत्वादिति मूलव्याख्यानमनुचितमित्याशयेन इतरभेदानुमानवैय्यर्थ्यपरतयैव मूलं व्याचष्टे व्यर्थेतीति। विरोधादेरित्यादिना अवृत्तित्वपरिग्रहः। साध्याभावेत्यादीति। साध्याभावव्याप्तिग्रहविरोधित्वं वृत्तिमत्त्वग्रहाविरोधित्वं चेत्यर्थः। तस्य–विरोधादेः। पार्थक्ये–व्यभिचारपदार्थबहिर्भूतत्वे। प्रमाणाभावादिति। तथा च विरोधादावपि व्यभिचारपदार्थरूपपक्षे इतरभेदसत्त्वेन तद्व्यावर्तकविशेषणानवच्छिन्नस्यैवेतरभेदानु-

❀ विवृतिः ❀

त्तरभिन्ना वृत्तिमत्त्वग्रहाविरोधिसाध्यतदभावव्याप्तिग्रहविरोधिरूपवत्त्वात् इत्यनुमानमेव। हेतुघटकविशेषणयोः वैयर्थ्यसम्भवेऽसाधकतानुमाने तयोः व्यर्थत्वपरतया मूलव्याख्यानं न समीचीनम्। नच विनिगमनाविरहात् उभयानुमाने एव तयोर्वैयर्थ्यं वाच्यमिति वाच्यम्, लक्षणस्येतरभेदानुमितिफलकतया तादृशानुमाने व्यर्थताया एव प्रकृतोपयोगित्वात्, इतरभेदानुमाने व्यर्थत्वस्य सम्भवे असाधकतानुमाने व्यर्थत्वाभिधानस्य प्रकृतानुपयोगित्वादित्या**हेतरभेदानुमाने इत्यादि**। व्यभिचारः स्वेतरभिन्नः। वृत्तिमत्वग्रहाऽविरोधिसाध्यतदभावव्याप्तिग्रहविरोधिरूपवत्त्वादित्यनुमानेइत्यर्थः। वैयर्थ्यसम्भवे=हेतुविशेषणवृत्तिमत्त्वग्रहाविरोधित्वसाध्याभावव्याप्तिग्रहविरोधित्वयोर्वैयर्थ्यसम्भवे। असाधकतानुमाने=अयमसाधकः तादृशधर्मावच्छिन्नवत्वादित्यनुमाने। वैयर्थ्यपरतया = धर्मविशेषणतादृशविशेषणयोर्वैयर्थ्यबोधेच्छयोच्चरिततया। मूलम्=व्यर्थविशेषणत्वादितिमूलम्। व्याचष्टे दीधितिकार इति शेषः। अवृत्तित्वपरिग्रहः = गगनादिनिष्ठावृत्तित्वपरिग्रहः। व्यभिचारपदार्थबहिर्भूतत्वे=व्यभिचारभिन्नत्वे। भावमाह–**तथा चेति**। इतरभेदसत्त्वेन=व्यभिचारेतरभेदसत्त्वेन। **तद्व्यावर्त्तकेति**। विरोधादिव्यावर्त्तकविशेषणं यत् साध्याभावव्याप्तिग्रहविरोधित्वं तदनवच्छिन्नस्य केवलसाध्यव्याप्तिग्रहविरोधित्वविशिष्टधर्मस्येतरभेदानुमापकत्वसम्भ-

**नापि सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वम्,**

---

❀ दीधितिः ❀

नापीत्यादि। सपक्षविपक्षत्वावच्छिन्नव्यावृत्तत्वं सर्वतव्यावृत्त-

❀ गादाधरी ❀

मापकत्वसंभवादितिभावः। हेत्वाभासपदस्यान्यथा व्याख्यानाद्दुष्टहेतुत्वरूपहेत्वाभासत्वस्य लक्षणाघटकत्वात् प्रथममित्यादिदूषणस्यासङ्गतिः। एवं गगनमनित्यं शब्दाश्रयत्वादित्यादौ हेतोः साध्याभावव्याप्यत्वेपि साध्याभावव्याप्तिग्रहविरोधिदर्शितधर्मवत्त्वं तत्राक्षतमेवेति तत्राव्याप्तिदानमप्यसङ्गतमित्यतो यथाश्रुतार्थे तादृशदोषद्वयं सङ्गमयति—प्रथममिति ॥

❀ विवृतिः ❀

वादित्यर्थः। तथाच साध्यव्याप्तिग्रहविरोधिधर्मवत्त्वमेव लक्षणमित्याशयः।

ननु प्रथमं हेत्वाभासत्वाज्ञानाच्चेति मूलमसंगतं हेत्वाभासपदस्य वृत्तिमत्त्वग्रहाविरोधित्वार्थकताया दीधितिकृदभिहितत्वात्। प्रथमं दुष्टहेतुत्वाज्ञानेऽपि क्षत्यभावात्। एवं गगनम् अनित्यं शब्दाश्रयत्वादित्यादावपि शब्दाश्रयत्वस्य नित्यत्वरूपसाध्याभावव्याप्यत्वेऽपि साध्याभावव्याप्तिग्रहविरोधिनिश्चितसाध्यतदभाववदव्यावृत्तत्वधर्ममादायैव लक्षणसमन्वयसम्भवात्तत्राव्याप्तिदानमप्यसंगतम् अतो यथाश्रुतदुष्टहेतुत्वादिरूपहेत्वाभासत्वार्थकतामभिप्रेत्यैव दूषणाभिधानम् संगमयितुं दीधितिमवतारयति हेत्वा-**भासपदस्येति**। अन्यथाव्याख्यानात्=हेत्वाभासपदस्य वृत्तिमत्त्वग्रहाविरोधित्वरूपार्थकरणात्। साध्याभावाव्याप्यत्वपदस्य च साध्याभावव्याप्तिग्रहविरोधित्वरूपार्थकरणाच्च।

हेतोः=शब्दाश्रयत्वस्य। साध्याभावव्याप्यत्वेऽपि = नित्यत्वव्याप्यत्वेऽपि। **साध्याभावेति**। नित्यत्वनिरूपितव्याप्तिग्रहविरोधिनिश्चितसाध्यतदभाववद्व्यावृत्तत्वधर्मवत्त्वमित्यर्थः। तत्र=शब्दाश्रयत्वे। तत्राव्याप्तिदानम्=गगनं अनित्यं शब्दाश्रयत्वादित्यादौशब्दाश्रयत्वे अव्याप्तिदानम्। यथाश्रुतार्थे=साध्यव्याप्यत्वादिरूपार्थे। तादृशदोषद्वयम्=प्रथममित्यादिदूषणम्, गगनमित्यादिदूषणं च। **प्रथममितीति**। तथा च दीधितिकारोक्तव्याख्यायां तादृशदूषणस्या संगतत्वेऽपि न क्षतिरिति भावः।

मूले **नापीति**। निश्चिते साध्यवति साध्याभाववति च यो वर्त्तते यश्च तादृशे यावत्साध्यवति साध्याभाववति च न वर्त्तते तदन्यतरत्वमपि नेत्यर्थः। विरुद्धेऽ-

**व्यर्थविशेषणत्वात् अनुपसंहार्य्यव्याप्तेश्च । किञ्च पक्षाति-**

❀ दीधितिः ❀

**त्वम् । व्यर्थेति । सपक्षवृत्तित्वविपक्षव्यावृत्तत्वयोर्दूषकतायामनुपयो-**

❀ गादाधरी ❀

**एकमात्रसपक्षविपक्षस्थले सर्वसपक्षाद्यप्रसिद्धिरित्याशंकां व्याचष्टे सपक्षेति । सपक्षवृत्तित्वावच्छिन्नाभावो विपक्षवृत्तित्वावच्छिन्नाभाव-श्चेत्यर्थः । सर्वतद्व्यावृत्तत्वं सर्वसपक्षविपक्षव्यावृत्तत्वपदार्थः । तावतैव**

❀ विवृतिः ❀

तिव्याप्तिवारणाय प्रथमदलम् । वह्निसाध्यकधूमादावतिव्याप्तिवारणाय द्वितीयदलम् । निश्चितत्वानुपादाने पर्वतो वह्निमान् धूमादित्यादौ संदिग्धसाध्यादिमति पर्वतादौ वर्त्तमाने धूमेऽतिप्रसंगः अतस्तदुपादानं । न च साध्याभाववति निश्चितत्वोपादानादेव सद्धेतावतिव्याप्तिवारणसम्भवे साध्यवति निश्चितत्वोपादानमनर्थकमिति वाच्यम् । असाधारणे अव्याप्तिवारणाय ह्रदो वह्निमान् जलादित्यत्र ह्रदादौ वह्निसंशयदशायां विरुद्धेऽतिव्याप्तिवारणाय च साध्यवत्यपि निश्चितत्वांशोपादानस्यावश्यकत्वात् । **व्यर्थविशेषणत्वादिति** । विरुद्धस्य सव्यभिचारतया तद्वारकसपक्षवृत्तित्वांशोपादानस्य निरर्थकत्वादिति भावः ।

विरुद्धस्य सव्यभिचारभिन्नत्वेऽप्याह**अनुपसंहार्य्ये इति** । सर्वमनित्यं मेयत्वादित्यादौ निश्चितसाध्यादिमतोऽप्रसिद्धतया मेयत्वरूपानुपसंहारिण्यव्याप्तिरिति हृदयम् ।

ननु उक्तलक्षणघटकीभूतं निश्चितत्वमवश्यमुपलक्षणविधयैव वक्तव्यमन्यथा धूमवान् वह्नेरित्यादौ धूमादिनिश्चयशून्यत्वदशायां वह्न्यादावव्याप्तिः स्यात् एवञ्च नानुपसंहारिण्यप्यव्याप्तिः अनुपसंहारिताशून्यतादशायां साध्यादिनिश्चयस्य प्रसिद्धतया तत्कालीननिश्चितसाध्यादिमद्वृत्तान्यतरत्त्वस्यानुपसंहारितादशायामपि मेयत्वहेतौ सत्त्वादित्यत आह-**किंचेति** । **सपक्षत्वे इति** । विवक्षिते इति पूरणीयम् । **प्रमेयत्वेनेत्यादि** । अयमेतद्व्यक्त्यभिन्नः प्रमेयत्वादित्यत्र मेयत्वरूपव्यभिचारिणि हेतौ सर्वम् अनित्यं मेयत्वादित्यत्र मेयत्वरूपानुपसंहार्य्ये चाव्याप्तिरित्यर्थः । अव्याप्तिमुपपादयति । **पक्षेति** । प्रथमे पक्षातिरिक्तसाध्यवतोऽप्रसिद्धिः । द्वितीये च पक्षातिरिक्तत्वस्यैवाप्रसिद्धिरित्याशयः । पक्षमात्रवृत्तिहेतौ असाधारणेऽव्याप्तिः तस्य संदिग्धसाध्यवद्वृत्तित्वात् निश्चितसाध्याभाववद्वृत्तित्वाच्चेत्यत आह**प्रसिद्धिरिति** । गगनादौ साध्यवदवृत्तित्वस्य विपक्षाऽवृत्तित्वस्य च सत्त्वादाह **वृत्तिमत वित्यादि**।

रिक्तसाध्यवतः सपक्षत्वे प्रमेयत्वेनाभेदसाधनेऽनुपसंहार्य्येऽ-

❀ दीधितिः ❀

गादिति भावः। पक्षातिरिक्तेत्यादि। व्याप्यविरुद्धयोरसाधारणयोः सङ्ग्रहाय पक्षातिरिक्तपदे। पक्षत्वं सन्दिग्धसाध्यकत्वम्। धूमेत्यादि-दूषणं यथाश्रुते न तु सप्तमीसमासात् पक्षातिरिक्ते वर्त्तते यत्साध्यव-न्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तद्भिन्नत्वमित्यर्थे इति ध्येयम्।

❀ गादाधरी ❀

यत्किंचित्सपक्षविपक्षव्यावृत्तयोर्व्याप्यविरुद्धयोर्नातिव्याप्त्यवकाश इति भावः। सपक्षगतत्वविपक्षव्यावृत्तत्वयोर्विशेषणयोर्विरुद्धातिव्यातिव्याप्ति-वारकतया सार्थक्यं संभवत्यवेत्याशङ्क्य दूषकतानुपयोगित्वरूपवैयर्थ्य-

❀ विवृतिः ❀

ननु सर्वसपक्षविपक्षव्यावृत्तत्वं यदि यावत्सपक्षविपक्षवृत्तित्वाभावस्तदा पृथिवी पृथि-वीगगनान्यत्वविशिष्टसत्ताभाववान् पृथिवीत्वादित्यादौ पृथिवीत्वरूपासाधारणेऽव्याप्तिः सपक्षीभूते गगने यावत्वाऽप्रसिद्धेः, एवं पृथिवी गगनभिन्ना पृथिवीत्वादित्यादावप्य-साधारणेऽव्याप्तिः विपक्षीभूते गगने यावत्त्वस्याप्रसिद्धत्वादतः सर्वेत्यादिकम् अन्यथा व्याचक्षाणानां दीधितिकृतां सपक्षेति—ग्रन्थमवतारयति टीकायामे**कमात्रेति**। पूर्वोक्तस्थलद्वये चेत्यर्थः। **सर्वसपक्षाप्रसिद्धिरिति**। गगनादेरेकत्वादितिभावः। सामान्याभावनिवेशाभिप्रायं वर्णयति- **सपक्षेति**। तावतैव = सपक्षादिवृत्तित्वसामा-न्याभावनिवेशादेव। **यत्किञ्चिदिति**। शब्दोऽनित्य. शब्दत्वादित्यादौ यदा शब्दे घटे च साध्यस्य निश्चयस्तदा शब्दत्वरूपे व्याप्ये सपक्षीभूतयत्किञ्चिद्घटवृत्तित्वा-भावमादाय, शब्दो नित्यः शब्दत्वादित्यादौ यदा शब्दे घटे च साध्याभावस्य निश्चयस्तदा शब्दत्वरूपविरुद्धे विपक्षीभूतयत्किञ्चिद्घटवृत्तित्वाभावमादाय चाति-व्याप्त्यनवकाश इत्यर्थः। यद्वा अयं स्पर्शवान् रूपादित्यादौ यत्किञ्चित्सपक्षवायु-वृत्तित्वाभावमादाय स्पर्शव्याप्ये रूपे, अयं गौरश्वत्वादित्यादौ च यत्किञ्चिद्विपक्ष-घटवृत्तित्वाभावमादाय गोत्वविरुद्धेऽश्वत्वे चातिव्याप्त्यनवकाश इत्यर्थः।

**सपक्षगतत्वेति**। सपक्षवृत्तित्वविपक्षवृत्तित्वाभावयोरित्यर्थः। विशेषणयोः = विपक्षगतत्वसपक्षव्यावृत्तत्वांशे विशेषणीभूतयोः। विरुद्धाऽतिव्याप्ति**वारकतयेति**। अन्यविपक्षगतत्वसपक्षव्यावृत्तत्वान्यतरत्वस्य लक्षणार्थत्वे गौरश्वत्वादित्यादौ विरु-द्धेऽतिव्याप्तिः अश्वत्वस्य विपक्षवृत्तित्वात् सपक्षव्यावृत्तत्वाच्चेति भावः। इत्याशंक्य= निरुक्तविशेषणयोर्यथोक्तरीत्या सार्थक्यमाशंक्य। **दूषकतेति**। प्रकृतानुमितिविरो-

**व्याप्तिः—पक्षातिरिक्तसाध्यवतोऽप्रसिद्धेः। साध्यवतः सपक्षत्वे विवक्षितेऽप्रसिद्धिः—वृत्तिमतो धर्मस्य साध्यवद्विपक्षान्यतरवृत्तित्वनि-**

❀ दीधितिः ❀

**पक्षवृत्तीत्यादि। विरोधः साधसामानाधिकरण्यम्। पक्षवृत्तित्वसामानाधिकरण्यग्रहाविरोधी योऽनुमितेरौपयिकस्य जनकज्ञानविषयस्य**

❀ गादाधरी ❀

**परतां व्यर्थविशेषणत्वादिति मूलस्याह सपक्षेति। व्याप्यविरुद्धयोरिति। शब्दोऽनित्यः शब्दत्वादित्यादौ व्याप्यस्य हेतोः साध्यवन्मात्रवृत्तित्वेपि पक्षेपि वृत्तेः पक्षातिरिक्तसाध्यवन्मात्रवृत्यन्यत्वमक्षतमेव। एवं शब्दो नित्यः शब्दत्वादित्यत्र विरुद्धस्य हेतोः साध्याभाववन्मात्रवृत्तित्वेपि पक्षेऽपि वृत्तेः पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यत्वमक्षतमेवेति द्वयोः संग्रह एवेति भावः। पक्षातिरिक्तेत्यत्र पक्षपदस्य तत्तद्धर्मिमात्रपरत्वे पक्षे साध्य-**

❀ वृविवृत्तिः ❀

धितायामनुपयोगित्वरूपवैयर्थ्यबोधेच्छयोच्चरितत्वमित्यर्थः। **सपक्षेतीति**। तथा च केवलविपक्षवृत्तित्वस्य सपक्षवृत्तित्वाभावस्यैवानुमितिविरोधितया तत्राधिकविशेषणोपादानं निष्प्रयोजनकमित्याशयः। दशाविशेषे व्याप्ये विरुद्धे वाऽसाधारणेऽव्याप्तिवारकयोः पक्षातिरिक्तेत्यादिलक्षणघटकपक्षातिरिक्तपदयो प्रयोजनं परिष्कृत्य स्वयं प्रदर्शयति—**शब्दोऽनित्य इति**। साध्यवन्मात्रवृत्तित्वेऽपि = अनित्यत्ववच्छब्दवृत्तित्वेऽपि। पक्षेपि = शब्देऽपि। **पक्षातिरिक्तेति**। शब्दभिन्नानित्यत्ववन्मात्रवृत्त्यन्यत्वमित्यर्थः। **अक्षतमेवेति**। साध्यवति पक्षातिरिक्तत्वानुपादाने शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यसंशयस्तदाऽव्याप्तिः शब्दत्वे साध्यवन्मात्रशब्दवृत्तित्वस्य सत्वात्। साध्याभाववत्यपि पक्षातिरिक्तत्वानुपादाने शब्दोनित्यः शब्दत्वादित्यादौ यदा शब्दे साध्यसंशयस्तदा अव्याप्तिः शब्दत्वस्य साध्याभाववच्छब्दमात्रवृत्तित्वात्। उभयत्र तदुपादाने तु न तदानीं तत्राऽव्याप्तिः शब्दत्वस्य पक्षवृत्तितया पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वात्। पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यत्वाच्चेति भावः।

पक्षत्वं संदिग्धसाध्यकत्वमिति दीधितिमवतारयितुमाह **पक्षपदस्येत्यादि**। तत्तद्धर्मिमात्रपरत्वे,=अनुमित्युद्देश्यीभूत तत्तद्व्यक्तिमात्रपरत्वे। **साध्यतदभावेति**। शब्दोऽनित्यः शब्दत्वादित्यादौ अनित्यत्वरूपसाध्य तदभावस्यान्यतर निश्चयदशायां शब्दो नित्यः शब्दत्वादित्यादावपि नित्यत्वाभावरूपसाध्याभावसाध्य-

**यमात् । नापि पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षाति-**

❀ दीधितिः ❀

**सम्बन्धस्य सपक्षसत्त्वादेरभावस्तद्वत्त्वमित्यर्थः । सपक्षविपक्षव्यावृत्त-**

❀ गादाधरी ❀

तदभावान्यतरनिश्चयदशायां शब्दोऽनित्यः शब्दत्वादित्यादावतिव्याप्तिः, सिद्ध्यभावरूपपक्षताविशिष्टपरत्वे पक्षे सिद्धिदशायां तत्र विशिष्टातिरिक्त-त्वसत्त्वोपगमात् अतिरिक्तान्तस्य पक्षताशून्यपरत्वोपगमाद्वा अतिप्रसङ्ग-

❀ विवृति ❀

स्यान्यतरनिश्चयदशायामित्यर्थः । **इत्यादाविति ।** आदिना शब्दो नित्यः शब्द-त्वादित्यादि स्थलीयशब्दत्वहेतोः परिग्रहः । **अतिव्याप्तिरिति ।** शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वस्य निश्चयस्तदानीमपि शब्दस्य तद्धर्मिस्वरूप-त्वेन पक्षतया तत्काले शब्दत्वादावतिव्याप्तिः शब्दत्वस्य यथोक्तपक्षीभूत शब्दवृ-त्तित्वेन पक्षातिरिक्तसाध्यवन्मात्रवृत्तिभिन्नत्वादित्याशयः ।

ननु पक्षपदं सिद्ध्यभावविशिष्टपरमेव वाच्यम् तथा च पक्षे साध्यनिश्चयदशायां न शब्दोऽनित्यः शब्दत्वादित्यादावतिव्याप्तिः, पक्षे साध्यनिश्चयात्मकसिद्धिकाले सिद्ध्याभावविशिष्टशब्दभिन्नत्वस्य शब्दे सत्त्वात् तत्र च शब्दत्वस्य वर्त्तमानत्वेन शब्दत्वे पक्षातिरिक्तसाध्यवन्मात्रवृत्तिभिन्नत्वविरहादित्यत आह—**सिद्ध्यभावेति ।** पक्षधर्मिकसाध्यनिश्चयरूपायाः सिद्धेरभावरूपपक्षतापरत्वे इत्यर्थः । पक्षे=शब्दे । सिद्धिदशायाम्=अनित्यत्वरूपसाध्यनिश्चयदशायां । तत्र=शब्दे । **विशिष्टेति ।** सिद्ध्यभावविशिष्टशब्दभिन्नत्वसत्त्वोपगमादित्यर्थः ।

ननु भेदस्य व्याप्यवृत्तितया शब्दादिरूपपक्षे साध्यादिनिश्चयदशायां सिद्ध्यभा-वविशिष्टशब्दभिन्नत्वस्यानभ्युपगमात् कथं तदानीं शब्दत्वादावतिव्याप्तिवारणमित्यत **आहातिरिक्तान्तस्येति**। पक्षातिरिक्तान्तस्येत्यर्थः । **पक्षतेति ।** पक्षतात्यन्ताभा-वविशिष्टपरत्वाद्वेत्यर्थः । **अतिप्रसंगवारणेपीति ।** तथा च शब्दोऽनित्यः शब्द-त्वादित्यादौ यदा शब्दादौ अनित्यत्वरूपसाध्यस्य निश्चयस्तत्कालावच्छेदनापि साध्य-निश्चयाभावरूपपक्षतात्यन्ताभावस्य शब्दादौ सत्त्वात् तदानीं शब्दत्वस्य पक्षताशू-न्यसाध्यवन्मात्रवृत्तित्वेन नातिव्याप्तिरिति भावः ।

पक्षातिरिक्तत्वं यदि सिद्ध्यभावरूपपक्षताशून्यपरं तदा शब्दो नित्यः शब्दत्वा-दित्यादौ यदा शब्दे नित्यत्वाभावनिश्चयस्तदा शब्दे सिद्ध्यभावस्यैव सत्त्वेन तत्का-

**रिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम् , अनुपसंहार्यव्याप्तेः धूमा-**

❀ गादाधरी ❀

**वारणसंभवेपि शब्दोऽनित्यः शब्दत्वादित्यादौ बाधनिश्चयदशायामतिप्रसङ्गो दुर्वार एव, सिद्धिबाधान्यतराभावरूपपक्षताविवक्षणे च गौरवमतः संशयरूपपक्षतापरतया व्याचष्टे पक्षत्वमिति । सन्दिग्धसाध्यकत्वं विषयतासम्बन्धेन साध्यसन्देहविशिष्टत्वम् । कालान्तरीणसंशयविषयेपि संशयरूपविशेषणासत्त्वदशायां तद्विशिष्टभेद उपगम्यते । अतिरिक्तान्तं**

❀ विवृतिः ❀

लावच्छेदेन पक्षताशून्यत्वस्य शब्दे विरहात् तदानीं शब्दत्वेऽतिव्याप्तिः शब्दत्वस्य पक्षीभूतशब्दवृत्तितया पक्षताशून्यसाध्यवन्मात्रवृत्तिभिन्नत्वादित्याह **शब्दोऽनित्य इत्यादि** । बाधनिश्चयदशायाम् ,=अनित्यत्वाद्यभावनिश्चयदशायाम् । **दुर्वार एवेति** । तदानीं शब्दस्य पक्षत्वेन धर्तुं शक्यत्वादित्याशयः ।

ननु पक्षातिरिक्तान्तं सिद्धिबाधान्यतरत्वावच्छिन्नाभावरूपपक्षताशून्यपरमेव वक्तव्यम् तथा च न कोऽपि दोषः, यदा शब्दे बाधनिश्चयः तदा शब्दे सिद्धिबाधान्यतराभावस्यासत्त्वेन शब्दस्य पक्षत्वेन धर्तुं शक्यतया तद्वृत्तिशब्दत्वादौ पक्षताशून्यसाध्यवन्मात्रवृत्तिभिन्नत्वविरहात् न शब्दोऽनित्यः शब्दत्वादित्यादौ बाधनिश्चयदशायां शब्दत्वादावतिव्याप्तिः अत आह **सिद्धीति** । पक्षधर्मिकसाध्यनिश्चयबाधनिश्चयान्यतरत्वावच्छिन्नाभावरूपपक्षताविवक्षणे चेत्यर्थः । **गौरवमिति** । लक्षणस्य व्यवहाररूपतया तं प्रति व्यवहर्तव्यज्ञानविधया निरुक्तान्यतरत्वघटितलक्षणार्थज्ञानस्य हेतुत्वेन विनिगमनाविरहात् सिद्धिभेदविशिष्टबाधनिश्चयभेदावच्छिन्नभेदज्ञानत्वेन बाधनिश्चयभेदविशिष्टसिद्धिभेदावच्छिन्नभेदज्ञानत्वेन च कारणताद्वयकल्पनेन गौरवमित्याशयः ।

**संशयेति** । साध्यसंशयरूपा या पक्षता तत्परतयेत्यर्थः । **विषयतासम्बन्धेनेति** । तथा च विषयतासम्बन्धेन साध्यसंशयविशिष्टधर्मिभिन्नसाध्यादिवन्मात्रवृत्त्यन्यत्वं सव्यभिचारत्वमित्येव लक्षणं वक्तव्यमिति भावः ।

ननु शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वस्य निश्चयः तदातिव्याप्तिः, शब्दस्य तदानीं कालान्तरीणसंशयविशिष्टशब्दभिन्नत्वविरहेण पक्षत्वेन धर्तुं शक्यत्वादतआह **कालान्तरीणेति** । विषयतासम्बन्धेन कालान्तरीणसंशयविशिष्टेऽपि शब्दादावित्यर्थः । **संशयरूपेति** । शब्दादावनित्यत्वनिश्चयदशायाम् अनित्यत्वसंशयरूपविशेषणस्यासत्त्वमित्याशयः । विशिष्टभेदः=विषयतासम्बन्धेन संशयविशिष्ट धर्मिभेदः । **उपगम्यत इति** । भेदस्याव्याप्यवृत्तित्वं स्वीकृत्य संशय-

दावतिव्याप्तेश्च तस्य पक्षे साध्यवति वृत्तेः। नापि पक्षवृत्तित्वे

❀ दीधितिः ❀

त्वस्य चासाधारण्यस्य असाधारण्यनिश्चये पक्षे साध्यसामानाधिक-

❀ गादाधरी ❀

बा पक्षताशून्यपरमतः साध्यादिनिश्चयदशायां नातिप्रसङ्गः। यदा पक्षे साध्यतदभावयोर्न निश्चयो नापि संशयस्तदा शब्दोऽनित्यः शब्दत्वादित्यादेर्नासाधारणता किन्तु यथायथं सद्धतुत्वं चेति नाव्याप्तिप्रसङ्ग इति भावः।

❀ विवृतिः ❀

रूपविशेषणाभावकालावच्छेदेन संशयविशिष्टशब्दभेदस्य शब्दादौ साध्यनिश्चयदशायां सत्त्वं स्वीकरणीयमित्याशयः॥

ननु भेदस्याव्याप्यवृत्तित्वेऽपि विषयतासम्बन्धेन साध्यसंशयविशिष्टं यद् यत् तत्तद्व्यक्तित्वावच्छिन्नभेदकूट एव निवेशनीयः, अन्यथा तत्तच्छब्दादिपक्षकानित्यत्वसाध्यकतत्तच्छब्दत्वहेतुकस्थले पक्षे साध्यसंदेहदशायामव्याप्तिः, संशयविशिष्टशब्दान्तरव्यक्तिभेदस्य तत्तच्छब्दव्यक्तौ सत्त्वेन तदानीमपि तत्तच्छब्दव्यक्तेः पक्षातिरिक्तत्वसम्भवात्, एवञ्च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वनिश्चयः तदानीं शब्दत्वादावतिव्याप्तिर्दुर्वारैव संशयविशिष्टशब्दव्यक्तित्वावच्छिन्नभेदस्य शब्दे विरहात् इत्यत आह **अतिरिक्तान्तस्वेति**। **पक्षतेति**। विषयत्वसम्बन्धावच्छिन्नसाध्यसंशयाभावविशिष्टपरमित्यर्थः। वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वमतेनेदमिति ध्येयम्।

साध्यादिनिश्चयदशायाम्=शब्दादौ अनित्यत्वनिश्चयदशायाम्। **नातिप्रसंग इति**। शब्दादौ साध्यनिश्चयदशायाम् विषयत्वसम्बन्धावच्छिन्नसाध्यसंशयाभावस्य तत्र सत्त्वेन शब्दस्य पक्षातिरिक्तत्वादितिभावः॥

ननु शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दो नित्यः शब्दत्वादित्यादौ च यदा पक्षे साध्यस्य साध्याभावस्य वा न निश्चयो न वा संशयः तदा तत्र तत्राव्याप्तिः तदानीं शब्दादौ पक्षताशून्यत्वस्य सत्त्वात् अतस्तयोस्तदानीमलक्ष्यत्वेनाव्याप्तिशंकां परिहर्तुं भावमाह **यदेत्यादि**। पक्षे=शब्दे। तदा=तस्मिन् काले। इत्यादावित्यत्रादिपदात् शब्दपक्षकनित्यत्वसाध्यकशब्दत्वहेतोरपि परिग्रहः। **यथायथमिति**। तथा च तदानीं शब्दोऽनित्यः शब्दत्वादित्यादेः सद्धेतुत्वम्, शब्दोनित्यः शब्दत्वादित्यादेश्च विरुद्धत्वमेवेति तदा तयोरलक्ष्यत्वात् क्वाव्याप्तिशंकेत्याशयः।

विरुद्धान्यत्वे च सत्यनुमित्यौपयिकसम्बन्धशून्यत्वम्। व्यर्थविशेष-

❀ दीधितिः ❀

ण्यसन्देहान्न तस्य तज्ज्ञानविरोधित्वम्।

❀ गादाधरी ❀

पक्षातिरिक्तवृत्ति यत्साध्यतदभाववन्मात्रवृत्ति तदन्यत्वार्थकत्वे वह्निमान्धूमादित्यादौ नातिव्याप्तिसंभवः भेदप्रतियोगितावच्छेदकघटक-दलद्वयस्यैव तत्र सत्त्वेन विशिष्टभेदासत्त्वादतः पक्षातिरिक्तत्वस्य साध्या-

❀ विवृतिः ❀

-सर्वमनित्यं मेयत्वादित्यादौ पक्षातिरिक्तस्या प्रसिद्धतया मेयत्व रूपानुपसंहारिणि निरुक्तलक्षणस्याव्याप्तिः, यदि च तत्र पूर्वोक्तरीत्या लक्षणसमन्वयः सम्भवति तदा-प्याह मूले **धूमादावतिव्याप्तिश्चेति**। तथा च पर्वतो वह्निमान् धूमादित्यादौ यथाश्रुतं निरुक्तलक्षणं धूमहेतावतिव्याप्तं स्यात् धूमस्य पक्षेऽपि वर्त्तमानतया पक्षातिरिक्तसाध्यवन्मात्रवृत्तिभिन्नत्वात् पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वा-च्चेतिभावः।

पक्षातिरिक्ते वर्त्तमानं यत् साध्यवन्मात्रवृत्ति तदन्यत्वे सति पक्षातिरिक्ते वर्त्तमानं यत् साध्याभाववन्मात्रवृत्ति तद्भिन्नत्वं यदि लक्षणार्थस्तदा धूमहेतौ नातिव्याप्तिः, धूमादेः पक्षातिरिक्तमहानसादिवृत्तित्वेन पक्षातिरिक्तवृत्तित्वविशिष्टसाध्यवन्मात्रवृ-त्तित्वावच्छिन्नभेदविरहेण तत्र सत्यन्तदलविरहात्, एवं यथाश्रुतार्थे श्वेताश्वोगौ-रश्वत्वादित्यादौ अश्वत्वरूपविरुद्धेऽतिव्याप्तिः, तस्य पक्षेऽपि वर्तमानतया पक्षा-तिरिक्त साध्याभाववन्मात्रवृत्तिभिन्नत्वात् अतः पक्षातिरिक्तवृत्तित्वं साध्याभाववन्मा-त्रवृत्तिविशेषणमेव वाच्यम् तथा च पक्षातिरिक्तत्वस्य साध्यवत्त्वादौ विशेषणत्वपक्ष एव धूमादावतिव्याप्तिः नतु निरुक्तयथाश्रुतार्थत्यागे इत्येवं मूलाशयप्रदर्शनपरं धूमे-त्यादिदूषणमित्यादिदीधितिग्रन्थमवतारयति टीकायाम् **पक्षातिरिक्तवृत्तित्वादि**। पक्षातिरिक्तवृत्तित्वविशिष्टं यत् साध्यवन्मात्रवृत्तित्वं साध्याभाववन्मात्रवृत्तित्वं च तदवच्छिन्नान्यत्वार्थकत्वे इत्यर्थः।

धूमादावतिव्याप्ति विरहं घटयति **भेदेति**। तदन्यत्वरूपभेदप्रतियोगिताव-च्छेदकघटकीभूतस्य पक्षातिरिक्तवृत्तित्वसाध्यवन्मात्रवृत्तित्वद्वयस्यैवेत्यर्थः। तत्र= धूमादौ।

विशिष्टभेदाऽसत्त्वात् = पक्षातिरिक्तवृत्तित्वविशिष्टसाध्यवन्मात्रवृत्तित्वरूपवि-शिष्टधर्मावच्छिन्नभेदस्यासत्त्वात्। विशेषणविशेष्यीभूतयोर्धर्मयोर्विशिष्टधर्मावच्छिन्न-

णत्वात् । एतेनानुगतं सर्व्वमेव लक्षणं प्रत्युक्तम् । प्रत्येकमेव दूष-

❀ दीधितिः ❀

पक्षवृत्तौ विरुद्धभिन्ने च वर्तते यस्तादृशोऽभावस्तद्वत्त्वमर्थ इति केचित् ॥

इति-श्री महामहोपाध्यायरघुनाथशिरोमणि-विरचिता सव्यभिचार पूर्वपक्ष लक्षणदीधितिः समाप्ता ।

❀ गादाधरी ❀

दिमद्विशेषणत्वाभिप्रायकतया मूलं सङ्गमयति धूमेत्यादीति । यथाश्रुते-पक्षातिरिक्तो यः साध्यादिमांस्तन्मात्रवृत्तिभिन्नत्वमित्यर्थे, सप्तमीसमासादित्यर्थे न तु दूषणमिति योजना । सप्तमीसमासलभ्ये तादृशार्थे न दूषणमित्यर्थः ।

ह्रदो धूमवान् वह्नेरित्यादिसाधारणे शब्दो नित्यः शब्दत्वादित्यसाधारणे च यथाश्रुतलक्षणस्याव्याप्तिरतो व्याचष्टे पक्षवृत्तीत्यादीति । पक्ष-

❀ विवृतिः ❀

भेदविरुद्धत्वादित्याशयः । **साध्यादीति** । साध्यवति साध्याभाववति च विशेषणत्वादित्यर्थः । यथाश्रुतार्थं दर्शयति-**पक्षातिरिक्तविति** । तादृशार्थे = पक्षातिरिक्तवृत्ति साध्यतदभाववन्मात्रवृत्ति तदन्यत्वरूपार्थे । न दूषणम् = न पर्वतो वह्निमान् धूमादित्यादावतिव्याप्तिरूपो दोषः ॥

ननु पक्षवृत्तित्वे सति, विरुद्धान्यत्वे च सति अनुमित्यौपयिकसम्बन्धशून्यत्वमिति यथाश्रुतमूललक्षणे ह्रदो धूमवान् वह्निरित्यादिस्थलीयवह्न्यादिरूपसाधारणहेतावव्याप्तिः, वह्न्यादेः पक्षीभूतह्रदाद्यवृत्तित्वात् एवं शब्दो नित्यः शब्दत्वादित्यादावपि यदा शब्दे नित्यत्वस्य सन्देहस्तदा शब्दत्वरूपासाधारणेऽव्याप्तिः तस्य विरुद्धत्वात् अतः सत्यन्तद्वयमन्यथा व्याचक्षाणानां दीधितिकृतामाशयं प्रदर्शयितुमाह-**ह्रदो धूमवान् इत्यादि** । यथाश्रुतलक्षणस्य = यथाश्रुतसत्यन्तद्वयघटितलक्षणस्य ॥

**पक्षवृत्तित्वस्येत्यादि** । तथा च हेतुधर्मिकपक्षवृत्तित्वप्रकारकस्तद्धर्मिकसाध्यसामानाधिकरण्यप्रकारकश्च यो ग्रहः तादृशग्रहत्वव्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकानुमित्यौयथिकसम्बन्धाभाववत्त्वस्यैव लक्षणार्थतया तस्य च व्यभिचारिणि सत्त्वेन न ह्रदो धूमवान् वह्नेरित्यादौ साधारणादावव्याप्तिः, न वा स्वरूपासिद्धे विरुद्धे चातिव्याप्तिः तादृशसम्बन्धाभावरूपस्य पक्षाऽवृत्तित्वस्य साध्यासामानाधिकरण्यादेश्च यथोक्तपक्षवृत्तित्वादिग्रहविरोधित्वात् । न चैवम् उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वादित्यादौ बाधितहेतावतिव्याप्तिः अबाधितत्वाभावस्यापि अनुमित्योपयिकसम्बन्धाभावरूपतया तस्य च

°णत्वात् उद्भावने वादिनिवृत्तेश्च ॥

इति श्रीमहामहोपाध्याय गंगेशोपाध्यायविरचितं सव्यभिचार पूर्वपक्ष लक्षणं समाप्तम् ॥

---

❀ गादाधरी ❀

वृत्तित्वस्य साध्यसामानाधिकरण्यस्य च यो ग्रहस्तदविरोधीत्यर्थः । अनुमित्यौपयिकस्येति समासेन लिखनं जनकज्ञानविषयेत्यस्य समुदायव्याख्यानतायामेव संभवतीत्यतो व्यासेन लिखनम् । सपक्षसत्त्वादेर्नानुमितिजनकत्वमपि तु तज्ज्ञानस्यैवेत्यौपयिकपदस्य जनकतार्थत्वं न संभवतीति तद्व्याचष्टे जनकज्ञानविषयस्येति । नन्वत्रासाधारण्येऽव्याप्तिः तस्य सपक्षव्यावृत्तत्वघटिततया साध्यवद्वृत्तित्वग्रहविरोधित्वादित्यत आह सपक्षविपक्षव्यावृत्तत्वस्य चेति । चस्त्वर्थे । सपक्षत्वं–निश्चितसाध्यवत्त्वम् । पक्षे–पक्षान्तर्भावेण । तस्य–असाधारण्यस्य । तज्ज्ञानविरोधित्वं-साध्यसामानाधिकरण्यज्ञानविरोधित्वम् । साध्यवद्वृत्तित्वसामान्याभाव-

❀ विवृतिः ❀

बाधितहेतौ सत्त्वादिति वाच्यम्, अनुमित्यौपयिकेत्यत्रानुमितिपदस्य अनुमितिकारणपरत्वात् इति भावः ॥

अनुमित्यौपयिकजनकज्ञानविषयेत्यादिरीत्या समासेन लिखनम् अनुमित्यौपयिकजनकज्ञानविषयपर्य्यन्तस्य व्याख्यानतायामेव सम्भवति नतु अनुमित्यौपयिकेत्यस्य व्याख्यानतायामित्याह **समासेन लिखनमित्यादि** । समुदायव्याख्यानतायाम्=अनुमित्यौपयिकजनकविषयेत्यादिसमुदायव्याख्यानतायाम् । न त्वनुमित्यौपयिकेत्यादेर्व्याख्यानतायामिति पूरणीयम् । व्यासेन लेखनम्=अनुमित्यौपयिकस्येत्यादिरीत्या लेखनम् ॥

**सपक्षसत्त्वादेरिति** । आदिना विपक्षासत्त्वपक्षसत्त्वादेः परिग्रहः । तज्ज्ञानस्यैव=सपक्षाऽसत्त्वादेर्ज्ञानस्यैव । तद्व्याचष्टे=अनुमित्यौपयिकपदार्थं व्याचष्टे । **नन्विति** । अत्र=अस्मिन् लक्षणे । अव्याप्तिमुपपादयति **तस्येति** । असाधारण्यस्येत्यर्थः । **सपक्षव्यावृत्तत्वघटिततयेति** । सपक्षविपक्षव्यावृत्तत्वस्यैवासाधारण्यत्वादित्यर्थः । सपक्षत्वं यदि साध्यवत्त्वमात्रं तदा सपक्षवृत्तित्वाभावस्य साध्यवद्वृत्तित्वग्रहविरोधित्वं दुर्वारं स्यादित्यत आह **निश्चितेति** । यदा शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वहेतौ निश्चितसाध्यतदभाववद्व्यावृत्तत्वज्ञानं तदापि पक्षीभूतशब्दान्तर्भावेण साध्यवद्वृत्तित्वसंदेहोदयात् निश्चितसाध्यतदभाववद्व्यावृत्तत्वज्ञानं न साध्यवद्वृत्तित्वज्ञाने प्रतिबन्धकम् इत्येवं दीधितितात्पर्य्यं वर्णयितुमाह–

❀ गादाधरी ❀

ज्ञानमेव साध्यसामानाधिकरण्यज्ञानविरोधि न तु तद्विशेषाभावात्मक-सपक्षव्यावृत्तत्वज्ञानमपीति भावः।

अथात्र विरुद्धहेतवो यद्यलक्ष्याः तदा सपक्षवृत्तित्वाद्यभावादिकमादाय सर्वेषु तेष्वतिव्याप्तिः, तेषां लक्ष्यत्वे साध्यसामानाधिकरण्यग्रहाविरोधित्वोपादानमनर्थकमेवेति चेन्न।

दुष्टहेतुलक्षणे विरुद्धा लक्ष्या एव, उक्तविशेषणोपादानं च दोषलक्षणे विरोधातिव्याप्तिवारणायैव। सपक्षविपक्षव्यावृत्तत्वस्यासाधारण्यस्येत्यत्र विपक्षपदं संपातायातमेवेत्यवधेयम्।

❀ विवृतिः ❀

**साध्यवद्वृत्तित्वेति**। साध्यवद्वृत्तित्वत्वावच्छिन्नाभावविषयकनिश्चय एवेत्यर्थः। **साध्येति**। साध्यवद्वृत्तित्वज्ञानप्रतिबन्धकमित्यर्थः। **तद्विशेषेति**। निश्चित् साध्यवद् व्यक्तिविशेषवृत्तित्वाभावज्ञानमपीत्यर्थः॥

ननु यदि साध्यसामानाधिकरण्यज्ञाने सपक्षवृत्तित्वाभावज्ञानं न प्रतिबन्धकम् तदा सर्वत्र विरुद्धहेतौ अनुमितिजनकज्ञानविषयसपक्षवृत्तित्वाभावमादायातिव्याप्तिः न च विरुद्धहेतूनां लक्ष्यत्वाभ्युपगमेऽपि न क्षतिरिति वाच्यम्, तथा सति साध्यसामानाधिकरण्यग्रहाऽविरोधित्वदलस्य व्यर्थतापत्तेः तस्य विरुद्धमात्रवारकत्वादित्याशंकते **अथेति**। अत्र=अस्मिन् दीधितिकारोक्तव्याख्यातलक्षणे। तेषु=विरुद्धेषु **अतिव्याप्तिरिति**। सपक्षवृत्तित्वाभावस्यानुमित्यौपयिकसम्बन्धाभावरूपत्वात् साध्यसामानाधिकरण्यग्रहाऽविरोधित्वाच्चेति हृदयम्॥

तेषां = विरुद्धानाम्। **अनर्थकमिति**। साध्यसामानाधिकरण्यग्रहाविरोधित्वदलस्य विरुद्धातिव्याप्तिवारणमात्रप्रयोजनकत्वादिति भावः। समाधत्ते **दुष्टहेतुलक्षणे इत्यादि**। **लक्ष्या एवेति**। तथा च सपक्षवृत्तित्वाभावमादाय तत्र लक्षणगमनेऽपि न क्षतिरित्याशयः॥

उक्तविशेषणदानम् = साध्यसामानाधिकरण्यग्रहाऽविरोधित्वविशेषणदानम्। चस्त्वर्थे। विरोधातिव्याप्तिवारणायैव = साध्यसामानाधिकरण्याभावेऽतिव्याप्तिवारणायैव। साध्यसामानाधिकरण्याभावस्यानुमित्यौपयिकसम्बन्धाभावस्वरूपत्वेऽपि तस्य साध्यसामानाधिकरण्यग्रहविरोधित्वात् न तत्रातिव्याप्तिरित्याशयः॥

ननु दीधितौ विपक्षवृत्तित्वाभावघटितासाधारण्यज्ञानस्य साध्यसामानाधिकरण्यग्रहाऽविरोधित्वव्यवस्थापनमसंगतम्, विपक्षवृत्तित्वाभावज्ञानस्य ग्राह्याभावानवगाहितया साध्यसामानाधिकरण्यग्रहाऽविरोधितायाः सर्वसम्मतत्वा दित्यत आह—

❀ गादाधरी ❀

**अत्र च यद्रूपविशिष्टविषयकत्वेनानुमितिजनकता तद्रूपावच्छिन्नाभावोऽवश्यं विवक्षणीयः, अन्यथा सपक्षसत्त्वादेर्द्वित्वाद्यवच्छिन्नाभावमादायातिप्रसङ्गापातात् । एवं च निश्चितसाध्यवद्वृत्तित्वावच्छिन्नाभावा-**

❀ विवृतिः ❀

**सपक्षेति** । तथा च सपक्षाऽवृत्तित्वाऽभावज्ञानस्यैव साध्यसामानाधिकरण्याऽभावग्रहाऽविरोधित्वं दीधितिकारेणाऽभिहितमित्यदोष इति भावः ॥

यथोक्तव्याख्यातलक्षणे दोषमाह—**अत्र चेति** । निरुक्तरीत्या व्याख्यातलक्षणे चेत्यर्थः ॥ **यद्रूपविशिष्टेति** । यद्रूपावच्छिन्नविषयकत्वव्यापिकाऽनुमितिजनकतेत्यर्थः । तेन विपक्षाऽवृत्तित्वघटितविपक्षत्वाद्यवच्छिन्नविषयताया अप्यनुमितिजनकतानिरूपित-स्वरूपसम्बन्धरूपाऽवच्छेदकतया तादृशविपक्षत्वाद्यवच्छिन्नाऽभावमादाय सद्धेत्वादौ नाऽतिव्याप्तिरिति ध्येयम् ॥

तद्रूपाऽवच्छिन्नाऽभावः = तद्रूपपर्याप्तावच्छेदकताकप्रतियोगिताकाऽभावः, तेन वक्ष्यमाणद्वित्वाऽवच्छिन्नाऽभावस्य तद्रूपावच्छिन्नाऽभावत्वेऽपि न तादृशाऽभावमादाय पुनरतिप्रसङ्गः, न वा शब्दो नित्यः शब्दत्वादि'त्यादौ शब्दे साध्यनिश्चयदशायां केवलसाध्यवद्वृत्तित्वत्वावच्छिन्नाभावमादाय शब्दत्वेऽतिव्याप्तिः ॥

**अवश्यं विवक्षणीय इति** । तथा च पक्षवृत्तित्वसाध्यसामानाधिकरण्यग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतानवच्छेदकत्वे सति यद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापकं प्रकृतानुमितिजनकत्वम् तद्रूपावच्छिन्नाभावत्वावच्छिन्नवत्त्वम् । सव्यभिचारत्वमित्येव लक्षणार्थः करणीय इति भावः ॥

**अन्यथेति** । तद्रूपपर्याप्तावच्छेदकताकप्रतियोगिताकाभावमनिवेश्य तद्रूपनिष्ठावच्छेदकताकप्रतियोगिताकाभावमात्रविवक्षणे इत्यर्थ **सपक्षसत्त्वादेरिति** । तथा च निश्चितसाध्यवद्वृत्तित्व-घटोभयाभावस्यापि सपक्षवृत्तित्वत्वरूपतद्रूपनिष्ठावच्छेदकताकप्रतियोगिताकाभावतया तादृशाभावमादाय वह्निमान् धूमादित्यादौ धूमादिहेतावतिव्याप्तिः, निरुक्तोभयाभावस्य धूमहेतौ सत्त्वादित्याशयः ॥

**एवं चेति** । यद्रूपावच्छिन्नविषयकत्वेनानुमितिजनकता तद्रूपपर्याप्तावच्छेदकताकप्रतियोगिताकाभावनिवेशे चेत्यर्थः । **निश्चितेति** । तथा च शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दे साध्यसंदेहदशायां शब्दत्वादावव्याप्तिः निश्चितसाध्यवद्वृत्तित्वाभावे तादृशतद्रूपावच्छिन्नाभावत्वविरहादिति भावः ॥

❀ मनोरमा ❀

**यद्रूपविशिष्ट विषयकत्वेनेति** । धर्मविशिष्ट धर्मावच्छिन्नाभाववत्त्वं सव्यभिचारत्वमित्यर्थः ।

❀ गादाधरी ❀

संग्रहः। निश्चयांशज्ञानस्यानुमित्यहेतुतया तद्धटिततादृशधर्मविशिष्ट-विषयतावत्त्वेनानुमितिजनकत्वाभावात्। येन केनापि रूपेण यद्रूपाश्र-यानिरूपितविषयतावत्त्वेन जनकता तद्रूपावच्छिन्नाभावविवक्षणे च द्वित्वावच्छिन्नाभाववारणमशक्यमेवेति दूषणमशक्यसमाधानमित्यव-धेयम्।

उपदर्शितसाधारणासाधारणयोः संग्रहाय मिश्रा अन्यथैवैतल्लक्षणं

❀ विवृतिः ❀

नन्वधिकन्त्वित्यादिन्यायेन निश्चितसाध्यवद्वृत्तित्वज्ञानमपि अनुमितिकारणं भवत्ये-वेत्यत आह—**निश्चयांशेति**। निश्चयविषयकज्ञानस्येत्यर्थः। **तद्धटितेति**। निश्च-यघटितसाध्यवद्वृत्तित्वरूपधर्मावच्छिन्नविषयताकत्वेनेत्यर्थः। **अनुमिति-जनकत्वा-भावादिति**। अवश्यक्लृप्तसाध्यवद्वृत्तित्वज्ञानत्वेनानुमितिहेतुत्वसिद्धौ निश्चितसाध्य-वद्वृत्तित्वज्ञानस्यान्यथासिद्धत्वादिति हृदयम्॥

ननु साध्यवद्वृत्तित्वत्वेन रूपेण निश्चितसाध्यवद्वृत्तित्वाश्रयनिरूपितविषयितायाः अनुमितिजनकतावच्छेदकतया न निश्चितसाध्यवद्वृत्तित्वत्वावच्छिन्नाभावस्यासंग्रहः इत्यत आह **येन केनापीत्यादि**। यत्किञ्चिद्रूपावच्छिन्ना या यद्रूपाश्रयनिरूपिता विषयिता तद्वत्त्वेनेत्यर्थः। **द्वित्वावच्छिन्नेति**। सपक्षवृत्तित्वघटोभयत्वावच्छिन्नाभा-ववारणमित्यर्थः। **इति दूषणमिति**। तथा च निरुक्तविवक्षणेऽप्येतन्मते वह्निमान् धूमादित्यादौ धूमादिहेतावतिव्याप्तिः, साध्यवद्वृत्तित्वत्वेन रूपेण सपक्षवृत्तित्वघटैत-द्वतद्वित्वाश्रयनिरूपितसपक्षवृत्तित्वविषयिताया अपि अनुमितिजनकतावच्छेदकतया तादृशद्वित्वरूपयद्रूपावच्छिन्नाभावस्य धूमहेतौ सत्त्वादित्याशयः।

**उपदर्शितेति**। ह्रदपक्षकधूमसाध्यकवह्निरूपसाधारणशब्दपक्षकनित्यत्वसा-ध्यकशब्दत्वरूपासाधारणयोरित्यर्थः। **संग्रहायेति**। यथाश्रुतलक्षणे तदसंग्रहस्य पूर्वमुक्तत्वादित्याशयः।

❀ मनोरमा ❀

वैशिष्ट्यं च स्वतादात्म्य-स्वकालीनप्रकृतानुमितिजनकतावृत्तित्वोभयसम्बन्धेन, वृत्तित्वं स्वावच्छि-विषयकनिश्चयत्व व्यापकत्वसम्बन्धेनेत्यध्येयम्॥

इति श्री पंडितप्रवर वामाचरण भट्टाचार्य्य न्यायाचार्य्य तर्कतीर्थ विरचिता सव्यभिचार पूर्वपक्षलक्षण मनोरमा समाप्ता॥

---

## * गादाधरी *

**व्याचख्युः तदुपन्यस्यति पक्षवृत्ताविति । पक्षावृत्तित्वं न पक्षवृत्तौ विरोधश्च न विरुद्धभिन्ने वर्तते इति न पर्वतो वह्निमान्महानसत्वात् ह्रदो वह्निमान् ह्रदत्वाद्वा इत्याद्योः स्वरूपासिद्धविरुद्धयोरतिव्याप्तिः । सपक्षविपक्षवृत्तित्वं तद्व्यावृत्तत्वं च पक्षवृत्तौ विरुद्धभिन्ने च वर्तत इति तदादाय उपदर्शितसाधारणयोः संग्रहः । एतत्कल्पेपि पूर्ववद्विरुद्धा लक्ष्या एव विरोधस्य व्यभिचारतावारणायैव विरुद्धान्यवृत्तित्वोपादानमित्यवधेयम् ।**

## * विवृतिः *

तदुपन्यस्यति=मिश्रव्याख्यातंनिरुक्तलक्षणमुपन्यस्यति । दीधितिकार इति शेषः । पक्षे वर्त्तमाने वर्त्तमानो विरुद्धभिन्ने च वर्त्तमानो यस्तादृशानुमित्यौपयिकसम्बन्धस्य सपक्षसत्त्वादेरभावस्तद्वत्त्वम् सव्यभिचारत्वमिति लक्षणार्थः । तथा च न ह्रदो धूमवान् वह्नेरित्यादौ वह्निहेतावव्याप्तिः ह्रदपक्षकधूमसाध्यकद्रव्यत्वहेतौ वर्त्तमानस्य सपक्षविपक्षवृत्तित्वरूपतादृशसम्बन्धाभावस्य ह्रदपक्षकधूमसाध्यकवह्निहेतावपि सत्त्वात्, नवा शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वरूपासाधारणेऽव्याप्तिः अभावस्याधिकरणभेदेनाप्यभिन्नतया आत्मपक्षकनित्यत्वसाध्यकात्मत्वहेतौ विरुद्धभिन्ने वर्त्तमानस्य सपक्षविपक्षव्यावृत्तत्वरूपतादृशसम्बन्धाभावस्य शब्दपक्षकनित्यत्वसाध्यकशब्दत्वहेतावपि सत्त्वात् । नवा पक्षवृत्तित्वाभावमादाय स्वरूपासिद्धेः साध्यसामानाधिकरण्याभावमादाय च विरुद्धेऽतिव्याप्तिः, पक्षवृत्तित्वाभावस्य पक्षवृत्ताववर्तमानत्वात्, साध्यसामानाधिकरण्याभावस्य च विरुद्धभिन्ने वृत्तित्वविरहादित्याह **पक्षावृत्तित्वमित्यादि** । पक्षवृत्तौ =पक्षवर्त्तमाने हेतौ । विरोधश्च = साध्यसामानाधिकरण्याभावश्च । स्वरूपासिद्धस्योदाहरणमाह-**पर्वतविति** । विरुद्धस्योदाहरणमाह-**ह्रदविति** । तद्व्यावृत्तत्वं च=सपक्षविपक्षव्यावृत्तत्वं च तदादाय=सपक्षविपक्षवृत्तित्वम्, सपक्षविपक्षव्यावृत्तत्वं च मादाय । **उपदर्शितेति** । ह्रदो धूमवान् वह्नेःशब्दो नित्यः शब्दत्वादित्यादिस्थलीयसाधारणासाधारणयोरित्यर्थः ।

विरुद्धानामलक्ष्यत्वे विरुद्धभिन्ने वर्त्तमानस्य सपक्षवृत्तित्वाभावस्य विरुद्धमात्रे एव सत्त्वात् तत्रातिव्याप्तिः, तेषां लक्ष्यत्वे तु विरुद्धभिन्ने चेत्यादिकम् व्यर्थमित्याशयेनाहै**तन्मतेऽपीति** । निरुक्तमिश्रमतेऽपीत्यर्थः ।

ननु विरुद्धानां लक्ष्यत्वे विरुद्धभिन्ने चेत्यादिकमनर्थकमित्यत आह-**विरोधस्येति** । साध्यसामानाधिकरण्याभावस्येत्यर्थः । **विरुद्धान्यवृत्तित्वोपादानमिति** । विरोधस्य पक्षवृत्तौ वर्त्तमानतया तस्य व्यभिचारत्वं स्यादतः विरुद्धभिन्न-

❀ गादाधरी ❀

अत्र च हेतुतावच्छेदकसम्बन्धेन पक्षवृत्तित्वविवक्षणमावश्यकम्। अन्यथा हेतुतावच्छेदकसम्बन्धेन पक्षावृत्तेरपि येन केनापि सम्बन्धेन पक्षवृत्तितया स्वरूपासिद्धेरपि पक्षवृत्तिवृत्तितया तद्वारणासंभवात्। एवं च हेतुतावच्छेदकसंबन्धेन पक्षवृत्तित्वं यत्राप्रसिद्ध तादृशव्यभिचारिण्यव्याप्तिः। एवं गगने साध्यनिश्चयदशायां घटः शब्दवान् घटत्वादित्या-

❀ विवृतिः ❀

वृत्तित्वोपादानम् विरोधस्य विरुद्ध एव वर्त्तमानत्वात् न तत्र व्यभिचारतापत्तिरित्याशयः॥

निरुक्तमिश्रमतेऽस्वरसं प्रदर्शयति—**अत्र चेति**। निरुक्तमिश्रमते चेत्यर्थः। अस्य च इत्यस्वरस इत्यनेन सम्बन्धो बोद्धव्यः। पक्षवृत्तावित्यत्र पक्षनिरूपितवृत्तित्वमवश्यं हेतुतावच्छेदकसम्बन्धावच्छिन्नं वाच्यम् अन्यथा पर्वतो वह्निमान् महानसत्वादित्यादौ महानसत्वादेरपि कालिकादिसम्बन्धेन पर्वतवृत्तितया तत्र वर्त्तमानस्य पर्वतवृत्तित्वाभावरूपस्वरूपासिद्धेःपर्वतवृत्तौ सत्वात्, निरुक्तस्वरूपासिद्धयादावतिव्याप्तिः स्यात्, एवं च गुणो धूमवान् वह्नेरित्यादौ, जातिर्नित्या द्रव्यत्वादित्यादौ च व्यभिचारिणि वह्न्यादिहेतावव्याप्तिः,गुणादिनिरूपितसंयोगादिसम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्धेरित्याह **हेतुतावच्छेदकसम्बन्धेनेत्यादि**—तादृशव्यभिचारिण्यव्याप्तिरित्यन्तेन।

पक्षधर्मत्वाभावघटकपक्षधर्मत्वं हेतुतावच्छेदकसम्बन्धावच्छिन्नमेवेत्याह **हेतुतावच्छेदकसम्बन्धेन पक्षाऽवृत्तेरपीति**। हेतुतावच्छेदकसम्बन्धावच्छिन्नपर्वतवृत्तित्वाभाववन्महानसत्वादेरपीत्यर्थः। येन केनापि-सम्बन्धेन = कालिकादिसम्बन्धेन। पक्षवृत्तितया=पर्वतादिवृत्तितया। स्वरूपासिद्धेरपि = पर्वतादिवृत्तित्वाभावस्यापि। पक्षवृत्तितया=कालिकादिसम्बन्धेन पर्वतादिवृत्तितया। तद्वारणम्=स्वरूपासिद्धहेतुवारणम्। यत्र=गुणो धूमवान् वह्नेः, जातिर्नित्या द्रव्यत्वादित्यादौ। **अप्रसिद्धमिति**। गुणे संयोगेन, जातौ च समवायेन कस्याप्यवर्त्तमानत्वादित्याशयः।

**अव्याप्तिरिति**। इदमुपलक्षणम्—ह्रदो धूमवान वह्नेरित्यादावपि व्यभिचारिण्यव्याप्तिः, सपक्षविपक्षसंयुक्तत्वस्य ह्रदसंयुक्तेऽप्यवर्त्तमानत्वादित्यपि द्रष्टव्यम्॥

पक्षवृत्तावित्युक्तौ दोषमुक्त्वा विरुद्धभिन्ने इत्युक्तावपि दोष**माहैवमिति**। **गगने** साध्यसंदेहदशायां निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य, विरुद्धभिन्ने गगनपक्षकशब्दसाध्यकगगनत्वहेतौ वर्त्तमानस्य, घटपक्षकशब्दसाध्यकघटत्वहेतावपि वर्त्तमानतया निरुक्तासाधारणे घटत्वहेतौ अव्याप्त्यसम्भवादाह **गगने साध्यनिश्चयद-**

❀ गादाधरी ❀

दावसाधारणेऽव्याप्तिः सपक्षव्यावृत्तत्वस्य विरुद्ध एव वर्तमानत्वादित्यस्वरसः केचिदित्यनेन सूचितः ॥

इति श्रीमद्वामहोपाध्यायगदाधरभट्टाचार्य्यविरचिता सव्यभिचार पूर्वपक्षलक्षण व्याख्या समाप्ता ।

❀ विवृतिः ❀

**शायामिति** । तथा च तदानीं घटः शब्दवान् घटत्वादित्यादावसाधारणेऽव्याप्तिः, निश्चितशब्दतदभाववद्व्यावृत्तत्वस्य घटत्वादिमात्रनिष्ठतया तस्य विरुद्धे एव वर्त्तमानत्वादिति भावः । **केचित् इत्यनेन सूचितइति** । तथा च मिश्रमतं न युक्तमित्याशयः ।

**मूले व्यर्थविशेषणत्वादिति** । असाधकतानुमाने सपक्षवृत्तित्वे सति इत्यादिविशेषणस्य व्यर्थत्वं स्वरूपासिद्ध्यादेरप्यसाधकत्वादित्याशयः ।

एतेन = पूर्वोक्तदूषणगणग्रासेन । प्रत्येकमेव = असाधारण्यत्वादिनाऽसाधारण्यादेरेव । दूषणत्वात् = दोषत्वात् । उद्भावने = साधारण्यत्वादिना साधारण्यादेरुद्भावने । **वादिनिवृत्तेश्चेति** । प्रत्युक्तमिति पूर्वेणान्वयइति दिक् ॥

❀ इति श्रीपण्डितप्रवरवामाचरणभट्टाचार्य्यन्यायाचार्यतर्कतीर्थविरचिता सव्यभिचारपूर्वपक्षलक्षणविवृत्तिः समाप्ता ❀

---



श्रीः

ॐ नमोगणेशाय

# अथ सव्यभिचारसिद्धान्तलक्षणम्

उच्यते । उभयकोट्यपस्थापकतावच्छेदकरूपवत्त्वं तत्त्वम् । तच्च साधारणत्वादि ।

❀ दीधितिः ❀

पूर्वोक्तलक्षणानां यथोक्तरीत्या यथामतं नाव्याप्त्यादिसम्भावना-

❀ गादाधरी ❀

ननु पूर्वपक्षग्रन्थोक्तलक्षणावलम्बनेन सिद्धान्तप्रणयनमसङ्गतं तत्तद्दोषाणां जागरूकत्वादित्याशङ्कां निराकरोति पूर्वोक्तेति । यथामतमिति । यद्यन्मतमालम्ब्य यद्यल्लक्षणमभिहितं तत्तन्मते तत्र नाव्याप्तिसम्भावनेत्यर्थः । तत्र साधारण्यस्यासाधारण्यस्य च संशायकतामते प्रथमलक्षणं व्याप्तिग्रहादिविरोधितामते च तादृशविरोधितघटितलक्षणम् । तेन विरोधित्वघटितलक्षणक्ष्ये विरुधे संशयप्रयोजकस्य सपक्षवृत्तित्वघटितसा-

❀ विवृतिः ❀

उच्यत इत्यादिना मूलकृतां सिद्धान्तलक्षणाभिधानम् असंगतम्, निरुक्तलक्षणस्य पूर्वपक्षोक्तलक्षणसदृशतया पूर्वपक्षलक्षणोक्तदोषाणामत्रापि लक्षणे जागरूकत्वादित्याशंकानिराकरणपरं पूर्वोक्तलक्षणानामित्यादि दीधितिग्रन्थमवतारयति—**नन्वित्यादि ।** तद्दोषाणाम् = पूर्वपक्षलक्षणोक्तदोषाणाम् । तत्र=तेषु लक्षणेषुमध्ये । साधारण्यस्य = साध्यतदभाववद्वृत्तित्वस्य । असाधारण्यस्य=निश्चितसाध्यतदभाववद्व्यावृत्तत्वस्य । संशायकतामते = साध्यसंशयजनकतावच्छेदकप्रकारतावच्छेदकत्वमते । प्रथमलक्षणम् = संशयजनकताघटितलक्षणम् ।

**व्याप्तिग्रहेति ।** व्याप्तिग्रहप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवत्वमते इत्यर्थः । **तादृशेति ।** एतेनेत्यादिनाभिहितप्रतिबन्धकताघटितद्वितीयलक्षणमित्यर्थः । तेन=तत्तन्मतमवलम्ब्य तत्तल्लक्षणाभिधानेन । विरुद्धे = गोत्वादिसाध्यकाश्वत्वादिहेतौ । संशयप्रयोजकस्य = साध्यसंशयजनकप्रकारतावच्छेदकधर्मस्य । **सपक्षेति ।** साध्यवद्वृत्तित्वघटितसाध्यसाध्याभाववद्वृत्तित्वरूपसाधारण्यस्ये-

❀ दीधितिः ❀

**परन्तु तज्ज्ञानस्यानुमित्यप्रतिबन्धकतया तेषां हेत्वाभासतावच्छेदकत्वं न घटते, न घटतां किन्तेन, तेषां हेत्वाभासविभागमात्रोपयोगित्वादि·**

❀ गादाधरी ❀

धारण्यस्य विपक्षव्यावृत्तत्वघटितासाधारण्यस्य च बिरहेऽपि प्रथमलक्षणस्य नाव्याप्तिः प्रथमलक्षणालक्ष्ये तत्र च विरोधिताघटितलक्षणस्य वा नातिव्याप्तिरिति भावः । तेषां—कोटिद्वयोपस्थापकतावच्छेदकत्वादिरूपानुगतधर्मावच्छिन्नानां तादृशरूपाद्यात्मकलक्षणानाम्, हेत्वाभासतावच्छेदकत्वम्—अनुमितिप्रतिबन्धकतायाम् विषतयावच्छेदकत्वम्। विभागमात्रेति। मात्रपदेन दुष्टत्वव्यवहारव्यवच्छेदः, दुष्टत्वव्यवहारनियामकोऽनुमितिप्रतिबन्धकतावच्छेदकधर्म एव विभाजक इति नियमे मानाभावादिति भावः।

❀ विवृत्तिः ❀

त्यर्थः। **विपक्षेति**। निश्चितसाध्याभाववद्व्यावृत्तत्वघटितनिश्चितसाध्यतदभाववद्व्यावृत्तत्वरूपासाधारण्यस्येत्यर्थः। **विरहेऽपीति**। विरुद्धे इति पूर्वेणान्वयः। प्रथमलक्षणस्य=संशयजनकताघटितलक्षणस्य। **नाव्याप्तिरिति**। संशयजनकताघटितलक्षणवादिनां मते विरुद्धस्यालक्ष्यतया तत्र लक्षणासत्त्वमिष्टमेवेतिभावः॥

प्रथमलक्षणालक्ष्ये=संशयजनकताघटितलक्षणाऽलक्ष्ये। तत्र च=पूर्वोक्तविरुद्धे च **विरोधितेति**। प्रतिबन्धकताघटितद्वितीयलक्षणस्येत्यर्थः। **नातिव्याप्तिरिति**। प्रतिबन्धकताघटितद्वितीयलक्षणवादिनां मते विरुद्धस्य लक्ष्यतया तत्र लक्षणगमनमिष्टमेवेत्याशयः।

**कोटिद्वयेति**। संशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारतावच्छेदकत्वादिरूपानुगतधर्मावच्छिन्नानामित्यर्थः। आदिपदात्पक्षवृत्तित्वेसत्यनुमितिविरोधिसम्बन्धाव्यावृत्तिमत्त्वत्वादिरूपानुगतधर्मपरिग्रहः। **तादृशेति**। कोटिद्वयोपस्थितिघटितपूर्वोक्तलक्षणानामित्यर्थः। **अनुमितीति**। अनुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वमित्यर्थः। विभागमात्रोपयोगित्वादित्यत्र मात्रपदव्यवच्छेद्यमाह—**दुष्टत्वेति**। दुष्टत्वव्यवहारं प्रति अनुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मस्यैव प्रयोजकत्वादिशयः।

नन्वनुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मस्यैव विभाजकतायाः पूर्वमुक्तत्वात् कथमुक्तोपस्थापकतावच्छेदकधर्मस्य विभाजकत्वमित्याशंकानिराकरणाय भावमाह—**दुष्टत्वेति**। **इतिनियम इति**। यत्रानुमितिप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकत्वं तत्रैव विभाजकत्वमित्याकारक·

❀ दीधितिः ❀

त्याशयेनाह उच्यत इति। सन्देहं प्रत्येव साधारण्यादिविशिष्टधर्म्मवद्धर्मिज्ञानत्वेन हेतुता तज्जनककोटिद्वयोपस्थितिं प्रति तु तादृशधर्म्म

❀ गादाधरी ❀

नन्वत्र लक्षणे पक्षधर्मतापदानुपादान्नित्यत्वादिसाध्यकस्थले कोटिद्वयोपस्थापकसाधारणधर्मवत्ताज्ञानविषयीभूते द्व्यणुकादौ अतिव्याप्तिरित्याशंकां निराचिकीर्षुरभिप्रायं वर्णयति सन्देहमित्यादिना। एवकारेण कोटयुपस्थितौ तादृशरूपेण हेतुताव्यवच्छेदः। तादृशधर्मेति। साधारण्यादिविशिष्टधर्मेत्यर्थः। मात्रपदेन धर्मिविषयकत्वस्य कोटिद्वयोपस्थितिजनकतावच्छेदकत्वव्यवच्छेदः। तथाच कोटिद्वयोपस्थितिजनकतात्वच्छेदकीभूता या विषयता तदवच्छेकधर्मवत्त्वं नोक्तस्थले द्व्यणुकादौ अणुत्वादिविषयताया एव तथात्वादिति न तत्रातिव्याप्तिरिति भावः।

अथैतन्मते संशयं प्रति साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुताया अधि-

❀ विवृतिः ❀

व्याप्ताविव्यर्थः। **मानाभावादिति**। अनुकूलतर्कविरहेणेत्यादिः। कोटिद्वयोपस्थितिजनकतावच्छेदकविषयतावच्छेदकधर्मवत्त्वमात्रं यदि सव्यभिचारत्वम् तदा इदं द्व्यणुकं नित्यम् अणुत्वात् इत्यादौ सद्धेतौ द्व्यणुकेऽतिव्याप्तिः, नित्यत्वतदभावसहचरिताणुत्ववदिदं द्व्यणुकमित्याकारकज्ञाननिष्ठायां नित्यत्वतदभावोपस्थितिजनकतायां द्व्यणुकविषयतायाः अप्यवच्छेदकत्वात् अतः पूर्वोक्तरीत्या अत्रापि लक्षणे पक्षधर्मतापदोपादानमावश्यकमित्याशंका निराकरणपरं सन्देहं प्रत्येवेत्यादिदीधितिग्रन्थमवतारयितुमाह—**नन्वत्रेति**। तादृशरूपेण—साध्यतदभाववद्वृत्तित्वादिविशिष्टधर्मवद्धर्मिविषयकज्ञानत्वेन रूपेण। **साधारण्यादीति**। साध्यादिमद्वृत्तित्वादिविशिष्टधर्मविषयकज्ञानत्वेनेत्यर्थः। भावमाह—**तथाचेति**। एवं च नित्यत्वतदभाववद्वृत्त्यणुत्वमित्याकारकज्ञानस्यैव कोटयुपस्थितौ जनकतया तज्जनकतात्वच्छेदिका तादृशवृत्तित्वप्रकारतानिरूपिताणुत्वविषयतैव न तु द्व्यणुकविषयता, नित्यत्वादिमद्वृत्त्यणुत्ववद्द्व्यणुकमित्याकारकज्ञानस्यकोटयुपस्थितावहेतुत्वात्, संशयं प्रत्येव तादृशज्ञानस्य जनकत्वात् इति पक्षधर्मतापदं विहाय-केवलोभयकोट्युपस्थितिजनकतावच्छेदकविषयतावच्छेदकधर्मवत्त्वस्य लक्षणार्थत्वेऽपि न तादृशस्थले द्व्यणुकेऽतिव्याप्तिरिति तु समुदिततात्पर्य्यम्॥

शंकते **अथैतन्मत इति**। साधारणधर्मज्ञानत्वेन कोट्युपस्थितिजनकतावादिनां मते इत्यर्थः। **आधिक्याद्गौरवमिति**। अस्मन्मते तु एकेनैव साधारण-

❀ दीधितिः ❀

ज्ञानत्वमात्रेणेत्यभिप्रेत्याह उभयेति। साध्यसन्देहजनकेति प्रकृतम्॥

❀ गादाधरी ❀

क्यावृद्गौरवमिति चेन्न। भवन्मतेपि कोटिद्वयोपस्थितिं प्रति तेन रूपेण हेतुताया आधिक्यात्। सम्बन्धिहस्त्यादिविशेष्यकज्ञानाद्धस्तिपकादिस्मृतेरिव तत्कोटिसहचरितधर्मविशेष्यकज्ञानादपि तत्कोटिस्मृतेर्निर्विवादतया साधारणधर्मविषयकज्ञानत्वेन कोट्युपस्थितिहेतुताया उभयवादिसिद्धत्वात्तस्मात्कोट्युपस्थितौ साधारणधर्मवद्धर्मिज्ञानत्वेन संशयं प्रति च साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन हेतुत्वमिति पूर्वपक्षलक्षणापेष्टंभकमतापेक्षया संशयं प्रति साधारणधर्मवद्धर्मिज्ञानत्वेन साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन च हेतुतामतमेव सयुक्तिकम्।

❀ विवृतिः ❀

धर्मवद्धर्मिज्ञानत्वेन रूपेण संशयं प्रति कोटिद्वयोपस्थितिं प्रति च जनकत्वाभ्युपगमाल्लाघवमिति भावः।

समाधत्ते **इतिचेन्नेति**। भवन्मतेऽपि=संशये कोट्युपस्थितौ च पूर्वोक्तैकेन रूपेण हेतुत्वमभ्युपगच्छताम्मतेऽपीत्यर्थः। तेन रूपेण = साधारण धर्मवद्धर्मि ज्ञानत्वेन रूपेण। **आधिक्यादिति**। सम्बन्धप्रकारकज्ञानस्यैव स्मारकतया सम्बन्धिप्रकारकज्ञानत्वेन स्मृतिहेतुत्वकल्पनं पुनरधिकमितिभावः।

ननु तत्सम्बन्धिप्रकारकज्ञानमेव तत्स्मरणं प्रति कारणं नतु तत्सम्बन्धप्रकारकं ज्ञानं तथा तथा च संशये कोटिद्वयोपस्थितौ च साधारणधर्मवद्धर्मिज्ञानत्वेन रूपेणैकहेतुत्वस्यावश्यकतयैवास्माकं मते लाघवं सम्भवतीत्यत आह–**सम्बन्धीति**। पकसम्बन्धिहस्तीत्याकारकज्ञानादित्यर्थः। आदिपदात् घटपदं घटे शक्तमित्याकारकज्ञानपरिग्रहः। **हस्तिपकादिस्मृतेरिवेति**। निरुक्तस्मृतेः सर्ववादिसम्मततया तस्या दृष्टान्तत्वानुसरणम्॥ **तत्कोटीति**। धूमसमानाधिकरणो वह्निरित्याकारकधूमसामानाधिकरण्यसम्बन्धप्रकारकवह्निविशेष्यकज्ञानादपीत्यर्थः। तत्कोटिस्मृतेः=धूमादिकोटिस्मृतेः। **साधारणेति**। साध्यादिमद्वृत्तित्वप्रकारकहेत्वादिरूपधर्मविशेष्यकज्ञानत्वेनेत्यर्थः। **उभयमतसिद्धत्वादिति**। तथा च कोट्युपस्थितौ साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुत्वकल्पने गौरवमेवेतिभावः॥

उपसंहरति–**तस्मादिति**। **सयुक्तिकमिति**। तथा कोट्युपस्थितौ साधारणधर्मज्ञानत्वेन हेतुत्वस्योभयवादिसिद्धतया तज्जन्य कोट्युपस्थितेः संशयजनकत्वाभ्युपगमेनैवोपपत्तौ साधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन संशयहेतुत्वं निष्प्रामाणिकमिति हृदयम्॥

❀ गादाधरी ❀

अथास्तु कोट्युपस्थितौ साधारणधर्मज्ञानत्वेनैव हेतुता तथापि संशये धर्मिभाननियमाय तत्र साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुत्वमफले कोट्युपस्थितेः संशयहेतुतायां साधारणधर्मज्ञानजन्यत्वनिवेशस्थाने साधारणधर्मवद्धर्मिज्ञानजन्यत्वनिवेशनादेव तन्नियमोपपत्तेः स्वतन्त्रकारणताकल्पनापेक्षया क्लृप्तकारणतायामवच्छेदकगौरवस्यैवोचितत्वात्। न च धर्मिज्ञानस्य संशये साक्षाद्धेतुताया अपि क्लृप्तत्वात्तत्र साधारणधर्मप्रकारकत्वामात्रं निवेश्यत इति नास्माकमपि स्वतन्त्रकारणताकल्पनम्, मानसेपि च विप्रतिपत्तिवाक्याधीनसंशये कोट्योरिव धर्मिणोपि पदजन्यैवा-

❀ विवृत्तिः ❀

पुनः शंकते—**अथास्त्वित** । धर्मिभाननियमाय=तत्तद्धर्मिविषयकत्वनियमाय। तत्र=संशये। **संशयहेतुतायामिति** । सप्तम्यर्थोऽवच्छेदकत्वम्, तस्य च साधरणधर्मज्ञानजन्यत्वादावन्वयः। तन्नियमोपपत्तेः=संशयस्य तत्तद्धर्मिविषयकत्वनियमोपपत्तेः ॥

ननु संशयं प्रति साधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन जनकत्वाभ्युपगमे धर्मिविषयकत्वादेरपि तादृशकारणतावच्छेदककोटौ प्रविष्टतया गौरवमत आह—**स्वतन्त्रेति**। प्रथक्साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन संशयजनकताकल्पनापेक्षयेत्यर्थः। **गौरवस्यैवोचितत्वादिति**। तथा च संशयनिष्ठतत्तद्धर्मिविषयकत्वनियमार्थं यदि साधारणधर्मवद्धर्मिज्ञानत्वेन संशयहेतुत्वमवश्यक्लृप्तं तदा तादृशज्ञानजन्यकोट्युपस्थितित्वेन संशयं प्रत्येककारणत्व कल्पनेनैव तादृशनियमरक्षासम्भवे साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन पृथक्संशयजनकत्वकल्पनमप्रामाणिकम्, अवश्यक्लृप्तस्यैककारणतावच्छेदकतया भानेऽपि क्षत्यभावादितिभावः ॥

नचेति वाच्यमिति परेणान्वयः। **क्लृप्तत्वादिति**। अन्यथा संशये धर्मिभाननियमो न स्यादिति भावः। तत्र=हेतुतायाम्। अवच्छेदकत्वं सप्तम्यर्थः, तस्य च साधारणधर्मप्रकारकत्वेऽन्वयः। **स्वतन्त्रकारणताकल्पनमिति**। धर्मिज्ञानस्य संशयहेतुताया उभयवादिसिद्धतया तत्र साधारणधर्मप्रकारकत्वनिवेशोऽपि नास्माकमधिककारणताकल्पनमिति भावः ॥

ननु संशयमात्रे यदि साधारणधर्मवद्धर्मिज्ञानं कारणं तदा विप्रतिपत्तिवाक्यात् संशयो न स्यात् तादृशसंशयपूर्वक्षणे साधारणधर्मवद्धर्मिज्ञानस्य विरहाद् इत्यत आह—**मानसेऽपि चेति**। **यद्वा**—ननु धर्मिज्ञानस्य संशयहेतुतायां धर्मिविषयकत्वमात्रमेवावच्छेदकं नत्वन्यदित्यत आह—**मानसेऽपि चेति**। तथा च विप्रति-

❀ गादाधरी ❀

पस्थितिः कारणमिति पदजन्यत्वेन धर्मिज्ञानस्य विप्रतिपत्तिवाक्याधीनसंशये पृथक् कारणताया आवश्यकत्वात्तदन्यसंशयकारणतायां साधारणधर्मादिविषयकत्वान्तर्भावे बाधकाभावादिति वाच्यम् । संशये साधारणासाधारणधर्मवद्धर्मिज्ञानत्वेन हेतुताद्वयस्य तादृशतादृशधर्मज्ञानजन्यकोट्युपस्थितित्वेन हेतुताद्वयस्य च कल्पनापेक्षया तादृपतादृशधर्मविषयकत्वमनन्तर्भाव्य धर्मिज्ञानत्वेन च हेतुतायास्तादृशतादृशधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन च हेतुताद्वयस्य च कल्पने स्फुटतरं लाघवात् ।

मैवम् । कोट्युपस्थतिकारणतायां तत्तत्कोटिसहचरितधर्मवद्धर्मिविशेषविषयकज्ञानजन्यत्वनिवेशे धर्मिभेदेन गुरुधर्मावच्छिन्नकारणताया आनन्त्यापत्तेस्तदपेक्षया धर्मिविशेषमनन्तर्भाव्य तत्तत्कोटिसहचरितधर्मज्ञानजन्यकोट्युपस्थितित्वेन धर्मिविशेषमन्तर्भाव्य साधारणधर्मवद्धर्मिविशेषज्ञानत्वेन लघुशरीरेण हेतुत्वस्य कल्पयितुं युक्तत्वात् । न चोपस्थितिकारणतावच्छेदकशरीरे धर्मिणोऽनन्तर्भावेपि कार्यतावच्छेदकीभूतसंश-

❀ विवृतिः ❀

पत्तिवाक्याधीनसंशयं प्रति पदजन्यधर्मिज्ञानत्वेन हेतुत्वं यथाऽवश्यक्ऌतं तथा तदन्यसंशयं प्रत्यपि साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुत्वं निर्विवादमेवेत्याशयः ॥

सिद्धान्तलक्षणवादिनांमते संशयं प्रति साधारणधर्मवद्धर्मिज्ञानत्वेन असाधारणधर्मवद्धर्मिज्ञानत्वेन च कारणताद्वयम् एवं साधारणधर्मज्ञानजन्यकोट्युप्रस्थितित्वेन असाधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन च कारणताद्वयमिति चतुष्टयकारणताकल्पनापेक्षया केवलधर्मिज्ञानत्वेन संशयं प्रत्येककारणताया साधारणधर्मादिमद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन च सशयं प्रति द्विविधकारणताया एव कल्पनेन कारणतात्रयस्यैव कल्पनीयतया पूर्वपक्षलक्षणवादिनां मतस्यैव लघुत्वादित्याह–**संशये इति** । अथास्त्वित्यादेरुत्तरं–**मैवमिति** । **कोट्युपस्थितिकारणतायामिति** । तत्तत्कोटिसहचरितधर्मिविशेषविषयकज्ञानजन्यत्वान्वय्यवच्छेदकत्वं सप्तम्यर्थः । **गुरुधर्मेति** । साधारणादिधर्मवद्धर्मिविषयकज्ञानजन्यत्वकोट्युपस्थितित्वरूपगुरुधर्मावच्छिन्नकारणताया इत्यर्थः । कल्पयितुं–**युक्तत्वादिति** । तथा चास्मन्मते संशयं प्रति धर्मिज्ञानकारणतायास्तुल्यत्वेऽपि साधारणादिधर्मज्ञानजन्यकोट्युपस्थितित्वेन कारणताद्वयस्यैव कल्पनीयतया लाघवम्, भवन्मतेतु साधारणादिधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन संशयकारणत्वकल्पने धर्मिभेदेन निरुक्तोपस्थितिनिष्ठकारणतायाः आनन्त्याद् गौरवमिति भावः ॥

❁ गादाधरी ❁

यत्वस्य धर्मिविषयताघटितत्वात् कोट्युपस्थितेर्धर्मिभेदेन कारणताभेद आवश्यक इति वाच्यम्। संशयत्वशरीरे धर्मिविशेषविषयताया विशेष्यतात्वेन किञ्चिद्धर्मावच्छिन्नविशेष्यतात्वेनैव वा सामान्यतो निवेशनीयतया धर्मिभेदेन कारणताभेदानावश्यकत्वादिति दिक्।

पूर्वलक्षणोक्तातिप्रसङ्गवारणाय साध्यसन्देहजनकत्वस्य कोट्युपस्थितिविशेषणताया आवश्यकत्वादत्र तदुपस्थापकपदानुपादाननिबन्धनं तद्निवेशभ्रमं निराकुरुते साध्यसन्देहेति। प्रकृतं—प्रकरणवशात्सामान्यशब्दस्य विशेषपरतया प्राप्तम्। तथा च साध्यसन्देहजनिका या साध्योपपस्थितिस्तज्जनकतावच्छेदिका सती तथाविधसाध्याभावोपस्थितिजनकतावच्छेकीभूता या विषयता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं

❁ विवृतिः ❁

संशयत्वस्य तत्तद्धर्मिविषयताकभावाभावप्रकारकज्ञानत्वस्वरूपतयाकार्य्यतावच्छेदकतत्तद्धर्मिविषयताभेदेन भवन्मतेऽपि उपस्थितिकारणताभेदोऽवश्यमंगीकर्त्तव्यइत्याशंक्य समाधत्ते—**संशयत्वशरीरे इति। विशेष्यतात्वेनेति।** तथा च विशेष्यातात्वावच्छिन्नविषयताकतादृशज्ञानत्वावच्छिन्नं प्रत्येव साधारणादिधर्मज्ञानजन्यकोट्युपस्थितित्वेन हेतुतया न धर्मिभेदेन उपस्थितिकारणताभेद इत्याशयः॥

ननु विशेष्यतात्वावच्छिन्नविषयताकतादृशज्ञानत्वं यदि संशयत्वं तदा निर्धर्मितावच्छेदककवह्निमान्नवेत्याकारकज्ञानस्यापि तथात्वापत्तिः, नचोक्तज्ञाने विशेष्यतात्वेनापि विषयतायाः भानं नाङ्गीक्रियत इति वाच्यम्, बाधकाभावेन विशेष्यतात्वस्य-तत्र भानाभ्युपगमात् विशेष्यतात्वातिरिक्तधर्मावच्छिन्नविषयताकज्ञानस्यैव सधर्मितावच्छेदककज्ञानत्वात् इति यदिब्रूयात्तदाप्याह **किञ्चिदिति।** तथाच किञ्चिद्धर्मावच्छिन्ना या विशेष्यता तादृशविशेष्यतात्वविशिष्टविषयताकविरुद्धभावाभावप्रकारकज्ञानत्वं संशयत्वं, तदवच्छिन्नं प्रत्येव साधारणादिधर्मज्ञानजन्यकोट्युपस्थितित्वेन हेतुत्वमिति न धर्मिभेदेन कोट्युपस्थितिकारणताभेद इति भावः॥

कोट्युपस्थितौ संशयजनकत्वाऽनिवेशे पूर्ववत् अयं नित्यः ज्ञानात् इत्यत्र नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानमादाय सद्धेतौ ज्ञानेऽतिव्याप्तिरतः कोट्युपस्थितौ संशयजनकत्वमवश्यं निवेशनीयम् तच्च न शब्दलभ्यमित्याशंक्य साध्यसंदेहेत्यादिदीधितिमवतारयति — **पूर्वपक्षलक्षणोक्तातिप्रसंगवारणायेत्यादि निराकुरुते इत्यन्तेन।** सामान्यशब्दस्य=उभयकोट्युपस्थितिरूपसामान्यशब्दस्य। विशेषपरतया=संशयजनकत्वविशिष्टकोट्युपस्थितिपरतया। पूर्वपक्षोक्तलक्षणोक्तदिशा लक्षणार्थं वर्णयितुमाह **तथाचेति। या विषयतेति।** या प्रकारतेत्यर्थः। **निष्क-**

❀ गादाधरी ❀

त्त्वमिति पूर्वोक्तदिशा लक्षणार्थो निष्कर्षयितव्यः। वह्निसाहचर्यवह्न्य-भाववद्व्यावृत्तत्वावच्छिन्नधूमादिविषयतायाः पूर्वोपदर्शितरीत्या तथाविधसाध्याभावोपथितिजनकतावच्छेदकत्वेपि तामादायातिप्रसङ्गः पूर्ववदेव वारणीयः। समवायादिघटतसाधारण्यमादाय संयोगादिना धूमादेर्वह्न्यादिसाध्यकसव्यभिचारतावारणाय प्रकृतसम्बन्धेन यत्साध्यवद्वृत्तित्वं साध्याभाववद्वृत्तित्वं च तद्घटितत्त्वेन विषयतावच्छेदकधर्मो विवक्षणीयः असाधारण्यशरीरेपि अभावप्रतियोगितया साध्यादिमद्वृत्तित्वनिवेशान्न तदसंग्रहः॥

❀ विवृतिः ❀

र्षयितव्य इति। तथा च वह्निमान् धूमादित्यादौ वह्निसहचरितधूमवान् वह्न्यभावसहचरितधूमवांश्च पर्वतइत्याकारकसमूहालम्बनज्ञानमादाय नातिव्याप्तिः, नवा वह्निवह्न्यभावसहचरितधूमवान् पर्वत इत्याकारकभ्रमात्मकज्ञानमादायापि तत्रातिव्याप्तिरितिभावः॥

पूर्ववदेव वारणीय इति। मैवं साध्यविषयकत्वघटितेत्यादिकल्पोक्तरीत्या वारणीयेत्यर्थः। साधारण्यघटकसाध्यतदभाववद्वृत्तित्वं सव्यभिचारताघटकसम्बन्धेनैव वक्तव्यमन्यथा समवायेन वह्न्यभाववद्वृत्तित्वघटितसाधारण्यज्ञानमादाय धूमादावतिव्याप्तिः स्यात् एवमसाधारण्यघटकनिश्चितसाध्यादिमद्व्यावृत्तत्वप्रतियोगिवृत्तित्वमपि सव्यभिचारताघटकसन्बन्धेनैव वाच्यम् अन्यथा शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षेसाध्यसंदेहदशायां निश्चितसाध्यवति घटादौ कालिकसम्बन्धेन शब्दत्वस्य वर्त्तमानत्वेऽपि न तदानीं शब्दत्वादावव्याप्तिरित्याह **समवायघटितसाधारण्यमादायेत्यादि**। प्रकृतसम्बन्धेन = सव्यभिचारताघटकसम्बन्धेन। **साध्यवद्वृत्तित्वमिति**। अन्यथा विरुद्धे कालिकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वमादायातिव्याप्तिः स्यादितिभावः॥

तद्घटितत्वेनैव = सव्यभिचारताघटकसम्बन्धावच्छिन्नतादृशवृत्तित्वघटितत्वेनैव। विषयतावच्छेदकधर्मः = संशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारतावच्छेदकधर्मः। **प्रतियोगितयेति**। विशेषणे तृतीया, प्रतियोगिताविशिष्टमित्यर्थः। शब्दो नित्यः शब्दत्वादित्यत्र पक्षे साध्यसंदेहदशायां निश्चितसाध्याभाववति घटादौ

❀ मनोरमा ❀

**प्रकृत सम्बन्धेन साध्यवद्वृत्तित्वमित्यादि**। अत्र सव्यभिचारताघटकसम्बन्धावच्छिन्नसाध्यादिमद्वृत्तित्वविषयताघटितधर्मावच्छिन्नत्वेन संशयजनकतैव विवक्षणीया नतु तादृशसाध्यादि-

❀ दीधितिः ❀

**यथाकथञ्चित् कोटिद्वयोपस्थितिः स्मृत्यनुभवसाधारणो**

❀ गादाधरी ❀

साधारणधर्मवद्धर्मिज्ञानसत्त्वे उद्बोधकान्तराधीनकोटिस्मरणादनुभवात्मककोट्युपस्थितेर्वा संशयोपगमे क्षतिविरहात् । विशेषणज्ञानादिमुद्रया कोट्युपस्थितिहेतुतयैवोपपत्तेः साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन स्वतन्त्रहेतुताकल्पनमनर्थकमिति व्याख्यातकल्पे साध्यसन्देहजनकत्वरूपकोट्युपस्थितिविशेषणस्याव्यावर्त्तकतया विलक्षणजनकतायाश्चासत्त्वेन निवेशनासंभवादुक्तातिप्रसङ्गो दुर्वार एवेत्यभिप्रेत्य तादृश-

❀ विवृतिः ❀

कालिकसम्बन्धेन शब्दत्वस्य वर्त्तमानत्वात्तदानीं तत्राव्याप्तिवारणाय निश्चितसाध्याभाववद्व्यावृत्तत्वप्रतियोगिवृत्तित्वमपि प्रकृतसम्बन्धेनैव बोद्धव्यमिति दिक् ॥

यथाकथंचिदित्यादिदीधितिग्रन्थमवतारयति **साधारणेति** । साध्यतदभाववद्वृत्तिधर्मवद्धर्मिज्ञानसत्त्वे इत्यर्थः । **उद्बोधकेति** । निरुक्तसम्बन्धिज्ञानभिन्नज्ञानादिरूपोद्बोधकजन्यकोटिस्मरणादित्यर्थः । **अनुभवात्मकेति** । स्वकारणाधीनानुमित्याद्यात्मककोट्युपस्थितेरित्यर्थः । **क्षतिविरहादिति** । वक्ष्यमाणरीत्या निरुक्तलक्षणे कस्यापि दोषस्यासम्भवादित्याशयः ॥

विशेषणज्ञानादिमुद्रया=विशेषणज्ञानत्वादिना । आदिपदात् विशेषणतावच्छेदकप्रकारकज्ञानपरिग्रहः ॥

इति व्याख्यातकल्पे = धर्मिणीत्यादिना व्याख्यातकल्पे । **अव्यावर्त्तकतयेति** । कोट्युपस्थितौ संशयजनकत्वानुपादानेऽपि वक्ष्यमाणरीत्या नायं नित्यः ज्ञानादित्यादावतिव्याप्तिरितिभावः । **विलक्षणेति** । साधारणधर्मादिज्ञानजन्यकोट्युपस्थितित्वेन संशयजनकतायाश्चासत्त्वेनेत्यर्थः । **उक्तातिप्रसंग इति** । यथाश्रुतलक्षणे-

❀ मनोरमा ❀

मद्वृत्तित्वघटितत्वेन, विषयतावच्छेदकधर्मो निवेशनीयः तथासति संयोगसम्बन्धावच्छिन्नवह्निवह्न्यभाववद्वृत्तित्वकालीनो धूमः समवायेन वह्निवह्न्यभाववद्वृत्तिरित्याकारकज्ञानीयतादृशविषयतावच्छेदकवह्न्यादिमद्वृत्तित्वविशिष्टसंयोगावच्छिन्नवह्निवह्न्यभाववद्वृत्तित्वकालीनधूमत्वधर्ममादाय संयोगेनवह्निसाध्यकधूमहेतावतिव्याप्त्यापत्तिः स्यात् ।

अस्माकन्तु संयोगसम्बन्धावच्छिन्नवह्न्यादिमद्वृत्तित्वविषयतायाः साहचर्य्यधर्मितावच्छेदकविषयतात्मकतया तदवच्छिन्नजनकतायाः प्रकारतात्वावच्छिन्नप्रकारत्वानवच्छिन्नत्वान्न तादृशजनकतामादायातिप्रसंगइति ध्येयम् ॥

❀ गादाधरी ❀

निष्कृष्टमते प्रकारान्तरेणलक्षणार्थं व्याचष्टे यथाकथंचिदिति। साधारणधर्मज्ञानजन्या तदजन्या चेत्यर्थः। विशेषणज्ञानादिमुद्रया क्लृप्तकारणतात एव निर्वाहो न तु स्वातन्त्र्येण तद्धेतुत्वमिति सूचयितुं स्मृत्यनुभवसाधारणीति। नन्वेवं साधारण्यादिविशिष्टधर्मवत्ताज्ञानशून्यकाले कथं न संशय इत्यत आह नियामकमिति। नियामकं–तादृधर्मदर्शनदशायामेव संशय इति नियमनिर्वाहकम्। साधारण्यादीत्यस्य साक्षात्संशयहेतुभूतमित्यादिः। आदिपदादसाधारण्यपरिग्रहः। अत एव–अनुभवसाधारण्या कोट्युपस्थितेर्हेतुत्वादेव। धारावाही सन्देहः–अविरलक्रमोत्पन्नसन्देहत्रितया-

❀ विवृतिः ❀

इत्यादिः। अयं नित्यः ज्ञानादित्यादावतिव्याप्तिरित्यर्थः। **व्याचष्टे इति**। लक्षणार्थमित्यादिः। तदजन्या = साधारणधर्मादिज्ञानाऽजन्या।

संशयस्य विशिष्टबुद्धित्वेन विशिष्टवैशिष्ट्यावगाहिबुद्धित्वेन च तं प्रति कोट्युपस्थितेः विशेषणज्ञानत्वेन विशेषणतावच्छेदकप्रकारकज्ञानत्वेन वा हेतुतायाः सर्ववादिसिद्धतया तत एवोपपत्तौ संशयं प्रति साधारणधर्मादिज्ञानजन्यकोट्युपस्थितित्वेन पृथक् कारणताकल्पनं निर्युक्तिकमित्याह **विशेषणेति**। साधारणधर्मादिज्ञानजन्यकोट्युपस्थितेः स्मरणात्मकतयाऽनुभवात्मकत्वाऽसम्भवादाह **हेतिसूचयितुमिति**।

**तादृशेति**। साधारणधर्मादिदर्शनदशायामेवेत्यर्थः। **नियमनिर्वाहकमिति**। तथाच तादृशधर्मदर्शनशून्यकाले विशेषणादिज्ञानस्य सत्वेऽपि न संशयोत्पादः। साधारणादिधर्मदर्शनस्य साक्षात् संशयहेतुत्वादितिभावः।

**अविरलेति**। प्रथमं साधारणधर्मादिज्ञानजन्यकोट्युपस्थितिः ततः संशयः ततः संशयान्तरम् तदनन्तरजायमानसंशयत्रितयादिकमित्यर्थः। आदिना अविरलक्रमोत्पन्नचतुष्टयादिसंशयपरिग्रहः। द्वितीयसंशयस्य साधारणधर्मादिज्ञानजन्यकोट्युपस्थितिजन्यतायाः अक्षततया त्रितयादिकमित्युक्तम्। द्वितीयसंशयतृतीयचतुर्थक्षणे संशयानुत्पादे पुनः पञ्चमक्षणे संशयोत्पादार्थं साधारणधर्मज्ञानस्य पूर्वमवश्यमपेक्षणीयत्वादाहाविरलेति ध्येयम्।

साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन संशयजनकत्वाभ्युपगमे साधारणधर्मज्ञानस्य सम्बन्धज्ञानात्मकतया तज्जन्यकोट्युपस्थितिः स्मरणरूपैव संशयहेतुर्वाच्या–एवंच यत्र साधारणधर्मज्ञानजन्या स्मरणात्मिका कोट्युपस्थितिः ततः संशयस्ततः संशयान्तरं तदनन्तरं संशयोत्पत्तिर्न स्यात्तादृशस्मरणात्मककोट्युपस्थितेर्द्वितीयसं-

❀ दीधितिः ❀

**सन्देहजननी नियामकन्तु साधारण्यादिविशिष्टधर्मवत्ताज्ञानम्. अत**

❀ गादाधरी ❀

दिकम्। साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन संशयहेतुत्वे स्मरणात्मककोट्युपस्थितेरेव तथात्वात्। साधारणधर्मवत् धर्मिविषयकतथाविधैककोट्युपस्थित्या संशयद्वयजननसम्भवेपि संशयान्तरोत्पत्तौ तथाविधस्मृत्यात्मकोपस्थित्यन्तरस्यापेक्षणीयतापत्त्या अविरललग्नसंशयत्रितयादिकं नोपपद्यते एतन्मते तु संशयात्मककोट्युपस्थितेरपि संशयान्तरोत्पादसम्भवेनान्तरा कोटिस्मरणानपेक्षणात्साधारणधर्मवद्धर्मिविषयकद्वितीयादिसंशयात्तदग्रिमक्षणेषु संशयान्तरोत्पादे बाधकाभावः। न चास्मन्मतेपि संशयात्मककोटिज्ञानस्यापि साधारणधर्मज्ञानजन्यतयान्तरा कोटिस्मृतिं विनैव संशयान्तरोत्पादः सम्भवतीति वाच्यम्। अवच्छेदकभेदभिन्नयोः स्मृतिसंशयनिष्ठतादृशज्ञानजन्यतयोरननुगततया स्मृतिनिष्ठजन्यताया एव निवेशनीयतया स्मरणापेक्षाया आवश्यकत्वादिति भावः। स्वसामानाधिकर-

❀ विवृतिः ❀

शयोत्पादक्षण एव विनाशात् साधारणधर्मज्ञानजन्यकोट्युपस्थितेस्तदानीमभावात्‌ अनुभवस्मरणसाधारणविशेषणज्ञानत्वेन कोट्युपस्थितेः संशयजनकत्वमतेतु न तादृशत्रितयादिसंशयानुपपत्तिः, द्वितीयसंशयस्यैवानुभवात्मककोट्युपस्थितिस्वरूपतया तस्य त्रितयसंशयपूर्वं सत्त्वादित्याह **साधारणेति**। तथात्वात्=संशयजनकत्वात्।

साधारणधर्मवद्धर्मिण्येव कोट्युपस्थितेः संशयजनकत्वमितिमतेत्वाह **साधारणधर्मेति**। **बाधकाभाव इति**। तथा च धारावहनत्रितयादिसंशयोत्पादार्थमेव कोट्युपस्थितेः विशेषणज्ञानत्वेन संशयजनकत्वमवश्यंवक्तव्यमिति भावः॥

ननु साधारणधर्मज्ञानजन्यकोट्युपस्थितित्वेन संशयजनकत्वस्वीकारेऽपि न धारावाहित्रितयसंशयादेरनुत्पादः द्वितीयसंशयस्य साधारणधर्मज्ञानजन्यत्वेन तस्यैवानुभवात्मकसाधारणधर्मज्ञानजन्यकोट्युपस्थितिस्वरूपस्य त्रितयादिसंशयपूर्वं सत्त्वादित्याशङ्कते **न चेति**। वाच्यमितिपरेणान्वयः, अस्मन्मतेऽपि=साधारणधर्मादिज्ञानजन्यकोट्युपस्थितित्वेन संशयजनकत्ववादिनां मतेऽपि।

**समाधत्तेऽवच्छेदकेति**। स्मृतित्वानुभवत्वरूपतादृशज्ञानजन्यतावच्छेदकभेदेन भिन्नयोरित्यर्थः। **अननुगततयेति**। तादृशावच्छेदकभेदेनेत्यादिः। **स्मृतिनिष्ठेति**। स्मृतिनिष्ठायाः साधारणधर्मादिज्ञानजन्यताया एवेत्यर्थः। एवकारात् अनुभवनिष्ठायास्तादृशजन्यतायाः संशयजनकतावच्छेदकत्वव्यवच्छेदः। **आव-**

❀ दीधितिः ❀

**एव धारावाही सन्देह इति मते तु धर्मितावच्छेदकविशिष्टे धर्मिणि**

❀ गादाधरी ❀

**ण्यावच्छिन्नस्वाव्यवहितोत्तरत्वसम्बन्धेन साधारणधर्मज्ञानविशिष्टोपस्थितित्वेनं हेतुत्वोपगमे तु संशयादपि संशयः सम्भवतीति गौरवमेवोपस्थितेः स्वतन्त्रहेतुतायां बाधकमित्यवधेयम् ॥**

**धर्मितावच्छेदकेति । धूमवान्पर्वतो वह्निमान्न वेति संशये धर्मिताव-**

❀ विवृतिः ❀

**श्यकत्वादिति** । साधारणधर्मादिज्ञानजन्यताविशिष्टानुभवात्मकोपस्थितेः संशयजनकत्वाभ्युपगमे साधारणधर्मादिज्ञानजन्यस्मरणात्मकोपस्थित्यनन्तरं संशयानुत्पादप्रसंगः अतः तादृशज्ञानजन्यस्मरणात्मकोपस्थितित्वेन संशयहेतुत्वं वाच्यमेवञ्च भवन्मते अविरलक्रमोत्पन्नत्रितयादिसंशयानुपपत्तिः तादृशस्मृत्यात्मकोपस्थितेःद्वितीयसंशयक्षण एव विनाशादित्यवश्यमेवोपस्थितेर्विशेषणज्ञानत्वेन संशयजनकत्वमभ्युपगन्तव्यमित्याशयः ॥

नन्वनुगतरूपेणैव स्मृत्यनुभवसाधारणसाधारणधर्मादिज्ञानवैशिष्ट्यं निवेशनीयमित्याह=**स्वसमानेति** । अत्र स्वसामानाधिकरण्यं स्वसामानाधिकरण्योपलक्षितत्वस्वसामानाधिकरण्यवैशिष्ट्यैतदन्यतरवत्त्वं न तु वैशिष्ट्यमात्रम् अतः साधारणधर्मादिज्ञानतृतीयक्षणाद्युत्पन्नसंशयादेः तादृश ज्ञानविशिष्टकोट्युपस्थितित्वेन नाऽसंग्रहः । स्वाव्यवहितोत्तरत्वमपि स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपमेव वाच्यम् तेन तृतीयादिसंशयादेर्नाव्यवहितोत्तरत्वहानिरितिध्येयम् ।

**संशयादपि संशयसम्भवतीति** । तथा च द्वितीयादिसंशयस्यापि निरुक्तस्वसामानाधिकरण्यावच्छिन्नस्वाव्यवहितोत्तरत्वसम्बन्धेन साधारणधर्मादिज्ञानविशिष्टकोट्युपस्थितिस्वरूपतया तादृशसंशयात्मककोट्युपस्थितिमादायैव त्रितयादिसंशयाद्युत्पत्तिरितिभावः ।

**गौरवमेवेति** । विशिष्टबुद्धिसामान्यं प्रत्येव विशेषणज्ञानस्य हेतुतायाः सर्ववादिसिद्धतया साधारणधर्मादिज्ञानविशिष्टकोट्युपस्थितित्वेन संशयं प्रति पृथक् कारणत्वकल्पनं गौरवग्रस्तमित्याशयः ॥

धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्टज्ञानमित्यादिलक्षणघटकधर्मितावच्छेदकविशिष्टे इत्यस्य फलमाह–**धूमवान् पर्वतइति** । तथा च धर्मिणि यद्रूपविशिष्टज्ञानमेतावन्मात्रोक्तौ वह्निव्याप्येधूमेऽतिव्याप्तिः, धूमवान्पर्वतो वह्निमान्नवेत्याकारकसंशयं प्रति धूमवान् पर्वतइत्याकारकज्ञानस्य धर्मितावच्छेदकप्रकारकज्ञानत्वेन-

❀ दीधितिः ❀

**यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वमेव वक्तव्यम्। कोटिद्व-**

❀ गादाधरी ❀

**च्छेदकप्रकारकज्ञानमुद्रया पर्वतत्वाद्यवच्छिन्नविशेष्यकधूमत्वादिविशिष्ट-वत्ताज्ञानस्य जनकतया धूमत्वादिकमादायातिप्रसङ्गवारणाय धर्मिताव-च्छेदकविशिष्टेइति। धर्मितावच्छेदकपदं फलीभूतसंशयधर्मितावच्छेदक-तापर्याप्त्यधिकरणधर्मपरम्। अन्यथा पर्वतत्वादेरुपदर्शितसंशयधर्मिता-वच्छेदकघटकतया उक्तातिप्रसङ्गवारणासम्भवात्। एवं च तद्धर्मपर्याप्त-धर्मितावच्छेदकताकयत्किंचित्संशयनिरूपितायां जनकतायामवच्छेदकी भूता याया तद्धर्मनिष्ठधर्मितावच्छेदकतानिरूपितविशेष्यतानिरूपकप्रकारता तन्निरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वमिति प्राङ्निरुक्तयर्थः पर्य-**

❀ विवृतिः ❀

जनकतयाधूमविशिष्टपर्वतधर्मिकवह्निसंशयजनकतावच्छेदकप्रकारतावच्छेदकतापर्य्या-प्त्यधिकरणधूमत्ववत्त्वस्य धूमे सत्त्वादित्याशयः॥

ननु धर्मितावच्छेदकविशिष्टे इत्युक्तावपि तद्दोषतादवस्थ्यम् पर्वतत्वविशिष्टे पर्वते धूमप्रकारकज्ञानस्यैव धूमवान् पर्वतो वह्निमान्नवेति संशयजनकत्वादित्यत आह-**धर्मितावच्छेदकपदमिति। फलीभूतेति**। यादृशसंशयमादाय लक्षणं संगमनीयं तादृशसंशयधर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मबोधेच्छयोच्चरितमित्यर्थः।

उक्तविवक्षणे न धूमवान् पर्वतइत्याकारकज्ञानमादायातिप्रसंगः, निरुक्तज्ञानीय-धूमप्रकारताया धूमवान् पर्वतो वह्निमान्नवेत्याकारकसंशय धर्मितावच्छेदकतापर्य्या-प्त्यधिकरणधूमपर्वतत्वधर्मद्वयावच्छिन्नविशेष्यत्वाऽनिरूपितत्त्वादितिहृदयम्।

**अन्यथेति**। धर्मितावच्छेदकपदस्य फलीभूतसंशयधर्मितावच्छेदकतापर्य्या-प्त्यधिकरणधर्मपरत्वानभ्युपगमे इत्यर्थः। **उक्तातिप्रसंगवारणासम्भवादिति**। संशयधर्मितावच्छेदककेवलपर्वतत्वावच्छिन्नविशेष्यतानिरूपितत्त्वस्य धूमवान् पर्वत-इत्याकारकज्ञानीयधूमप्रकारतायां सत्त्वादितिभावः॥

फलीभूतसंशयधर्मितावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानि-रूपिता यद्रूपावच्छिन्ना प्रकारता संशयजनकतावच्छेदिका तद्रूपवत्त्वमिति यथाश्रुतलक्षणे यद्रूपपदेन सत्तावत्समवेतत्त्वमादाय सत्तावान् जातेरित्यत्रातिव्याप्तिः अतआह—**एवञ्चेति। तद्धर्मपर्य्याप्तेति**। यादृशधर्मपर्य्याप्तावच्छेदकतानिरूपितविशेष्यता-कयत्किञ्चित्संशयनिष्ठजन्यतानिरूपितायामित्यर्थः। **तद्धर्मनिष्ठेति**। तादृशधर्म-पर्य्याप्तधर्मितावच्छेदकतानिरूपितविशेष्यतानिरूपकप्रकारतेत्यर्थः। **तन्निरूपितेति**।

❀ गादाधरी ❀

वसितः । तेन सत्तावान् जातेरित्यादौ सत्ताभाववत्समवेतत्वाप्रसिद्ध्या यद्रूपपदेन सत्तावत्समवेतत्वमात्रोपादानसम्भवेनातिव्याप्तिरिति परास्तम् । वक्तव्यं-व्याख्येयम् । एवं च मूलस्थमुभयकोट्युपस्थापकपदं संशायकपरमित्यभिप्रायः । मूलमुपेक्ष्य निष्कृष्टमते स्वातन्त्र्येणैवैतल्लक्षणमिति केचित् ।

प्राचीनास्तु साधारण्याद्यवच्छिन्नप्रकारताशालिज्ञानत्वेन न संशयजनकता पुरुषत्वतदभावसहचरितत्वेन यदा कदाचिज् ज्ञातस्योर्द्ध्वत्वादेरुर्द्ध्वत्वत्वादिमात्रेण धर्मिणि ज्ञानादप्ययं पुरुषो न वेति संशयात्, किन्त्वनुद्बुद्धसंस्कारान्यसाधारण्यादिप्रकारकविशिष्टधर्मिज्ञानत्वेनैव, साधारण्यादिप्रकारकत्वं च संस्कारज्ञानसाधारणम्, अतस्तत्प्रकारकज्ञानासत्त्वेपि तज्जन्यतथाविधसंस्कारविशिष्टोर्द्ध्वत्वादिज्ञानात्संशयनिर्वाहः । वैशिष्ट्यं

❀ विवृतिः ❀

तादृशप्रकारतानिरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मवत्वं सव्यभिचारत्वमित्यर्थः । पूर्ववदसम्भववारणाय संशये यत्किंचित्त्वनिवेशः । केवलसाध्यवद्वृत्तित्वादिकमादाय व्याप्यादावतिव्याप्तिवारणाय प्रकारतायां यावत्त्व निवेशइत्यवधेयम् ॥

तेन = निरुक्तरीत्या लक्षणार्थनिर्वचनेन । परास्तमितिपरेणान्वयः। **एवञ्चेति** । निरुक्तमताश्रयणेचेत्यर्थः । संशायकपरम् = संशयजनकपरम् । उभयकोट्युपस्थापकपदस्य संशयजनकपरत्वनिर्वचनेनैव निरुक्तलक्षणार्थपर्य्यवसानसम्भवे स्वतन्त्रलक्षणाभिधानम् नयुक्तमित्यस्वरसः केचिदित्युक्त्वा सूचितः ॥

केचित्तु तत्तदभाववद्वृत्तित्वादिरूपसाधारण्याद्यवच्छिन्नप्रकारताकज्ञानत्वेन संशयजनकत्वं न स्वीकर्त्तव्यम् तथासति प्रहरादिपूर्वोत्पन्नेन पुरुषत्वतदभाववद्वृत्तित्वावच्छिन्नोर्द्ध्वत्वज्ञानेन जायमानोऽयः पुरुषत्वतदभाववद्वृत्ति ऊर्द्ध्वत्वमित्याकारकसंस्कार स्तत्सहितात् केवलोर्द्ध्वत्वत्वेन ऊर्द्ध्वत्ववानयमित्याकारकज्ञानात् अयं पुरुषोनवेति संशयानुत्पादः स्यादतः तत्तदभाववद्वृत्तित्वादिरूपसाधारण्याद्यवच्छिन्नप्रकारताको योऽनुद्बुद्धसंस्कारान्यस्तद्विशिष्टधर्मिज्ञानत्वेनैव संशयजनकत्वं वाच्यम् निरुक्तसाधारण्याद्यवच्छिन्नप्रकारताकत्वस्य संस्कारज्ञानादिसाधारणतया पुरुषत्वतदभाववद्वृत्तिउर्द्ध्वत्ववानयमित्याकारकैकज्ञानादपि संशयनिर्वाह इत्याहुस्तन्मतमुपन्यस्यति-**प्राचीनास्त्विति** । ऊर्द्ध्वत्वत्वादिमात्रेण धर्मिज्ञानात् = ऊर्द्ध्वत्ववानयमित्याकारकधर्मिज्ञानात् ॥

**अत इति** । तादृशसाधारण्यादिप्रकारताकत्वस्य संस्कारज्ञानसाधारणत्वादित्यर्थः । **तत्प्रकारकेति** । साधारण्यादिप्रकारकज्ञानाऽसत्त्वेऽपीत्यर्थः । **तज्ज-**

❀ दीधितिः ❀

**सहचरितत्वादिना ज्ञातस्य ऊर्द्ध्वत्वादेरूर्द्ध्वत्वादिना धर्मिणि ज्ञानमेव**

❀ गादाधरी ❀

**च स्वविशेष्यतावच्छेदकावच्छिन्नप्रकारताकत्वसामानाधिकरण्योभयसम्बन्धेन। अत एकधर्मावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकज्ञानादिसहितात् अपरधर्मावच्छिन्नप्रकारकधर्मिज्ञानान्न संशयः ईदृशापत्तिवारणायैव एकविशिष्टापरस्य हेतुता स्वीक्रियते न तूभयोः पृथक्कारणता, एकविविशिष्टापरत्वेन हेतुत्वे विशेष्यविशेषणभावे विनिगमनाविरहेण**

❀ विवृतिः ❀

**न्येति**। साधारण्यादिप्रकारकज्ञानजन्यसाधारण्यादिप्रकारकसंस्कारविशिष्टोद्ध्वर्त्वादिज्ञानादित्यर्थः ॥

**स्वविशेष्यत इति**। स्वं साधारण्यादिप्रकारकत्वेनाभिमतः संस्कारादिः, तद्विशेष्यतावच्छेदकं यत् ऊद्ध्वर्त्वत्वं तदवच्छिन्नप्रकारताकत्व,–स्वसामानाधिकरण्योभयसम्बन्धेनेत्यर्थः। पुरुषत्वतदभावसहचरितम् ऊर्ध्वत्वमित्याकारकसंस्कारादि सहितात् द्रव्यवानयमित्याकारकज्ञानात् पुरुषत्वसंशयापत्तिवारणाय प्रथमसम्बन्धनिवेशः। चैत्रस्य पुरुषत्वतदभावसहचरितमूद्ध्वर्त्वमित्याकारकसंस्कारादिदशायां तादृशसंस्कारादिशून्यस्य मैत्रस्योद्ध्वर्त्ववानयमित्याकारकज्ञानात् पुरुषत्वसंशयापत्तिवारणाय द्वितीयसम्बन्धानुधावनम्। एवञ्च पुरुषत्वतदभावसहचरितोद्ध्वर्त्ववानयमित्याकारकैकज्ञानदशायां पुरुषत्वतदभावसहचरितोर्द्धत्वमित्याकारकसंस्कारसहितोर्द्धत्ववानयमित्याकारकज्ञानदशायामपि पुरुषत्वसंशयनिर्वाहइत्य**वधेयम्**।

प्रथमसम्बन्धनिवेशप्रयोजनमाह– **अत इत्यादि**। **एकधर्मावच्छिन्नेति**। ऊद्ध्वर्त्वत्वावच्छिन्नार्थकम्। **अपरधर्मावच्छिन्नेति**। द्रव्यत्वाद्यवच्छिन्नार्थकम्। न संशयः = न पुरुषत्वादिसंशयः ॥

ननु विनिगमनाविरहात्साधारण्यादिप्रकारकविशिष्टधर्मिज्ञानत्वेनेव स्वप्रकारतावच्छेदकधर्मावच्छिन्नविशेष्यताकत्व,–स्वसामानाधिकरण्योभयसम्बन्धेन धर्मिज्ञानविशिष्टसाधारण्यादिप्रकारकत्वेनापि गुरुरूपेण संशयकारणताद्वयकल्पनामपेक्ष्य लाघवात्साधारण्यादिप्रकारकत्वेन धर्मिज्ञानत्वेन च कारणताद्वयकल्पनमेवमेव युक्तमत– **आहेदृशेऽपि**। एकधर्मावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकज्ञानसहितात् अपरधर्मावच्छिन्नप्रकारताकधर्मिज्ञानात् संशयाद्यापत्तिवारणायैवेत्यर्थः। एकविशिष्टापरस्य = साधारण्यादिप्रकारकादिविशिष्टधर्मिज्ञानादेः। हेतुता = संशयादिजनकता। नतूभयोः = नतु साधारण्यादिप्रकारकधर्मिज्ञानयोः।

❀ दीधितिः ❀

**संशयजनकं न तु तदानीं साहचर्य्यज्ञानमपेक्षत इति नये तु यद्रूपवि-**

❀ गादाधरी ❀

**कारणताद्वयमात्रम् , पृथक् कारणतामते तु एकधर्मावच्छिन्नविशेष्यक-साधारण्यादिप्रकारकज्ञानादिसहितादन्यधर्मावच्छिन्नप्रकारकधर्मिज्ञानात्संशयापत्तेः । तत्तद्धर्मावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकत्वेन तत्तद्धर्मा-वच्छिन्नप्रकारकधर्मिज्ञानत्वेन च हेतुताकल्पनमन्तरेण दुर्वारतया तादृशहेतुतास्वीकारे ऊर्द्ध्वत्वत्वादिरूपविषयतावच्छेदकानन्तधर्मभेदेन हेतुताया आनन्त्यं स्यादिति वदन्ति ।**

❀ विवृतिः ❀

**एकविशिष्टेति** । साधारण्यादिप्रकारकादिविशिष्टधर्मिज्ञानादेरित्यर्थः । **विशेष्यविशेषणभावेति** । विनिगमनाविरहात्=साधारण्यादिप्रकारकादिविशिष्टधर्मिज्ञानत्वेन, धर्मिज्ञानादिविशिष्टसाधारण्यादिप्रकारकत्वादिना च कारणताद्वयकल्पनमात्रमित्याशयः ॥

प्रथक्कारतामतेतु = साधारण्यादिप्रकारकत्वादिना धर्मिज्ञानत्वादिनाच पृथक्कारणताद्वयं कल्पयतां मतेतु । **एकधर्मेति** । धूमतदभाववद्वृत्तिवह्निरित्याकारकवह्नित्वरूपैकधर्मावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकज्ञानसहितादित्यर्थः । **अन्यधर्मेति** । द्रव्यवानयमित्याकारकद्रव्यत्वावच्छिन्नप्रकारकताकधर्मिज्ञानादित्यर्थः । संशयापत्तेः = धूमादिसंशयापत्तेः । दुर्वारतयेतिपरेणान्वयः ॥

**तत्तद्धर्मेति** । वह्नित्वोद्ध्र्वत्वत्वादिरूपधर्मावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकत्वेनेत्यर्थः । **तत्तद्धर्मेति** । वह्नित्वादिधर्मावच्छिन्नप्रकारकधर्मिज्ञानत्वेनेत्यर्थः । तादृशहेतुतास्वीकारे=वह्नित्वावच्छिन्नविशेष्यकसाधारण्यादिप्रकारकत्वेन वह्नित्वाद्यवच्छिन्नप्रकारकधर्मिज्ञानत्वादिनाच संशयहेतुतास्वीकारे । **ऊद्ध्र्वत्वत्वादीति** । ऊद्ध्र्वत्वत्ववह्नित्वादिरूपविषयतावच्छेदकानन्तधर्मभेदेनेत्यर्थः ।

**आनन्त्यं स्यादिति** । तथाचैकविशिष्टापरस्य हेतुत्वे विनिगमनाविरहात् कारणताद्वयमात्रकल्पनं, साधारण्यादिप्रकारकत्वेन धर्मिज्ञानत्वेन च कारणताद्वयकल्पनेतु वह्नित्वाद्यवच्छिन्नविशेष्यकसाधारण्यादिप्रकारकज्ञानसहितद्रव्यत्वाद्यवच्छिन्नप्रकारकधर्मिज्ञानात् संशयापत्तिवारणाय वह्नित्वाद्यवच्छिन्नविशेष्यकसाधारण्यादिप्रकारकत्वेन वह्नित्वाद्यवच्छिन्नप्रकारताकधर्मिज्ञानत्वेन च संशयजनकताया अवश्यंकल्पनीयतया वह्नित्वाद्यनन्तधर्मभेदेन कारणताया अनन्त्यप्रसंगः स्यादतः साधारण्यादिप्रकारक विशिष्टधर्मिज्ञानत्वेनैवसंशयजनकत्वं वक्तव्यमितिभावः ॥

❀ दीधितिः ❀

शिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं तथा तद्वत्त्वमेव वाच्यम्। तच्चेति ॥

❀ गादाधरी ❀

तन्मते यथाऽव्याख्यातलक्षणे शुद्धधूमत्वावच्छिन्नप्रकारताया अपि वन्ह्यादिसन्देहजनकतावच्छेदकत्वात् शुद्धधूमत्वादिकमादायातिप्रसङ्गवारणमशक्यमिति तन्मते कल्पान्तरमाह कोटिद्वयेति। ऊर्द्ध्वत्वत्वादिनेत्यस्य केवलेत्यादिः। तदानीं—संशयप्राकाले। यद्रूपेति। यद्रूपावच्छिन्नधर्मविषयकविशिष्टत्वेन यत्किञ्चित्संशयजनकता तद्रूपवत्त्वमित्यर्थः। यत्किंचित्संशयजनकतावच्छेदकतानिरूपिता या निरूपकत्वसंसर्गावच्छिन्नावच्छेदकता तदाश्रयविषयता पर्याप्त्यधिकरणधर्मवत्त्वम्, यत्किंचित्संशयजनकता-

❀ विवृतिः ❀

तन्मते=निरुक्तप्राचीनमते। यथाऽव्याख्यातलक्षणे=तद्धर्मपर्य्याप्तेत्यादिनाव्याख्यातलक्षणे। **शुद्धधूमत्वेति**। धूमवान्पर्वतइत्याकारकज्ञानीयप्रकारताया इत्यर्थः। **अतिव्याप्तिवारणमशक्यमिति**। पर्वतोवह्निमान् धूमादित्यादौ वह्निवह्न्यभाववद्वृत्तित्वेन यदाकदाचित् ज्ञानस्य धूमादेः केवलधूमत्वादिना धूमवान्पर्वतइत्याकारकं ज्ञानं यदाजातं तदानीं निरुक्तधर्मिज्ञानस्यापि पूर्वोक्तोभयसम्बन्धेन साधारण्यादिप्रकारकविशिष्टतया पर्वतादौ वह्न्यादिसंशयजनकत्वात् तदीय प्रकारकतावच्छेदकतापर्य्याप्त्यधिकरणकेवलधूमत्ववत्त्वस्य धूमे सत्त्वात् यथाऽव्याख्यातलक्षणे वह्निव्याप्ये धूमेऽतिव्याप्तिदुर्वारेत्याशयः ॥

**यद्रूपेति**। यद्रूपावच्छिन्नसाधारणादिधर्मनिष्ठविशेष्यताकविशिष्टत्वेनेत्यर्थः। धर्मिज्ञानस्येतिपूरणीयम्। वैशिष्ट्यं च पूर्वोक्तोभयसम्बन्धेन बोद्धव्यम्। **तद्रूपवत्त्वमिति**। तथा च धूमादौ वह्निवह्न्यभाववद्वृत्तित्वाऽसत्वान्न वह्निव्याप्ये धूमादावतिव्याप्तिरितिभावः ॥

ननु केवलवह्न्यादिमद्वृत्तित्वविशिष्टधूमादिविषयकविशिष्टत्वेन धर्मिज्ञानस्य संशयजनकत्वमते निरुक्तलक्षणे वह्न्यादिव्याप्ये धूमादौ केवलवह्निमद्वृत्तित्वमादायातिव्याप्तिः। न च यद्यद्रूपावच्छिन्नधर्मविषयकविशिष्टत्वेन धर्मिज्ञानस्य संशयजनकता तत्तद्रूपवत्त्वमित्युक्तौ न व्याप्यादावतिव्याप्तिरितिवाच्यम्, तथासति सत्तावान् जातेरित्यत्रातिव्याप्तिः सत्ताभाववत्समवेतत्वस्याप्रसिद्ध्या तस्य यद्यद्रूपानन्तर्गतत्वात्, साधारणादावसंभवापत्तेश्च तादृशयावद्रूपान्तर्गतासाधारण्यादेः साधारणहेतौ साधा-

❀ मनोरमा ❀

**यत्किञ्चित्संशयेति**। साध्यसंशयविशिष्टप्रकारतापर्य्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचार-

❀ गादाधरी ❀

वच्छेदकतावच्छेदकवैशिष्ट्यघटकविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणधर्मवत्त्वमिति पर्यवसितार्थः ॥

तच्चेत्यादिमूलग्रन्थः साधारण्यासाधारण्यरूपसंशयप्रयोज-

❀ विवृतिः ❀

रण्यादेश्चासाधारणहेतौ विरहात् इत्यतः प्रकारान्तरेण लक्षणार्थं व्याचष्टे **यत्किञ्चिदिति** । यत्किंचित्संशयनिष्ठजन्यतानिरूपिता या साधारण्यादिप्रकारताकविशिष्टधर्मिज्ञाननिष्ठा जनकता तन्निरूपितनिरुक्तोभयसम्बन्धावच्छिन्ना या साधारण्यादिप्रकारताकनिष्ठावच्छेदकता तन्निरूपकं निरूपकत्वसम्बन्धावच्छिन्नं यत् साधारण्यादिप्रकारतानिष्ठमवच्छेदकत्वं तदाश्रयीभूता या प्रकारता तत्पर्य्याप्त्यधिकरणधर्मवत्त्वं समुदितलक्षणार्थः, तथा च संशये यत्किञ्चित्त्वादिनिवेशान्नासंभवादिकमितिभावः ॥

द्वितीयावच्छेदकतायाः संसर्गानवच्छिन्नत्वेन लाघवमनुसृत्य निरुक्तमेवार्थमन्यथा निर्वक्ति **यत्किञ्चित्संशयेति** । यत्किंचित्संशयनिष्ठजन्यतानिरूपिता या साधारण्यादिप्रकारताकविशिष्टधर्मिज्ञाननिष्ठा जनकता तन्निरूपिता या तादृश प्रकारताकनिष्ठावच्छेदकता तदवच्छेदकीभूतं यत् स्वविशेष्यतावच्छेदकधर्मावच्छिन्नप्रकारताकत्व-स्व-सामानाधिकरण्योभयात्मकं वैशिष्ट्यं तद्घटकीभूताया विशेष्यता तन्निरूपितप्रकारतापर्य्याप्त्यधिकरणधर्मवत्त्वमर्थः । तादृशी च प्रकारता साधारण्यादिधर्मनिष्ठेत्यवध्येयम् ।

धूमवान् वह्नेरित्यादौ धूमधूमाभाववद्वृत्तिवह्निमानयमित्याकारकैकज्ञानम्, धूमधूमाभाववद्वृत्तिवह्निरित्याकारकज्ञानसहितं वह्निमानयमित्याकारकंज्ञानं, धूमादिमद्वृत्तित्वेन ज्ञातस्य वह्न्यादेः धूमधूमाभाववद्वृत्तिवह्निरित्याकारकसंस्कारसहितं वह्निमानयमित्याकारकज्ञानञ्चादाय लक्षणसमन्वयः । निरुक्तज्ञाननिष्ठधूमादिसंशयजनकतानिरूपितावच्छेदकतावच्छेदकनिरुक्तोभयसम्बन्धघटकविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणधूमधूमाभाववद्वृत्तित्वस्य वह्नौसत्त्वादिति दिक् ॥

तच्चेतीत्यादिदीधितिमवतारयति **तच्चेत्यादीति** । **साधारण्येति** । संशयज-

❀ मनोरमा ❀

त्वम् इत्यर्थः, प्रकारतायां संशयवैशिष्ट्यं स्वनिष्ठजन्यतानिरूपितजनकतावत्त्वसम्बन्धेन,

जनकतावत्त्वं च, स्वावच्छेदकत्व,-स्वावच्छेदकतावच्छेदकसंसर्गविषयिताव्यापकविषयिताकविशेष्यतानिरूपितत्त्वोभयसम्बन्धेन ॥

❀ दीधितिः ❀

**ननु असाधारण्यं न साध्यतदभाववद्व्यावृत्तत्वम् वृत्तिमतस्तथात्वासम्भवात् एककोटिव्याप्यस्येव एककोटिमद्व्यावृत्तस्यापि धर्मस्य**

❀ गादाधरी ❀

करूपमादाय लक्षणसङ्गमनपरः। तत्र यादृशासाधारण्यस्य संशयप्रयोजकत्वं विचारसहं तत्सद्धेतुसाधारणमिति दोषेण लक्षणान्तरमुत्थापयितुं तादृशग्रन्थं धारयति तच्चेत्यादीति। असाधारण्यं–संशयप्रयोजकीभूतासाधारण्यपदार्थः। वृत्तिमत इति। तथा च शब्दोऽनित्यः शब्दत्वादित्यादावसाधारणेऽव्याप्तिरिति भावः। ननु वृत्तिमतो नासाधारण्यमुपगन्तव्यं किन्त्ववृत्तेरेवेति नैतद्दोषावकाश इत्यत आह एककोटीति। व्याप्यस्य–व्याप्यतया गृहीतस्य, व्यावृत्तस्य–तद्वदवृत्तित्वेन गृहीतस्य। एतेन

❀ विवृत्तिः ❀

नकतावच्छेदकप्रकारतावच्छेदकसाधारण्यासाधारण्यधर्ममादायेत्यर्थः तत्र = तयोर्धर्मयोर्मध्ये। **यादृशेति** । यद्रूपावच्छिन्नासाधारण्यस्येत्यर्थः। तेन रूपान्तरावच्छिन्नासाधारण्यस्य संशयप्रयोजकत्वाभावेऽपि नाऽसंगतिः।

**तादृशमिति**। तादृशासाधारण्यं सद्धेतावपि वर्त्तमानमित्यर्थः। इतिदोषेण= सद्धेतोरसाधारण्यापत्तिरूपदोषेण। लक्षणान्तरं = वक्ष्यमाणविरुद्धान्येति–लक्षणान्तरम्। तादृशग्रन्थम् = तच्चेत्यादिमूलग्रन्थम्। **संशयेति**। संशयजनकतावच्छेदकप्रकारतावच्छेदकीभूतासाधारण्यपदार्थ इत्यर्थः। **अव्याप्तिरिति**। शब्दत्वस्य वृत्तिमत्त्वेन सध्यीभूतानित्यत्वतदभाववद्व्यावृत्तत्वासम्भवादित्याशयः।

वृत्तिमतः=शब्दत्वादेः। **नासाधारण्यमिति**। शब्दत्वादेः साध्यादिमद्वृत्तित्वादितिभावः।

अवृत्तेरेव=गगनादेरेव। असाधारण्यमिति पूरणीयम्। **नैतद्दोषावकाश इति**। तथाच न शब्दोऽनित्यः शब्दत्वादित्यादावव्याप्तिः शब्दत्वादेरलक्ष्यत्वादित्यभिप्रायः।

नन्वेककोटिव्याप्यस्येवेत्यादिदीधितिरसंगता। इवार्थस्य तादृशव्याप्यभिन्नत्व विशिष्टतादृशव्याप्यवृत्तिकिञ्चिद्धर्मात्मकतया एककोटिमद्व्यावृत्तस्यापि एककोटिव्याप्यतया तत्रेवार्थभेदस्यासत्त्वादित्यतआह **एककोटिव्याप्यतया ग्रहीतस्येत्यादि**। तथा च साध्यतदभाववद्व्यावृत्तत्वेन यज्ज्ञानं तद्विषयीभूतस्य हेत्वादेः न साध्याभावव्याप्यत्वम् निरुक्तज्ञानस्य साध्याभावाभावत्वावच्छिन्नाऽविषयकत्वात्।

❀ दीधितिः ❀

**बुद्धेर्विशेषदर्शनतया संशयविरोधित्वाच्च । सत्प्रतिपक्षे च परा-**

❀ गादाधरी ❀

एककोटिमद्व्यावृत्तस्यैककोटिव्याप्यतया आवश्यकत्वेपि न भेदघटितेवार्थासङ्गतिः । तद्वद्वृत्तित्वं च न तदभावव्याप्यत्वं तच्छरीरे तदभावाभाववत्वेन तस्यानिवेशादित्यवधेयम् ।

विशेषदर्शनतया विरोधिधर्मदर्शनतया । संशयविरोधित्वादिति । पुरुषत्वाभावाभाववदवृत्तिशाखादिमानयमित्याकारकदशायामिव पुरुषावृत्तिशाखादिमानित्यादि निश्चयदशायामपि पुरुषत्वादिविशिष्टबुद्ध्यनुत्पादस्य सर्वानुभवसिद्धत्वात्तद्विशिष्टबुद्धौ तद्वदवृत्तित्वेन गृहीतधर्मवत्ताज्ञानस्य प्रतिबन्धकतया आवश्यकत्वादिति भावः । तथा च निरुक्तासाधारण्यविशिष्टधर्मवत्ताज्ञानस्य संशयप्रतिबन्धकतया संशयजनकत्वासम्भवात् कथं तादृशसाधारण्यस्य संशयप्रयोजकता । न च तादृशज्ञानस्य

❀ विवृत्तिः ❀

इति वास्तविकैककोटिव्याप्यस्यापि तत्तत्कोटिमद्व्यावृत्तस्य तादृश व्याप्यतया ज्ञानविषयत्वावच्छिन्न भेदसत्वात् नेवार्था संगतिरितिभावः ।

एतेन = तादृशव्याप्यतया गृहीतस्येत्याद्यर्थकरणेन । आवश्यकत्वेऽपि=अनित्यत्ववदवृत्तेरेव वास्तविकानित्यत्वाभावव्याप्यत्वादित्याशयः। ज्ञानस्यविषयभेदं प्रदर्शयति **तद्वदेति** । तच्छरीरे=तद्वदवृत्तित्वशरीरे । **अनिवेशादिति** । साध्यतदभाववद्व्यावृत्तत्वेन ग्रहीतस्य साध्यतदभावव्याप्यभिन्नत्वं निर्विवादमेवेति हृदयम् ।

विरोधिधर्मदर्शनतया = तत्तदधिकरणावृत्तिधर्मज्ञानत्वेन । पुरुषत्वाभाववति पुरुषत्वाभावव्याप्यशाखादिमानयमित्याकारकज्ञानदशायामेवेत्यर्थः । **पुरुषेति** । पुरुषत्वाभावाभावत्वानवगाहिपुरुषाऽवृत्तिशाखादिमानयमित्याकारकनिश्चदशायामपीत्यर्थः । तेन पुरुषस्य पुरुषत्वाभावाभावाधिकरणस्वरूपत्वेऽपि नेवार्थाऽसंगतिः ।

तद्विशिष्टबुद्धौ = पुरुषत्वादिप्रकारकबुद्धौ । तद्वदवृत्तित्वेन=पुरुषत्वादिमदवृत्तित्वेन । गृहीतधर्मवत्ताज्ञानस्य = गृहीतशाखादिमत्ताज्ञानस्य । एतेनपुरुषाऽवृत्तिशाखादिमत्ताज्ञानसहितस्य केवलशाखादिमत्ताज्ञानस्यापि पुरुषत्वप्रकारकबुद्धौ प्रतिबन्धकत्वं सूचितम् ॥

समुदिततात्पर्य्यमाह **तथाचेति** । **निरुक्तेति** । साध्यतदभाववद्व्यावृत्तत्वविशिष्टधर्मवत्ताज्ञानस्येत्यर्थः । संशयप्रतिबन्धकतया=साध्यादिसंशयप्रतिबन्धकतया ।

**कथमित्यादि** । तथा च साध्यतदभाववद्व्यावृत्तत्वस्यसंशयप्रयोजकत्वाऽस-

(चि०) विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धा-

❀ दीधितिः ❀

मर्शाप्रामाण्यसंशयोत्तरमेव साध्यसन्देहात्। नापि निश्चितसाध्यतद-भाववद्व्यावृत्तत्वम्। तद्धि यत्र यत्र साध्यादिमत्तानिश्चयस्तद्व्यावृत्तत्वम्,

❀ गादाधरी ❀

संशयप्रतिबन्धकत्वेपि तज्जन्यकोट्युपस्थितेः संशयजनकत्वं सम्भवत्येत-न्नाशानन्तरं तज्जन्यकोट्यपस्थित्या संशयजननसम्भवादसाधारणधर्मव-द्धर्मिज्ञानस्यात एव बाधकात्साक्षाद्धेतुत्वासम्भवेन तज्जनकोट्युपस्थिति-त्वेन हेतुतायां गौवरस्याकिंचित्करत्वादिति तादृशकार्यकारणभावघटित-लक्षणपरतयैव मूलं व्याख्येयमिति वाच्यम्। किन्त्वादिनाऽग्रे निर्वाच्य-स्यासाधारण्यस्य बुद्धेः संशयाविरोधितया तज्ज्ञानस्यैव साक्षात्संशयजन-कत्वसम्भवेन गौरवादुक्तरूपेण कोट्युपस्थितेरहेतुत्वात् कोटिस्मृतिजनक-

❀ विवृतिः ❀

म्भवात् तस्यासाधारण्यस्वरूपत्वमेव न सम्भवतीति हृदयम्।

ननु साध्यतदभाववद्व्यावृत्तत्वज्ञानस्य साध्यादिसंशयप्रतिबन्धकत्वेऽपि तज्जन्य-साध्याद्युपस्थितिरूपकोट्युपस्थितेः संशयजनकत्वं स्वीकृत्य तादृशोपस्थितितृतीय-क्षणे संशयाद्युपगमे न कोऽपि दोषः निरुक्तोपस्थितिद्वितीयक्षणे एव संशयप्रतिबन्ध-कस्य तादृशव्यावृत्तत्वज्ञानस्य विनाशादित्याशंकते **नचेति**। वाच्यमितिपरेणा-न्वयः। तन्नाशानन्तरम्=असाधारणधर्मज्ञाननाशानन्तरम्। अतएवबाधकात्= संशयप्रतिबन्धकत्वस्य सत्त्वात्। तज्जन्यकोट्युपस्थितित्वेन=असाधारणधर्मवद्धर्मिज्ञा-नजन्यकोट्युपस्थितित्वेन। गौरवस्य=कारणतावच्छेदकगौरवस्य। **अकिञ्चि-त्करत्वादिति**। गौरवस्य लक्षणानुरोधरूपफलमुखत्वादित्याशयः।

**तादृशेति**। संशयत्वेन, असाधारणधर्मादिमद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन च कार्य्यकारणभावघटितलक्षणपरतयैवेत्यर्थः। मूलम्=मूलोक्तलक्षणम्। **व्याख्ये-यमिति**। तथाच वक्ष्यमाणलक्षणानुसरणं निरर्थकमिति भावः।

समाधत्ते **किन्त्वादिनेति**। किन्तु साध्यतदभावाभ्यामित्यादिनेत्यर्थः। बुद्धेः =निश्चयस्य। संशयाऽविरोधितया=संशयाप्रतिबन्धकतया। तज्ज्ञानस्यैव=वक्ष्यमा-णासाधारण्यज्ञानस्य। साक्षाजनकत्वसम्भवेन=कोट्युपस्थितिमद्वारीकृत्यैव जनक-त्वसम्भवेन। उक्तरूपेण=असाधारणधर्मवद्धर्मिज्ञानजन्यकोट्युपस्थितित्वेन। **अहे-तुत्वादिति**। तथा च गौरवमेव तादृशकारणतायां बाधकमिति तात्पर्य्यम्।

❀ गादाधरी ❀

ताघटितलक्षणस्यासम्भवात्संशयजनकताघटिलक्षणकरणे च तादृशासाधारण्यमादाय व्याप्यविरुद्धयोरतिव्याप्तेश्च।

ननु सत्प्रतिपक्षसंवलनदशायामिव कोटिद्वयव्यावृत्तधर्मवत्ताज्ञानदशायामपि संशयोत्पत्तिरनुभवसिद्धैवेति तदभावव्याप्यवत्ताज्ञानप्रतिबन्धकतायामपि तदभावदवृत्तिधर्मवत्ताज्ञानस्योत्तेजकत्वमगत्या कल्पनीतमिति कोटिद्वयव्यावृत्तधर्मवत्ताज्ञानस्य संशायकत्वमव्याहतमेव येन रूपेण प्रतिबन्धकता तेनैव रूपेण जनकत्वानभ्युपगमादित्यत आह सत्प्रतिपक्षे चेति विरोधिकोटिद्वयव्याप्यवत्ताज्ञानसमय इत्यर्थः। परामार्शप्रामाण्यसंशयेति। तथा च तुल्ययुक्त्या प्रकृतेपि तत्तत्कोटिमदवृत्तित्व-

❀ विवृतिः ❀

ननु असाधारण्यज्ञानजन्यत्वमनिवेश्य कोटिद्वयोपस्थितिजनकताघटितमेव लक्षणं करणीयम् इत्यतआह **कोटिस्मृतीति। असम्भवादिति।** कोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारतावच्छेदकधर्मवत्त्वस्य लक्षणार्थत्वे नित्यत्वसाध्यकशानहेतौ नित्यत्वतदभावविषयकज्ञानवानयमित्याकारकज्ञानमादायातिव्याप्तिरतः तादृशोपस्थितिजनकताघटितलक्षणं न सम्भवतीत्याशयः।

**संशयेति।** संशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारकतावच्छेदकधर्मवत्त्वस्य लक्षणार्थत्वेचेत्यर्थः। **तादृशेति।** संशयजनककोटिद्वयोपस्थितिजनकतावच्छेदकप्रकारतावच्छेदकवक्ष्यमाणसाध्यतदभावसहचरिताभावप्रतियोगित्वरूपासाधारण्यमादायेत्यर्थः। व्याप्यविरुद्धयोः=वह्निसाध्यकधूम, गोत्वसाध्यकाश्वत्वहेत्वोः। **अतिव्याप्तेरिति।** धूमादौ वह्नितदभावादिसहचरिताभावप्रतियोगित्वसत्त्वादिति भावः।

**नन्विति।** यथा रत्नकोषकारमते वह्निव्याप्यधूमवानयम् वह्न्यभावव्याप्यजलवानयमित्याकारकज्ञानद्वयात्मकसत्प्रतिपक्षसम्वलनदशायां अयम् वह्निमान्नवेत्याकारकसंशयो भवत्त्येव वह्न्यादिप्रकारकबुद्धौ वह्न्यादिव्याप्यवत्तानिश्चयविरहविशिष्टवह्न्यभावव्याप्यवत्तानिश्चयत्वेनैव प्रतिबन्धकतायाः कल्पनीयतया तदानीं तादृशनिश्चयस्य विरहात्। तथा वह्निवह्न्यभावादिमद्व्यावृत्तधर्मवत्ताज्ञानदशायामपि वह्न्यादिसंशयोत्पादो निराबाध एव, वह्न्याद्यभाववद्व्यावृत्तधर्मवत्ताज्ञानविरहविशिष्टवह्न्यादिमद्व्यावृत्तधर्मवत्ताज्ञानत्वेनैव वह्न्यादिप्रकारकबुद्धौ प्रतिबन्धकतायाः कल्पनेन तादृशप्रतिबन्धकविरहस्य तदानीमपि सत्वात्। न चैवं संशयप्रतिबन्धकतावच्छेदकरूपेण संशयजनकत्वापत्तिः प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणरूपेणैव जनकता-

❀ गादाधरी ❀

विशिष्टवत्ताज्ञाने प्रामाण्यसंशयादेव संशयः स्वीक्रियत इति नैककोटिमद्व्यावृत्तधर्मवत्ताज्ञानप्रतिबन्धकतायामपरकोटिमद्व्यावृत्तधर्मवत्ताज्ञानस्योत्तेजकत्वं प्रामाणिकमप्रामाण्यज्ञानोत्तेजकतयैवोपपत्तेः। अप्रामाण्यज्ञानानास्कन्दितस्यैव च ज्ञानस्य जनकतया निरुक्तासाधारण्यस्य बुद्धेर्जनकत्वोपगमे प्रतिबन्धकतावच्छेदकरूपेणैव जनकताप्रसङ्ग इति भावः। नि-

❀ विवृतिः ❀

याअनभ्युपगमात्तत्प्रकारकबुद्धौ तद्वद्वृत्ति धर्मवज्ञाज्ञानत्वेन तादृशज्ञानस्यप्रतिबन्धकत्वेऽपि तदभाववद्वृत्तिधर्मवत्ताज्ञानविरहविशिष्टतद्वद्वृत्तिधर्मवत्ताज्ञानत्वेन जनकतायास्तु बाधकाभावात्। तथा च संशयजनकताघटितलक्षणस्यैव सम्यक्त्वे द्वितीयलक्षणानुसरणमनुचितमेवेत्याशंक्यसत्प्रतिपक्षेचेत्यादिदीधितिमवतारतति **सत्प्रतिपक्षसम्वलनदशायमिवेत्यादि।**

**उत्तेजकत्वमिति**। तथा च तद्वद्वृत्तिधर्मवत्ताज्ञाननिष्ठतत्प्रकारकज्ञानप्रतिबन्धकतायां तदभाववद्वृत्तिधर्मवत्ताज्ञानविरहवैशिष्यवच्छेदकं वाच्यमित्याशयः।

अगत्या=लक्षणानुरोधेन 'एकरूपेणप्रयिबन्धकत्वजनकत्वयोरनभ्युपगमादाह—**येनरूपेणेत्यादि॥**

सत्प्रतिपक्षसम्वलनदशायामुभयत्रप्रामाण्य संशयाद्यसत्वे संशयएवासिद्धस्तथा दृष्टान्तवत्दार्ष्टान्तिकस्थलेऽपि तद्वद्वृत्ति धर्मवत्वाज्ञाने तदभाववद्वृत्तिधर्मवत्ताज्ञाने च प्रामाण्यसंशपं विना तत्संशयएवनोत्पद्यते अप्रामाण्यज्ञानविरहविशिष्टतदभावव्याप्यवत्तानिश्चयत्वेनेव अप्रानाण्यज्ञानविरहविशिष्टतद्वद्वृत्तिधर्मवत्तानिश्चयत्वेनापि तत्प्रकारकबुद्धौप्रयिबन्घकतायाः सर्वसम्मतत्त्वादित्येवं दीधिधिकृतामाशयं माह **तथा चेति**। नन्वेवं तद्वद्वृत्तिधर्मवत्ताज्ञानादौ प्रामाण्यसंशयदशायतत्संशयोत्पादो निर्विवादएवस्यादित्यत—आह। **प्रामाण्यज्ञानेति**। अप्रामाण्यज्ञानविरहविशिष्टस्यैवेत्यर्थः। ज्ञानस्य = निश्चयस्य। तेन ज्ञाननिष्ठजनकतावच्छेदकताया अप्रामाण्यनिश्चयाभाव एव सत्वेऽपि नासंगतिः।

निरुक्तासाधारण्यस्य = साध्यादिमद्व्यावृत्तत्वस्य। जनकत्वोपगमे=संशयजनकत्वस्वीकारे। **प्रतिबन्धकतेति**। अप्रामाण्यज्ञानविरहविशिष्ट साध्यादिमद्व्यावृत्तधर्मवत्तानिश्चयत्वरूपधर्मेणेत्यर्थः। **जनकताप्रसंग इति**। संशयादिजनकतापत्तिरित्यर्थः। तथा च तत्कार्य्यप्रतिवन्धकतावच्छेदकतापर्य्याप्त्यधिकरणं यदि अनन्ययासिद्धवृत्तित्वसहितस्य स्वाव्यवहितपूर्ववृत्तिवृत्तित्वसम्बन्धेन तत्कार्य्यवत्स्यात् तदा तत्कार्य्यजनकतावच्छेदकतापर्य्याप्त्यधिकरणं स्यादिति सामान्यतो बशिषतश्च तत्संशयप्रतिवन्धकतावच्छेदकतापर्य्याप्त्यधिकरणप्रामाण्यग्रहविरह

❀ दीधितिः ❀

**येन येन रूपेण यत्र यत्र तन्निश्चयस्तेन तेन तद्व्यावृत्तत्वं वा। आद्ये सर्व्वाणि साध्यवन्त्यप्यवन्ति साध्यवन्ति, सर्व्वाणि वा साध्यवन्ति प्रमेयाणीत्यादि-**

❀ गादाधरी ❀

श्चितसाध्यतदभाववद्व्यावृत्तत्वमिति । असाधारण्यमित्यनुषज्यते । येन येन रूपेणेति । यद्यद्रूपं धर्मितावच्छेदकीकृत्येत्यर्थः । तेन तेन रूपेण तद्व्यावृत्तत्वं—तत्तद्धर्मविशिष्टतत्तद्धर्मिव्यावृत्तत्वम् । प्रमेयत्वादिसामाना-

❀ विवृतिः ❀

विशिष्टतद्वदत्तिधर्मवत्तानिश्चयत्वं यदि अनन्यथासिद्धवृत्तित्वसहितस्य स्वाव्यवहित पूर्ववृत्तिवृत्तित्वसम्बन्धेन तत्संशयवत्स्यात् तदा तत्संशयजनकतावच्छेदकता-पर्य्याप्त्यधिकरणं स्यात् ॥

न चेष्टापत्तिः योयत्कार्य्य प्रतिबन्धकतावच्छेदकता पर्य्याप्त्यधिकरणं भवति स तज्जनकतावच्छेदकतापर्य्याप्त्यधिकरणं न भवति, तद्बाधनिश्चयत्ववदिति सामान्य-व्याप्त्या अप्रामाण्यग्रहविरहविशिष्ट तद्वदत्तिधर्मवत्तानिश्चयत्वे तत्संशयजनकताव-च्छेदकतापर्य्याप्त्यधिकरणत्वाभावस्यैव सिद्धेरितिभावः ।

वस्तुतः कारणीभूताभावप्रतियोगितावच्छेदकस्य कारणत्वविरुद्धतया प्रतिब-न्धकतावच्छेदकरूपेण कारणत्वसिद्धिर्न सम्भवतीतिध्येयम् ॥

निश्चित—साध्यतदभाववद्व्यावृत्तत्वस्यासाधारण्यरूपतां निराकर्तुमाह-दीधितौ **यत्र यत्रेत्यादि** । किञ्चिद्रूपावच्छिन्ने निरवच्छिन्ने वा यस्मिन् यस्मिन् धर्मिणि साध्यादिनिश्चय इत्यर्थः । येन येन रूपेणेत्यादेर्व्याख्यान माह टीकायां **यद्य-द्रूपमित्यादि । तत्तद्धर्मेति** । धर्मितावच्छेदकीभूततत्तद्धर्मावच्छिन्नविशेष्यता-श्रयीभूततत्तद्धर्मिव्यावृत्तत्वमित्यर्थः । तेन कुत्रचिद्धर्मितावच्छेदकवैशिष्ट्य स्याप्र-सिद्धत्वेऽपि न क्षतिः ॥

ननु येन येन रूपेण यत्र यत्र साध्यादिनिश्चयस्तत्तद्धर्मावच्छिन्नव्यावृत्तत्वोक्तावेव-सामञ्जस्ये तत्तद्धर्मविशिष्टतत्तद्धर्मिव्यावृत्तत्वनिवेशो व्यर्थ इत्यत आह **प्रमेयत्वा-दिनेति** । आदिना वाच्यत्वादिपरिग्रहः । प्रमेयत्वावच्छेदेनानित्यत्वनिश्चयसत्त्वे-शब्दत्वादेरसाधारण्य विरहात् प्रमेयत्वसामानाधिकरण्येन साध्यनिश्चयस्फोरणार्थं घटइत्युक्तम् । तथा च तत्तद्धर्मविशिष्टतत्तद्धर्मिपर्य्यन्तमनिवेश्य तत्तद्धर्मावच्छिन्न व्यावृत्तत्वमात्रविवक्षणे शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षे साध्यसंदेहदशायां प्रमेयत्ववान् घटोऽनित्यः इत्याकारकनिश्चयसत्त्वेऽपि शब्दत्वादेरसाधारण्यस्य सर्वसम्मततया तत्राव्याप्तिः, तादृशनिश्चयधर्मितावच्छेदकप्रमेयत्वावच्छिन्नशब्द-

❀ दीधितिः ❀

**निश्चये सामान्यतः पक्षेऽपि साध्यादिनिश्चयादतथात्वप्रसंगः। द्वितीये**

❀ गादाधरी ❀

**धिकरण्येन घटादौ साध्यादिनिश्चयदशायामपि शब्दोऽनित्यः शब्दत्वादित्यादावसाधारण्यसत्त्वाद्धर्मिविशेषनिवेशः। प्रथमपक्षे वक्ष्यमाणाया निर्धर्मितावच्छेदककसाध्यनिश्चयविषयवृत्तिहेतोरसाधारण्यानुपपत्तेर्वारणाय घटत्वादिना साध्यादिनिश्चयदशायां रूपान्तरावच्छिन्नघटादिव्यावृत्तत्वज्ञानात्संशयापत्तिवारणाय च धर्मितावच्छेदकनिवेशः। साध्यव्याप्य-**

❀ विवृतिः ❀

व्यावृत्तत्वस्य शब्दत्वे विरहात्, तत्तद्धर्मविशिष्टधर्मिपर्य्यन्तनिवेशे तु न तत्राव्याप्तिः, प्रमेयत्वावच्छिन्नघटरूपधर्मिव्यावृत्तत्वस्य शब्दत्वे सत्त्वादिति भावः॥

द्वितीयपक्षे धर्मितावच्छेदकनिवेशव्यावृत्तिमाह—**प्रथम पक्षे इति**। यत्रयत्र सध्यादिमत्तानिश्चय इत्यादिकल्पे इत्यर्थः। **धर्मितावच्छेदकेति**। सर्वाणि साध्यवन्ति प्रमेयाणीत्याकारकनिश्चयविषयशब्दवृत्तिशब्दत्वहेतोरसाधारण्यानुपपत्तेरित्यर्थः। **वारणायेति**। येन येनेत्यादिना सधर्मितावच्छेदककसाध्यादिनिश्चयस्यैव संग्रहसम्भवेन धर्मितावच्छेदकाऽनिवेशे निर्धर्मितावच्छेदककसाध्यादिनिश्चयमादाय शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादेरसाधारण्यानुपपत्तिः स्यादतो द्वितीयकल्पे धर्मितावच्छेदकनिवेश इति हृदयम्॥

ननु येन येन रूपेण यत्र यत्र साध्यादिनिश्चयस्तत्तद्धर्मिव्यावृत्तत्वमात्रमेवासाधारण्यमुच्यताम् तावतैव निर्धर्मितावच्छेदककसाध्यादिनिश्चयमादाय शब्दत्वादेरसाधारण्यानुपपत्तिवारणसम्भवेन तत्तद्धर्मिणि तत्तद्धर्मवैशिष्ट्य निवेशो व्यर्थ इत्यत आह **घटत्वादिनेति**। आदिना पटत्वादिपरिग्रहः। **धर्मितावच्छेदकनिवेश इति**।

तथा च तत्तद्धर्मिणि तत्तद्धर्मवैशिष्ट्याऽविवक्षणे शब्दोऽनित्यः शब्दत्वादित्यादौ घटोऽनित्य इत्याकारकनिश्चयदशायां द्रव्यत्वावच्छिन्नघटादिव्यावृत्तशब्दत्ववान् शब्द इत्याकारकज्ञानात् शब्दोऽनित्यो न वेति संशयापत्तिः, न चेष्टापत्तिः द्रव्यत्वेन घटादौ साध्यनिश्चय विरहात्, भवन्मते द्रव्यत्वावच्छिन्न घटादिव्यावृत्तत्वज्ञानस्याप्यसाधारण्यज्ञानात्मकतया तस्य तादृशसंशयापादकत्वे बाधकाभावादिति ध्येयम्। तत्तद्धर्मवैशिष्ट्यनिवेशे तु न तत्र तादृशसंशयापत्तिः द्रव्यत्वस्य घटोऽनित्य इत्याकारक साध्य निश्चय धर्मितावच्छेदकतत्तद्धर्मानन्तर्गतत्वादित्याशयः॥

ननु साध्यव्याप्यवन्ति साध्यवन्तीत्युक्तावेव सामञ्जस्ये सर्वाणीत्यभिधानमसंगत-

❀ दीधितिः ❀

तु विशिष्य पक्षे साध्यनिश्चयं विनैव शब्दादिना साध्यव्याप्यत्वनिर्ण-

❀ गादाधरी ❀

वत्त्वेन पक्षातिरिक्तमात्रविषयकनिश्चयदशायामसाधारण्यानुपपत्त्यनव-काशात्पक्षस्यापि निश्चयविषयत्वमाविष्कर्तुं सर्वाणीति । सर्वपदेन सर्व-त्वाच्छिन्नोद्देश्यकताकबोधः केवलान्वयिसंर्वत्वावच्छेदेन विधेयविष-यक एव जन्यत इति तथाविधबोधस्यैव सर्वाणि साध्यवन्तीत्याकारकता-

❀ विवृतिः ❀

मत-आह **साध्यव्याप्येत्ति** । **पक्षातिरिक्तेति** । शब्दातिरिक्तयावदनित्यत्व-व्याप्यवद्विषयकनिश्चयदशायामित्यर्थः । **असाधारण्यानुपपत्त्यनवकाशादिति ।** साध्यव्याप्यवत्त्वेन साध्यनिश्चय विषयीभूतेषु पक्षीभूतशब्दातिरिक्तेषु यावत्स्वेव शब्द-त्वादेरवर्त्तमानत्वादित्याशयः ।

पक्षस्यापिशब्दादेरपि । निश्चयविषयत्वम् = साध्यनिश्चयविषयत्वम् । **सर्वा-णीतीति ।** सर्वाणीत्युनुक्त्वा साध्यव्याप्यवन्ति साध्यवन्तीत्युक्तौ शब्दोऽनित्यः शब्द त्वादित्यादौ शब्दत्वादे र्नासाधारण्याभावप्रसंगः, साध्यव्याप्यवन्ति साध्यवन्ती-त्याकारकनिश्चयस्य पक्षीभूतशब्दातिरिक्तानित्यत्वव्याप्यवद्विषयकत्वसम्भवेन तादृ-शनिश्चयविषयीभूते सर्वत्रैव शब्दत्वादेरवर्त्तमानत्वादतः शब्दादिरूपपक्षादेरपि साध्यनिश्चयविषयत्वं स्फुटीकर्तुं सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्युक्तंदीधिति-कृतेत्यभिप्रायः ॥

ननु सर्वाणि साध्यवन्ति इत्याकारकनिश्चयस्य सर्वत्वेन यावद्विषयकतया पक्षी-भूतत्तशब्दादिविषयकत्वस्यापि सम्भवेन ततएव शब्दत्वादेरसाधारण्याभावप्रसंग सम्भवे साध्यव्याप्यवन्तीत्यभिधानमनुचितमतआह **सर्वपदेनेत्यादि** । विशेष्य-वाचकपदान्तराऽसमभिव्याहृतसर्वपदस्थले सर्वत्वावच्छिन्नविशेष्यताक एव बोधो-जन्यते इत्याह **सर्वत्वावच्छिन्नेति ।**

ननु सर्वेभ्यो दर्शपौर्णमासावित्यादाविवात्रापि सर्वपदस्य कतिपयपदार्थमात्रवाच-कत्वं कथं न स्वीकरणीयमित्यतआह **केवलान्वयीति** । असति वाधकेउद्देश्यता-वच्छेदका वच्छेदेनैव विधेयान्वयस्य सर्वानुभवसिद्धतया सर्वाणि साध्यवन्तीत्या-कारकबोधस्य यावत्त्वावच्छेदेनैव साध्यप्रकारकत्वमित्यवध्येयम् । तथाविधबोध-स्यैव = सर्वत्वावच्छेदेन साध्यविधेयकबोधस्यैव । एवकारात् अन्यविधबोधे सर्वाणिसाध्यवन्तीत्याकारकत्वव्यवच्छेदः ॥

❀ दीधितिः ❀

**येऽपि तथात्वापत्तिः। नैष दोषो यादृशव्याप्तिग्रहे सति नासाधारण्यं**

❀ गादाधरी ❀

तथाच विशिष्य पक्षे साध्यनिश्चयदशायामिव साध्यसन्देहविरोधिनः सर्वाणि साध्यवन्तीति निश्चयस्य सत्त्वेऽप्यसाधारण्याभावस्येष्टत्वात्साध्यव्याप्यवन्तीति। तथा चैतादृशनिश्चयदशायां विशिष्य पक्षे साध्यसन्देहस्यानिवृत्तेस्तादृशनिश्चयस्य नासाधारण्यक्षतिकारकत्वमिति भावः। प्रथ-

❀ विवृतिः ❀

**उपसंहरति तथाचेति। विशिष्ययपक्षेइत्यादिः।** शब्दोऽनित्यइत्याकारकनिश्चयदशायामिवेत्यर्थः। **साध्येति।** शब्दोऽनित्यो नवेत्याकारकसंशयप्रतिबन्धकस्येत्यर्थः। **असाधारण्याभावस्येष्टत्वादिति।** पक्षे साध्यनिश्चयकाले निश्चयविषयीभूते पक्षे पक्षमात्रवृत्तिहेतोर्वर्त्तमानतया तत्र निश्चितसाध्यवद्व्यावृत्तत्वस्यासत्वात् पक्षादौ साध्यसंदेहविरहदशायां पक्षमात्रवृत्तिहेतोरसाधारण्यस्य सर्वानुभवविरुद्धत्वाच्चेतिभावः॥

**साध्यव्याप्यवन्तीति।** सर्वाणिसाध्यवन्तीत्येतावन्मात्रनिश्चयोपादाने शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वरूपासाधारणे वक्ष्यमाणाया अव्याप्तेरनुपपत्तिः स्यात्, शब्दोऽनित्य इत्याकारकनिश्चयस्या नित्यत्वप्रकारकनिश्चयत्वेन अनित्यत्वाभावबुद्धौ प्रतिबन्धकतया शब्दोऽनित्यो नवेत्याकारकसंशयप्रतिबन्धकत्वस्येव सर्वाणि साध्यवन्तीत्यकारकसर्वत्वावच्छेदेनानित्यत्वप्रकारकनिश्चयस्यापि शब्दविशेष्यकत्वध्रौव्येनानुभवबलात् शब्दादिधर्मिकानित्यत्वसंशयप्रतिबन्धकत्वस्यापि सर्वसम्मततया निरुक्तनिश्चयविषयशब्दवृत्तित्वस्यैव शब्दत्वादौ सत्त्वेन तादृशनिश्चयदशायां शब्दादौ साध्यसंदेहानुत्पादात् तत्रा साधारण्याभावस्येष्टत्वादतः सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्युक्तमित्यभिप्रायः॥

ननु सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्याकारकनिश्चयस्यापि सर्वसाध्यव्याप्यवत्तावच्छेदेन साध्यनिश्चयात्मकतया तत्सत्वे वा कथं शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दे साध्यसंशयः, कथं वा तत्र शब्दत्वादावसाधारण्याभावप्रसंग इत्यतो भावमाह **तथा चेति।** एतादृशनिश्चयदशायाम्=सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्याकारकनिश्चयदशायाम्। विशिष्यपक्षे=शब्दत्वेन रूपेण शब्दे। **साध्यसंदेहस्याऽनिवृत्तेरिति।** सर्वसाध्यव्याप्यवत्त्वावच्छिन्नविशेष्यकसाध्यादिनिश्चयस्य तादृशधर्मावच्छिन्नविशेष्यकसाध्याभावादिबुद्धौ प्रतिबन्धकतया शब्दत्वावच्छिन्न-

❀ गादाधरी ❀

मपक्षे धर्मितावच्छेदकानिवेशात्सामान्यधर्मावच्छिन्नधर्मिकं विशिष्य संशयानिवर्तकं निर्णयमिव निर्द्धर्मितावच्छेदमतया अप्रसक्तसंशयनिवर्त्तकतावनिश्चयमादायापि दोषदानं सम्भवतीत्यभिप्रेत्याह सर्वाणि वेति । साध्यवत्त्वावच्छिन्ने सर्वत्वविधेयकस्य साध्यवन्ति सर्वाणीत्याकारक-

❀ विवृतिः ❀

धर्मिकाऽनित्यत्वसंशयाऽप्रतिबन्धकत्वादन्यथा गुणोऽनित्यः इत्याकारकनिश्चयस्यापि शब्दोऽनित्यो नवेतिसंशयप्रतिबन्धकत्वापत्तिःस्यादित्याशयः ।

तादृशनिश्चयस्य = सर्वाणिसाध्यव्याप्यवन्ति साध्यवन्तीत्याकारकनिश्चयस्य । **नासाधारण्यक्षतिकारकत्वमिति** । तादृशनिश्चयस्य शब्दादौ साध्यसंशयाऽनिवर्त्तकत्वे तत्सत्त्वेऽपि शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादेरसाधारण्यस्येष्टत्वात्तदानीं तत्राऽव्याप्तिः, सर्वसाध्यव्याप्यवत्त्वरूपसामान्यधर्मावच्छेदेन साध्यनिश्चयविषयीभूतशब्दवृत्तित्वस्यैव शब्दत्वादौ सत्त्वादितिभावः ।

प्रथमपक्षे = यत्रयत्रेत्यादिकल्पे । **धर्मितेति** । यत्रयत्रेत्यादिना धर्मिमात्रस्यैव निवेशादित्यर्थः । **सामान्येति** । सर्वसाध्यव्याप्यवत्वरूपधर्मावच्छिन्नधर्मिताकमित्यर्थः । विशिष्य संशयाऽनिवर्त्तकम्=शब्दत्वावच्छिन्ने साध्यसंशयाऽप्रतिबन्धकम् । **निर्धर्मितावच्छेदककेति** । साध्यवत्वांशेइत्यादिः । **अप्रसक्तेति** । अप्रसक्ता अवर्त्तमाना शब्दत्वावच्छिन्ने साध्यसंशयप्रतिबन्धकता यत्र निश्चये तादृशमित्यर्थः ॥

दोषदानम् = शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादेरसाधारण्याभावप्रसंगरूपदोषदानम् । तथा च यत्रयत्रेत्यादिकल्पे सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्याकारकसाध्यव्याप्यवत्त्वरूपधर्मितावच्छेदकावच्छेदेन साध्यनिश्चयस्य शब्दत्वावच्छिन्ने संशयाऽप्रतिबन्धकस्य सत्त्वदशायां यथा शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादेरसाधारण्याभावप्रसंगस्तथा निर्धर्मितावच्छेदककसर्वाणि साध्यवन्ति प्रमेयाणि इत्याकारकनिश्चयस्यापि तादृशसंशयाऽप्रतिबन्धकस्य सत्त्वदशायां शब्दत्वादेरसाधारण्याभावप्रसंगोऽस्तीति प्रदर्शनाय सर्वाणीत्यादिना निश्चयान्तरानुसरणंदीधितिकृता कृतमितिभावः ॥

ननु सर्वाणि साध्यवन्तीत्याकारकनिश्चयसत्त्वे पूर्वोक्तयुक्त्या शब्दोऽनित्यो नवेत्याकारकसंशयानुत्पादेन तदानीं शब्दत्वादौ असाधारण्याभावस्येष्टत्वेऽपि साध्यवन्ति सर्वाणीत्याकारकनिश्चयमात्रोपादानेनैव सर्वसामञ्जस्ये सर्वाणि साध्यवन्ति प्रमेयाणी-

❀ दीधितिः ❀

**तद्ग्रहाभावेन विशेषलक्षणस्य साधारण्याभावविशिष्टस्य तद्ग्रहस्य चाभा·**

❀ गादाधरी ❀

ज्ञानस्य पक्षाविषयकस्यापि सम्भवात्सर्वसाध्यवदुद्देश्यकप्रमेयत्वविधेयकज्ञानानुधावनम्। तादृशज्ञानस्य वस्तुत्वव्यापकसर्वत्वावच्छेदेन साध्यवत्त्वानवगाहितया तत्सत्त्वं न पक्षे साध्यसन्देहनिवर्तकमिति तदानीमसाधारण्यमक्षतमेवेति भावः। आदिपदात् शब्दो नित्यः शब्दत्वादित्यादौ सर्वाणि साध्याभावव्याप्यवन्ति साध्याभाववन्तीत्यादिनिश्चयप

❀ विवृत्तिः ❀

त्याकारकनिश्चयानुधावनं निरर्थकमित्यतआह **साध्यवत्त्वेति**। **पक्षाविषयकस्यापीत्यादि**। तथा च साध्यवन्ति सर्वाणीत्याकारकनिश्चयस्य पक्षातिरिक्तसाध्यवति सर्वत्वविधेयकत्वसम्भवस्य निर्विवादतया तादृशनिश्चयविषयीभूते च पक्षातिरिक्ते शब्दत्वस्यावर्त्तमानत्वात् तदानीं शब्दत्वादेरसाधारण्याभावप्रसंगो न स्यादतः साध्यवन्ति सर्वाणीत्याकारकनिश्चयमनुक्त्वा सर्वाणि साध्यवन्ति प्रमेयाणीत्याकारकनिश्चयोऽभिहितो दीधितिकारेणेत्यभिप्रायः॥

ननु सर्वाणि साध्यवन्ति प्रमेयाणीत्याकारकनिश्चयकाले शब्दत्वादेरसाधारण्याभावः कथं नेष्टः इत्यतआह **तादृशज्ञानस्येति**। सर्वाणि साध्यवन्ति प्रमेयाणीत्याकारकनिश्चयस्येत्यर्थः॥

उद्देश्यवाचकपदाऽसमभिव्याहृत सर्वपदात् उद्देश्यवाचकवस्तुत्वादिपदमध्याहृत्यैव बोधः सर्वानुभवसिद्ध इत्याह—वस्तुत्वेति। वस्तुत्वव्यापकीभूतं यत् यावत्त्वं तदवच्छेदेनेत्यर्थः। साध्यवत्वावगाहितया = अनित्यत्वादिमत्तावगाहितया। तत् सत्वम्=सार्वाणि साध्यवन्ति प्रमेयाणीत्याकारकनिश्चयसत्वम्। पक्षे=शब्दे॥

**साध्यसंदेहनिवर्त्तकमिति**। सर्वत्वावच्छेदेन साध्यप्रकारकनिश्चयस्यैव शब्देऽनित्यत्वसंशयप्रतिबन्धकतया वस्तुत्वव्यापकसर्वत्वावच्छेदेन साध्यावगाहि—तादृशनिश्चयस्यशब्दादिधर्मिकानित्यत्वसंशयाऽप्रतिबन्धकत्वात्, तादृशविशिष्टसर्वत्वावच्छेदेन साध्यनिश्चयसत्वेऽपि शब्दोऽनित्योनवेति संशयो भवत्येवेत्याशयः।

तदानीम्=सर्वाणि साध्यवन्ति प्रमेयाणीत्याकारकनिश्चयदशायाम्। **असाधारण्यमक्षतमेवेति**। तथा च तदानीं शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादेः असाधारण्याभावापत्तिः, निरुक्तनिश्चयविषयतायाः शब्देऽपिसत्वेन तत्र शब्दत्वस्य वृत्तेरितिभावः॥

❀ गादाधरी ❀

रिग्रहः साध्यादीत्यादिपदात्साध्याभावपरिग्रहः । अतथात्वम् असाधारण्याभावः । द्वितीयपक्षे तत्तद्व्यक्तित्वरूपधर्मितावच्छेदकविवक्षणे प्रथमपक्षोक्तप्रथमदोषस्य द्वितीयदोषस्य च यथाश्रुतेऽप्यनवकाशात्तत्र दोषान्तर-

❀ विवृतिः ❀

**आदिपदादिति** । इत्यादिनिश्चये इत्यत्रादिपदादित्यर्थः । **इत्यादिनिश्चयपरिग्रहइति** । निरुक्तनिश्चयदशायां शब्दोऽनित्यः शब्दत्वादित्यादाविव शब्दोनित्यः शब्दत्वादित्यादावपि सर्वाणि साध्याभावव्याप्यवन्ति साध्याभाववन्ति सर्वाणि वा साध्याभाववन्ति प्रमेयाणीत्याकारकनिश्चयदशायां शब्दत्वादेरसाधारण्याभावप्रसंगः, निरुक्तनिश्चय विषयतायाः पक्षीभूतेशब्देऽपि सत्वादिति हृदयम् ॥

ननु येन येनेत्यादिद्वितीयकल्पे धर्मितावच्छेदकस्य प्रवेशेऽपि सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्याकारकसर्वसाध्यव्याप्यवत्त्वावच्छिन्नविशेष्यकसाध्यनिश्चयमादाय शब्दत्वादेरसाधारण्याभावप्रसंगरूपदोषस्य सम्भवेन द्वितीयकल्पे द्वितीयेत्वित्यादिना दीधितौ दोषान्तराभिधानमसंगतमतआह **द्वितीयपक्षेइत्यादि** । येन येनेत्यादिकल्पे इत्यर्थः । **तत्तद्व्यक्तित्वरूपधर्मितावच्छेदकविवक्षणे इति** । तथा च यद्यद्व्यक्तित्वेन रूपेण यत्रयत्र साध्यादिनिश्चयः तत्तद्व्यक्तित्वविशिष्ट तत्तद्धर्मिनिरूपितवृत्तित्वाभावस्यासाधारण्यस्वरूपत्वविवक्षणे इत्यर्थः पर्य्यवसितः ।

**प्रथमेति** । यत्र यत्रेत्यादिकल्पेऽभिहितस्य सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्याकारकनिश्चयमादाय शब्दत्वादेरसाधारण्याभावप्रसंगरूपदोषस्येत्यर्थः । निरुक्तनिश्चयस्य साध्यव्याप्यवत्वरूपसामान्यधर्मावच्छिन्नविशेष्यकतया तत्तद्व्यक्तित्वरूपधर्मितावच्छेदकाऽविषयकत्वादित्याशयः ॥

**द्वितीय दोषस्यचेति** । चस्त्वर्थे । सर्वाणि साध्यवन्ति प्रमेणीत्याकारकनिर्धर्मितावच्छेदककसाध्यादिनिश्चयमादाय शब्दत्वादेरसाधारण्याभावप्रसंग रूपदोषस्यत्वित्यर्थः । **यथाश्रुतेऽप्यनवकाशादिति** । अत्रापिना तत्तद्व्यक्तित्वरूपधर्मितावच्छेदकनिवेशपक्षेऽपि द्वितीयदोषस्यासम्भवः सूचितः ॥

तथा च सर्वाणि साध्यवन्ति प्रमेयाणीत्याकारक निश्चयस्य निर्धर्मितावच्छेदकक साध्यादिनिश्चयात्मकतया येन येनेत्यादिना यथाश्रुते सामान्यधर्मादेर्धर्मितावच्छेदकतया प्रवेशेऽपि यथानिरुक्तनिरुक्तनिश्चयमादाय दोषस्यासम्भवस्तथा तत्तद्व्यक्तित्वरूपधर्मितावच्छेदक निवेशपक्षेऽपि नोक्तदोषस्यावकाश इत्यभिप्रायः । तत्र द्वितीयकल्पे । दोषान्तरम्=अतिव्याप्तिरूपदोषम् ॥

❀ गादाधरी ❀

**माह द्वितीये त्विति। विशिष्य धर्मितावच्छेदकप्रकारेण सामान्यतः पक्षे साध्यवत्तानिश्चयं विना पक्षमात्रवृत्तिहेतौ साध्यवद्वृत्तित्वघटितव्याप्तिनिश्चय एव न सम्भवतीत्यभिप्रेत्य एतदभिहितम्।**

**अथवा विशिष्य विशेषधर्मं धर्मितावच्छेदकीकृत्य उक्तविवक्षणे समान्यधर्मधर्मितावच्छेदककनिश्चयदशायामप्येतद्दोषस्य सम्भवात्तादृश-**

❀ विवृतिः ❀

**धर्मितावच्छेदकेति**। धर्मितावच्छेदकीभूत किञ्चिद्धर्मप्रकारेणेत्यर्थः। तथा च विशिष्यपक्षे इत्यादि दीधितिग्रन्थस्य किञ्चिद्धर्मावच्छिन्नविशेष्यकसाध्यादिनिश्चयं विनैवेत्यर्थः पर्य्यवसितः—

ननु शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षमात्रवृत्तिशब्दत्वहेतौ हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिनिश्चये पक्षान्तर्भावेणैव साध्यसामानाधिकरण्यनिश्चयस्य हेतुत्वात् शब्दादौ साध्यनिश्चयं विना कथं तत्र व्याप्तिग्रहो दीधितिकृतोपपादित इत्यतआह**सामान्यतइत्यादि**। निर्धर्मितावच्छेदककसर्वाणि साध्यवन्ति प्रमेयाणीत्याद्याकारकनिश्चयं विनेत्यर्थः। पक्षमात्रवृत्तिहेतौ = शब्दत्वहेतौ **साध्यवद्वृत्तित्वेति**। साध्यसामानाधिकरण्यघटितव्याप्तिनिश्चयएवेत्यर्थः। एतदभिहितम् = विशिष्य पक्षे साध्यनिश्चयंविनैवेत्यभिहितम्। दीधिति कृतेतिशेषः।

तथा च विशिष्यपक्षे साध्यनिश्चयं विनैवेत्यादिना यादृशस्थले धर्मितावच्छेदकप्रकारेण साध्यनिश्चयो नास्ति किन्तु पक्षान्तर्भावेण निर्धर्मितावच्छेदककसाध्यनिश्चयसत्व एव पक्षमात्रवृत्तिहेतौ साध्यव्याप्यत्वनिश्चयस्तादृशस्थले पक्षीभूते शब्दे संशयानुत्पादेन शब्दत्वस्यासाधारण्याभावस्येष्टतया तादृशंव्याप्तिनिश्चयदशायां शब्दत्वेऽतिव्याप्तिः, अनित्यघटत्वावच्छिन्ननित्यगगनत्वावच्छिन्नव्यावृत्तत्वस्य शब्दत्वे सत्त्वात्, विशिष्य पक्षे इत्यनुक्तौ सामान्यत एव पक्षे साध्यनिश्चयाभावस्य दीधितिकाराभिप्रेतत्वसम्भवात् तादृशनिश्चयं विना व्याप्तिग्रहानुत्पादेन यथोक्तरीत्या शब्दत्वाद्वावतिव्याप्तिरेव नसम्भवतीति हृदयम्॥

ननु पक्षान्तर्भावेण साध्यनिश्चयं विनापि साध्यसामानाधिकरण्यघटकप्रत्येकपदार्थोपस्थित्या पक्षमात्रवृत्तिहेतौ साध्यव्याप्तिनिश्चयसम्भवात्, विशिष्यपक्षे इत्यभिधानमसंगतं स्यात्, अत आह**अथवेति**। विशेषधर्मम्=शब्दत्वशब्दनिष्ठतद्व्यक्तित्वादिकम्। **धर्मितावच्छेदकीकृत्येति**। तथा च विशिष्य पक्षेत्यादिग्रन्थस्य शब्दत्वतद्व्यक्तित्वादिरूपेण शब्दादौ साध्यनिश्चयं विनैवेत्यर्थः पर्य्यवसित इति भावः॥

❀ गादाधरी ❀

स्थलसंग्रहाय विशेषधर्मस्य धर्मितावच्छेदकत्वानुसरणम् । शंकते नैष इति । यादृश व्याप्तीति । इदृशी च व्याप्तिः प्रकृत हेतौ प्रकृतसाध्यान्वयव्याप्तिः-व्यतिरेकव्याप्तिश्च । तद्ग्रहा भावेन । तादृश व्याप्ति द्वयग्रहस्य विशेष्यता सम्बन्धावच्छिन्नाऽभावेन । विशेषलक्षणस्येति ।

❀ विवृतिः ❀

शब्दत्वतद्व्यक्तित्वाद्यवच्छेदेन साध्यनिश्चयसत्त्वे शब्दत्वादौ तादृशधर्मावच्छिन्नव्यावृत्तत्त्वविरहेणातिव्याप्त्यसम्भवात् विशिष्येत्यादेः सप्रयोजनत्वसम्भवेऽपि स्वयम् प्रयोजनान्तरमाहोक्तविवक्षणेइति । विशिष्यपक्षेइत्यादिग्रन्थस्य शब्दत्वादिविशेषधर्मावच्छेदेन साध्यनिश्चयं विनैवेत्यर्थविवक्षणे इत्यर्थः ।

**सामान्येति** । सर्वाणि साध्यवन्तीत्याकारकसर्वत्वरूपसामान्यधर्मधर्मितावच्छेदककसाध्यनिश्चयदशायामित्यर्थः । एत्तद्दोषस्य=शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादावातिव्याप्तिरूपदोषस्य । तादृशस्थलसंग्रहस्य=सामान्यधर्मधर्मितावच्छेदककसर्वाणि साध्यवन्तीत्याकारक साध्यनिश्चयदशायामपि शब्दत्वादावतिव्याप्तिरूपदोष संग्रहाय । विशेषधर्मस्य=शब्दनिष्ठतद्व्यक्तित्वादिरूपधर्मस्य । **धर्मितावच्छेदकत्वानुसरणमिति** ।

तथा च विशिष्यपक्षे इत्यादिना शब्दोऽनित्यः शब्दत्वादित्यादौ यादृशस्थले शब्दत्वतद्व्यक्तित्वादिरूपविशेषधर्मावच्छेदेन शब्दादौ साध्यनिश्चयो नास्ति किन्तु तत्तद्व्यक्तित्वेन घटादावेव साध्यनिश्चयस्तादृशस्थले यथा शब्दादौ साध्यव्याप्यवत्त्वनिश्चयसत्वे शब्दत्वादावतिव्याप्तिः, तथा सर्वाणि साध्यवन्तीत्याकारक सर्वत्वावच्छिन्नविशेष्यकसाध्यादिनिश्चयकालेपि तत्रातिव्याप्तिः, तदानीमपि तत्त-द्व्यक्तित्वावच्छिन्नघटादिव्यावृत्तत्वस्य शब्दत्वादौ सत्त्वात् इति सूचितं दीधितिकृतेत्याशयः ॥

नैष दोषवित्यादिदीधितिमवतारयति-**शंकत इति** । यादृशव्याप्तिग्रहे सतीत्यत्र व्याप्तिपदस्य केवलान्वयव्याप्त्यर्थकत्वे शब्दत्वादावनित्यत्वव्यातिरेकव्याप्तिनिश्चयदशायामतिव्याप्तिः, साध्यान्वयव्याप्तिग्रहविरहविशेषितस्य साध्यादिनिश्चयविषयीभूतघटगगनादिव्यावृत्तत्वस्य शब्दत्वे सत्त्वात्, केवलव्यत्तिरेकव्याप्तिमात्रार्थकत्वे तु तथैव दोषः अतः व्याप्तिपदस्य अन्वयव्यतिरेकोभयव्याप्त्यर्थकत्वंप्रदर्शयति **तादृशीचेति । प्रकृतहेतावित्यादि** । हेतुतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्ननिरूपितान्वयव्याप्तिः, तादृशव्यतिरेकव्याप्तिश्चेत्यर्थः ।

कालान्तरे यदा प्रमेयत्वावच्छिन्नेऽनित्यत्वव्याप्तिग्रहः शब्दादौ च साध्यनिश्चयो वर्तते तदानीमपि शब्दत्वादे रसाधारण्याभावस्येष्टतया शब्दादौ साध्यसंशयदशायां मेयत्वावच्छिन्ने तादृशव्याप्तिग्रहसत्त्वे शब्दत्वादेरसाधारण्याभावप्रसंगः

❀ दीधितिः ❀

**-वेन सामान्यलक्षणस्य विशेषणादतिव्याप्तिनिरासात्। विशिष्टाभादेव च**

❀ गादाधरी ❀

विशेषणादित्यग्रिमेणान्वयः। **वैशिष्ट्यं च सामानाधिकरण्य प्रत्यासत्त्या**

❀ विवृतिः ❀

स्यात्, प्रमेयत्वावच्छिन्नधर्मिक प्रकृतसाध्यव्याप्तिग्रह विरहविशेषितस्य अनित्य घट नित्यगगनादिव्यावृत्तत्वस्य शब्दत्वे विहात् अतो हेतौ प्रकृतत्वनिवेशः । एवमनयैव दिशा साध्येऽपि प्रकृतत्वनिवेशव्यावृत्तिः स्वयमूहनीया ॥

**तादृशव्याप्तिद्वयग्रहस्येत्यादि** । प्रकृतहेतौ प्रकृतसाध्यान्वयव्याप्तिविषयको यो ग्रहः यश्च तादृशव्यतिरेकव्याप्तिविषयको ग्रहस्तस्य विशेष्यत्वसम्बन्धावच्छिन्न प्रतियोगिताकाभावेनेत्यर्थः । तादृशव्याप्तिद्वयत्वावच्छिन्नविषयकग्रहाभावेनेतितु-नार्थः। तथासति शब्दत्वादौ एकमात्रव्याप्तिग्रहदशायामतिव्याप्तिः स्यात् तदानीं व्याप्तिद्वयत्वावच्छिन्नविषयकग्रह विरह विशेषितस्य घटगगनादिव्यावृत्तत्वस्य शब्द-त्वादौ सत्त्वादितिध्येयम् ॥

**विशेषलक्षणस्येति**। यद्यद्व्यक्तित्वेन यत्रयत्र साध्यादिनिश्चयस्तादृशनिश्चय-कालीनस्य तत्तद्व्यक्तित्वावच्छिन्नतत्तद्व्यक्तिव्यावृत्तत्वात्मकासाधारण्यलक्षणस्येत्यर्थः।

तथा च प्रकृतहेतुकप्रकृतसाध्यकयादृशान्वयव्याप्तिग्रहे सति व्यतिरेकव्याप्ति-ग्रहे च सति नाऽसाधारण्यं तादृशान्वयव्याप्तिग्रहविरहविशिष्टं व्यतिरेकव्याप्तिग्रह-विरहविशिष्टञ्च यद् यद्यद्व्यक्तित्वेन साध्यादिनिश्चयः तत्तद्व्यक्तित्वावच्छिन्नतत्तद्व्य-क्तिव्यावृत्तत्वंमेवासाधारण्यम्, विशिष्य पक्षे साध्यादिनिश्चयं विना यत्र हेतौ साध्य-व्याप्यत्वग्रहः तत्र तादृशव्याप्तिग्रहाभावरूपविशेषणाभावेन यथोक्तव्याप्ति ग्रहविरह-विशिष्टस्य तादृशतत्तद्व्यक्तित्वावच्छिन्नघटादिव्यावृत्तत्वस्य शब्दत्वे विरहान्न तदानीं शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादावतिव्याप्तिः, नवा पक्षेसाध्यसंदेहदशायां सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्याकारकनिश्चयसत्वे शब्दत्वादावव्याप्तिः, तादृशव्याप्तिग्रहविरहविशिष्टस्य घटगगनादिव्यावृत्तत्वस्यैव शब्दत्वे सत्त्वादितिभावः।

वैशिष्ट्यं = विशेष्यत्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशव्याप्तिग्रहाभाव वैशि-ष्ट्यम्। **सामानाधिकरण्येति**। स्वरूपसम्बन्धेन स्वाधिकरणनिरूपित स्वरूपस-म्बन्धावच्छिन्नवृत्तित्वसम्बन्धेनेत्यर्थः ॥

ननु शब्दादौ पक्षे साध्यनिश्चयं विना शब्दत्वादौ साध्यव्याप्यत्वग्रहदशायां तादृशव्याप्तिग्रहविरहविशेषितस्य घटगगनादिव्यावृत्तत्वस्य शब्दत्वादावभावात् तदानीं तत्र **यथोक्तासाधारण्यलक्षस्यातिव्याप्तिवारणेपि पूर्वोक्तसंशयप्रयोजकधर्मवत्त्वरूप-**

❀ दीधितिः ❀

**साधारण्ये व्याप्तिभ्रमदशायां नाव्याप्तिरिति चेत्। एवं सत्येकेन व्याप्तौ गृहीतायामसाधारणस्य न कञ्चिदपि प्रति सव्यभिचारित्वं स्यात्,**

❀ गङ्गाधरी ❀

बोध्यम्। तदविशेषितस्यैव तस्य संशय प्रयोजकतया सव्यविचारसामान्यलक्षणस्यातिव्याप्तिं वारयितुमाह साधारण्येति। एतच्च व्याप्ति-

❀ विवृतिः ❀

सव्यभिचारसामान्यलक्षणस्य तदानीं शब्दत्वादावतिव्याप्तिवारणमशक्यं स्यात् व्याप्तिग्रहदशायां व्याप्तिग्रहविशेषितस्य घटादिव्यावृत्तत्वस्य संशयप्रोजकत्वाभावेन संशयप्रयोजकत्वेन तादृशविशिष्टव्यावृत्तत्वस्य धर्तुमशक्यतया व्याप्तिग्रहाविशेषितस्य केवलघटगगनादिव्यावृत्तत्वस्य व्याप्तिग्रहकालेपि शब्दत्वादौ सत्त्वादित्याह **तदविशेषितस्यैवेति**। साध्यादि व्याप्तिग्रहाऽविशेषितस्यैवेत्यर्थः। एवकारात् तादृशव्याप्तिग्रहविशेषितस्य तादृशव्यावृत्तत्वस्य संशयप्रयोजकत्वव्यवच्छेदः।

तस्य = येन येजरूपेण यत्र यत्र साध्यादिनिश्चयस्तेन तेनरूपेण तत्तद्व्यावृत्तत्वरूपधर्मस्य। **संशयप्रयोजकतयेति**। साध्यव्याप्तिग्रहकालीनस्य शब्दादिधर्मिकतादृशासाधारण्यविशेषित शब्दत्वादिमत्तानिश्चयस्य शब्दादो साध्याभावबुद्धौ प्रतिबन्धकतया तादृशव्याप्तिज्ञानकालीनासाधारण्यादिनिश्चयस्य संशयप्रयोजकत्वं कथमपि न सम्भवतीति हृदयम्॥

**सव्यभिचारेति**। संशयजनककोटिद्वयोपस्थितिजनकतावच्छेदक प्रकारतावच्छेदकधर्मात्मक सव्यभिचार सामान्यलक्षणस्येत्यर्थः। अतिव्याप्तिम् = विशिष्यपक्षे इत्यादिनाऽभिहितामतिव्याप्तिम्। **साधारण्येतीति**। तथा च साधारण्याभावविशिष्टोयः प्रकृतहेतौ प्रकृतसाध्यान्वयव्याप्तिग्रहः यश्च तादृशव्यतिरेकव्याप्तिग्रहः, विशेष्यत्वसम्बन्धावच्छिन्न प्रतियोगिताक तादृश व्याप्तिग्रहाभाववत्वेसति साध्यसंशजनककोटिद्वयोपस्थिति जनकतावच्छेदकप्रकारतावच्छेदकधर्मवत्वं सव्यविचारत्वमित्याकारक सामान्यलक्षणेपर्य्यवसिते नोक्तस्थलेशब्दत्वादौ साध्यव्याप्यत्व निर्णयदशायामतिव्याप्तिः, साधारण्याभाव विशिष्टस्य निरुक्तव्याप्तिग्रहस्य विशेष्यत्वसंसर्गावच्छिन्नाभावस्यशब्दत्वादौ विरहारितिभावः॥

ननु विशेष्यत्वसंघर्गात्रच्छिन्न प्रतियोगिताक तादृशव्याप्तिग्रहाभाववत्व विशिष्ट संशयप्रयोजकरूपवत्वमात्रमेव सव्यभिचारत्वमस्तु किंव्याप्तिग्रहे साधारण्याभाववैशिष्ट्यविवक्षणेनेत्यत **आहैतच्चेति**। व्याप्तिग्रहे साधारण्याभाव वैशिष्ट्यविशेषणं चेत्यर्थः। व्याप्तिग्रहदशायाम् = व्याप्तिभ्रमदशायाम्॥

## ❀ गादाधरी ❀

ग्रहदशायां साधारणसंग्रहाय। वैशिष्ट्यं विशेषणताविशेषविशेष्यतो-भयघटितसामानाधिकरण्येन बोध्यम्। कंचिदपीति। व्याप्तिग्रहशून्य-पुरुषं प्रत्यपीत्यर्थः।

ननु तत्पुरुषीयव्याप्तिग्रहाभावः तत्पुरुषीयसाधारण्यशरीरे निवेशनीय इति नायं दोष इत्यत आह स्याद्वेति। तदपि—सामान्यव्यभिचार-

## ❀ विवृतिः ❀

**साधारणसंग्रहायेति**। व्याप्तिग्रहे साधारण्याभाववैशिष्ट्याऽविवक्षणेधूमवान् वह्नेरित्यादौ यदावह्न्यादौ धूमादिव्याप्तिभ्रमस्तदा वह्न्यादौसाधारणेऽव्याप्तिः विशेष्यत्वसम्बन्धावच्छिन्न व्याप्तिग्रहहाभावस्य वह्न्यादावसत्वात्, साधारण्यस्यनित्यदोषतया व्याप्तिग्रहकालेऽपि निरूक्तवह्न्यादेर्लक्ष्यत्वात्। साधारण्याभाव वैशिष्ट्यस्य व्याप्तिग्रहविशेषणत्वे तु न तदानीं तत्राऽव्याप्तिः, साधारण्याभावरूपविशेषणाभावेन साधारण्याभाव विशिष्टस्य व्याप्तिग्रहस्य विशेष्यत्वसम्बन्धावच्छिन्न प्रतियोगिताकाभावस्य वह्न्यादा वनपायादित्याशयः॥

**वैशिष्ट्यमिति**। व्याप्तिग्रहेसाधारण्याभाववैशिष्ट्यमित्यर्थः। **विशेषणतेति**। स्वरूपविशेष्यत्वोभय घटितसामानाधिकरण्यसम्बन्धेनेत्यर्थः। तथा च साधारण्याभावस्यास्वरूपसम्बन्धेनयदधिकरणं तन्निरूपित विशेष्यत्वसंसर्गावच्छिन्न वृत्तित्वमेव व्याप्तिग्रहे साधारण्याभाववैशिष्ट्यमितिभावः॥

**व्याप्तिग्रहशून्यपुरुषमिति**। शब्दोऽनित्यः शब्दत्वादित्यादौ यदा प्रकृतव्याप्तिग्रहशून्य पुरुषस्य पक्षे साध्यसंदेहः-पुरूषान्तरे च तादृशव्याप्तिग्रह स्तदा शब्दत्वादेरसाधारण्यं नस्यात् तादृशव्याप्तिग्रहविशिष्टस्य निरूक्तसाध्याहिमद्व्यावृत्तत्वस्य शब्दत्वादौ विरहात्, साध्यसंदेहकाले-पुरुषान्तरोयव्याप्तिग्रहस्य च सत्वेन साधारण्याभावविशिष्टस्य व्याप्तिग्रहस्य विशेष्यत्वसम्बन्धावच्छिन्नाभाववत्तायाः शब्दत्वादावभावात् सामान्यलक्षणस्यापि तदानीं शब्दत्वादावव्याप्तिश्चेत्यभिप्रायः॥

स्याद्वेत्यादिधीतिमवतारयति **नन्विति**। **नायंदोषइति**। तथा च तत्पुरुषीयव्याप्तिग्रहविरहविशिष्टं यत् तत्पुरुषीयसाध्यादिनिश्चयविषयीभूत धर्मिव्यावृत्तत्वम् तदेव तत्पुरुषंप्रत्यसाधारण्यंवाच्यम् साधारण्यभावविशिष्टस्य तत्पुरुषीयव्याप्तिग्रहस्य विशेष्यत्वसम्बन्धावच्छिन्नाभावविशिष्टसंशयप्रयोजकरूपवत्वंतु तत्पुरुषंप्रति सव्यभिचारत्वम् वक्तव्यमेवं च न पुरुषान्तरीय व्याप्तिग्रहदशायां शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दत्वादेर्व्याप्ति ग्रहशून्यपुरुषं प्रत्यसाधारण्यहानिः, नवा सामान्यलक्षणस्य तत्राव्याप्तिः, तत्पुरुषीयव्याप्तिग्रहस्यैव तदानीमभावादिति भावः॥

❀ दीधितिः ❀

**स्याद्वा तदपि तत्तत्पुरुषघटितमसाधारण्यवत् , साध्यादिव्याप्यवत्त्वेन रूपेण साध्यादिमत्त्वनिश्चयेऽव्याप्तिप्रसङ्गाच्च । न हि घटोऽनित्यो घटत्वा-**

❀ गादाधरी ❀

त्वमपि । तत्तत्पुरुषघटितमिति । तथाचासाधारण इव साधारणेपि पुरुषविशेषनियन्त्रितसव्यभिचारव्यवहारापत्तिर्धूमादौ साध्ये वह्न्यादिरमुकं प्रति व्यभिचारीति व्यवहाराभावेदीष्टापत्तेरयोगादिति भावः । तथाश्रुतैतत्कल्पे प्रथमपक्षीयप्रथमदोषमप्याह साध्यादीति । आदिपदात्साध्याभावपरिग्रहः ।

ननु तदानीमसाधारण्याभावेऽपि तद्भ्रमादेवानुमितिप्रतिबन्ध इति

❀ विवृतिः ❀

**पुरुषविशेषेति** अमुकं प्रति अयं सव्यभिचार इत्याकारक व्यवहारापत्तेरित्यर्थः। इदमुपलक्षणम् , यस्मिन् साधारणहेतौ कस्यापिपुरुषस्य न व्याप्तिभ्रमोजातः स कस्यापि सव्यभिचारो नस्यादित्यपि दोषो बोध्यः ॥

ननूक्तव्यवहारस्त्विष्यत एवेत्यत आह **धूमादाविति । इष्टापत्तेरयोगादिति ।** पुरुषविशेषनियन्त्रित सव्यभिचार सामान्यलक्षणं न युक्तमिति हृदयम् ॥

**यथाश्रुतेति ।** व्याप्तिग्रहाभाव विशिष्टत्वादिनाऽभिहितोक्तासाधारण्यादि लक्षणे इत्यर्थः । तत्तद्व्यक्तित्वस्य असाधारण्यघटकत्वे वक्ष्यमाण दोषस्यासम्भवात् यथाश्रुतेत्युक्तम् । **प्रथमेति ।** यत्र यत्र साध्यादिनिश्चय इत्यादिकल्पे इत्यर्थः। **अभिहितमिति** सर्वाणि साध्यव्याप्यवन्ति साध्यवन्तीत्याकारकनिश्चयमादाय शब्दत्वादे रसाधारण्यानुपपत्तिरूप दोष मित्यर्थः। शब्दोऽनित्यः शब्दत्वादित्यादौ यदा सर्वाणि साध्यव्याप्यवन्ति साध्यवन्ति इत्याकारको निश्चय स्तदाशब्दत्वादावव्याप्तिः यादृशव्याप्तिग्रहे नासाधारण्यं तादृशव्याप्ति ग्रहाभावविशिष्ट निरुक्त साध्यादिमद्व्यावृत्तत्वस्य शब्दत्वेविरहात् , साध्यव्याप्यवत्त्वेन शब्दस्याप्युपादातुंशक्यत्वादित्याशयः ॥

**साध्यभावपरिग्रह इति ।** शब्दो नित्यः शब्दत्वादित्यादौ यदा सर्वाणि साध्याभावव्याप्यवन्ति साध्याभाववन्तीत्याकारक निश्चयस्तदापि शब्दत्वादावव्याप्तिरिति समुदित तात्पर्य्यम् ॥

**नन्विति ।** तदानीम्=साध्यव्याप्यवत्त्वावच्छेदेन साध्यनिश्चयदशायाम् । असाधारण्याभावेऽपि=तादृशव्याप्तिग्रहविरह विशेषिततादृश निश्चित साध्यादिमद्व्यावृत्तत्वस्य शब्दत्वादा वसत्त्वेऽपि । तद्भ्रमादेव=साध्यव्याप्यवद्भिन्न साध्यनिश्चयविषयीभूत धर्मिव्यावृत्तत्वस्य अन्यत्र प्रसिद्धस्य शब्दत्वादौ भ्रमादेव । अनुमिति प्रतिबन्धः=शब्दत्वादि

❀ दीधितिः ❀

**वृत्तं शब्दत्वमितिवत् अनित्यत्वव्याप्यवतो व्यावृत्तं शब्दत्वमिति तदानीं निश्चयः। अभिहितञ्च निश्चितसाध्यतदभाववद्व्यावृत्तत्वं न संशयप्रयो-**

❀ गादाधरी ❀

शंकानिराचिकीर्षया तद्भ्रमाभावमप्युपपादयति नहीति। तदानीं–पक्षे साध्यसन्देहदशायां, तदानीं तत्र तद्व्याप्यवत्तासंशयस्याप्यौचित्यावर्जितत्वात्तद्व्याप्यवद्वृत्तित्वस्यापि हेतौ संशयादिति भावः। उक्तविवक्षायामेतद्दोषानवकाशात्साधारणे पुरुषविशेषनियंत्रितसव्यभिचारव्यवहारे कदाचिदिष्टापत्तेः सम्भवाद्दोषान्तरमाह–अभिहितं चेति।

❀ विवृत्तिः ❀

हेतुकानिमित्यनुत्पादः। तद्भ्रमाभावम्=तादृशासाधारण्यभ्रमाभावम्। **पक्षे इत्यादि**। शब्दादावनित्यत्व संदेह दशायामित्यर्थः॥

तदानीम्=उक्तसंदेहदशायाम्। **तद्व्याप्येति**। अनित्यत्वव्याप्यवत्तासंशस्येत्यर्थः। **औचित्यावर्जितत्वादिति**। शब्दधर्मिका नित्यत्वाव्याप्यवत्तासंशयस्य तद्धर्मिकानित्यत्वसंशयहेतुत्त्वादित्याशयः॥

**तद्व्याप्येति**। अनित्यत्वव्याप्यवद्व्यावृत्तत्वस्यापीत्यर्थः। हेतौ=शब्दत्वादौ। शब्दोऽनित्यत्वव्याप्यवान्नवेत्याकारक संशयदशायाम् तुल्यवित्तिवेद्यत्वन्यायेन शब्दत्वेऽपि अनित्यत्व व्याप्यवद्व्यावृत्तत्वस्य संदिग्धत्वात् दित्यसाधारण्य निश्चयाभावेन तद्भ्रमादनुमिति प्रतिबन्ध एव न सम्भवतीति हृदयम्॥

उक्तविवक्षायाम्=तत्तद्व्यक्तित्वरूपधर्मितावच्छेदकस्यासाधारण्यघटकत्व विवक्षायाम्। तादृशव्याप्तिग्रह विरहविशिष्ट निरूक्ततत्तद्व्यक्तित्वावच्छिन्न व्यावृत्तत्वस्य। साधारण्य रूपत्वविवक्षायामिति यावत्। केचित्तु साध्यव्याप्यवत्त्वभिन्नधर्मितावच्छेदकस्यासाधारण्य घटकत्वविवक्षायामिति व्याचक्रुः॥

एतद्दोषानवकाशात्=साध्व्याव्याप्यवत्त्वावच्छेदेन साध्यनिश्चयकाले शब्दत्वादे रसाधारन्यानुपपत्तिरूपदोषानवकाशात्। तादृश तत्तद्व्यक्तित्वा वच्छिन्नघटादिव्यावृत्तत्वस्य शब्दत्वादौ तदानीमपि सत्त्वादित्याशयः॥

नन्वेवं यथोक्त घिशेषलक्षणस्य सामान्यलक्षणस्यापि निर्दोषत्वे सामान्यलक्षणस्य पुरुषविशेषनियन्त्रित तया धूमादौ साध्ये वह्नयादि रयुक्तं प्रतिव्यभिचारी तिव्यवहारः स्यादित्यत **आह साधारणे इति। कदाचिदिति**। अनन्यगत्येत्यादिः। तथाच तादृशव्यवहारास्त्वेष्टएवेतिभाधः।

निश्चित् साध्यादिमद्व्यावृत्तत्वस्य संशयप्रयोजकत्वं दीपितिकृता कुत्राभिहित मि-

❁ दीधितिः ❁

**जकं किन्तु साध्यतदभावाभ्यां सहचरितत्वमिव तत्सहचरिताभाव-**

❁ गादाधरी ❁

परेत्वित्यादिना अयं घट एतत्वादित्यादिपूर्वपक्षीयपंक्तिव्याख्यावसर इति शेषः । न संशयप्रयोजकमिति । तथाच तदादायासाधारणे न लक्षण-सङ्गमनसम्भव इतिभावः । ननु तर्हि कीदृशमसाधारण्यं संशयप्रयोजकप्रत आह–किंत्विति । तत्सहचरितेति । साध्यतदभावसहचरितेत्यर्थः । एता-दृशासाधारण्यस्य च न हेतुदोषतासम्भवः सद्धेतुसाधारण्यात् अनुमिति-प्रतिबन्धकज्ञानाविषयत्वेन दोषसामान्यलक्षणानाक्रान्तत्वाच्चेति भावः ।

❁ विवृत्तिः ❁

त्याकांक्षाया माह **परेत्वित्यादिनेति** । भावमाह **तथाचेति** । तदादाय=तादृशनि-श्चित साध्यादिभध्यामृत्तत्वमादाय । **नलक्षण समन्वय सम्भव इति** । निश्चित-साध्यतदभाववद्वयावृत्तत्वे संशयप्रजकत्वस्यैवाऽसत्त्वादित्याशयः ॥

किन्वित्यादि दीधितिभवतारयति **नन्विति** । **संशयेति** । संशयजनककोटिद्वयो-पस्थिति जनकतावच्छेदक प्रकारतावच्छेदकीभूतामित्यर्थः । **साध्यतदभावेति** । साध्यवति साध्याभाववति च वर्त्तमानोयोऽभावस्तत्प्रतियोगित्वमसाधारण्य मिति समु-दित दीधित्यर्थः पर्य्यवसितः ।

**एतादृशेति** । साध्यतदभावसहचरिताभाव प्रतियोगित्वरूपासाधारण्यस्य चेत्यर्थः । हेतुदोषत्वाऽसम्भवे हेतुमाह **सद्धेताविति** । तथा च वह्निमान् धूमादित्यादौ निरुक्ता-साधारण्यलक्षस्यातिव्याप्तिः, वह्नियति वह्नयभाववत्ति च वर्त्तमानस्य धूमघटोभयाभावस्य प्रतियोगितायाः धूमेसत्त्वात् । नच तादृशाभावप्रतियोगितावच्छेदक हेतुतावच्छेदकवत्त्वमे-वासाधारण्यम् तस्य च सद्धेतु साधारण्य विरहादेव नानिव्याप्तिरितिवाच्यम् तथासति शब्दोऽनित्यः शब्दत्वादित्यादौ पक्षे साध्यसंदेहज्ञायां शब्दत्वादा वव्याप्तिः अनित्यत्वादि-मति शब्दत्वसामान्याभावस्यावर्त्तमानतया शब्दत्वघटोभया आवमादायैवतत्रलक्षण समन्वयस्य कर्त्तव्यत्वादितिध्येयम् ॥

ननु साध्यवत्त्वेन निश्चित धर्मिवृत्तित्वाभाव विशिष्ट तादृश प्रतियोगित्वस्यासा-धारण्य रूपत्वे न धूमादावत्तिव्याप्ति, तस्य वह्निनिश्चय विषये महानसे वर्त्तमानत्वा दत **आहानुमितीति** । प्रकृतानुमिति तत्कारणान्यतर प्रति बन्धकनिश्चयाविषयत्वे-नेत्यर्थः । **दोषसामान्येति** । हेत्वाभाससामान्यलक्षणानाक्रान्तत्वाचेत्यर्थः । हेत्वाभास सामान्यलक्षणस्य अनुमिति तत् कारणान्यतरप्रतिबन्धकयथार्थःनिश्चयविषयत्वस्व-रूपतया साध्यतदभाव सहचरिता भावप्रतियोगित्व ज्ञानस्य ग्राह्याभावानवगाहि-

❀ दीधितिः ❀

**प्रतियोगित्वम्, व्याप्यविरुद्धयोस्तु तत्त्वेन निश्चितयोर्दर्शने विशेषदर्शनवशादेव न संशय इति विभाव्य लक्षणान्तरमाह—विरुद्धान्येति ।**

❀ गादाधरी ❀

**विरुद्धान्यत्वस्य हेतुविशेषणत्वे ऽसाधारणासंग्रहः, विरोधपदार्थं साध्यासामानाधिकरण्यत्वादिना निवेश्य तदन्यत्वेनानुमितिविरोधिवि-**

❀ विवृतिः ❀

तथा अनुमितौ तत् कारणे वाऽप्रतिबन्धकत्वादेव तादृशज्ञानविषयस्य हेत्वाभासत्वाऽसम्भवादिति तादृश प्रतियोगित्वेन रूपेणा साधारणस्य सव्यभिचारत्वमेवासंगतमित्याशयः ॥

वह्निव्याप्ये धूमे वह्निविरुद्धे च जलत्वे वह्नि वह्न्यभाव सहचरिताभाव प्रतियोगित्वस्य सत्त्वे तस्य संशय प्रयोजकतया तेनरूपेण वह्निव्याप्य धूमादि ज्ञानात् वह्निसंशयः स्यात् इत्याशंक्य व्याप्यविरूद्धयो रित्यादि दीधितिमवतारयति **नन्वित्यादि** । तादृशधर्मस्य साध्य तदभाव सहचरिताभाव प्रतियोगित्वरूपधर्मस्य । **संशयप्रयोजकत्वेइति** । असाधारण्यादिप्रकारकज्ञानस्य संशयजनकत्वादितिभावः ।

तत्त्वेनेत्याद्यभिधानस्य प्रयोजनमाह व्याप्तय'दीति । व्याप्तिप्रकारकज्ञान शून्यकाले इत्यर्थः ।

व्याप्यादिदर्शनस्य = असाधारण्यप्रकारेणापि वास्तविक व्याप्यप्रकारकज्ञानस्य । तत्त्वेन=व्याप्यत्वेन । वह्निव्याप्यत्वादिनायदा धूमादेर्नज्ञानं किन्तुतादृशासाधारण्यप्रकारेणैव तदा संशयो भवत्येवबाधकाभावात् यदातु वह्निव्याप्यत्वादिना धूमादेर्ज्ञानं तदा तादृशासाधारण्यज्ञानसत्वेऽपि नसाध्यसंशयः, निरुक्तव्याप्तिप्रकारक धूमादिज्ञानस्यैव तदभावव्याप्यवत्ताज्ञान मुद्रया संशयप्रतिबन्धकत्वादित्येवं दीधितिकृतामाशयं प्रदर्शयति व्याप्य त्वादिनेत्यादि ॥

विशिष्टसाध्येत्यादि दीधितिमवतारयति **विरुद्धान्यत्वस्येति** । यथाश्रुतमूलेनेत्यादिः । हेतुविशेषणत्वे=सव्यभिचारत्वेनाभिमतहेतुविशेषणत्वे । **असाधारणाऽसंग्रहइति** । शब्दोनित्यः शब्दत्वारित्यादौ यदा शब्देनित्यत्वस्य संदेहस्तदानीं शब्दत्वादेर्लक्षतया तत्राव्याप्तिः शब्दत्वादौ विरुद्धान्यत्वस्याऽसत्त्वात् इत्याशयः ।

ननु विरुद्धान्यत्वं साध्यासाभानाधिकरण्यादिभिन्नं यदनुमिति विरोधि तद्वत्त्व रूपमेव वाच्यम् अतोनासाधारणाऽसग्रहः, अनुमिति विरोधिनोऽसाधारण्यस्य साध्यासामानाधिकरण्य भिन्नत्वात् अतआह **विरोधपदार्थमिति** । तदन्यत्वेन=साध्याऽसामानाधिकरण्यादिभिन्नत्वेन ।

❀ दीधितिः ❀

**विशिष्टसाध्यहेतुसामानाधिकरण्यग्रहाविरोध्यर्थकमर्थतो विरोधिविशे-**

❀ गादाधरी ❀

**शेषणेपि साध्याप्रसिद्ध्यादिवारणासम्भव इत्यत आह विशिष्टेति। साध्या तावच्छेदकादिविशिष्टेत्यर्थः। एतदर्थः पूर्वपक्ष एव विवृतः। यथाश्रुत-मूलतो धर्मिविशेषणताया एव लाभादर्थत इति। तात्पर्यबलत इत्यर्थः। विरोधिविशेषणम्–अनुमितिविरोधिविशेषणम्। अवृत्तित्वे परस्परासमाना-धिकरण्ये च साध्यासाधनयोरित्यनुषज्यते। पक्षतानिवेशे प्रयोजनाभावा-दाह पक्षपदमिति। पक्षवृत्तित्वस्य धर्मिविशेषणत्वे स्वरूपासिद्धस्य व्यभि-चारिणोसंग्रहप्रसङ्गः, हेतौ पक्षवृत्तित्वग्रहाविरोधित्वेनविरोधिविशेषणेपि**

❀ विवृतिः ❀

**साध्याऽप्रसिद्ध्यादिवारणाऽसम्भव इति**। आदिना साधनाऽप्रसि-द्ध्यादिपरिग्रहः। काञ्चनमयवह्न्यादिसाध्यकस्थले काञ्चनमयत्वाभाववद्वह्न्यादि रूपसाध्याऽप्रसिद्ध्यादेः साध्यासामानाधिकरण्य भिन्नत्वात् अनुमिति विरोधि-त्वाच्चेतिभावः।

एतदर्थः=साध्यसामानाधिकरण्यग्रहा विरोधित्वदलस्यार्थः। पूर्वपक्षएव= पूर्वपक्षीयप्रतिबन्धकताघटित लक्षण एव। **अर्थतइत्यभिधानप्रयोजनमाहयथा-श्रुतेति**। लक्षणादिना अन्यार्थस्यापि बोधसम्भवात् यथाश्रुतेत्युक्तम्।

धर्मिविशेषणताया एव=सव्यभिचारत्वेनाभिमतहेतुविशेषणताया एव। अनु-मितिविरोधिन्येव विशिष्ट साध्यादिग्रहाऽविरोधित्वं तात्पर्य्यबलाल्लभ्यमित्याह **तात्प-र्य्यबलतइति**।

प्रकृतहेतौ प्रकृत साध्यसामानाधिकरण्यग्रहाऽविरोधित्व विवक्षणे साध्यनिष्ठा-ऽवृत्तित्वे साधननिष्ठावृत्तित्वे साध्याऽसिद्ध्यादौ च नातिव्याप्तिरि**त्याहावृत्तित्वे इत्यादि। अनुषज्यतइति**। साध्य साधनयोरवृत्तित्वस्य साध्यसाधनयोः परस्प-राऽसामानाधिकरण्यस्य च निरास इति पर्य्यसितोदीधित्यर्थः॥

पक्षतानिवेशे=संदिग्धसाध्यकत्वरूपाया पक्षतायानिवेशे अखण्डाभावघटक-तया पक्षतानिवेशस्य कथंचित् सार्थक्यसम्भवादाह **प्रयोजनाभावादिति**। धर्मि-विशेषणत्वे इत्यस्य पूर्ववदर्थोबोद्धव्यः। **स्वरूपासिद्धस्येत्यादि**। हेतौपक्षवृत्ति-त्वविवक्षणे हृदोधूमवान् वह्नेरित्यादौ स्वरूपासिद्धे वह्निरूपव्यभिचारिणि हेता व व्याप्तिः, वह्नौ हृदवृत्तित्वस्यासत्त्वादितिहृदयम्॥

ननुहेतुधर्मिकपक्षवृत्तित्वग्रहाविरोधित्व विशिष्टं यदनुमिति विरोधिरूपं तद्वत्व-मेव सव्यभिचारत्वंवाच्यम् तथाचनोक्तदोषः व्यभिचारस्य हेतुधर्मिकपक्षवृत्तित्व-

❁ दीधितिः ❁

**षणम्, तेन साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्य परम्परासामानाधिकरण्यादीनाञ्च निरासः। पक्षपदञ्च धर्मिमात्रपरम्, तथा च यद्यद्ध-**

❁ गादाधरी ❁

वाधसत्प्रतिपक्षातिप्रसङ्गवारणमशक्यमेवेति पूर्ववत्पक्षवृत्तित्वे सत्यनुमितिविरोधिसम्बन्धाध्यावृत्तिरिति, दलद्वयेन व्याप्तिग्रहविरोधिधर्मवत्त्वस्य विवक्षणे च मणिकारमतसिद्धस्य साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यस्या संग्रहः, विशेषणान्तरं प्रक्षिप्य बाधादिवारणे च गौरवमित्यभिप्रेत्य पूर्वपक्षोक्तरीतिं परित्यज्य प्रकारान्तरेण बाधादिकं वारयितुमुक्तदलद्वलद्वयनिष्कृष्टार्थमाह तथाचेति। यद्यद्धर्मीति। सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकं ता-

❁ विवृतिः ❁

ग्रहाऽविरोधित्वादतआह **हेताविति। बाधेति।** ह्रदपक्षकवह्न्यादि साध्यकस्थले वह्न्यभाव वद्ध्रदरूपबाधवह्न्यभावव्याप्य वद्ह्रदरूप सत्प्रतिपक्षयोरतिव्याप्तिवारणमित्यर्थः। **अशक्यमिति।** तयोः हेतुधर्मिक पक्षवृत्तित्वग्रहाविरोधित्वात् अनुमितिविरोधित्वाच्चेतिभावः॥

ननु व्याप्तिग्रह विरोधिरूपवत्त्वमेवसव्यभिचारत्वमस्तु, तथाचनकोऽपिदोषः, वाधादेर्व्याप्तिग्रहाऽविरोधित्वादतआह **पूर्ववत् पक्षवृत्तित्वे इत्यादि। साध्यव्यापकीभूतेति।** पक्षवृत्तित्वाऽविशेषितसाध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतुरूपासाधारण्यस्येत्यर्थः। **असंग्रह इति।** निरुक्तासाधारण्यस्यव्याप्तिग्रहाविरोधित्वादित्याशयः॥

ननुपक्षे साध्यग्रहाऽविरोधित्वं अनुमितिविरोधिनि निवेश्यैव वाधादिकं वारणीयमतआह। **विशेषणान्तरमिति। गौरवमिति।** वाधादिवारकप्रकारान्तरानुसवणाऽपेक्षयेत्यादिः। **उक्तदलद्वयेति।** पक्षवृत्तित्वेसत्यनुमिति विरोधिसम्बन्धाऽव्यावृत्ति मत्त्वरूपदलद्वयनिष्कृष्टार्थमित्यर्थः॥

**सधार्मितेति।** यत् किञ्चिद्धर्मावच्छिन्न विशेष्यताकहेतुप्रकारकनिश्चयकालीनं यद्रूपावच्छिन्नविषयकनिश्चयसामान्यमित्यर्थः। **स्वसमानेति।** स्वं तादृशयद्रूपावच्छिन्नविषयक निश्चयः तत् समानकालीनो यो हेतुप्रकारकनिश्चयस्तदीयधर्मितावच्छेदकावच्छिन्न विशेष्यताकानुमितिसामान्यप्रतिबन्धकमित्यर्थः॥

**तादृशरूपवत्त्वमिति।** तथा च यत् किञ्चिद्धर्मावच्छिन्नविशेष्यक हेतुप्रका-

❀ विवृतिः ❀

रकनिश्चयकालीन यद्रूपावच्छिन्न विषयक निश्चयत्व व्यापकं निरुक्तनिश्चयकालीन हेतुप्रकारकनिश्चयधर्मितावच्छेदकावाछिन्न विशेष्य कानुमितित्वव्यापक प्रतिवध्यतानिरूपित प्रतिवन्धकत्वम् तद्रूपवत्वं दोषत्वं स्वज्ञान विषयप्रकृतहेतुतावच्छेदकवत्वसम्बन्धेनताद्दशदोषवत्वं सव्यभिचारत्वम् इति फलितम् ॥

भवतिहिधूमवान् वह्नेरित्तादौ धूमाभाववद्वृत्तित्वविशिष्ट वह्नित्वरूपधर्ममादाय-व्यभिचारे लक्षणसयन्वयः। वह्निमान् पर्वतःवह्निमन्महानसम्बेत्याकारक ताद्दशहेतुप्रकारक निश्चयकालीन धूमाभाववद्वृत्तित्वविशिष्ट वह्नित्वावच्छिन्न विषयक निश्चयत्वव्यापकतायाः निरूक्त वह्नित्वावच्छिन्न विषयक निश्चय समानकालीन ताद्दश वह्निप्रकारक निश्चयधर्मितावच्छेदकीभूत पर्वतत्वाद्य वच्छिन्न विशेष्यक पर्वतोधूमवान् धूमव्याप्योवह्निरित्याकारकसमूहालम्बनानुमितित्वव्यापकप्रतिवध्यतानिरूपित प्रतिबन्धकतायां सत्वेन धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वस्ययद्रूपपदेन धर्तुंशक्यत्वात्।

एवं शब्दो नित्यः शब्दत्वादित्यादौ नित्यत्वव्यापकीभूताभावप्रतियोगित्व विशिष्ट शब्दत्वरूपासाधारण्येऽपिलक्षणसमन्वयः, शब्दत्ववानयमित्याकारक ताद्दश हेतुमत्तानिश्चयकालीन नित्यत्वव्यापकीभूताभावप्रतियोगित्वविशिष्ट शब्दत्वत्वावच्छिन्न विषयकनिश्चयत्वव्यापकत्वस्य निरूक्तनिश्चयसमानकालीन ताद्दशहेतुप्रकारक-निश्चयधर्मितावच्छेदकेदंत्वावच्छिन्नविशेष्यक शब्दोनित्यः नित्यत्वव्याप्तिमचशब्दत्वमित्याकारकानुमितित्व व्यापकप्रतिवध्यता निरूपित प्रतिवन्धकतायां सत्वान्नित्यत्वव्यापकीभूताभाव प्रतियोगि शब्दत्वत्वस्यैव यद्रूपपदेनोपादानसम्भवात्।

सर्वमनित्यं मेयत्वादित्यादावपि मेयत्ववान् घटइत्याद्याकारक हेतुमत्तानिश्चयकालीन नित्यत्वव्यायकीभूताभावाऽप्रतियोगित्वविशिष्ट मेयत्वत्वावच्छिन्न विषयक निश्चयत्वव्यायकतायाः निरूक्तविशिष्ट निश्चयकालीनमेयत्वरूपहेतुप्रकारकनिश्चय धर्मितावच्छेदक घटत्वाद्यवच्छिन्नधर्मिक घटोऽनित्यः अनित्यत्वान्वय व्याप्तिमत् नित्यत्वव्यापकीभूताभावप्रतियोगित्वरूप साध्यव्यति रेकव्याप्तिमचमेयत्वमित्याकारक समूहालम्बनानुमितित्वव्यापकप्रति वध्यतानिरूपितप्रतिवन्धकतायां सत्त्वेन यद्रूपवदेन नित्यत्वव्यापकी भूताभवाऽप्रतियोगित्वविशिष्ट मेयत्वत्वधर्ममादाय नित्यत्वव्यापकीभूताभावाऽप्रतियोगित्व विशिष्टमेयत्वरूपानुसंहारित्वे लक्षणसमन्वयः।

अनुमितियदस्य साध्यव्याप्यो हेतुः साध्यवांश्चेत्याकारकानुमिति परतायाः स्वयमग्रे वक्षमाणतया, निरुक्तानुपसंहारित्वे लक्षणसमन्वयार्थं निरुक्तानुमितेः व्यतिरेकव्याप्ति विषयकत्वस्यावश्यकत्वमितिध्येयम् ॥

यत्तु हेतौ साध्याभाववद्वृत्तित्वमेवानुपसंहारित्वम्, अनुपसंहारितादशायां

❀ गादाधरी ❀

दृशधर्मवत्त्वमित्यर्थः। समूहालंबनात्मकस्योदासीनपदार्थविषयकनिश्चयस्य।

❀ विवृतिः ❀

तादृशवृत्तित्वनिश्चयस्यासम्भवेऽपिकालान्तरीण तादृशनिश्चयविषय साध्याभाववद्वृत्तित्वमादायानुसंहारिणि लक्षण समन्वयः ।

अत एवाव्यावृत्तिपदमपि साधुसंगच्छते इति मतं, तन्मंदम् , व्यभिचारित्वानुपसंहारित्वयोरभिन्नत्वे तेनरूपेण विभागानुपपत्तेः मिथो विरूद्धधर्मेणैव विभागस्यसर्वसम्मतत्त्वात् ॥

सधर्मितावच्छेदककहेतुमत्ता संशयादिकालीन व्यभिचारादिनिश्चयस्यापि तादृशहेतुमत्ताज्ञानकालीन व्यभिचारादि निश्चयसामान्यान्तर्गत तया तन्निश्चयसमानकालीन हेतुमत्तानिश्चयाऽप्रसिद्ध्या सर्वत्राऽसम्भवः स्यादत स्तादृश हेतुमत्ताज्ञानकालीनत्वमुपेक्ष्य तादृशनिश्चय कालीनत्वंयादृशविशिष्टविषयकनिश्चयसामान्य विशेषणम् ।

सधर्मितावच्छेदककनिश्चयेहेतु प्रकारकत्वाऽनिवेशेऽसम्भवः सधर्मितावच्छेदककोदासीन घटादिनिश्चयकालीनव्यभिचारादिनिश्चयस्यापि तादृशनिश्चयसामान्यान्तर्गत तया तन्निश्चयसमानकालीन हेतुमत्तानिश्चयाऽप्रसिद्धे रतस्तन्निवेशः ।

यादृशविशिष्टविषयकज्ञानसामान्यमित्युक्तावप्यसम्भवः सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीन व्यभिचारादिसंशयादेरपि तादृश व्यभिचारादिज्ञानसामान्यान्तर्गत तया तत्र यथोक्तानुमिति प्रति बन्धकत्वस्यासत्त्वादतो यादृश विशिष्ट विषयकनिश्चयपर्य्यन्तानुसरणम् ।

अयंशब्दत्ववान् घटः शब्दत्ववान्नवेत्याकारकज्ञानकाले तादृश हेतुमत्तानिश्चयकालीन नित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वनिश्चय कालीनहेतुमत्ताज्ञानधर्मितावच्छेदककानुमिति सामान्यान्तर्गतायाम् घटो नित्यः नित्यत्वव्याप्तिमच्चशब्दत्वमित्याकारकानुमितौ नित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वनिश्चयस्याप्रतिबन्धकतया तादृशाऽसाधारण्येऽव्याप्ति रतः स्वसमानकालीनहेतुमत्ताज्ञानधर्मितावच्छेदककत्वमनिवेश्य तादृश निश्चयधर्मितावच्छेदककत्वमनुमितो निवेशितम् ॥ अयं शब्दत्ववान् घटो रूपवांश्चेत्याकारक निश्चय कालीनासाधारण्यनिश्चयस्य घटादिधर्मिकानुमित्यप्रयिबन्धकतया पूर्वोक्ताऽसाधारण्येऽव्याप्तिरतः स्वसमानकालीन निश्चये हेतुप्रकारकत्वनिवेश इत्य-न्यत्र विस्तरः ।

सामान्यपदद्वयोपादानस्य सार्थकत्वे सम्भवत्येव तादृश विशिष्टविषयकनिश्चये सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनत्वादि विशेषणम् सार्थकं सम्भवति नान्यथा अतः पश्चादुक्तस्यापि सामान्यपदद्वयस्य प्रथमत एव प्रयोजनमाह **समूहा-**

❀ दीधितिः ❀

र्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपं तद्वत्त्वमित्यर्थः,

❀ गादाधरी ❀

ष्यमुमितिप्रतिबन्धकतयोदासीनपदार्थविषयकनिश्चयसामान्यस्यापि तद्विप रीतविषयकसमूलालम्बनात्मक प्रकृतामुमिनिप्रतिवन्धकतया तत्रातिव्याप्ति-वारणाय सामान्यपदद्वयम् । हेतुमत्ताज्ञानासमानकालीनस्य व्यभिचारनि-

❀ विवृतिः ❀

**स्वनात्मकस्येति** । असाधारण्यादि विषयकस्येत्यादिः । **उदासीनेति** । घटाभाववद्भूतलादिविषचकनिश्चयस्येत्यर्थः । अनुमिति प्रतिवन्धकतया=अनुमिति सामान्य प्रतिबन्धकतया । **उदासीनेति** । असाधारण्याद्यविषयक केवलघटाभाववद्भूतल विषमक निश्चयसामान्यस्यापीत्यर्थः । **तद्विपरीतेति** । घटाभाववद्भूतलादि विपरीत घटवद्भूतलादि विषयक समूहालम्बन साध्यवान् साध्यत्याप्योहेतुरित्याकारकानुमिति प्रतिबन्धकतयेत्यर्थः । तत्र=घटाभाववद्भूतलादिरूपोदासीने ॥

**सामान्यपदद्वयमिति** । सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीन यादृशविशिष्ट विषयक निश्चयसामान्यमित्यत्र सामान्यपदानुपादानेऽयं वह्निमान् जलादित्यादौ घटाभावद्भूतलेऽति व्याप्तिः, जलवानयभित्याकारक निश्चयकालीनस्य वह्निव्यापकीभूताभावप्रतियोगि जलविषयक घटाभावद्भूतलत्वावच्छिन्नविषयक समूहालम्बन् यत् किञ्चिन्निश्चयस्यस्वसलानकालीन तादृशहेतुमत्तानिश्चयधर्मितावच्छेदकीभूते दत्वाद्यवच्छिन्न धर्मिक वह्न्याद्यनुमितिसामान्यं प्रत्येव प्रतिबन्धकतया घटाभाववद्भूतत्वादेर्यद्रूपपदेन धर्तुंशक्यत्वात् अतः प्रथमं सामान्यपदम् ।

सामान्य पदोपादानेतु तादृशनिश्चयत्वव्यापकतायाः तादृशानुमितिसामान्यप्रतिबन्धनतायांलाभान्न घटाभावद्भूतलेऽति व्याप्तिः घटाभाववद्भूतलत्वाद्यवच्छिन्नविषयकनिश्चयत्वस्या समूहालम्बनात्मके दोषाद्यविषयककेवल घटाभावद्भूतत्वनिश्चयेऽपि सत्त्वेन तत्र प्रकृतानुमिति प्रतिबन्धकत्वस्यासत्त्वात् ॥

एवं स्वसमान कालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमिति सामान्य प्रतिबन्मकमित्यत्र सामान्यपदानुपादानेऽपि तत्रैव घटाभाव वद्भूतलादावतिव्याप्तिः, ह्रदादिधर्मिक हेतुप्रकारकनिश्चयकालीन घटाभाववद्भूतलत्वाद्यवच्छिन्नविषयकनिश्चयत्व व्यापकतायाः तादृश ह्रदत्वादिधर्मितावच्छेदकक समूहालम्बन ह्रदोवह्निमान् वह्निव्याप्तिमज्जलं घटवचभूतल मित्याकारकयत् किञ्चिदनुमिति प्रतिबन्धकतायां सत्त्वात् अतो द्वितीयं सामान्यपदम् ।

तदुपादानेतु तादृशानुमिति त्वव्यापकत्वस्य प्रतिबध्यतायां विवक्षणीयतया

❀ दीधितिः ❀

**साध्यव्यापकीभूताभावप्रतियोगित्वन्तु तथा, बाधप्रतिरोधौ तु धर्म्मि-**

❀ गादाधरी ❀

**र्णयस्यव्यभिचारनिश्चयसाभान्यान्तर्गतत्व स्वसमानकालीनहेतुमत्ताज्ञा-नाप्रसिद्ध्याऽसंभवः स्यादिति प्रथमं कालीनान्तं निश्चयविशेषणम् । निर्धर्मितावच्छेदकक हेतुमत्तानिश्चयकालीनव्यभिचारनिश्चयकालीनहेतु-मत्ताज्ञानधर्मितावच्छेदकाप्रसिद्ध्या तद्दोषतादवस्थ्यमतोहेतुमत्ताज्ञाने सधर्मितावच्छेदककत्वविशेषम् । अनुमितिसामान्यान्तर्गतायां स्वसमान-**

❀ विवृत्तिः ❀

न तत्राति व्याप्तिः, तादृग्नानुमितित्वस्य घट वह्नूतलाद्यविषयकतादृशानुमितावपि सत्त्वेन तत्र घटाभाववद्भूतलादिनिश्चय प्रतिबध्यतायां विरहादित्यभिप्रायः ॥

यादृशविशिष्ट विषयकनिश्चये सधर्मितावच्छेदककहेतुमत्तानिश्चय कालीनत्वा-नुक्तौ असम्भवः, व्यभिचारादिनिश्चयसामान्यन्तर्गत तादृशहेतुमत्ता निश्चयासमान-कालीन व्यभिचारादिनिश्चयस्य तन्निश्चयसमानकालीनहेतुमत्तादिश्चयाऽप्रसिद्धेः,

एवं हेतुमत्तानिश्चये सधर्मितावच्छेदककत्वाऽनिवेशेऽपि पुनरसम्भव एव-स्यात् निर्धर्मितावच्छेदकक केवल हेतुमानित्याकारक निश्चय कालीन व्यभिचारा-दिनिश्चयस्यापि तादृश निश्चयसामान्यन्तर्गततया तन्निश्चय समानकालीन हेतुमत्ता-निश्चय धर्मितावच्छेदकस्याऽप्रसिद्धेरित्याह **हेतुमत्ताज्ञाना समानकालीनस्ये त्यादि सधर्मितावच्छेदककत्व विशेषण मित्यन्तेन** ॥

अनुमिति सामान्ये स्वसमानकालीन हेतुमत्तानिश्चय समानधर्मिता वच्छेदक-कत्व विशेषणाऽनुक्तौ शब्दो नित्यः शब्दत्वादित्यादावसाधारणेऽव्याप्तिः, शब्दत्व-वान् शब्द इत्याकारक सधर्मितावच्छेदकक हेतुमत्तानिश्चय कालीन नित्यत्वव्याप-कीभूताभाव प्रतियोगिशब्दत्व मित्याकारकनिश्चयस्य तादृशनिश्चय समानकालीन हेतुमत्ता निश्चया समानधर्मितावच्छेदककानुमिति सामान्यान्तर्गतायां अयंनित्यइ-त्याद्याकारकेदं त्वावच्छिन्नविशेष्यकानुमिता व प्रतिबन्धकतया यादृश विशिष्टाविष-यकनिश्चय पदेन नित्यत्वव्यापकी भूताभाव प्रतियोगि शब्दत्वमित्याकारकनिश्चयस्य धर्तुमशक्यत्वादित्याहा**नुमिति सामान्यान्यर्गतायामित्यादि** ॥

❀ मनोरमा ❀

**सधर्मितेति** । नन्वत्र कल्पे ह्रदो वह्निमान्जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजल-रूपाऽसाधारण्येऽव्याप्तिः, जातित्वेन जलत्वावगाहिजातिमत्वान् ह्रदइत्याकारकनिश्चयकालीनतादृ-शासाधारण्यनिश्चये यथोक्तानुमितिप्रतिबन्धकत्वविरहात् ।

## ❀ दीधितिः ❀

**विशेषितत्वात् न तादृशौ । सर्वं साध्याभाववत् तद्व्याप्यवद्धेत्यादिकञ्च**

## ❀ गादाधरी ❀

कालीनहेतुमत्ताज्ञानासमान धर्मितावच्छेदककसाध्यानुमितौ हेतुतावच्छेदकावच्छिन्नस्वसाध्यव्यापकीभूताभावप्रतियोगित्वज्ञानं प्रतिबन्धकं नित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वमित्यादिज्ञानदशायामयं नित्य इत्यादिज्ञानोत्पत्तावविवादादित्यसाधारण्याव्याप्तिरतः स्वसमानकालीनहेतुमत्तानिश्चय समानधर्मितावच्छेदकान्तमनुमितिविशेषणम् । तथा च इदन्त्वादि धर्मितावच्छेदककनित्यत्वादिविशिष्टबुद्धौ शब्दत्वादि धर्मिकनित्यत्वादिव्यापकीभूताभावप्रतियोगित्वरूपानित्यत्वीयव्यतिरेकव्याप्तिनिश्चयविशिष्ट तद्धर्मितावच्छेदककशब्दत्वादिमत्ताज्ञानस्य तदभावव्याप्यवत्ताज्ञानमुद्रया प्रतिबन्धकत्ववद्विशेषणविशेष्यभावे विनिगम-

## ❀ विवृतिः ❀

ननूक्त विशेषण दानेन कथमसाधारण्य संग्रहः **अतआह तथाचेति । इदंत्वादीति** । अयं नित्यइत्याकारक विशिष्ट बुद्धावित्यर्थः । **शब्दत्वादीति** । शब्दत्वं नित्यत्वव्यापकीभूता भाव प्रतियोगीत्याकारक तादृश प्रतियोगित्वरुपानित्यत्वाभावात्मक साध्याभाव व्यतिरेक व्याप्ति निश्चय विशिष्टस्येत्यर्थः ॥

**तद्धर्मितेति** । इदंत्वधर्मितावच्छेदकक शब्दत्वादिमत्ता निश्चयस्येत्यर्थः । **तदभावेति** । नित्यत्वाभावव्याप्य प्रकारकनिश्चयत्वेनेत्यर्थः । **प्रतिबन्धकत्ववत्**=यथा प्रति बन्धकत्वम् । विशेषणविशेष्यभावे=विशेषण विशेष्यत्वे । विनिगमना विरहेण=तादृश व्याप्तिनिश्चयस्यैव विशेषणत्वमित्यत्र विनिगमनाभावेन ।

**तादृशेति** । इदंत्वावच्छिन्न धर्मिक शब्दत्वादिमत्ता निश्चय विशिष्टस्येत्यर्थः ।

## ❀ मनोरमा ❀

न च निरवच्छिन्नहेतुतावच्छेदकताकप्रकारताकत्वेन हेतुमत्तानिश्चयस्य विवक्षणान्नाव्याप्तिरिति वाच्यम्, तथासति अयं वह्निमान् जलवत इत्यत्रवह्निव्यापकीभूताभावप्रतियोगिजलवत्यव्याप्त्यापत्तेः, निरवच्छिन्नहेतुतावच्छेदकताकहेतुप्रकारताकनिश्चयस्याप्रसिद्धेः ।

इत्तिचेन्न, अवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकहेतुतावच्छेदकत्वाभाववद्धर्मानवच्छिन्नावच्छेदकताकहेतुप्रकारताकनिश्चयस्यैव सधर्मितावच्छेदककहेतुप्रकारकनिश्चय पदेनविवक्षितत्वात्,

निरुक्तहेतुनिश्चयीयजलत्वनिष्ठावच्छेदकतायां तादृशजातित्वानवच्छिन्नत्वविरहेण जातित्वेन जलत्वावगाहि तादृशहेतुप्रकारकनिश्चयस्य धर्तुमशक्यत्वात् ॥

अत एव वह्निमानवृत्तिजलादित्यत्रावृत्तिजलवत्तानिश्चयस्याहार्यत्वेऽपि केवलजलादिमत्तानिश्चयकालीनवह्निव्याप कीभूताभावप्रतियोगिजलादिनिर्भयमादायैवासाधारण्ये लक्षणसमन्वयः ॥

यत्तु—हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकहेतुप्रकारताकत्वेन सधर्मिताव-

❀ दीधितिः ❀

**साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधि । साध्यानु-**

❀ गादाधरी ❀

**नाविरहेण तादृशशब्दत्वादिमत्ताज्ञानविशिष्टस्य तथाविधव्याप्तिनिश्च-यस्यापि प्रतिबन्धकतया तादृशहेतुमत्ताज्ञानसमानधर्मितावच्छेदककानु-मितिसामान्यप्रतिबन्धकत्वं तथाविधासाधारण्यनिश्चयस्याक्षतमेवेत्य-साधारण्यसङ्ग्रहः। अनुमितिपदं साध्यव्याप्यो हेतुः साध्यवांश्च पक्ष इत्येतादृशसमूहालम्बनानुमितिपरम्, तेन साधारण्यज्ञानस्य साध्यवत्ता-ज्ञानाप्रतिबन्धकत्वेपि न तद संग्रहः।**

❀ विवृतिः ❀

**तथाविधेति**। शब्दत्वं नित्यत्वव्यापकीभूताभाव प्रतियोगीत्याकारक हेतुधर्मि-कानित्यत्व व्यतिरेक व्याप्तिनिश्चयस्येत्यर्थः। **तादृशेति**। शब्दत्ववानयमित्याका-रक हेतुमत्ता निश्चयधर्मिता वच्छेदककेदंत्वावच्छिन्न विशेष्यक नित्यत्वानुमिति सामान्य प्रतिबन्धकत्वमित्यर्थः॥

**तथाविधेति**। नित्यत्वव्यापकीभूताभाव प्रतियोगित्वविशिष्ट शब्दत्वरुपासा-रण्यनिश्चयस्येत्यर्थः। **असाधारण्यसंग्रहइति**। तथाचोक्तक्रमेण सर्वत्रैव लक्ष-णसमन्वयः सम्भवतीति भावः।

नन्वनुमितिपदस्य तादृशधर्मितावच्छेदकक साध्यविधेयताकानुमिति मात्रपरत्वे व्यभिचारादावव्याप्तिः, व्यभिचार निश्चयस्य साध्यप्रकारकबुद्धाव प्रतिबन्धकत्वात्। साध्यव्याप्तिविशिष्ट हेतुप्रकारकानुमिति मात्रपरत्वेतु साध्यव्यापकीभूताभाव प्रति-योगिहेतुरूपाऽसाधारण्येऽव्याप्तिः, तादृशहेतुनिश्चयस्य व्याप्त्यादि प्रकारकबुद्धा व प्रतिबन्धकत्वात् इत्यत आहानु**मितिपदमिति**॥

हेतु प्रकारकत्व पर्य्यन्त निवेशे प्रयोजनाभावादाह। **साध्यव्याप्योहेतुरिति**। पक्ष इत्यत्र पक्षपदं तादृशहेतुमत्तानिश्चयधर्मितावच्छेदकीभूत धर्मावच्छिन्न पर-मितिध्येयम्।

तेन=व्याप्तिविशिष्टहेतुविषयकत्वस्यानुमितौ विवक्षणेन। न तदसंग्रहः=न साधारणाऽसंग्रहः॥ अनुमिति पदं यत्(यत्)र्मिवृत्तित्वं हेतोर्ज्ञायते तत्तद्धर्मिक प्रकृत-

❀ मनोरमा ❀

च्छेदकक हेतुमत्तानिश्चयस्य विवक्षणीयत्वात नजातिमत्त्वान् ह्रदश्च्येत्याकारकनिश्चयमादायासाधार-ण्येऽव्याप्तिरितिमतम् तत्तुच्छम्। ह्रदो वह्निमानूकांचनमयजलादित्यत्र यदा कांचनमयजलप्रकार-कनिश्चयोऽप्रामाण्यज्ञानास्कंदित एव भवति शुद्धजलत्वेन जलावगाहिनिश्चयस्याप्रामाण्यज्ञानाना

व्यावृत्तिर्वा । तेनैव रूपेण ज्ञातस्य प्रतिबन्धकत्वात् परस्य तथैवो-

## ॐ दीधितिः ॐ

मितिसामान्याविरोधित्वं वा विशेषणम् । तेनैवेति । तेनानुमितिविरो-

## ॐ गादाधरी ॐ

एतेनानुमितिविरोधित्वं यादृशविशिष्टविषयकनिश्चयत्वेनानुमितिप्रतिबन्धककत्वं तादृशत्वम् तत्र चावच्छेदकत्वं प्रागुक्तयुक्त्या अनतिरिक्तवृत्तिस्वरूपमेव विवक्षणीम्, एवं च साध्यव्यापकीभूताभावप्रतियोगी

## ॐ विवृतिः ॐ

साध्य विधेयताक प्रकृतसाध्यव्याप्यहेतु विषयक समूहालनुमिति परमेवतद्विरोधित्वन्तु, यद्रूपावच्छिन्नविषयक निश्चयत्वं तादृशानुमिति प्रतिबन्धकत्वा भाववदवृत्ति तद्रूपवत्त्वमेव वाच्यम्, अन्यथा पूर्वोक्तयुक्त्या व्यभिचाराद्येकदेशेऽतिप्रसंगः स्यात् ॥

एवञ्च शब्दो नित्यः शब्दत्वादित्यत्र नित्यत्वव्यापकीभूताभावप्रतियोगि शब्दत्वरुपाऽसाधरण्येऽव्याप्तिः, तादृशाऽसाधारण्यनिश्चयत्वस्य हेतुमत्तानिश्चयाऽसमानकालीनेऽपि तादृशाऽसाधारण्य निश्चये सत्त्वेन तत्र तथाविधानुमिति प्रतिबन्धकवस्य विरहात्, हेतुनिष्ठ पक्षवृत्तित्वविशिष्ट साध्यव्यापकीभूताभाव प्रतियोत्वस्यासाधारण्य स्वरूपत्वाभ्युपगमे तादृशाऽसाधारण्य निश्चयस्य पक्षधर्मिक साध्यानुमितावेव प्रतिबन्धकतया हेतुमत्तानिश्चयधर्मितावच्छेदक तत्तद्धर्मावच्छिन्न धर्मिकसाध्यानुमितावप्रतिबन्धकत्वात् इति तादृशविशिष्टस्याप्यसाधारण्यत्वं न सम्भवतीत्याक्षेप निरासस्तु सधर्मितावच्छेदकेत्यादिरीत्या लक्षणार्थ निर्वचनेनैवसम्भवतीत्याह **एतेनेति**॥

परास्तमितिपरेणान्वयः । पूर्वोक्तरीत्यालक्षणार्थनिर्वचनेनेत्यर्थः । **यादृशविशिष्टेति** । यद्रूपावच्छिन्नार्थकम् । प्रागुक्तयुक्त्या=सामान्य निरूक्तिलक्षणोक्त दिशा । न तस्यापि=न पक्षवृत्तित्व सहित साध्यव्यापकीभूताभा व प्रतियोगित्वस्यापि । तथात्व सम्भवः=असाधारण्यत्वसम्भवः ॥

## ॐ मनोरमा ॐ

रकंदिततरदा वह्निव्यापकीभूताभावप्रतियोगिजलेऽव्याप्तिः, अप्रामाण्यज्ञानानारकन्दित हेतुतावच्छेदकतापर्याप्त्यधिकरण धर्मवर्याप्तावच्छेदकताक हेतुकारताकनिश्चयस्याऽप्रसिद्धेरितिध्येयम् ॥

अत्र कल्पे सधर्मितावच्छेदकेत्यत्र, स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदकके- त्यत्रच अवच्छेदकत्वंनिरवच्छिन्नं वक्तव्यम् ।

द्वितीयावच्छेदकतायां निरवच्छिन्नत्वानुपादाने ह्रदो वह्निमान् जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलेऽव्याप्तिः, निरुक्तजलनिश्चयकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेककानुमितिसामान्यान्तर्गतायां जातिमान् वह्निमान् इत्याकारकानुमितौ तादृशजलादिनिश्चयस्याप्रतिबन्धकत्वात् ॥

एवं च जातिमान् जलवान् इत्याद्याकारकनिश्चयकालीनव्यभिचारादिनिश्चयकालीनहेतुमत्ता

❀ दीधितिः ❀

धिना विपक्षवृत्तित्वादिना। एवकारेणानुगमकं रूपं व्यवच्छेद्य तस्य-

❀ गादाधरी ❀

हेतुरिति ज्ञानस्य हेतुमत्ताज्ञानासकानकालीनस्य साध्यवत्ताज्ञानाप्रतिब-न्धकतया तादृशज्ञानविषयस्य निरुक्तलक्षणानाक्रान्तत्वेन नासाधारण्य-स्वरूपतोपपद्यते पक्षवृत्तित्वविशेषितस्य च बाधादिवद्धर्मिविशेषघटित-मूर्तिकतया नियतपक्षधर्मिकानुमितिविरोधित्वमेव न तु यत्र यत्र हेतुमत्त्वं ज्ञायते तत्तद्धर्मिकानुमिति सामान्यविरोधित्वमिति न तस्यापि तथात्व-सम्भव इति पाराम्।

यत्तु-हेतुमत्ताज्ञानमनिवेश्य तत्तद्धेतुधर्मिकसाध्यव्यापकीभूताभाव-प्रतियोगित्वनिश्चयत्वेनैव प्रतिबन्धकता, प्रतिबन्धतावच्छेदकं तु धर्मि-विशेषविषयकत्वाघटितं तत्तद्धेतुमत्ताज्ञानजन्यानुमितित्वमतः शब्दत्वं नित्यत्वव्यापकीभूताभावप्रतियोगीतिनिश्चयसत्त्वे समानधर्मितावच्छेदक-

❀ विवृतिः ❀

जगदीशमतं दूषयितुमुपन्यस्यति **यत्त्विति**। हेतुमत्ताज्ञान मनिवेश्य = सधर्मितावच्छेदकक हेतुमत्तानिश्चय वैशिष्ट्यमनिवेश्य। **तत्तद्धेत्विति**। शब्दत्वादिधर्मिक नित्यत्वव्यापकीभूताभाव प्रतियोगित्वनिश्चयत्वे नैवेत्यर्थः। आकांक्षानिवृत्त्यर्थमाह **प्रतिवध्यतावच्छेदकन्त्विति**। **धर्मिविशेषेति**। तत्त-द्धर्मि विषयत्वादेः प्रतिबध्यतावच्छेदकत्वमनन्तर्भाव्यैवेति तात्पर्य्यम्॥ **तत्तद्धे-त्विति**। तत्तच्छब्दत्वादि प्रकारक निश्चयजन्यानुमितित्वमित्यर्थः। **अत इति**।

❀ मनोरमा ❀

निश्चयीयनिरवच्छिन्नधर्मितावच्छेदकताकानुमित्यप्रसिद्ध्या सर्वत्राऽसम्भवः स्यात् अतः प्रथमधर्मि-तावच्छेदकतायां निरवच्छिन्नत्वप्रवेशः।

यद्यपि जलवद्द्रव्यं जलवान् ह्रदश्चेत्याकारकसमूहालम्बनहेतुमत्तानिश्चयकालीनवह्निव्यापकीभू-ताभावप्रतियोगिजलमित्याकारकनिश्चयस्यापि यथोक्तनिश्चयसमान्यान्तर्गततया तत्समानकालीन-हेतुमत्तानिश्चयधर्मितावच्छेदकीभूतद्रव्यत्वाद्यवच्छिन्नविशेष्यताकानुमितिसाधारणैकप्रतिबध्यत्वाऽस-म्भवात् तादृशानुमितित्वव्यापकप्रतिबध्यत्वाऽप्रसिद्ध्याऽसाधारण्येऽव्याप्तिः।

न च मुख्यविशेष्यताद्वयशून्यत्वेन हेतुमत्तानिश्चयस्य विवक्षणीयत्वान्नाव्याप्तिरिति वाच्यम्। यत्र प्रथममपेक्षाबुद्ध्यात्मको जलवद्द्रव्यमितिहेतुमत्तानिश्चयस्ततो जलवान् ह्रदइत्या कारकहेतुमत्ता-निश्चयानन्तरम् ततो वह्निव्यापकीभूताभाव प्रतियोगिजल मित्याकारकासाधारण्यज्ञानं तत्राऽसाधा-रण्येऽव्याप्तेस्तन्निवेशेन वारयितुमशक्यत्वात्।

तथापि दोषविषयकनिश्चयकालीननिश्चयीयहेतुप्रकारतानिरूपितविशेष्यतावच्छेदकयत्किञ्चि-द्धर्मावच्छिन्नविशेष्यताकानुमितित्वव्यापकतायाः प्रतिबध्यतायां निवेशाददोषः, हेतुमत्तानिश्चयीय-

**द्भावनाच्च लक्षणानुरोधेन प्रत्येकमेव हेत्वाभासत्वम् ॥**

❀ दीधितिः ❀

**हेत्वाभासतावच्छेदकत्वं निरस्यति ( हेत्वाभास ) लक्षणानुरोधेनेति।**

❀ गादाधरी ❀

कशब्दत्ववत्तानिश्चयस्य चासत्त्वे नित्यत्वाद्यनुमितेर्नानुपपत्तिः तदानीं हेत्वन्तरज्ञा नेनैवानुमितिजननात्तस्याश्च शब्दत्वधर्मिकताद्दशाभावप्रतियोगित्वनिश्चयाप्रतिबध्यत्वात्, एवं च पक्षवृत्तित्वाविशेषितं निरुक्तरूपमेवाधारण्यम्, लक्षणे अनुमितिपदस्य प्रकृतहेतुकानुमितिपरतया प्रकृतहेतुकानुमितिसामान्यविरोधित्वस्यान तिरिक्तवृत्तित्वरूपावच्छेदकत्वघटितस्यापि तत्र सत्त्वेन तदसंग्रहाप्रसक्तेरिति समाधानम्—तन्न मनोज्ञं विज्ञा-

❀ विवृतिः ❀

यतप्ताद्दशानुमितित्वं प्रतिवध्यतावच्छेदकं अत इत्यर्थः। **समानेति**। अनुमितीयधर्मितावच्छेदकावच्छिन्न विशेष्यक शब्दत्वादि प्रकारक निश्चयस्येत्यर्थः। तदानीम्=ताद्दशशब्दत्वनिश्चयाऽसहकृत शब्दत्वधर्मिक नित्यत्वव्यापकीभूताभाव प्रतियोगित्वप्रकारक निश्चय दशायाम्। हेत्वन्तरज्ञानेनैव=शब्दत्वादिभिन्न हेत्वादि प्रकारकनिश्चयेनैव। तस्याश्च=हेत्वन्तरजन्यानुमितेश्च। **शब्दत्वादिकमिति**। शब्दत्वं नित्यत्वव्यापकीभूताभव प्रतियोगीत्याकारकनिश्चयाऽप्रतिबध्यत्वादित्यर्थः ॥

**उपसंहरत्त्येवश्चेति**। **निरुक्तेति**। हेतुनिष्ठसाध्यव्यापकीभूताभाव प्रतियोगित्व मेवासाधारण्यमित्यर्थः। **प्रकृतेति**। प्रकृतहेतु प्रकारकनिश्चयजन्य प्रकृतसाध्यविधेयकामुमितिपरतयेत्यर्थः। **प्रकृतहेतुकेति**। प्रकृतहेतु प्रकारकनिश्चयजन्यताद्दशानुमिति सामान्य विरोधित्वमित्यर्थः। तत्र=हेतुनिष्ठसाध्यव्यापकी भूताभावप्रतियोगत्व रूपासाधारण्ये। तदसंग्रहाऽप्रस्क्तेः=पक्ष वृत्तित्वाऽविशेशित ताद्दशाऽसाधारण्याऽसंग्रहाऽप्रसक्तेः ॥

**इति समाधानमिति**। तथाच यद्रूपावच्छिन्न विषयकनिश्चयत्वं प्रकृतहेतु-

❀ मनोरमा ❀

यत्किञ्चिद्धर्मावच्छिन्नविशेष्यताकानुभितित्वव्यापकत्वस्यासाधारण्यनिश्चयप्रतिबध्यतायां सत्त्वादितिकेचित् ॥

वस्तुतस्ताद्दशहेतुमत्तानिश्चयविशिष्टानुमितित्वव्यापकत्वमेव प्रतिवध्यतायां निवेश्यम् इतिनकोऽपिदोषः, हेतुमत्तानिश्चयवैशिष्टयमनुमितौ किञ्चिदवच्छिन्नत्व निरवच्छिन्नत्वोभयाभाववत् स्वीयहेतुप्रकारतानिरूपितविशेष्यतावच्छेदकतावद्धर्मवत्त्वसम्बन्धेन्। धर्मवत्त्वं च, स्वावच्छिन्नविशेष्य-

❀ गादाधरी ❀

नाम्। शब्दत्वादिधर्मिकताद्दशप्रतियोगित्वनिश्चयस्य शब्दत्वादिहेतुमत्ता-धीजन्यानुमितित्वावच्छिन्नं प्रति प्रतिबन्धकत्वे ताद्दशनिश्चयसहकृतश-

❀ विवृतिः ❀

प्रकारक निश्चयजन्य प्रकृतसाध्यविधेयताकानुमितित्वव्यापक प्रतिबध्यता निरूपित प्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नवत्त्वम् सव्यभिचारत्वम्, प्रकृत हेतौ साध्याभाववद्वृत्तित्वज्ञानकाले प्रकृतहेतुकसाध्यानुमितेः कुत्राप्यनुदयात् साधारण-संग्रहः, नित्यत्वव्यापकीभूताभाव प्रतियोगि शब्दत्वमित्याकारक निश्चयकालेऽपि शब्दत्वहेतुकानुमितेरजननात् असाधारणसंग्रहः निरुक्तानुमितौ निरुक्ताऽसाधारण्य-निश्चयस्य मणिमन्त्रादिन्यायेनैव प्रतिबन्धकत्वमितिभावः ॥

निरुक्तं मतं **दूषयति तन्नेति**। शब्दत्वं नित्यत्वव्यापकीभूताभाव प्रतियोगी-त्याकारकनिश्चयस्य शब्दत्व प्रकारक निश्चयजन्यानुमितित्वावच्छिन्नं प्रत्येव प्रति-बन्धकत्वाभ्युपगमे यदा शब्दत्ववानयमित्याकारक निश्चयो नित्यत्वव्यापकीभूता-भावप्रतियोगि शब्दत्व मित्याकारकश्च निश्चयोवर्त्तते तदा इदं त्वावच्छिन्ने नित्यत्व-शाब्दबोधाद्यापत्तिः, शाब्दादौ ताद्दशनिश्चयस्याऽप्रति बन्धकत्वात्।

शाब्दबोधादिकंप्रति ताद्दशनिश्चयविशिष्ट निश्चयत्वेन तदभावव्याप्यवत्ताज्ञान-त्वेनवा ताद्दशनिश्चयद्वयस्य पृथक् प्रतिबन्धकतायाः कल्पनेऽपिननिस्तारः, ताद्दशनि-श्चयद्वयकाले शब्दत्वभिन्न श्रावणत्वादिहेतुकेदत्वावच्छिन्नविशेष्यक नित्यत्वानुमि-त्यापत्तेः, इत्याह **शब्दत्वादीति। ताद्दशेति**। शब्दत्वधर्मिकसाध्यव्यापकीभूता-भावप्रतियोगित्व निश्चयसहकृत शब्दत्वादिरूपहेतुप्रकारकेदंत्वावच्छिन्न विशेष्यक-

❀ मनोरमा ❀

ताकत्वसम्बन्धेन,। तेन यादृशस्थले असाधारण्यज्ञानकालीनहेतुमत्तानिश्चयः किञ्चिदवच्छिन्नाव-च्छेदकताकविशेष्यताकएव भवति तादृशस्थलेऽसाधारण्येऽव्याप्तिः;निरवच्छिन्नावच्छेदकताकहेतुमत्ता निश्चयाऽप्रसिद्धेः यत्किञ्चित्त्वनिवेशादननुगमश्चेति पूर्वपक्षो निरस्त इति ध्येयम् ॥

अत्र च स्वसमानकालीनहेतुमत्तानिश्चयः स्वभिन्नत्वेन विशेषणीयः अन्यथा गुणोवाच्यत्ववि शिष्टगुणवान् वाच्यत्वात् इत्यत्र वाच्यत्वविशिष्टगुणाभाववद्गुणात्मकबाधेऽतिव्याप्तिः स्यात् निरुक्त-बाधनिश्चयस्य गुणविशेष्यकवाच्यत्वरूपहेतुमत्तानिश्चयात्मकतया तादृशहेतुमत्तानिश्चयधर्मितावच्छेद-कगुणत्वावच्छिन्नविशेष्यकसाध्यानुमितिसामान्यं प्रत्येव निरुक्तबाधनिश्चयस्य प्रतिबन्धकत्वात्।

स्वभिन्नत्वनिवेशेतु न तत्रातिव्याप्तिः, निरुक्तबाधनिश्चयभिन्नस्य घटोवाच्यत्ववान् इत्याकारहेतुम-त्तानिश्चयस्य धर्मितावच्छेदकघटत्वाद्यवच्छिन्नविशेष्यकसाध्यानुमितौ यथोक्तबाधनिश्चयस्याप्रतिबन्ध-त्वात्,॥

एवञ्च सधर्मितावच्छेदकहेतुमत्तानिश्चयेऽपि स्वभिन्नत्वं निवेश्यमन्यथा दोषविषयकसमूहालम्बन-

❀ गादाधरी ❀

ब्दत्वादिनिश्चयदशायां तत्समानधर्मितावच्छेदकताकशाब्दबोधाद्यापत्ते-रन्यहेतुकतादृशानुमित्यापत्तेश्च दुर्वारत्वात्। न चान्यहेतुकापि समान-धर्मितावच्छेदककतद्वत्ताज्ञानाधीनानुमितिः तद्वत्ताज्ञानजन्यैवेति न तदा-पत्तिसम्भव इति वाच्यम्। व्याप्यत्वानवच्छिन्नहेतुप्रकारताशालिज्ञान-

❀ विवृतिः ❀

निश्चयदशायामित्यर्थः। **तत्समानेति**। शब्दत्वादिहेतुमत्तानिश्चयधर्मितावच्छेद-कीभूतधर्मावच्छिन्न विशेष्यकशाब्दाद्यापत्तेरित्यर्थः। आदिना ज्ञानलक्षणासन्निकर्षजन्य नित्यत्वप्रत्यक्षसंग्रहः। **अन्यहेतुकेति**। शब्दत्वभिन्नहेतुक हेतुमत्तानिश्चयधर्मिता-वच्छेदकक नित्यत्वानुमित्यापत्तेश्चेत्यर्थः॥

इदंत्वावच्छिन्नविशेष्यकशब्दत्वप्रकारक निश्चयजन्यानुमितेः अयं नित्यइत्या-कारकतया तादृशानुमितिंप्रति यदिशब्दत्वधर्मिक नित्यत्वव्यापकीभूताभावप्रतियो-गित्वनिश्चयस्यप्रतिबन्धकत्वं तदा निरूक्तनिश्चयद्वयकाले शब्दत्वान्यलिंगक तादृ-शानुमित्यापत्तिरेव नसम्भवति, शब्दत्वादिलिंगकानुमितित्वेन शब्दत्वान्यलिंगकतादृ-शानुमितेरपि धर्तुंशक्यतया तत्रापि तादृशप्रतियोगित्व निश्चयस्य प्रतिबन्धकत्व सम्भवात् इत्याशंकते **नचेति**वाच्यमिति परेणान्वयः॥

अन्यहेतुकाऽपि=शब्दत्वान्यहेतुकाऽपि। **समानेति**। अन्यहेतुकानुमितीय धर्मितावच्छेदककशब्दत्वादिमत्ताज्ञान कालीनानुमितिरित्यर्थः। **अन्यहेतुकेति** पूर्वेणान्वयः। तद्वत्ताज्ञानजन्यैव = शब्दत्वादिमत्ताज्ञानजन्यैव। नतदापत्तिसम्भवः= शब्दत्वान्यहेतुकानुमित्यापत्तिसम्भवः। अन्यहेतुकानुमितेरपि शब्दत्वादिहेतुकानु-मितित्वेन यथोक्ता साधारण्य विषयक निश्चयप्रतिवध्यतावच्छेदकधर्माक्रान्तत्वादिति भावः॥

साध्यव्याप्यत्वाऽविशेषित शब्दत्ववानयामित्याकारकज्ञानोत्तरकालीन शब्द-त्वान्यलिंगकानुमितौ शब्दत्वादिलिंगकत्वंतुनास्त्येव, केवलहेतुप्रकारकनिश्चयस्या-नुमित्यजनकत्वदादित्याशयेन समाधत्ते **व्याप्यत्वेति**। प्रकृतसाध्यव्याप्यत्वाऽविशे-षित हेतुप्रकारकनिश्चयस्येत्यर्थः॥

❀ मनोरमा ❀

हेतुमत्तानिश्चयकालीनदोषविषयकनिश्चयस्यापि तादृशनिश्चयसामान्यान्तर्गततया तत्समानकालीन-स्वभिन्नहेतुमत्तानिश्चयाऽप्रसिद्ध्याऽसम्भवःस्यात् इति प्राञ्चः॥

तच्चिन्त्यम् यादृशस्थले यादृशदोषविषयकंज्ञानं नियमतः सधर्मितावच्छेदककहेतुप्रकारकात्मकं समूहालम्बनमेव भवति तादृशस्थले तादृशदोषेऽव्याप्त्यापत्तेः स्वभिन्नहेतुमत्तानिश्चयाऽप्रसिद्धेः।

❀ गादाधरी ❀

स्यानुमितिजनकत्वे मानाभावात् अन्यलिङ्गकपरामर्शघटितसामग्र्यां तत्तद्धर्मिकताहशनिश्चयाभावस्यानन्तर्भावेन तद्बलादापत्तेः कथामात्रेण वारयितुमशक्यत्वाच्च। एतेन समानधर्मितावच्छेदककतद्वृत्ताज्ञानानन्तरोत्प-

❀ विवृतिः ❀

**मानाभावादिति**। तथा च शब्दत्वं नित्यत्वव्यापकीभूताभाव प्रतियोगीत्याकारकनिश्चयसहित शब्दत्ववानयमित्याकारक निश्चयदशायाम् शब्दत्वान्यलिंगिकायाः अयं नित्यइत्याकारककानुमिते रापत्तिवारणम् भवन्मते दुःशक्यमेवेत्याशयः॥

ननु लिंगदर्शनस्यानुमितिहेतुत्वात् तत्त्वेनव्याप्यत्वाऽविशेषित हेतुप्रकारकज्ञाज्ञानस्यापि अनुमितिजनकत्वं सुघटमेव, तथा च शब्दत्ववानयमित्याकारक ज्ञानकालीन शब्दत्वान्यलिंगकेदत्वावच्छिन्न विशेष्यकनित्यत्वानुमितेरपि शब्दत्वादि लिंगकत्वं सम्भवत्येवेत्यत **आहान्यलिंगकेति**। वस्तुतोऽन्यलिंगकेत्याद्यभिधानप्रयोजनं तु एतेनेत्यादिना स्वयमेवाग्रे दर्शयिष्यतीत्यवधेयम्।

नित्यत्वव्याप्ति सहितशब्दत्वान्यलिंगकपरामर्शघटित सामग्रया इत्यर्थः। **तत्तद्धर्मिकेति**। शब्दत्वादिधर्मिक नित्यत्वव्यापकीभूताभाव प्रतियोगित्व निश्चयाभावस्येत्यर्थः।

**अनन्तर्भावेणेति**। शब्दत्वान्यलिंगकपरामर्शघटित सामग्रयां शब्दत्वान्यलिंगधर्मिक नित्यत्वादिव्यापकीभूताभाव प्रतियोगित्वनिश्चयाभावस्यैवान्तर्भावादित्याशयः।

तद्बलात्=अन्यलिंगकपरामर्शघटित सामग्रीवलात्। आपत्तेः=अन्यलिंगकानुमित्यापत्तेः। **वारयितुमशक्यत्वाच्चेति**। तादृश निश्चयद्वयकाले नित्यत्वव्याप्तिसहित शब्दत्वान्यलिंगकपरामर्शघटित सामग्रीसत्वे शब्दत्वान्यलिंगक तादृशानुमित्यापत्तिवारणं भवन्मते नसम्भवतीतिहृदयम्॥

**एतेनेति**। ननिस्तार इति परेणान्वयः। अन्यलिंगकपरामर्शघटित सामग्रीमादाय द्वितीयरीत्या आपत्तिदानेनेत्यर्थः। **समानेति**। प्रकृतानुमितीयधर्मितावच्छेदकावच्छिन्न विशेष्यकप्रकृतहेतुप्रकारक निश्चयानन्तरोत्पत्तिकत्व निवेशेऽपीत्यर्थः।

❀ मनोरमा ❀

निरुक्तबाधादावतिव्याप्तिवारणंतु सर्वत्रहेतुमत्तानिश्चयपदेन हेतुप्रकारतानिरूपितमुख्यविशेष्यताशालिनिश्चयविवक्षणेनैव संभवति। नचैवंवह्निमान् आधेयत्वादित्यत्र वह्न्यभाववद्वृत्तित्वविशिष्टाधेयत्वरूपव्यभिचारनिश्चयस्य मुख्यविशेष्यांशे एव हेतुमत्तानिश्चयात्मकतया तादृशनिश्च-

❀ गादाधरी ❀

तिकत्वनिवेशेपि न निस्तार इत्यलमत्यावेशन।

एतन्नये पक्षवृत्तित्वाविशेषितहेतुनिष्ठसाध्याभावीयान्वयव्याप्तेरप्य-

❀ विवृतिः ❀

**ननिस्तार इति**। शब्दत्वादिप्रकारकेदंत्वाद्यवच्छिन्नविशेष्यकनिश्चयानन्तरोत्पत्तिकानुमितित्वावच्छिन्नं प्रतिशब्दत्वादिधर्मिक नित्यत्वव्यापकीभूताभावप्रतियोगित्वादिश्चयत्वेन प्रतिबन्धकत्वाऽभ्युपगमे न तादृशनिश्चयसहकृतेदंत्वाद्यवच्छिन्न विशेष्यक शब्दत्वादिनिश्चयकाले शब्दत्वान्यलिंगक तथाविधानुमित्यापत्तिः, निरुक्तानुमितेः शब्दत्ववानयमित्याकारक निश्चयानन्तरोत्पत्तिकत्वेन तादृशप्रतियोगित्वनिश्चयप्रतिबध्यत्वादितिव्याप्यत्वाऽविशेषितहेतुप्रकारकनिश्चयस्यानुमित्यहेतुत्वेऽपिनास्याकं कोऽपिदोष इतियद्युच्यते तथापि अन्यलिंगकपरामर्शादिघटित सामग्रीवलात् अन्यलिंगकानुमित्यापत्तेरनुद्धारान्ननिस्तारइत्याशयः॥

**इदमत्रावधेयम्**। लौकिकसन्निकर्षाद्यजन्य तत्प्रकारकबुद्धिसामान्यं प्रत्येव तदभावव्याप्यवत्तानिश्चयत्वेन प्रतिबन्धकतायाः सर्वसम्मततया नित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वमित्याकारकनिश्चय सहकृतेदंत्वावच्छिन्न विशेष्यकशब्दत्वादिमत्तानिश्चयस्यापि नित्यत्वाभाव व्यतिरेक व्याप्यवत्तानिश्चयमुद्रया अयं नित्यइत्याकारकविशिष्टबुद्धिसामान्यं प्रत्येवप्रतिबन्धकताया आवश्यकतया जगदीशमते तादृशानुमित्यापत्तिसम्भवस्तु सुधीभिर्विवेचनीयः।

किञ्च यादृशयादृशधर्मावच्छिन्न विशेष्यतानिरूपित यादृशधर्मविशिष्ट प्रकृतहेतुप्रकारक निश्चयत्वं तादृश तादृशधर्मावच्छिन्न विशेष्यतानिरूपित प्रकृतसाध्यविधेयक प्रकृतिसाध्यव्याप्यहेतुप्रकारकानुमितित्व व्यापकप्रतिबध्यतानिरूपित प्रतिबन्धकतानतिरिक्तवृत्ति तादृशधर्मवान् सभ्यविचारः इत्युक्तौ जगदीशमतं ब्रह्मणाऽपि दूषयितुमशक्यमित्यपि विभावनीयमिति॥

ननु अयंशब्दत्ववान् इत्याकारकहेतुमत्ता निश्चयसहकृत नित्यत्ववदवृत्तिशब्दत्वमित्याकारक निश्चयदशायामपि अयं नित्यइत्याद्याकरकानुमितेरनुत्पादा न्नित्यत्ववदवृत्तिशब्दत्वेऽतिव्याप्तिरित्यतआहे **तन्नये इति**। निरूक्तलक्षण वादिनां मतेइत्यर्थः।

**पक्षवृत्तित्वेति**। केवलशब्दत्वादि हेतुनिष्ठनित्यत्ववद वृत्तित्वरूपनित्यत्वाभा-

❀ मनोरमा ❀

यमादायैव व्यभिचारेलक्षणसमन्वयसम्भवे प्रथमकालीनान्तानुपादानप्रयुक्तासम्भवदानमसंगतमिवाच्यम् हेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नहेतुप्रकारतानिरूपितमुख्यविशेष्यताशालिनिश्चयस्यैव तादृशहेतुमत्तानिश्चयपदेन विवक्षितत्वात् वह्न्यभाववद्वृत्तित्वविशिष्टाधेयत्वनिश्चयस्या तथात्वात्।

❀ गादाधरी ❀

साधारण्यरूपस्वमेवेति न तत्रातिव्याप्तिरित्यवधेयम्। तथा—निरुक्तानुमितिसामान्यविरोधि, धर्मिविशेषितत्वात्—धर्मिविशेषघटितत्वात्। नतादृशौ न तादृशानुमितिसामान्यविरोधिनौ।

नन्वेवमपि सर्वमाकाशवत्प्रमेयत्वादित्यादिस्थलीयबाधप्रतिरोधयोरतिव्याप्तिः सर्वमाकाशाभाववदित्यादिनिश्चये क्वचिदप्याकाशाद्यनुमितेरनुदयादनुभवानुरोधेनासमानधर्मितावच्छेदककज्ञानेपितत्प्रतिबन्धकत्वक-

❀ विवृतिः ❀

वीयान्वयव्याप्तेरपीत्यर्थः। **नतत्रातिव्याप्तिरिति**। तथा च हेतुनिष्ठ साध्यवदवृवृत्तित्वस्याप्येतन्मते लक्ष्यत्वान्नतत्रातिव्याप्तिशकेतिभावः॥

**निरुक्तेति**। शब्दत्वादिनिश्चयधर्मितावच्छेदकावच्छिन्ननित्यत्वाद्यनुमिति प्रतिबन्धकतावच्छेदक विषयिता निरूपकतावच्छेदकधर्मवानित्यर्थः।

ह्रदोवह्निमान्धूमादित्यादौघटादिधर्मिकधूमादिमत्तानिश्चयकालीन वह्न्याभाववत् ह्रदरूपबाधनिश्चयकालीन तादृश हेतुमत्ता निश्चयधर्मितावच्छेदकघटत्वाद्यवच्छिन्नविशेष्यकवह्न्याद्यनुमितेरपि तादृशानुमितिसामान्यान्तर्गततया तत्र बाधसत्प्रतिपक्षनिश्चयस्याऽप्रतिबन्धकत्वान्नबाधप्रतिरोधावतिव्याप्तिरित्याशयेनाह **धर्मिविशेषेतेति**। पक्षरूपधर्मिविशेषघटितत्वादित्यर्थः। **न तादृशाविति**। न तथाविधहेतुमत्तानिश्चय धर्मितावच्छेदकावच्छिन्नविशेष्यकानुमिति सामान्यविरोधिनावित्यर्थः॥

सधर्मितावच्छेदककेत्यादिरीत्या लक्षणार्थनिर्वचनेऽपि सर्वमाकाशवन्मेयत्वादित्यत्राकाशाभाववत् सर्वरूपबाधेऽति व्याप्तिः, निरूक्तबाधनिश्चयस्यानुभवबलात् घटादिधर्मिकाकाशानुमितिंप्रत्यपिप्रतिबन्धकतया तादृशानिश्चयसमानकालीन हेतुमत्तानिश्चयसमानधर्मितावच्छेदककाकाशानुमितिसामान्यं प्रत्येव प्रतिबन्धकत्वात्, यादृशविशिष्टविषयक निश्चयपदेनाकाशाभाववत् सर्वरूपबाधनिश्चयस्य घर्तुंशक्यत्वात् इत्याशंक्य सर्वमाकाशाभाववदितिदीधितिमवतारयति **नन्वेव मपीत्यादि**।

❀ मनोरमा ❀

न च तथापि ह्रदोवह्निमान् वह्न्यभावादित्यत्र वह्न्यभाववद्ध्रदरूपबाधनिश्चयस्य ह्रदमुख्यविशेष्यकहेतुमत्तानिश्चयात्मकतया निरुक्तबाधेऽतिव्याप्तिवारणायैव स्वभिन्नत्वं हेतुमत्तानिश्चये निवेश्यमितिवाच्यम् निरुक्तबाधादिवारणाय पक्षतावच्छेदकमात्रावच्छिन्नविशेष्यकसाध्यानुमित्यविरोधित्वस्य यादृशविशिष्टविषयकनिश्चये विवक्षितत्वात्।

वक्ष्यमाणसाध्यसामानाधिकरण्यग्रहाऽविरोधित्वदलेनैव वा निरुक्तबाधादिवारणसम्भवाच्च।

एतेन प्रथमकालीनान्तानुपादानप्रयुक्तासम्भवदानम संगतम्, ह्रदत्वावच्छेदेन जलवद्ध्रदकालीन ह्रदोवह्निमान् जलादित्यत्र तादृशवह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्यनिश्चयस्य हेतुमत्ता-

❀ गादाधरी ❀

ल्पनात्तयोरनुमितिसामान्यविरोधित्वादिति अत आह सर्वमिति । इत्यादिकम्-इत्याकारकज्ञानविषयबाधादिकम्। अग्रिमविरोधिपदद्वयस्य प्रतिबन्धकपरतया इत्यादिकमित्यस्य इत्याकारकज्ञानमित्येवर्वाऽर्थः। सामानाधिकरण्यग्रहविरोधीति । साध्यसामानाधिकरण्यस्य साध्यवत्त्वघटितत्वादिति शेषः। तथा चाविरोध्यन्तेनैव तद्वारणमिति भावः। निर्द्धर्मितावच्छेदककस्य ज्ञानस्य बाधाद्यप्रतिबध्यत्वे साध्यसमानाधिकरण्यज्ञानस्य

❀ विवृतिः ❀

एवमपि=यत्यद्धर्मिवृत्तित्वमित्यादिना लक्षणार्थस्य निर्वचनेऽपि । असमानेति ।

सर्वत्त्वातिरिक्त घटत्वादिधर्मितावच्छेदककज्ञानेऽपीत्यर्थः। तत्प्रतिबन्धकत्वकल्पनात्=बाधादिनिश्चयस्यप्रतिबन्धकत्वकल्पनात् । तयोः=बाधप्रतिरोधयोः ।

इत्याकारकेति । सर्वमाकाशाभाववदित्याकारकनिश्चयविषयीभूतबाधादिकमित्यर्थः। आदिपदात् सर्वमाकाशाभावव्याप्यवदित्याकारकज्ञानविषयप्रतिरोधपरिग्रहः।

नन्वित्यादिकमित्यस्यइत्याकारकज्ञानविषयबाधादिकमित्यर्थकरणेऽसंगतिः, साध्यवत्त्वग्रहविरोधित्वेन साध्यसामानाधिकरण्य ग्रहविरोधीत्यादिग्रन्थघटकविरोधिपदद्वयस्य प्रतिबन्धकार्थकतयाबाधादिना सह तादृशविरोधिपदार्थस्य अन्वयानुपपत्तेः बाधादिज्ञानस्यैव प्रतिबन्धकत्वात् इत्यतआहाग्रिमेति । इत्याकारकेति । इत्याकारकबाधादिज्ञानमित्यर्थः। तथा च बाधादिज्ञानस्यतादृश विरोधिपदार्थेनसहान्वयसम्भवान्नकोऽपिदोषइत्याशयः ॥

साध्यसामानाधिकरण्यंहि साध्यवद्वृत्तित्वमित्याह साध्यवत्त्वेति । भावमाह-ताथचेति । अविरुद्ध्यन्तेनैव=साध्यसामानाधिकरण्य ग्रहाऽविरोधित्वरलेनैव । तद्वाररणम् = आकाशाभाववत् सर्वादिरूपबाधादिवारणम् ॥

सर्वमाकाशाभाववदित्याकारकबाधनिश्चयस्य घटत्वादिकिञ्चिद्धर्मावच्छिन्नानुमिति प्रतिबन्धकत्वस्वीकारेऽपिसाध्यवद्वृत्तित्वरूपसाध्यसामानाधिकरण्यग्रहे तन्निश्चयस्य प्रतिबन्धकत्वमेवनसम्भवति साध्यवद्वृत्तित्वग्रहस्य साध्यप्रकारकत्वेऽपि तदीयसाध्यप्रकारतायाःनिरवच्छिन्नविशेश्यताकतयाबाधनिश्चयाऽप्रतिबध्यत्वात्। तथाचोक्त-

❀ मनोरमा ❀

निश्चयस्वरूपतया निरुक्ताऽसाधारण्ये एव लक्षणसमन्वयसम्भवादिति केषांचित्पूर्वपक्षोऽपि निरस्तः, तादृशमुख्यविशेष्यकहेतुमत्तानिश्चयपदेन निरुक्तासाधारण्यनिश्चयस्योपादातुमशक्यत्वादिति सुधीभिर्विभावनोयम् ॥

अत्र हेतुमत्तानिश्चयो धर्मितावच्छेदकसमानाधिकरण्येनैव वक्तव्यः तादृशानुमितिस्तु हेतुमत्ता

### ❀ गादाधरी ❀

**साध्यांशे निर्द्धर्मितावच्छेदककतया तदविरोधित्वमुक्तबाधादेरक्षतमेवेत्या-शयेनाह अनुमितीति। व्यभिचारस्यापि प्रकृतसाध्यकप्रकृतहेतुकानुमिति-विरोधित्वात् सामान्येति। तथा च तस्यान्यहेतुकानुमित्यविरोधित्वान्न तदसंग्रहः। उक्तबाधदेश्च सर्वहेतुकानुमितिविरोधित्वात्तद्वारणमितिभावः।**

### ❀ विवृतिः ❀

बाधस्यसाध्यसामानाधिकरण्यग्रहाऽविरोधितायाः निर्विवादतया तत्रातिव्याप्ति दुर्वा-रैवेत्याशंक्य प्रकारान्तरेण तादृश बाधादिवारणप्रयोजनकं साध्यानुमितिसामान्येत्यदि दीधितिग्रन्थमवतारयति **निर्धर्मितावच्छेदककस्येत्यादि।** **अनुमितीति।** तथा च प्रकृतसाध्यविधेयताकानुमितित्वव्यापकप्रतिवध्यता निरूपित प्रतिबन्धकताशून्यत्वं निरुक्तलक्षणघटकयादृशविशिष्टविषयकनिश्चयसामान्ये विवक्षणीयमिति भावः।

साध्यानुमितिसामान्येत्यत्र सामान्यपदप्रयोजनमाह**व्यभिचारस्यापीति।** **प्रकृतेति।** प्रकृतहेतुकप्रकृतसाध्यविधेयताकयत्किञ्चिदनुमितिविरोधित्वादित्यर्थः।

सामान्यपदोपादानेतुनवव्यभिचारेऽव्याप्ति रित्याह **तथाचेति।** तस्य = व्य-भिचारस्य। **अन्येति।** प्रकृतहेतुभिन्नलिंगकानुमित्यविरोधित्वादित्यर्थः। तदसंग्रहः= व्यभिचाराऽसंग्रहः। व्यभिचारनिश्चयस्य साध्यानुमितिसामान्यान्तर्गतायां प्रकृतहेतु-भिन्नलिंगकानुमितावप्रतिबन्धकतया साध्यानुमितिसामान्याऽविरोधित्वंव्यभिचारस्य सम्भवत्येवेतिहृदयम्॥

उक्तबाधादेश्च = आकाशाभाववत् सर्वरूपबाधादेश्च। आदिना आकाशाभाव-व्याप्यवत् सर्वरूप सत्प्रतिपक्षपरिग्रहः। **सर्वेति।** प्रकृताऽप्रकृत हेतुकानुमित्यवि-रोधित्वादित्यर्थः। तद्वारणम् = तादृशबाधादिवारणम्।

सर्वमाकाशवत् प्रमेयत्वादित्यत्र आकाशाभाववत् सर्वरूपबाधनिश्चयस्य प्रमे-यत्वहेतुकाकाशानुमितौ तदन्यहेतुकाकाशानुमितौ च प्रतिबन्धकतया साध्यानुमिति सामान्याऽविरोधित्वस्योक्तबाधादौ विरहात् नतादृशबाधादावतिव्याप्तिरित्याशयः॥

ननु साध्यानुमितिसामान्याऽविरोधित्वं यदि सर्वहेतुकतत्त्वाविधानुमिति सामा-न्याऽविरोधित्वंतदानित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वरूपाऽसाधारण्येऽव्याप्तिः,

### ❀ मनोरमा ❀

नश्चयधर्मितावच्छेदकावच्छेदेन विवक्षणीया तेन ह्रदत्वसामानाधिकरण्येन, वह्निसाध्यकजलादिहेतुक-स्थले ह्रदत्वसामानाधिकरण्येन हेतुमत्तानिश्चयमादायाप्यसाधारण्येनाव्याप्तिः, ॥

अथ वह्न्यभाववान् जलवान् वह्न्यभावव्याप्यवान् वाजलवान् इत्याकारकहेतुमत्तानिश्चयकालीन-वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्यनिश्चयस्यापि तादृशाऽसाधारण्यनिश्चयसामान्यान्तर्ग-

❀ गादाधरी ❀

यद्यपि शब्दत्वादिनिष्टनिष्यत्वव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यज्ञानमन्यलिङ्गकानुमितावपि तत्समानधर्मिकशब्दत्वादिमत्ताज्ञानविशिष्टं सत्प्रतिबन्धकमिति प्रकृतसाध्यकानुमितिसामान्यविरोध्येवासाधारण्यम्, तथापि ज्ञानान्तरवैशिष्ट्याविशेषितज्ञानसामान्यप्रतिबन्धकत्वघटिताविरोधिताया एवात्र निवेशनोयतया तादृशविरोधिताशून्यत्वमसाधारण्यसाधारणमेव ।

❀ विवृतिः ❀

तादृशासाधारण्यनिश्चयस्य सर्वहेतुकनित्यत्वसाध्यकानुमितिमात्रंप्रत्येवानुमितीयधर्मितावच्छेदकावच्छिन्नविशेष्यताकशब्दत्ववत्तानिश्चयसहितस्य प्रतिबन्धकत्वात् इत्याशंकते **यद्यपीति । तत्समानेति ।** अनुमितीयधर्मितावच्छेदकावच्छिन्नविशेष्यकशब्दत्वादिमत्तानिश्चयविशिष्टमित्यर्थः ।

सामाधत्ते **तथापीति । ज्ञानान्तरेति ।** ज्ञानवैशिष्ट्यानवच्छिन्नंयत् प्रकृतसाध्यानुमिति सामान्यप्रतिबन्धकत्वं तद्घटितायाः तादृशप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवत्त्वरूपाया विरोधितायाइत्यर्थः । अत्र=अनुमितिसामान्याऽविरोधित्वे । **निवेशनीयतयेति !** तथा च ज्ञानवैशिष्ट्यानवच्छिन्नंयत्साध्यानुमिति सामान्यप्रतिबन्धकत्वं तदवच्छेदकविषयितानिरूपकतावच्छेदकधर्मशून्यत्वमेवलक्षणघटकयादृशविशिष्टविषयकनिश्चयसामान्यमित्यत्र यादृशविशिष्टेविवक्षणोयमितिभावः ॥

**तादृशेति ।** ज्ञानवैशिष्ट्यानवच्छिन्नतादृशानुमितिसामान्यप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मशून्यत्वमित्यर्थः ॥

**असाधारण्यसाधारणमेवेति ।** शब्दत्वादिमत्तानिश्चय सहितस्यैव नित्यत्वव्यापकीभूताभाव प्रतियोगिशब्दत्वरूपासाधारण्य निश्चयस्य साध्यानुमितिसामान्यप्रतिबन्धकतया ज्ञानवैशिष्ट्यानवच्छिन्न साध्यानुमितिसामान्यप्रतिबन्धकत्वस्यतादृशासाधारण्य निश्चयेविरहात् सर्वमाकाशवदित्यादिस्थलीय ज्ञानवैशिष्ट्यानवच्छिन्न-

❀ मनोरमा ❀

ततया तन्निश्चयसमानकालीनहेतुमत्तानिश्चयधर्मितावच्छेदकवह्न्यभावावच्छिन्नविशेष्यकवह्न्यनुमित्यप्रसिद्ध्याऽसम्भवापत्तेरितिचेन्न—प्रकृतसाध्यानुमितिधर्मितावच्छेदकतापन्नयत्किंचिद्धर्मावच्छिन्नहेतुमत्तानिश्चयकालीनत्वस्य यादृशविशिष्टविषयकनिश्चये विवक्षितत्वादितिध्येयम् ॥

ननु तथाप्युक्तलक्षणे वह्निमद्ध्रदकालीनवह्निमान् जलवद्ध्रदकालीनह्रदत्वादित्यत्रवह्निव्यापकीभूताभावप्रतियोगिजलेऽसाधारण्यानात्मकेऽतिव्याप्तिः, हेतुमत्तानिश्चयकालीनतादृशनिश्चयसामान्यस्यैव वह्निमद्ध्रदावगाहितादृशानुमितिसामान्यप्रतिबन्धकत्वात्--इतिचेन्न--स्वविशेष्यतावच्छेदकहेतु-

❀ गादाधरी ❀

इदं त्ववधेयम् । सर्वमाकाशाभाववदित्यादिज्ञानस्यासमानधर्मितावच्छेदककानुमितिविरोधित्वे मानाभावः ताहशज्ञानकाले इदमपि सर्वान्तर्गतमित्यादिज्ञानसत्त्व एव इदमाकाशवदित्याद्यनुमित्यनुदयात्तत्र च ताहशज्ञानस्यैव ग्राह्याभावावच्छेदकधर्मदर्शनविधया ताहशानुमित्यभावनि-

❀ विवृतिः ❀

सर्वहेतुकाकाशानुमितिप्रतिबन्धकतावच्छेदकविषयिता निरूपकतावच्छेदक बाधत्वशून्यत्वस्य निरुक्ताऽसाधारण्यसाधारणतया भवति ताहशाऽसाधारण्यसंग्रहइत्यभिप्रायः ॥

तदभावादिनिश्चयस्य स्वसमानधर्मितावच्छेदककतत्प्रकारकबुद्धावेव प्रतिबन्धकतया आकाशाभावादिमत्सर्वनिश्चयस्य घटत्वाद्यवच्छिन्नधर्मिकाकाशादिमत्ताबुद्धि प्रतिबन्धकत्वं निर्युक्तिकम् इति साध्यानुमितिसामान्याऽविरोधित्वविशेषणानुपादानेऽपि निरूक्तबाधादिवारणसम्भवे तदुपादानं निरर्थकमित्याहेदंत्व **वधेयमिति** । नातिव्याप्तिशंकेति परेणान्वयः । **असमानेति** । घटत्वादिधर्मितावच्छेदककाकाशानुमितिप्रतिपन्धकत्वे इत्यर्थः । **मानाभाव इति** । मणिमन्त्रादिन्यायेनप्रतिबन्धकत्वंकल्पयित्वा ताहशबाधादिवारकविशेषणोपादानंतु प्रक्षालनाद्धीतिन्यायेननादरणीयमेवेत्याशयः ॥

नन्वेवं सर्वमाकाशाभाववदित्याकारकनिश्चयदशायां इदमाकाशवदित्यनुमित्यनुत्पादस्य सर्वानुभवसिद्धस्याऽपलाप प्रसंगइत्यतआह**ताहशेति** । सर्वमाकाशाभाववदित्याकारकनिश्चयकाले इत्यर्थः । इत्यादिज्ञानसत्वएव = इत्याकारकनिश्चयसत्त्व एव । एवकारात् निरूक्तनिश्चयविरहकाले इदमाकाशवदित्याकारकज्ञानोत्पादस्त्विष्टएवेतिसूचितम् ।

**तत्रचेति** । निरूक्तज्ञानद्वयकाले चेत्यर्थः । ताहशज्ञानस्यैव = इदमपिसर्वान्तर्गतमित्याकारकनिश्चयस्यैव । एवकारात् प्राकारान्तरेणानुमित्यभावनिर्वाहकत्वव्यवच्छेदः ।

**ग्राह्येति** । आकाशाभावावच्छेदकधर्मनिश्चयत्वेनेत्यर्थः । **ताहशेति** । इदमाकाशवदित्यनुमित्यनुत्पादप्रयोजकत्वादित्यर्थः । तथा च सर्वान्तिर्गतत्ववत् आका-

❀ मनोरमा ❀

तावच्छेदकावच्छिन्नहेतुप्रकारतानिरूपितमुख्यविशेष्यताशालिताहशनिश्चयकालीनयाहशविशिष्टविषयकनिश्चयस्य विवक्षितत्वात् निरुक्तहेतुमत्तानिश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलनिश्चयस्यातथात्वात् । यथोक्तानुमितित्वव्यापकप्रतिबध्यतायां विशिष्टसाध्यग्रहत्वाऽव्यापकत्वविवक्षयैववा निरुक्तातिव्याप्तेर्वारणसम्भवाच्चेतिदिक् ॥

❀ गादाधरी ❀

**वोहकत्वात्तथाच तादृशबाधबुद्धेर्निरुक्तानुमितिसामान्यविरोधित्वाभावा- देव नातिव्याप्तिशंकेति ।**

**वस्तुतस्तु तद्धर्मितावच्छेदककबुद्धौ तत्सामानाधिकरण्यमात्रेण ग्राह्या- भावावगाहिबुद्धेरप्रतिबन्धकतया ग्राह्य भावांशे तद्धर्मितावच्छेदकव्याप-**

❀ विवृतिः ❀

शाभाववत् सर्वान्तर्गतत्ववच्चेदमित्याकारकज्ञान विशिष्टज्ञानस्यैव इदमाकाशवदि- त्यनुमितिप्रतिवन्धकतया इदंत्वावच्छिन्ने सर्वान्तर्गतत्वनिश्चयस्य ग्राह्याभावावच्छेद कधर्मदर्शनविषयैवतादृशानुमित्यनुत्पादप्रयोजकत्वमितिभावः ॥

उपसंहरति **तथाचेति** । तादृशवाधवुद्धेः=सर्वमाकाशाभाववदित्याकारक वाधनिश्चयस्य । **निरुक्तेति** । सधर्मितावच्छेदकक हेतुमत्तानिश्चय कालीन तादृश वाधादिनिश्चय कालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदकीभूत घटत्वाद्यच्छिन्नवि- शेष्ककाकाशानुमिति सामान्यप्रतिवन्धकत्वा भावादित्यर्थः ।

इदमपिसर्वान्तर्गतमित्याकारकनिश्चयकाले तादृशवाधनिश्चयस्य इदंत्वावच्छिन्न विशेष्यकानुनितिप्रतिवन्धकत्वेऽपि तादृशनिश्चयासमानकालीनस्य वाधनिश्चयस्य तथाविधानुमित्यप्रतिवन्धकत्वात् वाधनिश्चय सामान्यस्यापि न तथाविधानुमितिप्र- तिवन्धकत्वम्, नवा तथाविधानुमितिसामान्येऽपि वाधनिश्चयस्य प्रतिवन्धकत्वमिति हृदयम् ॥

ननुतर्हि साध्यानुमितिसामान्याऽविरोधित्वदलंव्यर्थमेवस्यात् , नस्यात् , इत्याह **वस्तुतस्त्विति** । **तद्धर्मितेति** । सर्वत्वादिधर्मितावच्छेदककाकाशादि प्रकारक बुद्धा वित्यर्थः । **तत्समानेति** । सर्वत्वादिसामानाधिकरण्यमात्रेणेत्यर्थः । सर्वत्वादि- सामानाधिकरण्यावगाहि सर्वत्वाद्यवच्छेद्यत्वावगाहि समूहालम्बनगुह्याभावादि प्रकारक निश्चयस्य ग्राह्यप्रकारक बुद्धौ प्रतिवन्धकत्वान्मात्र पदम् ।

ग्राह्याभावबुद्धेः=आकाशाद्यभावनिश्चयस्य । ग्राह्याभावांशे=आकाशाद्यभावांशे **तद्धर्मितेति** । सर्वत्वादिधर्मितावच्छेदकव्यापकत्वावगाहित्वमेवेत्यर्थः तन्त्रम् = प्रयोजकम् ।

❀ मनोरमा ❀

यथाश्रुतलक्षणानुगमस्तु--

धर्मविशिष्टधर्मवत्त्वं सव्यभिचारत्वमिति । वैशिष्ट्यं स्वतादात्म्य, स्वविशिष्टनिश्चयवत्प्रतिव- न्धकतावत्त्वोभयसम्बन्धेन, । स्ववैशिष्ट्यं निश्चये स्वावच्छिन्नविषयितावत्त्वसम्बन्धेन । तादृशनिश्चय- वत्त्वं प्रतिवन्धकतायाम् । स्वविशिष्टधर्मावच्छिन्नविशेष्यकानुमितित्वव्यापकप्रतिबध्यतानिरूपितत्व, स्व- निष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्ब-

❀ गादाधरी ❀

कतावगाहित्वमेव प्रतिबन्धकतायां तन्त्रम्, तथा च ग्राह्याभावे तत्तद्धर्मव्यापकतानिश्चयस्य तद्धर्मावच्छिन्नांशे ग्राह्याभावाप्रकारकस्यापि तत्तद्धर्मधर्मितावच्छेदकताकग्रहप्रतिबन्धकत्वम्, तत्तद्धर्मव्यापकता च तत्तद्धर्मसमानाधिकरणाभावाप्रतियोगित्वम्, तज्ज्ञानस्यप्रतिबन्धकत्वेवृत्तिमदत्यन्ताभावाप्रतियोगित्वज्ञानमपि तथा, सामान्यघटितविशेषाभावग्रहस्य-

❀ विवृतिः ❀

**तथाचेति।** धर्मितावच्छेदकव्यापकतावगाहित्वस्य ग्राह्याभाव निश्चयनिष्ठ प्रतिबन्धकतायां तन्त्रत्वेचेत्यर्थः। ग्राह्याभावे = आकाशाद्यभावे। **तद्धर्मेति।** सर्वत्वादिव्यापकतानिश्चयस्येत्यर्थः। तद्धर्मावच्छिन्नांशे=सर्वत्वाद्यवच्छिन्नांशे। ग्राह्याभावाऽप्रकारकस्यापि=आकाशाद्यभावाप्रकारकस्यापि। **तद्धर्मेति।** सर्वत्वादिधर्मितावच्छेदकताके सर्वमाकाशादिमदित्याकारकग्रहेप्र यिबन्धकत्वमित्यर्थः। तद्धर्मव्यापकताच = सर्वत्वादिव्यापकताच।

सर्वत्वावच्छेदेनाकाशाभावादि प्रकारकनिश्चयाऽसत्त्वेऽपि सर्वत्वसमानाधिकरणाभावाऽप्रतियोग्याकाशाभवइत्याकारकनिश्चयकाले सर्वत्वाद्यवच्छिन्ने आकाशादिप्रकारक बुद्धेरनुदयात् तादृशबुद्धिं प्रति आकाशाभाव धर्मिक सर्वत्वसमानाधिकरणाभावप्रतिगत्वरुप सर्वत्वव्यापकतानिश्चयत्वेनप्रतिबन्धकतायाः कल्पनीयतया वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वप्रकारक आकाशाभवादिविशेष्यकनिश्चयस्यापि तादृशबुद्धि प्रतिबन्धकत्वं सर्वानुभव सिद्धं सम्भवति, ह्रदादिधर्मिक महानसीय वह्नित्वादिरूपविशेषधर्मावच्छिन्नाभावादि निश्चयस्य तद्धर्मिक महानसीयवह्निप्रकारक बुद्धिप्रतिबन्धकत्वे ह्रदादिधर्मिकवह्निसामान्याभावनिश्चयस्यापि तद्धर्मिक महानसीयवह्निप्रकारक बुद्धिप्रतिबन्धकताया आनुभविकत्वेस्येव सर्वत्वाद्यधिकरणवृत्तितावदभावप्रतियोगितात्वरूपविशेषधर्मावच्छिन्नाभावप्रकारकाकाशाभावादिविशेष्यक निश्चयस्यसर्वमाकाशवदित्याकारकबुद्धि प्रतिबन्धकत्वे वृत्तितावदभावप्रतियोगितात्वरूपसामान्य धर्मावच्छिन्नाभाव प्रकारक तथाविध निश्चयस्यापि तादृशबुद्धिप्रतिबन्धकताया आनुभविकत्वादित्याह **तद्धर्मव्यापकताचेत्यादि।** तज्ज्ञानस्य = तादृशव्यापकताज्ञानस्य। तथा = प्रतिबन्धकम्। **सामान्येति।** वृत्तितावदभाव प्रतियोगित्वघटितसर्वत्ववद्वृत्तितावदभावप्रतियीगित्वरूपविशेषाभावनिश्चयस्येत्यर्थः।

❀ मनोरमा ❀

न्धेन। स्ववैशिष्ट्यं धर्मे, स्ववृत्तित्वसम्बन्धेन,। वृत्तित्वं स्वविशिष्टनिश्चयवत्त्वसम्बन्धेन। स्ववैशिष्ट्यं निश्चये स्वनिष्ठनिरवच्छिन्नावच्छेदकताकहेतुप्रकारताकत्वसम्बन्धेन। निश्चयवत्त्वं च स्वसमानका-

❀ गादाधरी ❀

यत्र प्रतिबन्धकत्वं तत्र तत्सामान्याभावग्रहस्यापि तथात्वानुभवात् । सर्वमाकाशाभाववदिति बुद्धेश्चाकाशाभावे वृत्तिमदत्यन्ताभावाप्रतियोगित्वं विषयः स एव बाधः तादृशानुमितिसामान्यविरोधी चेति ।

मूलस्थेन तेनेत्यनेन संशयप्रजोकयोर्विभाभकीभूतसपक्षवृत्तित्वविपक्ष-

❀ विवृतिः ❀

यत्र=ग्राह्यप्रकारकबुद्धौ । तत्सामान्याभावग्रहस्यापि=वृत्तितावदभाव प्रतियोगित्वाभावनिश्चयस्यापि । तथात्वानुभवात्=प्रतिबन्धकत्वानुभवात् । स एव=तादृश विषय एव । **तादृशेति** । सर्वहेतुकसाध्यानुमिति विरोधीत्यर्थः ।

तथा च सर्वमाकाशवत् प्रमेयत्वादित्यादौ वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वविशिष्टाकाशाभावादिरुप बाधनिश्चयस्य स्वसमानकालीनहेतुमत्तानिश्चय समानघतावच्छेदककानुमितिसामान्यं प्रत्येवप्रति बन्धधतया तादृशनिश्चयविषयीभूते तथाविध बाधेऽतिव्याप्तिवारणार्थमेव साध्यानुमिति सामान्याऽविरोधित्वदलं सार्थकमित्यभिप्रायः ॥

**मूलेतेनैवेत्यादि** । विरुद्धान्येत्यादिलक्षणघटकयथोक्तानुमितिप्रनिबन्धकतावच्छेदकप्रकारता श्रयीभूतेन, साध्याभाववद्वृत्तित्वादिनारूपेणेत्यर्थः । न तु संशयप्रयोजकीभूतेन साध्यतदभाववद्वृत्तित्वादिना, निश्चित साध्यतदभाववद्व्यावृत्तत्वादिनावेत्यर्थ ।

साध्यवद्वृत्तित्वादिघटित निरुक्त धर्मादे रनुमित्यविरोधितयाऽग्रिमप्रतिवन्धकत्वादित्यस्या नन्वयापत्तेः ।

स्वरूपासिद्धित्वेनापि हेतुज्ञानस्यानुमिति प्रतिबन्धकत्वादेवकारोऽसंगतइतितु नाशंकनीयम् , एव कारस्य यथोक्तानुमिति विरोधित्वादिरूप विभाजकतावच्छेदक धर्मव्यवच्छेदार्थकत्वात् ।

ज्ञातस्य=तादृशरुपेणहेतुज्ञानस्य । प्रतिवन्धकत्वात् = यथोक्तानुमितिप्रतिवन्धकत्वात् ।

परकीयानुमिति प्रतिबन्धार्थमाह **परस्येति** । तथैव=पूर्वोक्तसाध्याभाववद्वृत्ति-

❀ मनोरमा ❀

त्वानत्वस्ववृत्तित्वोभयसम्बन्धेन । स्ववृत्तित्वमपि, स्वसमानकालीनत्वसम्बन्धेन । तादृशप्रतिवन्धकतावत्त्वंच, स्ववृत्त्यभावीयप्रतियोगितानिरूपितपरम्परया निश्चयनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्वसम्बन्धेनेतिध्येयम् ॥

केचित्तु ज्ञानत्वव्याप्तिधर्मवत्त्वं सव्यभिचारत्वं वृत्तित्वं स्वविशिष्टनिश्चयत्वव्यापकतावच्छेदकत्व

## ❁ गादाधरी ❁

व्यावृत्तत्वघटितसाधारण्यासाधारण्ययोः परामर्शेऽसङ्गतिःसपक्षवृत्तित्वाद्यंशज्ञानस्यानुमित्यविरोधितया तद्घटितस्य हेत्वाभासताविरहादिति तस्यानुमितिविरोधितया प्रक्रान्तविपक्षवृत्तित्वाद्यंशमात्रपरामर्शकतामाह तेनेति विपक्षवृत्तित्वत्वादिनाऽप्राक्रान्तत्वात् प्रक्रान्ततालाभायानुमितिविरोधिनेत्युक्तम्। अनुतिविरोधित्वावच्छिनस्यानुमित्यविरोधित्वात्तत्पदस्य विप-

## ❁ विवृतिः ❁

त्वादिरूप साधारणत्वादिनैव। एवकारात् विभाजकतावच्छेदकानुगत धर्मवत्त्वेनोद्भावनव्यवच्छेदः,।

**उद्भावनाच्चेति**। साधारणादिहेतोरिति शेषः। लक्षणेति। अनुमिति प्रतिबन्धकयथार्थज्ञानविषयत्वरूपहेत्वाभाससामान्यलक्षणानुरोधेनेत्यर्थः।

प्रत्येकमेव = साध्याभाववद्वृत्तित्वत्वावच्छिन्नस्यैव। एवकारात् निरुक्तानुगतधर्मस्य हेत्वाभासपदप्रतिपाद्यतावच्छेदकत्वव्यवच्छेदः। हेत्वाभासत्वात् = अनुमिति तत्कारणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वात्॥

टीकायां-**संशयेति**। संशयजनकतावच्छेदक प्रकारतावच्छेदकधर्मयोरित्यर्थः। असंगति विवृणोति **सपक्षेति**। **अनुमित्य बिरोधितयेति**। केवलविपक्षवृत्तित्वज्ञानस्यैव अनुमितिप्रतिबन्धकत्वादित्याशयः। तद्घटितस्य = सपक्षवृत्तित्वादिघटितस्य। तस्य = मूलस्थतत्पदस्य। अनुमितिविरोधितया = अनुमितिप्रतिबन्धकज्ञानप्रकारताश्रयत्वेन। विपक्षवृत्तित्वाद्यशमात्रम् = साध्याभाववद्वृत्तित्वाद्यंशमात्रम्।

अनुमितिविरोधिनेत्यभिधानप्रयोजनमाद **विपक्षेति**। अप्राक्रान्तत्वात् = पूर्वमनुपस्थितत्वात। **इत्युक्तमिति**। तथाचानुमितिविरोधित्वेनैवरूपेण विपक्षवृत्तित्वादेः पूर्वभुवस्थितत्वात् अनुमितिविरोधिनाविपक्षवृत्तित्वादिनेत्युक्तम् दीधितिकृतेत्याशयः।

यथोक्तानुमितिविरोधित्वावच्छिन्नस्य विपक्षवृत्तित्वादेः अनुमित्यविरोधित्वात् प्रतिवन्धकत्वादिति मूलमसंगतंस्यात् अतो विपक्षवृत्तित्वत्वेन रूपेण विपक्षवृत्तित्वादेरनुमितिविरोधित्वव्यवस्थापनार्थम् विपक्षवृत्तित्वादिनेत्युक्तभित्याहानुमितीति।

## ❁ मनोरमा ❁

सम्बन्धेन, वैशिष्ट्यं निश्चये, स्वावच्छिन्नविषयितावत्त्व स्वाश्रयवृत्तिहेतुतावच्छेदकतापर्य्याप्त्यधिकरणधर्मावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नावच्छेदकतावद्धर्मविशिष्टनिश्चय वत्त्वसम्बन्धेन। धर्मवैशिष्ट्यं, स्वावच्छिन्नविशेष्यताकत्वसम्बन्धेन, निश्चयवत्त्वं च निश्चये स्वकालीनत्व, स्वसामानाधिक-

❀ गादाधरी ❀

क्षवृत्तित्वत्वाद्यवच्छिन्नपरत्वमावश्यकमिति तल्लाभाय विपक्षवृत्तित्वादिनेति। विपक्षवृत्तित्वत्वाद्यवच्छिन्नेनेत्यर्थः। तेनैवेत्येवकारस्य विभाजकधर्मस्यानुमितिप्रतिबन्धकज्ञानप्रकारत्वव्यवच्छेदपरत्वेऽसङ्गतिः तादृशज्ञानप्रकारीभूतविपक्षवृत्तित्वादेरेवानुगतधर्मप्रकारेण विभाजकत्वात्। एवं प्रत्येकमेवेत्येवकारस्यापि निभाजकधर्मस्य हेत्वाभासताव्यवच्छेदपरत्वं नोपपद्यते इति अनुमितिविरोधित्वादिरूपानुगमकविभाजकतावच्छेदकधर्मस्य प्रतिबन्धकज्ञानप्रकारतावच्छेदकत्वहेत्वाभासपदप्रतिपाद्यतावच्छेदकत्वव्यवच्छेदपरतया एवकारद्वयं व्याचष्टे एवकारेणेति। प्रथमैवकारेणेत्यर्थः। व्यवच्छिद्य-प्रतिबन्धकज्ञानप्रकारतावच्छेदकत्वव्यव-

❀ विवृतिः ❀

तल्लाभाय = विपक्षवृत्तित्वत्वावच्छिन्नलाभाय। विभाजकधर्मस्य विपक्षवृत्तित्वादेः।

**तादृशेति**। अनुमितिप्रतिबन्धकज्ञानप्रकारताश्रयीभूतविपक्षवृत्तित्वादेरित्यर्थः। अनुगतधर्मप्रकारेण=अनुमितिविरोधित्वरूपविभाजकतावच्छेदक धर्मप्रकारेण। **विभाजकत्वादिति**। तथा च विपक्षवृत्तित्वादौ विभाजक धर्मेऽनुमिति प्रतिबन्धक ज्ञानप्रकारत्वस्य सत्त्वात् नैव कारेण तद्व्यवच्छेदः सम्भवतीतिभावः॥

**नोपपद्यतइति**। विभाजकधर्मस्य विप्रक्षवृत्तित्वादेः विपक्षवृत्तित्वत्वादिना हेत्वाभास तया प्रत्येकमेवेत्य त्रैवकारेण तत्रहेत्वाभासत्वव्यवच्छेदो नघटते इत्याशयः।

नन्वेवमेवकारद्वयेन कस्य व्यवच्छेद इत्याकांक्षाया **माहानुमितीति**। तथा च तेनैवेत्येवकारेणानुमितिविरोधित्वरूप विभाजकतावच्छेदकधर्मेऽनुमितिप्रतिबन्धकज्ञानप्रकारतावच्छेदकत्वस्यव्यवच्छेदः। प्रत्येकमेवेत्यत्रैवकारेण तु तादृशधर्मेहेत्वाभासपद प्रतिपाद्यतावच्छेदकत्वस्य व्यवच्छेदोऽभिप्रेतः तादृशावच्छेदकत्वधर्मयोर्विपक्षवृत्तित्वत्वादावेवसत्त्वादितिहृदयम्॥

व्यवच्छिद्यपदार्थंव्याचष्टे **प्रतिप्रबन्धकेति**। प्रतिबन्धकज्ञानप्रकारतावच्छेदकत्वाभाववत्तया तादृशानुगमकंरूपंप्रति पाद्येत्यर्थः।

दीधितौ **तस्येति**। तादृशानुगमकधर्मस्पेत्यर्थ। हेत्वाभासस्येत्यस्यमूलेऽभा-

❀ मनोरमा ❀

रण्यस्ववृत्तित्वैतन्नियसम्बन्धेन। वृत्तित्वं स्वभिन्नत्वसम्बन्धेन। व्यापकताच स्वतादात्म्य, स्वविशिष्टहेतुमत्तानिश्चयवदनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्त्वोभयसम्बन्धेन। स्ववै-

**यद्वा साध्यवन्मात्रवृत्त्यन्यत्वेसति साध्याभाववन्मात्रवृत्त्यन्यत्वम्। तेनाऽसाधारणस्य साध्यतदभावोपस्थापकतया दूषकत्व पक्षे नाव्याप्तिः। नचैव माधिक्ये विभागव्याघातः, स्वरूप सता-**

---

❀ दीधितिः ❀

**तेनाऽनुमिति विरोधित्व घटितलक्षणकरणेन। असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषकत्वपक्षे नाव्याप्ति रन्यथापुनरव्याप्तिरेव।**

❀ गादाधरी ❀

च्छेदवत्तया प्रतिपाद्य, हेत्वाभासस्येयि पूरणम्। एवञ्च प्रत्येकमेवेति

❀ विवृतिः ❀

वादाह टीकायां **हेत्वाभासस्येतीति**। **एवञ्चेति**। त्रितयसाधारणानुगतधर्मस्यहेत्वाभासपदप्रतिपाद्यतावच्छेदकत्वव्यवच्छेदेचेत्यर्थः। तथा च हेत्वाभासलक्षणानुरोधेन साध्याभाववद्वृत्तित्वत्वादिप्रत्येक धर्मस्यैवानुमिति प्रतिबन्धकतावच्छेदकप्रकारता वच्छेदकत्वं नतु तादृश त्रितयसाधारणानुगतधर्मस्यतथात्वमितिभावः॥

शिष्यबुद्धिवैशद्यप्रदर्शनार्थमाहमूले **यद्वेति**। **साध्यवन्मात्रेति**। निरुक्तलक्षणार्थस्तुपूर्ववदेवानुसंधेयः। **तेनेति**। अनुमिति विरोधिताघटितद्वितीयलक्षणादणेत्यर्थः। असाधारणस्य = साध्यव्यापकीभूताभावप्रतियोगित्वविशिष्टहेतोः। **साध्येति**। सत्प्रतिपक्षोत्थापकतयेत्यर्थः। तृतीयायाः दूषकत्वान्वयि प्रयुक्तत्वमर्थः। साध्यव्यापकीभूताभाव प्रतियोगि हेतुमत्पक्षः सत्प्रति पक्षः। तदुत्थापकत्वम् तज्ज्ञानात्मक विरोधिपरामर्शजनकीभूतं यद्विशेषणज्ञानरूपं साध्यव्यापकीभूताभाव प्रतियोगिहेतुरूपाऽसाधारणज्ञानं तद्विषयत्वरूपम् तस्य च निरुक्तासाधारण हेतौसत्त्वादसाधारणस्यसत्प्रतिपक्षोत्थापकत्वमितिभावः।

दूषकत्वपक्षे = अनुमिति विरोधित्वपक्षे। **नाव्याप्तिरिति**। साध्यव्यापकीभूताभावप्रतियोगित्वस्य संशय प्रयोजकत्वाभावात् प्रथमलक्षणादरे तत्राव्याप्ति रतो द्वितीयलक्षणादरः। द्वितीयलक्षणाददेतुनतत्राप्तिरित्याशयः॥

ननु साधारणस्यान्वयव्याप्ति ग्रहानुत्पादप्रयोजकतया दूषकत्वम् असाधारणस्य सत्प्रतिपक्षोत्थापकतया तथात्वमनुसंहारिणस्तु व्यतिरेक व्याप्तिग्रानुत्पादप्रयोजकतयादूषकत्वमितिदूषकताप्रयोजकभेदेन साधारणादेरपि विभिन्नतया हेत्वाभासानां षड्त्वेन विभागो न स्यात् इत्याशंकते **नचैवमिति**। विभागव्याघात इति परे-

❀ मनोरमा ❀

शिष्टयं हेतुमत्तानिश्चये, स्वसमानकालीनत्व, स्वभिन्नत्व, स्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन।

नुगतरूपेण त्रयाणामेकीकृत्य महर्षिणा विभाग करणात् । नचैवम् साध्याभावज्ञापकत्वेन बाधप्रकरणसमयोस्तद ज्ञापकतयाऽन्येषामुपसंग्रहःकुतोनकृत इतिवाच्यम्, स्वतन्त्रेच्छस्य नियोग पर्यनुयोगानर्हत्वात् ॥

॥ इति श्रीमन्महामहोपाध्याय गंगेशोपाध्यायविरचितं सव्यभिचार सिद्धान्त लक्षणं समाप्तम् ॥

---

❀ दीधितिः ❀

**साध्याभाव ज्ञापकत्वेन साक्षात् साध्यवत्ताऽनुमिति विरोधित्वेन ॥**

॥ इति श्रीमन्महामहोपाध्याय रघुनाथ शिरोमणि विरचिता–सव्यभिचार सिद्धान्तलक्षण दीधितिः समाप्ताः ॥

❀ विवृत्तिः ❀

णान्वयः । सत्प्रति पक्षोत्थापकत्वरूपदूषकता प्रयोजकभेदेनाऽसाधारणादेरपि विभिन्नत्वरुपाधिक्ये इत्यर्थः । विभागव्यापातः = हेत्वाभासानां पञ्चत्वेनविभागव्याघातः । विभिन्नसाधारणादिकमादाय हेत्वाभासानां पञ्चत्वाऽसम्भवइत्याशयः ।

**समाधत्ते स्वरूपसतेति** । अनुमितिप्रतिबन्धकतावच्छेदक प्रकारतावच्छेकत्वेनाऽज्ञायमानेनेत्यर्थः । अनुगत रूपेण = अनुमितिविरोधित्वादिधर्मेण । त्रयाणाम् साधारणासाधारणानुपसंहारिणामू । महर्षिणा = गौतमेन । **विभागकरणादिति** । तथा च यथोक्तानुमिति विरोधित्वादिधर्मेणैव हेत्वाभासानां पञ्चत्वेन विभाग इति भावः ।

नन्वेवं हेत्वाभासानां द्विविधत्वमेवस्थात् नतुपञ्चविधत्वमित्याशंकते **नचैवमिति** । वाच्यमितिपरेणान्वयः । एवम् = अनुगतधर्मेणैकीकृत्यविभागकरणे । **साध्याभावेति** । साक्षात् साध्यानुमितिप्रतिबन्धकज्ञानविषयत्वेनेत्यर्थः । वाधप्रकरणसमयोः=साध्याभाववत् पक्ष, साध्याभावव्याप्यवत्पक्षरूपवाधसत्प्रतिक्षयो; । **तदज्ञापकतयेति** । परापर्शप्रतिवन्धकज्ञानविषयत्वेनेत्यर्थः । अन्येषाम् = सव्यभिचारविरुद्धादीनाम् । **कुती न कृतइति** । तथा च हेत्वाभासानां द्विविधत्वमेवस्यात् न तु पञ्चविधत्वमितिभावः ।

उत्तरयति **स्वन्त्रेति** । अन्येच्छानधीनेच्छावतो महर्षेरित्यर्थः । **नियोगेति** । तथाचतं प्रति तादृशपूर्वपक्ष एव न सम्भवतीति हृदयम् ॥

❀ मनोरमा ❀

हेतुमत्ता।निश्चयवत्त्वमनुमितौ,स्वीयनिरवच्छिन्नाच्छेदकतावद्धर्मावच्छिन्नविशेष्यता।निरूपितप्रकृतसाध्यवि

❀ गादाधरी ❀

मूलस्य विपक्षवृत्तित्वादिप्रत्येकमात्रवृत्तिरूपावच्छिन्नस्यैवेत्यर्थः । तेनासाधारण्यस्येत्यादिमूलस्यानुमितिविरोधिताघटितलक्षणं परित्यज्य लक्षणान्तरकरणेनसाधारण्यस्य साध्यतदभावोपस्थापकतया संशायकतया दूषकत्वपक्षे नाव्याप्तिरित्यर्थकत्वेऽसङ्गतिः—सम्भवत्संशयप्रयोजकताकसाध्यतदभावसहचरिताभावप्रतियोगित्वरूपासाधारण्यस्य सद्धेतुसाधारणताप्रयुक्तदोषत्वासम्भवदोषेणैवानुमितिविरोधिताघटितलक्षणस्यावतरितत्वात् । तेनेत्यस्य संशायकता घटितलक्षण परित्यागपूर्वकाऽपरलक्षणद्वयकरणस्यासाधारण संग्रहप्रयोजकतार्थकत्वं साध्यतदभावोपस्थापकतयेत्यस्य सत्प्रतिपक्षोत्थापकतयेत्यर्थकत्व मपि न साधु, असाधारणस्य सत्प्रतिपक्षोत्था-

❀ विवृतिः ❀

टीकायां **तेनाऽसाधारणस्येत्यादीति**। साध्यवन्मात्रेत्यादिलक्षणोत्तरकालीनस्येत्यादिः । **अनुमितीति** । विरूद्धान्येत्यादिलक्षणं परित्यज्य साध्यवन्मात्रेत्यादितृतीयलक्षणकरणेनेत्यर्थः ।

**नाव्याप्तिरिति** । असाधारणस्य संशयजनकतयादूषकत्वपक्षेद्वितीयलक्षणेऽव्याप्तिसम्भवेऽपि तृतीयलक्षणे तत्रनाव्याप्ति रित्यर्थकत्वे इत्यर्थः ।

असंगतिं प्रदर्शयति **सम्भवत् संशयेति** । संशयजनकतावच्छेदकप्रकारतावच्छेदकस्यसाध्यतदभाववद्वृत्त्यभावप्रतियोगित्वरुपासाधारण्यस्येत्यर्थः। **सद्धेत्विति** । वह्न्यादिसाध्यकधूमादौ वर्त्तमानताप्रयुक्तोयो हेतुदोषत्वाऽसम्भवरुपोदोषः तेनैवेत्यर्थः ।

**अनुमितीति** । द्वितीयलक्षणस्यावतरितत्वादित्यर्थः।

**तेनेत्यस्येति** । मूलस्थस्य तेनेत्यस्येत्यर्थः । **संशायकतेति** । संशयजनकताघटितलक्षणं परित्यज्य अनुमिति विरोधिताघटितलक्षण व्याप्तिग्रहविरोधिताघटितलक्षण द्वयकरणस्येत्यर्थः । द्वितीय तृतीयलक्षण करणस्या साधारण संग्रहप्रयोजकत्वेतु साध्यतदभावोपस्थापकतयेत्यस्य सत्प्रतिपक्षो त्थापकतयेत्यर्थकरणमपि न संगच्छते इत्याह **साध्यतदभावेति**

व्याप्तिग्रहविरोधिताघटित तृतीयलक्षणेऽसाधारणेऽव्याप्तिंसंगमयति **असाधा-**

❀ मनोरमा ❀

धेयकप्रकृतहेतुव प्रकृतसाध्यव्याप्तिप्रकारताकरवसम्बन्धेनेत्याहुः ॥

इति श्री पण्डितप्रवरवामाचरण 'भट्टाचार्य्यन्यायाचार्य्य' तर्कतीर्थविरचिता सव्यभिचारमनोरमासमाप्ता ॥

## ❀ गादाधरी ❀

पकतामते साध्यव्यापकी भूतांऽभाव प्रतियोगित्वस्यैवासाधारण्यतया तस्य व्याप्तिग्रहाविरोधितया विरुद्धादि संकीर्णासाधारणानुरोधेन व्याप्तिग्रहद्वय विरोधितापरतया व्याख्येयस्या व्यवहितलक्षणस्य तत्रा व्याप्तेरावश्यकत्वादत स्तत्पदं मध्यमलक्षणमात्रपरतया व्याचष्टे तेनेति। असाधारणस्य संशायकता पक्षे प्रथमलक्षणस्यैव साधुता नतु मध्यमस्य, संशय प्रयोजकस्य निश्चित साध्यतदभाववद्व्यावृत्तत्वादेरनुमिति विरोधित्वा दित्युपष्ढंभासंगति भयेन साध्यतदभावोपस्थापकतयेत्यस्य संशायकतयेत्यर्थं परित्यज्यार्थान्तरमाह सत्प्रतिपक्षोत्थापकतयेति। इतरलक्षणयो स्तन्मतेऽसाधारणाव्याप्ति सत्त्वएवोपष्टंभसंगते रुपष्टंभकतां स्पष्टीकर्त्तुं

## ❀ विवृतिः ❀

**रणस्येति**। शब्दोऽनित्यः शब्दत्वादित्यादौ शब्दोनित्यःशब्दत्वादित्यादौ च दशाविशेषे शब्दत्वादे रसाधारणतया तादृशाऽसाधारण संग्रहार्थं तृतीयलक्षणस्य व्याप्तिग्रहद्वयविरोधिताघटितत्वस्यावश्यकत्वादाह **विरुद्धादीति**। अव्यवहितलक्षणस्य = साध्यवन्मात्रेत्यादिलक्षणस्य । तत्र हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वे। तत्पदम् = तेनेत्यत्र तत्पदम् । **मध्यमेति**। विरुद्धान्येत्यादिलक्षणपरतयेत्यर्थः

तथा च यतोऽसाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषकत्वम् अतएव द्वितीय लक्षणकरणेन नतत्राऽव्याप्तिः, अन्यथा संशयजनकताघटित प्रथमलक्षणे तु तत्पक्षेऽव्याप्ति रस्त्येवेतिसमुदितदीधित्यर्थः पर्य्यवसितः ॥

ननु साध्यतदभावोपस्थापकतयेत्यस्य संशय जनकोपस्थिति प्रयोजकतयेत्यर्थस्यैवसमीचीनतयातादृशार्थपरित्यागोनयुक्तः इत्यतआह**ासाधारणस्येति**। तथा च संशयप्रयोजकरूपस्य निश्चितसाध्यादि मद्व्यावृत्तत्वस्य अनुमित्यविरोधितया साध्यतदभावोपस्थापकतयेत्यस्य तादृशार्थकरणेनद्वितीयलक्षण स्यापि असाधारणेऽव्याप्तेरनुद्धारात् द्वितीयलक्षणकरणस्यासाधारण संग्रह प्रयोजकत्वाभिधानंनघटते अतः साध्यतदभावोपस्थापकतयेत्यस्य सत्प्रतिपक्षोत्थापकतयेत्यर्थकरणम् दीधितिकृतां साधुसंगच्छत इतिभावः ॥

इत्युपष्टम्भासंगतिभयेन=द्वितीशलक्षणकरणस्यासाधारण संग्रह प्रयोजकत्वाभिधानाऽसंगतिभयेन । इतरलक्षणयोः=प्रथमतृतीयलक्षणयोः । तन्मते=असाधारणस्य सत्प्रतिपतिपक्षोत्थापकतयादूषकत्वमते । उपष्टम्भसंगतेः=द्वितीयलक्षणमात्राभिधानस्यासाधारण संग्रह प्रयोजकत्व संगतेः ।

उपष्टम्भकताम्=असाधारणस्य सत्प्रतिपक्षोत्थापकतया दूषकत्वपक्षे द्वितीयल-

❀ गादाधरी ❀

तत्पूरयति अन्यथापुनरिति। इतरलक्षणयोस्त्वित्यर्थः। अव्याप्तिरेवेति। सत्प्रतिपक्षोत्थापकतया दूषकत्व पक्ष इत्यनुषज्यते। यथाश्रुतं साध्याभाव-ज्ञापकत्वंन बाधसाधारण मतस्तदर्थं व्याचष्टे साध्याभावेति। व्यभिचा-रादि व्यावृत्तस्यकारणी भूताभावप्रतियोगित्वरूपप्रतिवन्धकताघटितस्य विरोधित्वस्यलाभाय साक्षादिति ॥

॥ इति श्रीमन्महामहोपाध्याय गदाधर भट्टाचार्य विरचिता सव्यभिचार सिद्धान्तलक्षण व्याख्या समाप्ता ॥

❀ विवृतिः ❀

क्षणमात्रकरणस्यैवा साधारणसंग्रहप्रयोजकताम्। इत्यनुषज्यतइति। तथा च तन्मते साध्यव्यापकीभूताभावप्रतियोगिशब्दत्वरूवासाधारणे प्रथमतृतीयलक्षणयो रव्याप्ति रतो मध्यम लक्षणानुसरणमित्यभिप्रायः ॥

साध्याभावज्ञापकत्वं साध्याभावानुमितिजनकज्ञानविषयत्वं तच नवाधे, वाधज्ञान-स्यानुमित्यजनकत्वादित्यतो वाधस्य साध्याभावज्ञापकत्वसम्पादनाय साक्षात् साध्या-भावानुमिति विरोधित्वादेः साध्याभावज्ञापकत्वरूपतामुपपादयति**यथाश्रुतमिति**। साक्षात् इत्यस्यप्रयोजनमाह**व्यभिचारादीति**। साध्यानुमितिप्रयोजकीभूताभाव प्रतियोगित्वरुपप्रतिवन्धकताघटितंयदि साध्यानुमितिविरोधित्वं तदा तादृशसाध्यानु-मिति विरोधित्वस्य व्यभिचारादावपिसत्त्वेन साध्याभावज्ञापकत्वेन व्यभिचारादेरपि संग्रहः स्यात् अतः कारणीभूताभावप्रतियोगित्वरूप प्रतिवन्धकताघटितविरोधित्व लाभार्थं साक्षादित्युक्तम् दीधितिकृतेत्याह—**कारणीभूतेतिदिक्** ॥

॥ इति श्रीयुक्त पंडितप्रवर वामाचरण भट्टाचार्य्य न्यायाचार्य्य तर्कतीर्थ विरचिता सव्यभिचारलक्षण विवृतिः समाप्ता ॥



* श्रीगणेशायनमः *

अथ श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सटिप्पणम्

# सव्यभिचारप्रकरणम् ।

फलीभूतसंशयधर्मितावच्छेदकता यादृशधर्मे पर्याप्ता तादृशधर्माव-च्छिन्नविशेष्यतानिरूपितद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकता-वच्छेदकं तद्रूपवत्त्वमिति विवक्षणे कोटिद्वयोपस्थापके त्यस्य वैयर्थ्यमुक्तं भट्टाचार्येण ।

अत्र फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यनिवेशे नित्यत्वतदभाव-विषयकज्ञानवानयं नित्यो न वेति संशयं प्रति तादृशसंशयधर्मितावच्छेद-कताश्रय-इदन्त्वावच्छिन्नविशेष्यकनित्यत्वतदभावविषयकज्ञानत्वावच्छिन्न-प्रकारताशालिज्ञानत्वेन जनकतया तद्रूपपदेन नित्यत्वतदभावविषयकज्ञान-त्वमादाय नित्यत्वसाध्यकज्ञानादिहेतोः सव्यभिचारत्वापत्तिरतस्तन्निवेशः ।

अथात्र फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छि-न्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकताव-च्छेदकतावदित्यत्रावच्छेदकत्वं स्वरूप सम्बन्धविशेषोऽनतिरिक्तवृत्तित्वं वा आद्ये धूमवत्पर्वतकालीनवह्निमान् धूमादित्यादौ धूमवत्पर्वतकालीनवह्नि-मान्न वेति संशयजनकतावच्छेदकीभूतायां धूमवत्पर्वतकालीनवह्नितदभाव-सहचरितधूमवानयमित्यादिज्ञानीयसाध्यविषयत्वान्तः पातिपर्वतत्वावच्छिन्न विषयतानिरूपितधूमत्वावच्छिन्नविषयतायां फलीभूतसंशयधर्मितावच्छेदक तापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितत्वसत्वादुक्तसाध्यके धूमेऽति व्याप्तिः ।

नच फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नवि-शेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारताशालिज्ञानत्वं संशयजनकतावच्छेदक तापर्याप्त्यधिकरणमिति विवक्षणे नोक्तातिव्याप्तिरिति वाच्यम् तथासत्यसं-

भवापत्तेः भ्रमप्रसाधारणज्ञानस्य जनकत्वानुरोधेन परस्परोपश्लेषावगाहिज्ञानत्वेनैव जनकता वाच्या अखण्डसाधारण्याद्यवच्छिन्नप्रकारताशालिज्ञानत्वस्य संशयजनकतानवच्छेदकत्वादिति ।

नापि द्वितीयः—नित्यत्वतदभावविषयकज्ञानवानयं ज्ञानवानिति ज्ञानीयतादृशधर्मावच्छिन्नविशेष्यतानिरूपितशुद्धज्ञानत्वावच्छिन्नप्रकारताया अपि नित्यत्वदभावविषयकज्ञानवानयं नित्यो न वेति संशयजनकतानतिरिक्तवृत्तितयाऽयं नित्यो ज्ञानादित्यत्रातिव्याप्त्यापत्तेः ।

अत्रोच्यते—स्वरूपसम्बन्धरूपमेव जनकतावच्छेदकत्वं निवेशनीयम धूमवत्पर्वतकालीनवह्निमान्धूमादित्यत्र प्रागुक्तातिव्याप्तिस्तु फलीभूतसंशयधर्मितावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारत्वस्य तादृशधर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपित यद्रूपावच्छिन्नप्रकारतासामान्यस्य वा निवेशेनैव वारणीयेति ध्येयम् ॥ १ ॥

अथैवमपि नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्वतदभावविषयक ज्ञानवानिति—ज्ञानीयतादृशधर्मावच्छिन्नविशेष्यतानिरूपित नित्यत्वतदभावविषयकज्ञानत्वावच्छिन्नप्रकारताया अपि इदन्त्वावच्छिन्नविशेष्यतानिरूपिततादृशज्ञानत्वावच्छिन्नप्रकारतात्वेन नित्यत्वतदभावविषयकज्ञानवानयं नित्यो न वेति संशयजनकतावच्छेदकतयाऽयं नित्यो ज्ञानादित्यत्रातिव्याप्ति र्दुर्वारैव ।

न च फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकताकनिरूप्यताविशिष्टयद्रूपावच्छिन्नप्रकारतात्वं संशयजनकतावच्छेदकतावच्छेदकं तद्रूपावच्छिन्नत्वमिति विवक्षणे नायं दोषः इदन्त्वमात्रावच्छिन्नविशेषतात्ववच्छिन्ननिरूपकताकनिरूप्यताघटितरूपस्यैव तादृशसंशयजनकतावच्छेदकतावच्छेदकतया नित्यत्वतदभावविषयकज्ञानवदिदंत्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकताकनिरूप्यतावत्तादृशज्ञान—त्वावच्छिन्नप्रकारतात्वस्य तादृशजनकतावच्छेदकतानवच्छेदकत्वात् इति वाच्यम् । नित्यत्वतदभावविषयकज्ञानवदिदन्त्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकताकनिरूप्यताया एकव्यक्तितया इदन्त्वावच्छिन्नविशेष्यतात्वावच्छिन्ननिरूपकताकनिरूप्यताकत्वेन रूपेण तादृशजनकतावच्छेदकतावच्छेदकतावच्छेदकत्वात्, तादृशप्रकारतात्वस्य जनकतावच्छेदकतावच्छेद-

त्वाच्च विशिष्टस्य सुतरां जनकतावच्छेदकतावच्छेदकत्वेनातिव्याप्तिताद-वस्थ्यादिति।

यदि तादृशविशिष्टप्रकारतात्वे जनकतावच्छेदकतावच्छेदकतायाः पर्याप्तिर्निवेश्यते, तदा तादृशविशिष्टघटकज्ञानत्वावच्छिन्नांशस्य तादृशजनकतावच्छेदककोटावनन्तर्भावेणोक्तातिव्याप्तिवारणेप्यसंभवः लाघवेन तद्धर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतात्वेन जनकतावच्छेदकत्वस्वीकारेणैवोपपत्तावनवच्छेदकीभूतविशेष्यतात्वावच्छिन्नत्वांशान्तर्भावेण जनकतावच्छेदकतावच्छेदकत्वस्य पर्याप्तेरसंभवात्, एतच्चानुमितिग्रन्थे प्रकारान्तरानुसरणे गौरवमित्यादिना भट्टाचार्येणैवं स्फुटीकृतमिति।

किञ्च भ्रमप्रमासाधारण्यानुरोधेन निरूप्यनिरूपकभावापन्नप्रकारतात्वेनैव जनकतावच्छेकताया वक्तव्यत्वेन साधारण्याद्यवच्छिन्नप्रकारतात्वस्यापि जनकतावच्छेदकतावच्छेदकत्वपर्याप्त्यधिकरणत्वाभावेनासम्भवापत्तेश्चेति।

एतेन फलीभूतसंशयधमितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारतात्वं संशयजनकतावच्छेदकतावच्छेदकत्वपर्याप्त्यधिकरणं तद्रूपवत्त्वमित्युक्तावपि न निस्तार इति चेत्।

अत्राहुः—तद्धर्मपर्याप्तावच्छेदकताकविशेष्यताकसाध्यसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतायास्तद्धर्मपर्याप्तावच्छेदकताकमुख्यविशेष्यतानिरूपितप्रकारतात्वेनावच्छेदिका या प्रकारता तदवच्छेदकतापर्याप्त्यधिकरणरूपवत्त्वमिति विवक्षणान्न कोऽपि दोषः।

अनुगमस्तु—प्रकृतसाध्यसंशयीयकोटितानिरूपितविशेष्यताविशिष्टावच्छेदकतावत्प्रकारतावच्छेदकरूपवत्त्वम्। विशेष्यतावैशिष्ट्यं च स्वघटितसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्व—स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतानिरूपितत्वावच्छिन्नत्व—उभयसम्बन्धेन। अतएव नित्यत्वतदभावविषयकज्ञानवनायं नित्यो न वा अयं च नित्यो न वेति समूहालम्बनसंशयजनकतामादायाप्ययं नित्यो ज्ञानादित्यत्र नातिव्याप्तिः नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्वतदभावविषयकज्ञानवानिति—ज्ञानीयविशिष्टज्ञानत्वावच्छिन्नप्रकारतायामेतत्संशयीयइदन्त्वावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेद

कत्वाभावात्, विशिष्टज्ञानवदिदन्त्वावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्न-जन्यतानिरूपितजनकताच्छेदकत्वसत्त्वेऽपि तादृशावच्छेदकतायां विशिष्टज्ञानवदिदन्त्वपर्याप्तावच्छेदकताकविशेष्यतानिरूपितत्वावच्छिन्नत्वाभावादिति ।

वस्तुतस्तु फलीभूतसंशयीयसाध्यतावच्छेदकावच्छिन्नकोटितानिरूपितविशेष्यताविशिष्टा या आधेयत्वसम्बन्धावच्छिन्नावच्छेदकता तन्निरूपितधर्मितावच्छेदकतानिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकता-निरूपितावच्छेदकतावत्प्रकारतावच्छेदकतापर्याप्त्यधिकरणरूपवत्त्वमेव विवक्षणीयम् ॥ तादृशकोटितानिरूपितविशेष्यतावैशिष्ट्यं च स्वावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्व–स्वघटितसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्वोभयसम्बन्धेन ।

उक्त समूहालम्बनसंशयोयविशिष्टज्ञानवदिदन्त्वावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्वस्येदन्त्ववृत्तितादृशावच्छेदकतायां सत्त्वेऽपि विशिष्टज्ञानवदिदन्त्वावच्छिन्नविशेष्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वाभावात्तत्रच तादृशसंशयीयशुद्धेदन्त्वावच्छिन्नविशेष्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वसत्त्वेऽपि तादृशविशेष्यताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतानिरूपितत्वाभावात् नोक्तसमूहालम्बनसंशयमादायातिव्याः । मुख्यविशेष्यतानिवेशाच्च धूमवत्पर्वतकालीन-वह्निमान् धूमादित्यादौ न प्रागुक्तातिव्याप्तिः ।

केचित्तु–फलीभूतसंशयीयसाध्यतावच्छेदकावच्छिन्नकोटितानिरूपितयद्विशेष्यतावच्छेदकता यादृशधर्मे पर्याप्ता तादृशधर्मावच्छिन्नमुख्यविशेष्यताविशिष्टा या तद्विशेष्यताशालिसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतप्रकारता, तदवच्छेदकतापर्याप्त्यधिकरणरूपवत्त्वमिति फलितम् । निरुक्तमुख्यविशेष्यतावैशिष्ट्यञ्च स्वनिरूपितत्व–स्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं च स्वनिरूपितावच्छेकतापर्याप्त्यधिकरणधर्मावच्छिन्नावच्छेदकताकत्वसम्बन्धेन, नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्त्वतदभावविषयकज्ञानवान्- इति ज्ञानीयविशिष्टज्ञानत्वावच्छिन्नप्रकारता तु न निरुक्तमुख्यविशेष्यताविशिष्टेति नोक्ताऽतिव्याप्तिः ।

न च यत्त्वतत्त्वनिवेशादननुगमः, साध्यतावच्छेदकावच्छिन्नकोटिता-निरूपितविशेष्यताविशिष्टप्रकारतावच्छेदकरूपषत्त्वे तात्पर्यात् । विशेष्यता-वैशिष्ट्यं च स्वघटितसंशयस्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नमुख्यविशेष्यतावत्त्वोभयसम्बन्धे-न । उक्तसम्बन्धघटकमुख्यविशेष्यतावत्त्वं च प्रागुक्तोभयसम्बन्धेन । मुख्यविशेष्यताव्यावृत्तिस्तु पूर्ववदित्याहुः ।

यदि च वक्ष्यमाणयुक्त्या साधारणादिधर्मवत्ताज्ञानजन्यतावच्छेदक-कोटौ अव्यवहितोत्तरत्वनिवेशध्रौव्ये प्रयोजनविरहेण संशयत्वस्य जन्यता-नवच्छेदकतयाऽसंभव इत्युच्यते, तदा प्रागुक्तोभयसम्बन्धघटकीभूतस्वघ-टितसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वमपहाय स्वविशि-ष्टमुख्यविशेष्यताशून्यसाध्यसंशयनिष्ठजन्यतानिरूपितजनकतानिरूपितत्वघ-टितोभयसम्बन्धेनैव विशेष्यतावैशिष्ट्यं विवक्षणीयम् ॥ उक्तसम्बन्धघटक-स्ववैशिष्ट्यं च स्वभिन्नत्व–स्वानवच्छिन्नत्व–स्वनिरूपकज्ञानीयत्व–एतत्रित-यसम्बन्धेन इति ध्येयम् ॥

केचित्त्वित्यादिकल्पेऽपि स्वघटितसंशयत्वावच्छिन्नजन्यतानिरूपितज-नकतावच्छेदकत्वमपहाय उक्तत्रितयसम्बन्धेन स्वविशिष्टमुख्यविशेष्यता-शून्यसाध्यसंशयनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वं निवेशनीयमिति संक्षेपः ॥ २ ॥

जनकता च साध्यसंशयत्वावच्छिन्नजन्यतानिरूपिता ग्राह्या, अतः सम्बन्धान्तरज्ञानजन्यकोट्युपस्थितेर्विशेयणज्ञानमुद्रया साध्यसंशयजनक-त्वेऽपि न क्षतिः । यदि चासाधारणधर्मादिज्ञानजन्यसंशये व्यभिचारवा-रणाय साधारणादिज्ञानजन्योपस्थितिजन्यतावच्छेदककोटौ तादृशोपस्थित्य-व्यवहितोत्तरत्वनिवेशस्यावश्यकतया साध्यसंशयत्वं तत्र प्रयोजनविरहेण न निवेश्यते, तदा साध्यसंशयत्वावच्छिन्नत्वं परित्यज्य साध्यसंशयत्वन्यूनवृ-त्तित्वमेव निवेशनीयम् । विशेषणज्ञानादिजन्यता च न तन्न्यूमवृत्तिरिति नातिप्रसङ्गः । न चैवमपि यत्र नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्व-तदभावसहचरितप्रमेयत्ववांश्चायमित्याकारकज्ञानाभ्यां नित्यत्वतदभावविष-यिणी एकैवोपस्थितिर्जनिता तत्र तादृशोपस्थितिजनकपक्षधर्मताज्ञानविषय-त्वमादाय ज्ञानेऽतिव्याप्तिर्दुर्वारैव तादृशोपस्थितिव्यक्तेः साधारणादिधर्मव-

त्ताज्ञानजन्यतया साध्यसंशयत्वावच्छिन्नं प्रति जनकत्वादिति वाच्यम्। साध्यसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानियतजन्यतानिरूपकीभूत-जनकताया एव पक्षधर्मताज्ञानविशेषणत्वोपगमात् नित्यत्वतदभावविषयक-ज्ञनवत्ताज्ञानजन्यता च न तादृशजनकतानियतेति भट्टाचार्येणोक्तम्।

अथात्रोक्तयुक्त्या साधारणादिधर्मवत्ताज्ञानजन्यतावच्छेदककोटाव-व्यवहितोत्तरत्वनिवेशस्यावश्यकतया तादृशज्ञानजन्यत्वस्य साध्यसंशया-जनकतादृशज्ञानाव्यवहितोत्तरघटज्ञानादिसाधारणतया साध्यसंशयजनक-ताव्यभिचारित्वेनासंभवापत्तिरिति चेत्।

अत्राहुः—साध्यसंशयजनकतानियतत्वं न तादृशजनकताशून्यावृत्तित्वं येनाऽसंभवः स्यादिति, किन्तु तादृशजनकताशून्यसाध्यतदभावविषयकोप-स्थित्यवृत्तित्वरूपमेव वाच्यम्। तथाच साधारणादिधर्मवत्ताज्ञानजन्यो-पस्थितिमात्रस्यैव साध्यसंशयजनकतावत्वेन तादृशजनकताशून्यत्वसाधा-रणादिधर्मवत्ताज्ञानजन्योपस्थितावेवेति तादृशोपस्थित्यवृत्तित्वस्य साधारण-धर्मवत्ताज्ञानजन्यतायामक्षतत्वान्नदोषः॥ अथवा तादृशजनकतानियतत्वं—स्वव्यापकतादृशजनकताकत्वम्। स्वपदं तादृशजनकतानियतत्वाभिमत-जन्यतापरम्। स्वव्यापकत्वं च स्वाधिकरणीभूतसाध्यतदभावविषयकोप-स्थितिनिष्ठभेदप्रतियोगितानवच्छेदकत्वाम्, तथाच नित्यत्वतदभावविषय-कज्ञानजन्यतायाः साध्यसंशयाजनकसाध्यतदभावविषयकोपस्थितावपि सत्त्वेन साध्यसंशयजनकतायां तादृशज्ञानवत्ताज्ञानजन्यताशालिसाध्मतद-भावविषयकोपस्थितिनिष्ठभेदप्रतियीगितानवच्छेदकत्वाभावान्नातिव्याप्तिः। साधारणादिधर्मवत्ता ज्ञानजन्यताशालिसाध्यतदभावविषयकोपस्थितिमात्र एव च साध्यसंशयजनकतासत्त्वात नोक्ताऽसंभवः।

एतेन पूर्वकल्पे विशेषणज्ञानादिमुद्रया साध्यसंशयजनकताशून्यन्यसा-ध्यतदभावविषयकोपस्थित्यप्रसिद्ध्यैव विशेषणज्ञानादिमुद्रया जनकतामादा-यातिप्रसङ्गाभावात् जन्यतायां सोध्यसंशयत्वावच्छिन्नत्वं-साध्यसंशयत्व-न्यूनवृत्तित्वं वा व्यर्थमिति परास्तम्। एतत्कल्पे विशेषणज्ञानादिमुद्रया साध्य संशयजनकतायामपि निरुक्तस्य नित्यत्वतदभावविषयकज्ञानवत्ताज्ञानज-

---

(१) यत्किञ्चिज्जनकतानियतजन्यतानियेशेनासंभववारणसंभवात्।

न्यत्वव्यापकत्वस्य सत्त्वेनोक्तातिव्याप्तिवारणायैव तत्सार्थक्यमिति ध्येयम् ॥

परेतु अवच्छेदकतासम्बन्धेन नियतत्वप्रवेशान्न कोपि दोष इत्याहुः॥ तच्चिन्त्यम्। अथवेत्यादिउक्तकल्पस्यापि फलतस्तदर्थकतया सन्दर्भविरोधादिति ॥

केचित्तु उक्ताऽसम्भवभिया साध्यसंशयजनकताव्यापकत्वमेव निवेशनीयन् नित्यत्वतदभावविषयकज्ञानजन्यता च न तादृशजनकताव्यापिका तादृशजनकतायाः तादृशज्ञानवत्ताज्ञानाजन्योपस्थिताबपि सत्त्वात्। न च तादृशजनकतायाः साधारणधर्मवत्ताज्ञानाजन्यासाधारणधर्मवत्ताज्ञानादिजन्योपस्थितावपि सत्त्वात् साधारणधर्मवत्ताज्ञानजन्यतायामपि तादृशजनकताव्यापकत्वं दुर्घटमिति वाच्यम्। व्यापकतासम्बन्धेन तादृशजनकताविशिष्टजन्यताया एव निवेशनीयत्वात् इत्याहुः ॥ तच्चिन्त्यम् ॥

न च तथापि धूनवान् पर्वतो वह्निमान् न वेत्यादिसंशयत्वावच्छिन्नजन्यतानिरूपितं यद्धूमवान्पर्वत इत्याकारकधर्मितावच्छेदकप्रकारकज्ञानीयजनकत्वं तन्नियता या धूमविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यता तन्निरूपकजनकताशालि—पर्वतो धूमवानित्यादिपक्षधर्मताज्ञानविषयत्वमादाय विशिष्टवैशिष्ट्यावगाहि–अनुभवत्वावच्छिन्नजन्यतायां स्मृतिसाधारणधर्मितावच्छेदकप्रकारकज्ञानजनकताव्यापकत्वाभावेन तादृशजनकताव्यापकतानिवेशपक्षे धूमादावतिप्रसङ्गाभावेऽपि तादृशजन्यताव्याप्यत्वनिवेशकल्पेऽतिप्रसङ्गो दुर्वार एवेति वाच्यम्, एतत्समाधानस्याग्रे वक्ष्यमाणत्वात् ॥ ३ ॥

अथवा उक्ततिप्रसङ्गवारणाय तादृशजनकतावच्छेदकावच्छिन्नत्वमेव जनकतायां निवेशनीयम्, अव्यवहितोत्तरत्वसम्बन्धेन साधारण्यादिविशिष्टधर्मवत्ताज्ञानविशिष्टतत्तत्कोट्युपस्थितित्वरूपतादृशज्ञानजन्यतावच्छेदकधर्म एव संशयजनकतावच्छेदकः न तु तादृशज्ञानजन्यतत्कोट्युपस्थितित्वं जन्यतापेक्षया तद्घटकस्याव्यवहितोत्तरत्वस्य लघुत्वादत आत्माश्रयेण साधारणादिधर्मवत्ताज्ञानजन्यत्वस्य तादृशज्ञानजन्यतानवच्छेदकत्वेऽपि न क्षतिरिति भट्टाचार्येणोक्तम् ॥

(१) अत्रापि निरुक्तरीत्या संशयत्वावच्छिन्नत्वप्रवेशो व्यर्थ इति चिन्तावीजम्।

अथात्र संशयजनकताच्छेदककोटौ साधारणादिधर्मवत्धर्मिज्ञानजन्यत्वस्य प्रवेशेऽपि न क्षतिः प्रकृते संशयजनकतावच्छेदककोटिप्रविष्टा या साधारणादिधर्मवत्ताज्ञानजन्यता तद्घटकाव्यवहितोत्तरत्वपर्याप्तावच्छेदकताकजन्यतानिरूपिता या साधारणणादिधर्मवत्ताज्ञाननिष्ठजनकता तदाश्रयपक्षधर्मताज्ञानविषयत्वमादायैव सर्वत्र लक्षणसमन्वयादिति। न च जनकतावच्छेदकताया यदि पर्याप्तिर्निवेश्यते तदाऽसंभवः क्षतिरिति वाच्यम्। जनकतावच्छेदकतायाश्च पर्याप्तिर्न निवेश्यते इति स्वयमेवोक्तत्वात् इति चेत्।

उच्यते–यतो जन्यताया अव्यवहितोत्तरत्वघटितत्वमत एव तदपेक्षया लघुत्वेन तद्घटकाव्यवहितोत्तरत्वस्य संशयजनकतावच्छेदकत्वोक्तिसंगतिः अन्यथा जन्यताया अतिरिक्तत्वे जन्यतापेक्षयाऽव्यवहितोत्तरत्वस्य लघुत्वाभावेन जन्यताया जनकतावच्छेदकत्वखण्डनस्याप्रसक्त्यापत्तेः। एवञ्च जन्यतापेक्षया तद्घटकाव्यवहितोत्तरत्वस्य लघुत्वादिति ग्रन्थेन जन्यत्वं नातिरिक्तपदार्थः निन्त्वव्यवहितोत्तरत्वघटितमेवेति ज्ञापनात्। अत एव आत्माश्रयेत्यादिग्रन्थस्य यतो जन्यताया नातिरिक्तत्वम् अतः आत्मश्रयभयेन तस्या जन्यतानवच्छेकत्वेऽपि न क्षतिर्नाऽसंभवः, अन्यथा जन्यताया अतिरिक्तत्वेऽसंभवरूप एव क्षतिरित्यर्थ एव तात्पर्यम्, अत एव जन्यत्वस्य स्वघटकाव्यवहितोत्तरत्वाऽपेक्षया गुरुत्वेन संशयजनकतानवच्छेदकत्वादेव न क्षतिर्नाऽसंभव इत्यर्थ इति न काप्यनुपपत्तिरिति ध्येयम्[1] ॥४॥

न चैवं साध्यसंशयत्वनिवेशनं व्यर्थं यत्किञ्चिज्जनकताबच्छेदकावच्छिन्नजन्यतानिवेशनैवोपपत्तेः, नित्यत्वतदभावविषयकज्ञानवत्ताज्ञानजन्यतावच्छेदकत्वस्याव्यवहितोत्तरत्वसम्बन्धेन तादृशज्ञानविशिष्टनित्यत्वादिविषयकोपस्थितित्वस्य किञ्चित्कार्यं प्रति जनकतावच्छेदकत्वाभावेनाऽतिप्रसङ्गाभावादिति वाच्यम्। तथासतिबह्न्यादौ साध्ये रासभसाहचर्यादिप्र-

---

१ वस्तुतस्तु उपस्थितित्वस्य साधारणादिधर्मवत्ताज्ञानजन्यतावच्छेदककोटौ प्रवेशपक्ष एवैतदुक्तत्वात् तत्पक्षे जनकतावच्छेदककेवलस्मृतित्वमादायातिप्रसङ्गभिया उभयत्रैव पर्याप्तिनिवेशस्यावश्यकतयाऽव्यवहितोत्तरत्वघटितजन्यत्वस्यजनकतावच्छेदकत्वेपि क्षतिसंभवादिति ध्येयम्।

कारताकज्ञानमादाय धूमादावतिप्रसंगापातात्प्रकृतसाध्यसंशयजनकताया अवश्यं निवेशनीयत्वादिति भट्टाचार्येणोक्तम् ॥

अथात्र प्रागुक्तयुक्त्या प्रकृतसाध्यसन्देहजनकतापदेन प्रकृतसाध्यसंशयत्वन्यूनवृत्तिजन्यतानिरूपितजनकत्वमेव विवक्षणीयम् । तच्च न्यूनवृत्तित्वं यदि प्रकृतसाध्यसन्देहनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति तादृशसंशयनिष्ठत्वरूपं तदा साध्यसंशयत्वोपादानेऽपि रासभतदभावसाहचर्यादिप्रकारकज्ञानजन्यतामादायातिव्याप्तितादवस्थ्यमेव रासभतभावसहचरितधर्मवत्ताज्ञानजन्यकोट्युपस्थितिजन्यतायामुक्तसाध्यसंशयत्वन्यूनवृत्तित्वस्याक्षतत्वात् । नाऽपि साध्यसंशयत्वव्याप्यत्वमेव तन्न्यूनवृत्तित्वं—साध्यतदभावसहचरितधर्मवत्ताज्ञानजन्यकोट्युपस्थित्यव्यवहितोत्तरत्वस्यघटादिज्ञानसाधारणतयातादृशोपस्थितिजन्यतायामपि साध्यसंशयत्वव्याप्यत्वाभावादिति चेत् ।

अत्रोच्यते—साध्यसंशयत्वन्यूनवृत्तित्वं साध्यसंशयनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति मुख्यविशेष्यताद्वयशून्यसाध्यसंशयनिष्ठत्वम्, रासभादिसंशयजन्यतायाश्च मुख्यविशेष्यताद्वयशून्यसाध्यसंशयनिष्ठत्वाऽभावान्न निरुक्तन्यूनवृत्तित्वम् । यदि च संशये विशेष्यताद्वयमेव स्वीक्रियते, (तदा स्वभिन्नत्व-स्वानवच्छिन्नत्व-स्वनिरूपकज्ञानीयत्वैतत्रितयसम्बन्धेन मुख्यविशेष्यताविशिष्टमुख्यविशेष्यताशून्यसाध्यसंशयनिष्ठत्वमेव न्यूनवृत्तित्वघटकं वाच्यमिति । इदमपि संशयीयविशेष्यताद्वयस्यावच्छेद्यावच्छेदकभावमभ्युपेत्य ।)

वस्तुतस्तु किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानन्तः पातित्वे सति किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितसाध्याभावत्वावच्छिन्नप्रकारतानन्तःपातिनी या विषयता तच्छून्यसंशयनिष्ठत्वमेव न्यूनवृत्तित्वघटकं वक्तव्यमतो न काप्यनुपपत्तिरिति ध्येयम् ॥ ५ ॥

न च कोटिद्वयपदस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नतदभावपरतया प्रकृतसाध्यतावच्छेदकावच्छिन्नादिविषयकोपस्थितित्वघटितधर्मावच्छिन्नज-

---

१ अव्यापकत्वे सतीत्यर्थः ।

जनकतावच्छेदकावच्छिन्नजन्यतानिवेशान्नायमतिप्रसङ्ग इति वाच्यम् । एवं सत्येतल्लाभायैव साध्यसंशयोपादानमिति भट्टाचार्येणोक्तम् ।

अत्रेदमवधेयम्—प्रकृतसाध्यतावच्छेदकावच्छिन्नादिविषयकोपस्थितित्व घटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतापदेन प्रकृतसाध्यविषयकोपस्थितित्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यता प्रकृतसाध्याभावोपस्थितित्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यता च वक्तव्या तत्रोभयदिशि जनकतायामेव प्रकृतसाध्यसंशयनिरूपितत्वमवश्यं निवेशनीयमिति, अन्यथा प्रथमजनकतायां तदवेशे गोत्ववानश्वत्वादित्यादिविरुद्धे कालिकेन गोत्वकोटिसंशयस्य साध्यताघटकसमवायसम्बन्धेन प्रकृतसाध्याभावकोटिकसंशयस्य च जनकीभूत कोटयुपस्थितिजनकंकालिकेन गोत्ववद्वृत्तिसमवायसम्बन्धावच्छिन्नप्रतियोगिताकगोत्वाभाववद्वृत्ति–अश्वत्ववदिदमित्यादिज्ञानमादायातिव्याप्तिः ।

एवं द्वितीयादिजनकतायां तदनिवेशेऽपि वह्निमान् धूमादित्यादौ व्याप्ये संयोगेन वह्निमद्वृत्ति कालिकेन वह्न्यभाववद्वृत्तिधूमवानित्यादिज्ञानमादायातिव्याप्तिरिति कथमुक्तमेतल्लाभायैव संशयपदोपादानमिति ।

न चोभयत्र जनकतायामेव साध्यतावच्छेदकसंसर्गावच्छिन्नकोटिताकसंशयनिरूपितत्वमात्रनिवेशेनैव उक्तातिप्रसङ्गवारणसंभवे संशयेप्रकृतसाध्यीयत्वखण्डन एवैतत्ग्रन्थस्य तात्पर्यमिति वाच्यम् ।

विशेषणतया घटत्वाभावसाध्यकघटत्वादिविरुद्धहेतौ कालिकेन घटत्वाभावकोटिकस्य विशेषणतयाकालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभावकोटिकसंशयस्य साध्यताघटकसम्बन्धेन प्रकृतसाध्याभावकोटिक संशयस्य च जनकीभूतकोटयुपस्थितिजनकं कालिकेन घटत्वाभाववद्वृत्तिविशेषणतासम्बन्धनेकान्तिकसम्बन्धावच्छिन्न प्रतियोगिताकघटत्वाभावाभाववद्वृत्तिघटत्ववानित्यादिज्ञानमादायातिव्याप्तिवारणाय प्रथमजनकतायां विशेषणतया धूमाभावसाध्यकवह्न्यभावादिरूपव्याप्यहेतौ कालिकेन संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावाभावत्वावच्छिन्नविशेषणतावच्छिन्नप्रतियोगिताकाभावकोटिसंशयस्य विशेषणतया प्रकृतसाध्यकोटिसंशयस्य च जनकीभूतकोट्युपस्थितिजनकं कालिकेन धूमाभावाभाववद्वृत्तिनिर्धूमवृत्ति वह्न्यभाववानयमित्यादिज्ञानमादायातिव्याप्तिवारणाय द्वितीयजनक-

तायां च प्रकृतसाध्यसंशयनिरूपितत्वनिवेशस्याप्यावश्यकत्वात् अत एवैत-दतिव्याप्तिभियैव यदि चेत्यादिन ऽभिधास्यमाने एतत्कल्पसमशीलद्वितीय-कल्पे संशयपदद्वयोपादानं स्वयमेव करिष्यतीति चेत् ।

अत्र केचित्—उभयकोटिसाहचर्यावच्छिन्नप्रकारताशालिज्ञानजन्यको-ट्युपस्थितेरेव संशयजनकत्वं न तु प्रत्येकसाहचर्यावच्छिन्नप्रकारताशालि ज्ञानजन्यकोट्युपस्थितेरिति मते उक्तातिप्रसङ्गाभावात् तन्मतमालम्ब्यैवैत-ज्ञाभायेत्यादिग्रन्थाभिधानान्नासङ्गतिरित्याहुः ।

वस्तुतस्तु वक्ष्यमाणसहकारितावच्छेदकनिवेश निष्कृष्टकल्पाभिप्राये-णैवैतद्ग्रन्थोऽभिहितः । तत्कल्पे साध्यसशयनिवेशस्याप्रयोजकत्वात् इति ध्येयम् ॥ ६ ॥

अथ वह्निसाहचर्यमात्रेण वह्न्यभावसाहचर्यमात्रेण वाऽवच्छिन्नाया व्याप्यस्य विरुद्धस्य वा प्रकारता तस्याश्चोद्बोधकान्तरवशात् साध्यतदभा-वविषयकसमूहालंबनरूपसाध्यतदभावोपस्थितिजनकीभूतज्ञानीयतया प्रत्येकं साध्योपस्थितिनिष्ठजन्यतानिरूपितजनकतायां साध्याभावोपस्थितिनिष्ठज-न्यतानिरूतितजनकतायां चावच्छेदकत्वेनातिप्रसङ्गः । यदि च साध्यावि-शेषणकोपस्थितिवृत्तिसाध्यसंशयजनकतानियतं यज्जन्यत्वं तन्निरूपितायां तादृशोपस्थित्यवृत्तिसाध्यसंदेहजनकतानियतं यज्जन्यत्वं तन्निरूपितायां च जनकतायामवच्छेदकीभूता या प्रकारता तस्या विवक्षितत्वान्नातिप्रसङ्ग इति भट्टाचार्येणोक्तम् ।

अत्र कल्पे प्रथमं साध्यसंशयपदं जनकतायां साध्यसंशयत्वावच्छिन्न जन्यतानिरूपितत्वलाभाय द्वितीयमपि तदर्थमेवान्यथा गोत्ववान् अश्वत्वा-दित्यादिविरुद्धे वह्निमान् धूमादित्यादिव्याप्ये च गोत्वाभाववद्वृत्ति गोत्वव-द्वृत्ति—द्रवत्ववद्वृत्ति—अश्वत्ववानित्यादिज्ञानीयप्रकारतामादाय वह्निमद्वृत्ति-वह्न्यभाववद्रासभवद्वृत्तिधूमवानत्यादिज्ञानीयप्रकारतामादाय चातिव्या-प्त्यापत्तेः ।

केवलसाध्यसहचरितहेतुमत्ताज्ञानजन्यतायां केवलसाध्याभावसहच-रितहेतुमत्ताज्ञानजन्यतायां च समूहालम्बनसाध्यतदभावोपस्थितौ साध्य-विषयकोपस्थितित्वावच्छिन्नजनकतायां साध्याभावविषयकोपस्थितित्वाव-

च्छिन्नजनकतायांच सामाधिकरण्याद्व्याप्यविरुद्धयोरतिव्याप्तिरतो नियतपदद्वयम् ।

न च विशिष्टजनकतासामानाधिकरण्यनिवेशनैव पूर्वोक्तदोषवारणसंभवेऽलं नियतपदद्वयेनेति वाच्यम् । वह्निसहचरितमीनसहचरितजलवत्ताज्ञानजन्यसमूहालम्बनोपस्थितौ तादृशजनकतासमानाधिकरणमनीसहचरितवत्ताज्ञानजन्यतामादाय वह्निमान् जलादित्यादिविरुद्धे समूहालम्बनोपस्थितौ तादृशजनकतासमानाधिकरणरासभसहचरितधूमवत्ताज्ञानजन्यतामादाय वह्निमान् धूमादित्यादिव्याप्ये चातिव्याप्तिरतो नियतपदद्वयम् [१]अयंपाठः—हस्तलिखित पुस्तकेनास्ति ।

अथ साध्याविशेषणकोपस्थितिपदेन साध्यतावच्छेदकावच्छिन्नविशेषणताशून्योपस्थितिरेव वाच्या अन्यथा साध्यनिष्ठविशेषणताशून्योपस्थितेरप्रसिध्या प्रमेयसाध्यकव्यभिचारिण्यव्याप्त्यापत्तेः, एवं च स्वरूपतो द्रव्यत्वादिसाध्यकस्थले साध्यतावच्छेदकाप्रसिद्ध्याऽव्याप्तिः[२] । न च स्वरूपतो द्रव्यत्वसाध्यकस्थले साध्यतिष्ठविशेषणताशून्योपस्थितिरेव निवेशनीया तथाच द्रव्यत्वतदभावसहचरितधर्मवत्ताज्ञानजन्यद्रव्यत्वमित्याकारकोपस्थितेरेव तादृशत्वान्नानुपपत्तिरिति वाच्यम् । द्रव्यत्वमित्याकारकोपस्थितेरपि द्रव्यत्वत्वघटकतया स्वरूपतो द्रव्यत्वाविशेषणकत्वादिति चेत्,

उच्यते—स्वरूपतो द्रव्यत्वादिसाध्यकस्थले साध्यावच्छिन्नविशेषणता-

---

(१) अत्र तादृशवृत्तित्वं जनकतायां न तु जन्यतायां तथासति वह्न्यभावसहचरितजलवत्ताज्ञानजन्यताया घटज्ञानादिसाधारणतया साध्याविशेषणकोपस्थितिवृत्तित्वेन साध्याभावोपस्थितित्वावच्छिन्नजनकतासमनियततया च तादृशजन्यतामादाय वह्निमान् जलादितिविरुद्धेऽतिव्याप्तिरतः साध्याविशेषणकोपस्थितिवृत्तित्वं जनकतायां निवेश्यम् । एवं साध्याविशेषणकोपस्थित्यवृत्तित्वस्य जन्यतायां निवेशोऽसम्भवः सर्वस्या एव जन्यताया घटज्ञानादिसाधारणतया तादृशावृत्तित्वाभावादिति ॥

(२) न च साध्यतावच्छेदकसम्बन्धेन वृत्तिसाध्यनिष्ठत्वनिवेशान्नाप्रसिद्धिरिति वाच्यम् तथासति वह्नित्वेन घटावगाहिवह्न्यभावोपस्थितित्वावच्छिन्नजनकतामादाय विरुद्धेऽतिव्याप्तेर्दुर्वारत्वात् । न च तथापि साध्यनिष्ठमुख्यविशेष्यतामिव मुख्यविशेष्यताशून्यत्वनिवेशान्नातिव्याप्तिरिति वाच्यम् वह्न्यभावत्वेन वह्न्यभावावगाह्युपस्थितिमादाय तत्रातिव्याप्तेः ।

शून्योपस्थितिरेव निवेशनीया तत्तदभावसहचरितधर्मवत्ताज्ञानजन्योपस्थितिवत् तत्तद्वदन्योन्याभाववद्वृत्तिधर्मवत्ताज्ञानजन्योपस्थितेरपि संशायकतया उक्तस्थले द्रव्यतदन्यवृत्तिधर्मवानित्याकारकज्ञानजन्यद्रव्यमित्याकारकोपस्थितिमादायैव लक्षणसमन्वयादिति ध्येयम् ॥

अथ साध्यसंशयत्वावच्छिन्नजन्यतानिरूपितजनकताविशिष्टप्रकारताविवक्षणेनैव प्रत्येकसाहचर्यमात्रावच्छिन्नप्रकारताकज्ञानजन्योद्बोधकान्तराधीनसाध्यतदभावविषयकसमूहालम्बनोपस्थितिजनकतामादायातिव्याप्तिवारणसम्भवेन साध्याविशेषणकेत्यादिगुरुतरारम्भो निष्फलः ॥ जनकतावैशिष्ट्यं च स्वनियतजन्यतानिरूपितजनकतावच्छेदकत्व-स्वभिन्नसाध्यसंशयजनकतानियतजन्यतानिरूपितजनकतावच्छेदकत्वोभयसम्बन्धेन इति चेन्न । स्वरूपसम्बन्धात्मकजनकताया उपस्थितिभेदेन भिन्नत्वे उक्तसमूहालम्बनोपस्थितिमादायोक्तातिव्याप्तितादवस्थ्यात् उक्तपरम्परायाः संसर्गत्वे मानाभावाच्चेति ध्येयम् ।

अथात्राश्वत्ववान् गौर्न वेत्यादिसंशयत्वावच्छिन्नजन्यतानिरूपितसाध्याविशेषणकोपस्थितिवृत्तिधर्म्मितावच्छेदकप्रकारकज्ञानत्वावच्छिन्नजनकतानियतं यदश्वत्वविशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यत्वं तन्निरूपितजनकतायां साध्याविशषणकोपस्थित्यवृत्तिसाध्यसंशसयजनकतानियतजन्यतानिरूपितजनकतायां चावच्छेदकींभूता या गोत्वाभाववद्वृत्त्यश्वत्ववानित्यादिज्ञानीयप्रकारता तामादाय गौरश्वत्वादित्यादिविरुद्धे, वह्न्यभावकालीनधूमवान् वह्निमान्न वेत्यादिसंशयत्वावच्छिन्नजन्यतानिरूपितसाध्याविशेषणकोपस्थित्यवृत्तिधर्म्मितावच्छेदकप्रकारकज्ञानत्वावच्छिन्नजनकतानियतं यद्वह्न्यभावकालीनधूमविशिष्टवैशिष्ठ्यागाहिबुद्धित्वावच्छिन्नजन्यत्वं तन्निरूपितजनकतायां साध्याविशेषणकोपस्थितिवृत्तिसाध्यसंशयजनकतानियतजन्यतानिफपितजनकतायां चावच्छेदकीभूता या वह्निमद्वृत्तिवह्न्यभावकालीनधूमवानित्यादिज्ञानीयप्रकारतता तामादाय वह्निमान्धूमादित्यादिव्याप्ये चातिव्याप्तिः ।

---

(१) स्वावच्छेदकावच्छिन्नभिन्नत्वनिवेशे न दोष इत्यत आह उक्तेति । मानाभाव इति विनिगमनाविरहेण जनकता नाना तथा चान्यजनकतामादायातिव्याप्तिरिति भावः ।

न च द्वितीयजन्यतायां मुख्यविशेष्यत्वावच्छिन्नत्वनिवेशान्नायमतिप्रसङ्गः विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यतायां मुख्यविशेष्यत्वावच्छिन्नत्वाभावादिति वाच्यम् । तावतापि वह्न्यभावकालीनधूमवान् पर्वतो वह्निमान्न वेत्यादिसंशयत्वावच्छिन्नजन्यतानिरूपितधर्मितावच्छेदकप्रकारकधर्मिज्ञानत्वाद्यवच्छिन्नजनकतानियतं यद्विशिष्टानुयोगिकवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नजन्यत्वं तन्निरूपितजनकतावच्छेदकीभूतवह्निमद्वृत्ति-वह्न्यभावकालीनधूमवान् पर्वत इत्यादिज्ञानीयप्रकारतामादाय वह्निमान् धूमादित्यादिव्याप्ये एवंरीत्या विरुद्धे चातिव्याप्तेर्दुर्वारत्वादिति चेन्न । द्वितीयजन्यतायामनुभवत्वानवच्छिन्नत्वस्य ज्ञानावच्छिन्नत्वस्य वा निवेशेनैवोक्तातिव्याप्त्यसम्भवादिति ।

न च तथापि वह्न्यभावकालीनालोकवान् पर्वतो वह्निमान्न वेत्यादिसंशयत्वावच्छिन्नजन्यतानिरूपितसाध्याविशेषणकोपस्थित्यवृत्तिधर्मितावच्छेदकप्रकारकज्ञानत्वावच्छिन्नजनकताया नियतं यत्पर्वतो वह्न्यभावकालीनालोकवानित्याकारकानुमितित्वावच्छिन्नपरामर्शजन्यत्वं तन्निरूपितजनकतायां साध्याविशेषणकस्थितिवृत्तिसाध्यसंशयजनकतानियतजन्यतानिरूपितजनकतायां चावच्छेदकीभूता या वह्निमद्वृत्तिवह्न्यभावकालीनालोकव्याप्यधूमवानित्यादिज्ञानीयप्रकारता तामादाय व्याप्यादावतिव्याप्तितादवस्थ्यमेव परामर्शजन्यतायां परामर्शात्मकज्ञानावच्छिन्नत्वसत्त्वादिति वाच्यम् ।

परामर्शजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्यावश्यकतया प्रयोजनविरहेणानुमितित्वाद्यप्रवेशेन परामर्शजन्यत्वस्य परामर्शोत्तरवर्त्तिसंशयाजनकज्ञानादावपि सत्त्वेन परामर्शजन्यतायां साध्यसंशयजनकतानियतत्वाभावादेवोक्तातिव्याप्तेरनवकाशादिति ध्येयम् ॥

यत्तु द्वितीयजन्मतायां स्मृतित्वावच्छिन्नत्वनिवेशान्नोक्तातिप्रसङ्ग इति ॥ तत्तुच्छम्—साधारणादिधर्मवत्ताज्ञानजन्यतावच्छेदककोटावव्यवहितोत्तरत्व निवेशस्यावश्यकतया स्मृतित्वस्य जन्यतानवच्छेदकत्वादिति ।

स्मृतित्वस्य जन्यतानवछेदकत्वे संशयाजनकज्ञानसाधारण्यां साधारणादिधर्मवत्ताज्ञानजन्यतायां यथा संशयजनकतानियतत्वं तथोपपादितं प्रागेव ॥ ७ ॥

एतदस्वरसेनैव वा—साध्याभावविषयकत्वघटितधर्मावच्छिन्नसंशयज

नकतावच्छेदकावच्छिन्नजन्यतानिरूपितायां तादृशधर्मानवच्छिन्नसाध्यविषयकत्वघटितधर्मावच्छिन्नसंशयजनकतावच्छेदकावच्छिन्नजन्य तानिरूपितायां जनकतायामवच्छेदिका या प्रकारता तस्या वा निवेशान्नोक्तदोष इति कल्पान्तरमुक्तं भट्टाचार्येण ।

एतत्कल्पे संशयपदद्वयोपादानव्यावृत्तिः प्रागेव विहिता अथात्र साध्याभावविषयकत्वघटितधर्मानवच्छिन्नजनकतानिवेशेनैव सामञ्जस्ये तादृशजनकतायां साध्यविषयकत्वघटितधर्मावच्छिन्नत्वनिवेशो व्यर्थः । न चाश्वत्ववद्भूतलं गोत्ववन्न वेत्याकारकसंशयं प्रतिया साध्याभावविषयकत्वघटितधर्मावच्छिन्नधर्मितावच्छेदकप्रकारक ज्ञानत्वावच्छिन्नजनकता तदवच्छेदकधर्मावच्छिन्नाश्वत्वविशिष्टवैशिष्ट्यावगाहित्वावच्छिन्नजन्यता निरूपितजनकतावच्छेदकीभूता या गोत्वाभाववद्वृत्त्यश्वत्ववानिति-ज्ञानीयप्रकारता तामादाय गोत्ववान् अश्वत्वादित्यादावतिव्याप्तिवारणाय तन्निवेशनमावश्यकमिति वाच्यम् ।

विशिष्टवैशिष्ट्यावगाहित्वावच्छिन्नजन्यतायां साध्यसंशयजनकतावच्छेदकेतरधर्मावच्छिन्नत्वरूपतादृशजनकतावच्छेदकपर्याप्तावच्छेदकताकत्वविरहादेवोक्तातिव्याप्त्यसम्भवादनुभवत्वादेरपि विशिष्टवैशिष्ट्यावगाहित्वावच्छिन्नजन्यतावच्छेदकघटकत्वात्,

अन्यथोक्तविशेषणदानेऽपि गोत्वकालीनाश्वत्ववद्भूतलं गोत्ववन्न वेत्याकारकसंशयस्यधर्मितावच्छेदकप्रकारकज्ञानमुद्रया साध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नगोत्वकालीनाश्वत्वविविशिष्टवैशिष्ट्याभावगाहिबुद्धित्वावच्छिन्नजन्यतानिरूपित जनकतवच्छेदकीभूतगोत्वाभाववद्वृत्तिगोत्वकालीनाश्वत्ववानित्यादिज्ञानीयप्रकारतामादायातिव्याप्तितादवस्थ्यापत्तेः ॥

न चोक्तज्ञानमादायातिव्याप्तिभियैवैतद्विशेषणं विहाय साध्यमुख्यविशेष्यकत्वावच्छिन्नत्वस्य निवेशान्नासङ्गतिरिति वाच्यम् साध्यमुख्यविशेष्यकत्वावच्छिन्नत्वनिवेशकल्पेऽपि अश्वत्ववद्गोत्वं गोत्ववन्न वेत्याकारकसंशयीयधर्मितावच्छेदकवच्छिन्नजनतायां साध्यमुख्यविशेष्यकत्वावच्छिन्नत्वस्यापि सत्त्वात् तादृ शजनकतावच्छेदकावच्छिविशिष्टवैशिष्ट्यावगाहित्वावच्छिन्नजन्यतामादायोक्तातिव्याप्तेर्दुर्वारत्वादिति ।

एतेन स्मृत्यादिसाधारणविशिष्टवैशिष्ट्यावगाहित्वमेव विशेषणताव-च्छेदकप्रकारकज्ञानजन्यतावच्छेदकमितिमते विशिष्टवैशिष्ट्यावगाहिज्ञान-त्वावच्छिन्नजन्यतामादायोक्तातिव्याप्तिवारणाय साध्यविषयकत्वघटितध-र्मावच्छिन्नत्वनिवेशनमित्यपि परास्तम् ।

तन्मते तद्विशेषणदानेऽप्युक्तरीत्याऽतिव्याप्तेरशक्यपरीहारतया जन्य तायां विशेषणान्तरं प्रक्षिप्यैवोक्तातिव्याप्तेर्वारणीयत्वादिति ।

यत्तु महानसीयवह्निमान् वह्निसामान्याभाववान् वेत्याकारकसंशयजन-कीभूतकोट्युपस्थितिजनकमहानसीयवह्निमद्वृत्तिवह्निसामान्याभाववद्वृत्ति-पर्वतीयधूमवानितिज्ञानीयप्रकारतामादाय वह्निमान् पर्वतीयधूमादित्यादा-वतिव्याप्तिवारणाय साध्यविषयकत्वघटितधर्मावच्छिन्नेति साध्यतावच्छेदक-पर्याप्तावच्छेदकताकविषयताकत्वघटितधर्मावच्छिन्नार्थकमिति।। तच्चिन्त्यम् ।। प्रकृत साध्यसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानिवेशावश्यकत्वस्य प्रागेवाभिहितत्वेन उक्तसंशयजनकताया लक्षणाघटकत्वादेवोक्तातिव्याप्त्य-सम्भवादिति विभावनीयम् ।

परे तु जनकतामां साध्यविषयकत्वघटितधर्मावच्छिन्नत्वानिवेशे वह्न्यभावाभाववद्वृत्तिवह्निमद्वृत्तिधूमवानितिज्ञानीयप्रकारतामादाय ह्रदो वह्न्यभाववान् धूमादित्यादिविरुद्धेऽतिव्याप्तिरुक्तज्ञानीयप्रकारतायां साध्या-भावविषयकत्वघटितधर्मानवच्छिन्ना या वह्निविषयकोपस्थितित्वावच्छि-न्नवह्निमान् वह्न्यभावाभाववानित्याकारकसाध्यसंशय जनकता तदवच्छेद-कावच्छिन्न जन्यतानिरूपित जनकता तदवच्छेकत्वस्य सत्त्वात् ।।

न चोक्तज्ञानीयप्रकारतायां साध्यतावच्छेदकावच्छिन्नकोटिताकसंश-यत्वावच्छिन्न जन्यतानिरूपितजनकतावच्छेदकावच्छिन्न जन्यतानिरूपित-जनकतावच्छेदकत्वाभावादेव नातिव्याप्तिः । वह्निकोटिकसंशयत्ववह्न्य-भावाभावकोटिकसंशयत्वयोरेवोक्तज्ञानजन्योपस्थितिजन्यतावच्छेदकत्वादिति वाच्यम् । साध्यसंशयत्वावच्छिन्नजन्यतापदेन साध्यसंशयत्वन्यूनवृत्तिज-न्यताया एव प्रागुक्तयुक्त्या विवक्षितत्वादित्याहुः ।।

[ अन्ये तु यादृशविषयविशेषे साध्यसंशयसमनियत एव घटसंशयो जायते तत्र तत्साध्यकविरुद्धेतिव्याप्तिः । तथा च साध्याभावसहचरित-त्वावच्छिन्नां साध्याभावविषयेकत्वघटितधर्मावच्छिन्नजनकतानिरूपितजन-

जन्यतानिरुपितजनकतावच्छेदकीभूत (घट) सहचरितत्वावच्छिन्नां प्रकारतामादाय लक्षणगमनादिति साध्यविषयकत्वघटितधर्मावच्छिन्नत्वनिवेशः। तथाच घटसहचरितवत्ताज्ञानजन्योपस्थितिस्थितित्वावच्छिन्नजनकतायां तादृशविषयकत्वानवच्छिन्नत्वादिति वदन्ति ॥ ८ ॥ ]

अथवा साध्यसन्देहप्रयोजिका या साध्यस्य तदभावस्य चोपस्थितिविषयता तदुभयप्रयोजकप्रकारतावत्त्वस्य विवक्षितत्वात्। उभयसाहचर्यावच्छिन्नप्रकारताया एव तथात्वान्नातिप्रसङ्गः साध्यस्योपस्थितिविषयता च साध्याभावविषयतानन्तर्भूता ग्राह्या तेन वह्न्यभावसाहचर्यावच्छिन्नप्रकारताया वह्निविषयताप्रयोजकत्वेऽपि विरुद्धे नातिव्याप्तिरिति भट्टाचार्येणोक्तम्-इतिपाठः काचित्कः।

अथैतत्कल्पेऽपि यत्र नित्यत्वतदभावविषयकज्ञानवानयं नित्यत्वतदभावसहचरितप्रमेयत्ववांश्चायमित्याकारकज्ञानाभ्यां नित्यत्वतदभावविषयिण्येकैवोपस्थितिर्जनिता तत्र तादृशोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वमादाय नित्यत्वसाध्यकज्ञानहेतौ प्रागुक्तातिव्याप्तिर्दुर्वारैव तादृशोपस्थितिव्यक्तेः साधारणधर्मवत्ताज्ञानजन्यत्वेन तदीयसाध्यतदभावविषयतायाः साध्यसंदेहप्रयोजकत्वसत्वेन तादृशोभयविषयताप्रयोजकत्वस्य नित्यत्वतदभावविषयक ज्ञानत्वावच्छिन्नप्रकारतायामपि सत्त्वात् इति चेन्न।

साध्यस्योपस्थितिविषयतानिष्ठसाध्यसान्देहत्वावच्छिन्नप्रयोज्यतानियतप्रयोज्यताकप्रयोजकतावत्त्वे सति साध्याभावस्योपस्थितिविषयतानिष्ठसाध्यसन्देहत्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकतानियतयोज्यतानिरूपितप्रयोजकतावत्प्रकारताया विवक्षितत्वादेवोक्तातिव्याप्तिवारणसम्भवान्नित्यत्वतदभावविषयकज्ञानवत्ताज्ञानप्रयोज्यतायाः साध्यसन्देहाजनकोपस्थितिषयतासाधारणत्वेन साध्यसंशयप्रयोजकताव्यभिचारित्वादिति ध्येयम् ॥

साध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदको यो धर्मस्तदवच्छिन्नजन्यतानिरूपितायां तदवच्छिन्नसहकारितावच्छदकसाध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायां च जनकतायायवच्छेदकोभूतप्रकारतायाविवेशेन नातिउसङ्ग इति भट्टाचार्येणोक्तम् ॥

अत्र महानसीयवह्निमद्व्यावृत्तवह्न्यभाववद्व्यावृत्तपर्वतीयधूमवा-

नितिज्ञानीयप्रकारतामादाय वह्निमान् पर्वतीयधूमादित्यादावतिव्याप्तिः—उक्तज्ञानजन्यकोट्युपस्थितेरपि महानसीयवह्निमान् वह्निसामान्याभाववान् वेत्याकारकसंशयजनकत्वादतः साध्यविषयकत्वेऽति साध्यतावच्छेदकपर्याप्तावच्छेदकताकविषयताकत्वार्थकम् ।

तथाच महानसीयवह्निमद्व्यावृत्तधर्मवत्ताज्ञानजन्यमहानसीयवह्न्युपस्थितित्वावच्छिन्नजनकतायां साध्यतावच्छेदपर्याप्तावच्छेदकताकविषयताकत्वावच्छिन्नत्वाभावान्नोक्तातिव्याप्तिः ।

एवं महानसीयवह्निमद्व्यावृत्तवह्न्यभाववव्द्यावृत्तपर्वतीयधूमवानिति ज्ञानीयप्रकारतामादाय महानसीयवह्निमान् पर्वयीयधूमादित्यादिविरुद्धेऽतिव्याप्तिवारणाय द्वितीयजनकतायां साध्याभावविषयकत्वावच्छिन्नेति । अत्र साध्यविषयकत्वं साध्यमुख्यविशेष्यकत्वरूपं ग्राह्यम् । तेन वह्निकालीनमहानसीयवह्निमान् वह्निसामान्याभाववान् वेत्याकारकसंशयजनककोट्युपस्थितिजनकतावच्छेदकीभूतवह्निकालीनमहानसीयवह्निमद्व्यावृत्तवह्न्यभाववव्द्यावृत्तपर्वतीयधूमवानितिज्ञानीयप्रकारतामादाय वह्निमान् पर्वतीयधूमादित्यादौ नातिव्याप्तिः ॥

केचित्तु कालिकसम्बन्धेन संयोगसम्बन्धावच्छिन्नवह्न्यभावकोटिकसंशयजनककोट्युपस्थितिजनककालिकेन वह्न्यभाववद्वृत्तिकालिकसम्बन्धावच्छिन्नवह्न्यभावाभाववद्वृत्तिधूमवानिति ज्ञानमादाय वह्निमान् धूमादित्यादावतिव्याप्तिवारणाय साध्यविषयकत्वेऽति साध्यमुख्यविशेष्यकार्थकम् ।

एवं कालिकेन वह्निकोटिकसंशयजनकीभूतकोट्युपस्थितिजनकं कालिकेन वह्निकोटिकसंशयजनकीभूतकोट्युपस्थितिजनकं कालिकेन वह्निमद्वृत्ति विशेषणतया कालिकसम्बन्धावच्छिन्नवह्न्यभाववद्वृत्ति धूमवानितिज्ञानमादाय तत्रैवातिव्याप्तिवारणाय द्वितीयजनकतायां साध्याभावविषयकत्वावच्छिन्नेति ।

न च साध्यातावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावविषयकत्वावच्छिन्नत्वमात्रविवेशेनाप्युक्तातिव्याप्तिवारणसम्भवात् प्रकृतसाध्याभावनिवेशो व्यर्थइतिवाच्यम् महानसीयवह्नितादृशवह्न्यभावसहचरितधूमवान् इत्यादिज्ञानीयप्रकारतामादाय वह्निमान् धूमादि त्यादावतिव्याप्तिवा-

रकत्वात्। न च साध्यविषयकत्वे साध्यतावच्छेदकातिरिक्तनिष्ठप्रकारत्वा-निरूपितत्वं निवेश्यं तावतैव नोक्तातिव्याप्तिरिति वाच्यम् एवमपि समाना-धिकरणत्वसम्बन्धेन महानसीयत्वविशिष्टवह्नित्वावच्छिन्नकोटिकसंशयजन-ककोट्युपस्थितिजनकज्ञानमादायोक्तातिव्याप्तितादवस्थ्यात्।

न चैवमपि साध्यविषयतायां साध्यतावच्छेदकनिष्ठनिरवच्छिन्नप्रका-रतानिरूपितत्वस्य निरवच्छिन्नसाध्यतावच्छेदकतास्थले, सावच्छिन्नसा-ध्यतावच्छेदकतास्थले, साध्यतावच्छेदकतावच्छेदकपर्याप्तावच्छेदकप्रकारता-निरूपितत्वस्य निवेशान्नातिव्याप्तिरिति वाच्यम्। तावताप्यैकोक्त्यसम्भ-वात् साध्याभावविषयकत्वेत्यत्र साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रति-योगिताकाभावविषयकत्वनिवेशेनैवातिव्याप्तिविरहेण तदपेक्षयोक्तप्रयासे गौ-रवाच्चेत्याहुः। [ तच्चिन्त्यम्। ]

अत्र कल्पे संशयत्वं न निवेश्यते प्रयोजनाभावात् ॥ यश्च क्वचित् पुस्तके संशयजनकतेति पाठो दृश्यते स च मूले साध्यसंशयेत्यनुरोध्येत्य-वधेयम् ॥

अत्र च साध्यविषमकत्वघटित धर्मावच्छिन्नजनकतावच्छेदकीभूतयत् धर्मावच्छिन्नसहकारितावच्छेदकावच्छिन्नजन्यत्वमेवं साध्याभावविषयक-त्वघटितधर्मावच्छिन्नजनकतावच्छेदकीभूततद्धर्मावच्छिन्नसहकारितावच्छेद-कावच्छिन्नजन्यत्वमेव निवेश्यम्, अन्यथा सामान्यतः साध्यविषयकत्वघ-टितधर्मावच्छिन्नजनकतावच्छेदकधर्मावच्छिन्नसहकारितावच्छेदकावच्छि-न्नजन्यतानिरूपितजनकतावच्छेदिका सती साध्यविषयकत्वघटितधर्माव-च्छिन्नजनकतावच्छेदकावच्छिन्नसहकारितावच्छेदकसाध्याभावविषयकत्व-घटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतावच्छे-दकीभूता या प्रकारतेत्युक्तौ वह्निमद्वृत्तिवह्न्यभाववद्वृत्तिधूमवानिति ज्ञानमादायातिप्रसङ्गो दुर्वार एव–वह्न्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्यो-पस्थितित्वस्यापि साध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकीभू-तवह्निमद्वृत्तिधर्मवत्ताज्ञानजन्योपस्थितित्वावच्छिन्न सहकारितावच्छेदक-त्वात्, एतन्निवेशसूचनायैव साध्यविषयकत्वघटितधर्मावच्छिन्नजनकता-वच्छेदको यो धर्म इत्युक्तं तथा चोक्तज्ञानीयप्रकारतायां साध्यविषयकत्वघ-टितधर्मावच्छिजनकतावच्छेदकीभूतवह्निमद्वृत्तिधर्मवत्ताज्ञानजन्योप स्थिति-

त्वरूपयादृशधर्मावच्छिजन्यतानिरूपितजनकतावच्छेदकत्वं वह्न्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्योपस्थितित्वस्य तादृशधर्मावच्छिन्नसहकारितावच्छेदकत्वाभावान्नातिव्याप्तिरिति भावः ॥

अनुगमस्तु—साध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकधर्मविशिष्टप्रकारत्वम् । वैशिष्ट्यं च स्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व—स्वावच्छि सहकारितावच्छेदकीभूतसाध्याभावविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपित जनकतावच्छेदकत्वोभयसम्बन्धेनेति ॥१०॥

तदवच्छिन्नसहकारितावच्छेदकत्वं च तदवच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्स्वावच्छिन्नकत्वमित्युक्तं भट्टाचार्येण ॥

अत्र तदवच्छिन्ने स्वावच्छिन्नजनकतानिरूपितजन्यताशालित्वस्वाभाववद्वृत्तिस्वाघटकधर्मावच्छिन्नजनकतानिरूपितजन्यताशाल्युपस्थितिमत्त्वोभयसम्बन्धेन धर्मविशिष्टान्यत्वं निवेशनीयम्, नातो वह्निमद्वृत्तिधूमवत्ताज्ञानजन्योपस्थितित्वावच्छिन्नाया वह्निमद्वृत्तिधूमवान् वह्निमदवृत्तिजलवानितिज्ञानद्वयजन्योपस्थितिव्यक्तेरसमवधानप्रयुक्तस्य फलोपधायकत्वाभावस्य केवलवन्ह्यभावस्य केवलवन्ह्यभाववदवृत्तिधर्मादिमत्ताज्ञानजन्योपस्थितावेव सत्त्वेऽप्यसाधारणधर्मवत्ताज्ञानजन्योपस्थितिसाधारणधर्मवत्ताज्ञानजन्योपस्थित्योः परस्परसहकारिभावः ।

स्वपदेन साधारणधर्मवद्धर्मिज्ञानत्वमादाय तदघटकीभूतधर्मिविषयतानिरूपितसाधारण्याद्यवच्छिन्नप्रकारताकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताशालित्वस्य केवलसाधारणधर्मवत्ताज्ञानजन्योपस्थितावपि सत्त्वाद्धर्मविशिष्टान्योपस्थित्यप्रसिद्धिः स्यादतः स्वभाववद्वृत्तित्वनिवेशः ।

एवं वह्निविषयकस्मृतिं प्रति वह्निविषयकज्ञानत्वेनापि जनकत्वसत्त्वात् स्वाभाववद्वृत्तिवह्निविषयकज्ञानत्वमादायतथैवाप्रसिद्धिः स्यादतः स्वाघटकत्वनिवेशः ।

वह्निविषयकज्ञानत्वं च न स्वाघटकम् जन्यता च स्मृतित्वावच्छिन्ना ग्राह्या, तेन जन्यताद्यवच्छिन्नं प्रति कालत्वादिना जनकतामादय नाप्रसिद्धिः ।

अथवा संसर्गघटकजन्यतायां ज्ञानावच्छिन्नत्वमेव निवेश्यम्, तेन प्रगुक्तयुक्त्या स्मृतित्वस्य साधारणादिधर्मवत्ताज्ञानजन्यतानवच्छेदकत्वेऽपि

न क्षतिः, न वा स्मृतिंप्रति संस्कारत्वेन जनकतामादायाप्रसिद्धिः । एवं च स्वाघटकत्वमप्यनुपादेयमेव । द्वितीयसंसर्गघटकोपस्थितिमत्त्वं च सामानाधिकरण्य-समानकालीनत्वोभयसम्बन्धेन ।

अथवा तदवच्छिन्ने धर्मविशिष्टान्यत्वमनिवेश्य तदवच्छिन्नासमवधानप्रयुक्तत्वपदेन तदवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यत्वमेव निवेशनीयं तावतैवोक्तदोषवारणसम्भवात् । एवं स्वावच्छिन्नकत्वमित्यत्रापि स्वावच्छिन्ने निरुक्तोभयसम्बन्सेन धर्मविशिष्टान्यत्वं निवेशनीयम्, तेन केवलसाध्यवद्वृत्तिधर्मवत्ताज्ञानादिजन्योपस्थितित्वावच्छिन्नासमवधानप्रयुक्तस्य फलोपधायकत्वाभावस्य साध्याभाववद्वृत्तिधर्मवत्ताज्ञानजन्योपस्थितिकालीनसाध्याभाववदवृत्तिधर्मवत्ताज्ञानजन्योपस्थितौ सत्त्वेऽपि नोक्तदोषतादवस्थ्यम् ॥

यत्तु तत्समानाधिकरणाभावप्रतियोगिधर्मावच्छिन्नासमवधानाप्रयुक्तत्वविशिष्टतदवच्छिन्नासमवधानप्रयुक्तत्वस्य विवक्षितत्वान्नोक्तदोषावसरः । वन्ह्यभाववद्वृत्तिधर्मवत्ताज्ञानजन्योपस्थितिकालीनवन्ह्यभाववदवृत्तिधर्मवत्ताज्ञानजन्योपस्थितिनिष्ठस्य फलोपधायकत्वाभावस्य वह्निमदवृत्तिधर्मवत्ताज्ञानादिजन्योपस्थितित्वावच्छिन्नासमाधानप्रयुक्तत्वेऽपि वह्निमद्वृत्तिधर्मवत्ताज्ञानजन्योपस्थितित्वसमानाधिकरणाभावप्रतियोगिधर्मावच्छिन्नासमवधानाप्रयुक्तत्वाभावात्तादृशोपस्थितिनिष्ठफलोपधायकत्वाभावे निरुक्ताभावप्रतियोगि यद्वह्निमदवृत्तिधर्मवत्ताज्ञानजन्योपस्थितित्वं तदवच्छिन्नासमवधानाप्रयुक्तत्वादिति ।

तन्मन्दम्—केवलवन्ह्याभावसहचरितधर्मवत्ताज्ञानजन्योपस्थितिनिष्टफलोपधामकत्वाभावेऽपि निरुक्ताप्रयुक्तत्वविशिष्टवह्निसहचरितधर्मवत्तानजन्योपस्थितित्वावच्छिन्नासमवधानप्रयुत्वाभावात वन्ह्यभावसहचरितधर्मवत्ताज्ञानजन्योपस्थितिनिष्ठफलोपधायकत्वाभावे वन्ह्यभावाभावसहचरितधर्मवत्ताज्ञानजन्योपस्थितित्वावच्छिन्ना समवधानस्यापि प्रयोजभत्वादिति ध्येयम् ॥ ११ ॥

इदं द्व्यणुकं नित्यमणुत्वादित्यादौ साधारणधर्मवद्धर्सिज्ञाननस्य कोटयुपस्थितिं संशयं च प्रति हेतुतया तद्विषये धर्मिणि सद्धेतौ अति प्रसङ्गः स्यादतः पक्षधर्मतेति पक्षपदं धर्मिमात्रपरमिति शिरोमणिः ॥ अत्र समूहाल-

म्बनविषयतामादायातिप्रसङ्गवारणाय कोटिद्वयोपस्थितिजनकतावच्छेदकी भूतविषयताश्रयत्वनिवेशनमावश्यकं सम्बन्धिधिशेष्यकज्ञानादपि सम्बन्धन्तरस्मरणोदयेन तत्कोटिसाहचर्यादिविशिष्टविषयकत्वेनैव हेतुतया धर्मिविषयताया जनकतानवच्छेदकत्वादित्याशङ्क्य, वस्तुतस्तु साध्यसन्देहजनककोटिद्वयोपस्थितिजनकज्ञानविषयकत्वमित्यस्य कोटिद्वयोपस्थितिनिष्ठा या साध्यसन्देहजनकताजन्यतासम्बन्धेनाव्यवहितोत्तरत्वसम्बन्धेन वाऽवच्छिन्नायां तदवच्छेदकतायामवच्छेदिका या विषयता तदाश्रयत्वमर्थः। एवं च साधारणधर्मादिविशेष्यकज्ञानस्य कोटिद्वयस्मारकत्वेऽपि संशये धर्मिभाननियमाय तत्तद्धर्मिकसंशयं प्रति स्वाव्यवहितोत्तरत्वसम्बन्धेन साधारण्यादिविशिष्टधर्मवत्तत्तद्धर्मिज्ञानविशिष्टकोट्युपस्थितित्वेनैव हेतुतेति धर्मि विषयताया अपि तादृशसन्देहजनकतावच्छेदकतायामवच्छेदकत्वादतिव्याप्तिरतः पक्षधर्मतापदोपादानमिति भट्टाचार्येणोक्तम्।

अत्रापि प्रकृतसाध्यसंशयत्वावच्छिन्नजन्यतानिरूपिता या जनकता तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतायामवच्छेदिका सती तदवच्छेदकधर्मावच्छिन्नसहकारितावच्छेदकावच्छिन्नप्रकृतसाध्यसंशयत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतायामवच्छेदिका या विषयता तदाश्रयत्वमिति निष्कर्षो बोध्यः। तेन वन्हिमद्वृत्तिवन्ह्यभाववदवृत्तिधूमवानित्यादिज्ञानमादाय न प्रागुक्तदोषावकाशः।

वन्ह्यभाववान् पर्वतीयधूमादित्यादिविरुद्धे वन्ह्यभाववदवृत्तिमहानसीयवन्हिमदवृत्तिपर्वतीयधूमवानित्यादिज्ञानीयप्रकारतामादायातिव्याप्तिरुक्तज्ञानीयप्रकारतायां प्रकृतसाध्यसंशयत्वावच्छिन्नजन्यतानिरूपिता या वन्ह्यभाववदवृत्तिधूमवत्ताज्ञानजन्यकोट्युपस्थितित्वावच्छिन्नजनकता तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वस्य सत्त्वादतः संशयद्वयोपादानम्।

यदि चात्रापि साध्यविषयकोपस्थितित्वावच्छिन्ना या जनकता तन्निरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावती या विषयता तदाश्रयत्वं विवक्ष्यते तदा साध्यसन्देहपदमनुपादेयमिति ध्येयम्।

अथात्र प्रागुक्तार्थमपहाय धर्मिण्यतिव्याप्तिदानार्थमेतादृशार्थकरणमनुचितमिति चेन्न, प्रागुक्तकल्पापेक्षया लाघवानुसन्धानेनैवैतत्कल्पस्योक्तत्वात् ।

वस्तुतस्तु साधारणधर्मादिविशेष्यकज्ञानस्यापि कोट्युपस्थितिजनकत्वे पूर्वव्याख्यायामसंभव एव स्यात् संशये धर्मिभाननियमायसंशयजनकतावच्छेदककोटौ साधारणादिधर्मवद्धर्मिज्ञानवैशिष्ट्यस्यैव निवेशनीयतया संशयजनकतावच्छेदकेतरानवच्छिन्नत्वरूपसाध्यसंशयजनकतावच्छेदकपर्याप्तावच्छेदकताकत्वस्य साधारणधर्मादिज्ञानजन्यतायामसत्त्वात् साधारणधर्मादिविशेष्यकज्ञानस्यापि तज्जन्यतावच्छेदकघटकत्वादतो व्याख्यान्तरानुसरणमिति ध्येयम् ॥ १२ ॥

वस्तुतस्तु यादृशविशिष्टविषयकनिश्चयत्वम् अनुमितिप्रतिबन्धकताशून्यपक्षधर्मिकहेतुमत्तानिश्चयकालीनज्ञानावृत्ति तादृशत्वमेव विवक्षणीयम् ॥ अथवा स्वव्यापकतत्कत्वरूपानतिरिक्तवृत्तित्वनिवेशे यादृशविशिष्टविषयकनिश्चयत्वव्यापकः पक्षधर्मताज्ञानकालीनत्वानुमित्यप्रतिबन्धकत्वोभयाभावः तादृशत्वमेव विवक्षणीयम्, अन्यथा स्वरूपासिद्धिवारकस्य हेतुमत्ताग्रहाविरोधित्वदलस्य वैयर्थ्यापत्तेः—पक्षधर्मिकहेतुमत्तानिश्चयकालीनतद्विषयकानाहार्यनिश्चयस्याप्रसिद्ध्या यादृशविशिष्टविषयकपदेन तस्योपादानासम्भवात । एवं सामान्यलक्षणस्याप्यव्याप्तेरिति भट्टाचार्येणोक्तम् ।

अथात्र प्रथमकल्पे यादृशविशिष्टविषयकनिश्चयत्वमनुमितिप्रतिबन्धकताशून्यपक्षधर्मिकहेतुमत्ताज्ञानावृत्तीत्युक्तौ, द्वितीये च यादृशविशिष्टविषयकनिश्चयत्वव्यापकः पक्षधर्मिकहेतुमत्ताविषयकत्वानुमित्यप्रतिबन्धकत्वोभयाभाव इत्युक्तावेव सामञ्जस्ये हेतुमत्त्वज्ञानकालीनत्वपर्यन्तनिवेशो व्यर्थ इति।

मैवम् । यादृशस्थले यादृशस्य वस्तुनो हेतुमत्पक्षविषयकज्ञानं कदापि न जातं तत्र तादृशवस्तुन्यतिव्याप्तिवारणायैव तन्निवेशात् । जातिमान् वह्न्यभाववानित्यादिज्ञानवारणायाव्यापकीभूतविषयताशून्यत्वस्यावश्यं निवेश्यतया उदासीनेतिव्याप्तिवारणाय तन्निवेशस्यावश्यकत्वाच्च ।

अन्यथा हेतुमत्त्वाविषयकोदासीननिश्चयस्यैवाव्यापकीभूतविषयताशून्यत्वादुदासीनातिव्याप्त्यापत्तेः । वस्तुतो ह्रदो वह्निमान् जलाभावव्याप्या-

दित्यादौ जलवद्ध्रदादावतिव्याप्तिवारणार्थमेव तन्निवेशनम्। जलवद्ध्रद-विषयकहेतुमत्ताज्ञानस्याहार्यत्वेन धर्तुमशक्यत्वादिति ध्येयम्।

यद्यपि हेतुमत्ताज्ञानविगमकालावच्छेदेनोदासीननिश्चयसामान्ये निरुक्तोभयाभावसत्त्वादतिव्याप्तितादवस्थ्यमेव, तथापि हेतुमत्ताज्ञानक्षणावच्छेदेन निरुक्तोभयाभावविवक्षणान्न दोषः।

हेतुमत्त्वज्ञानकालीनत्वस्याऽभावप्रतियोगिकोटावुपलक्षणतया निवेशाद-दोषः। यदा कदाचित् तादृशज्ञानकालीनत्वसत्त्वे उपलक्षिताभावासत्त्वात् इत्यपि वदन्ति।

वस्तुतः प्रतियोगिवैयधिकरण्याघटितव्यापकतानिवेशे न दोष इति ध्येयम्।

अथात्र कल्पद्वय एव हृदत्वादिसामानाधिकरण्येन वन्ह्यादिसाध्यक-जलादिहेतुकस्थले वह्निव्यापकीभूताभावप्रतियोगिजलात्मकासाधारण्येऽव्याप्तिः—सामानाधिकरण्येन हेतुमत्ताज्ञानकालीनतादृशासाधारण्यनिश्चये तादृशानुमितिप्रतिबन्धकत्वस्यासत्त्वात्। न च सामानाधिकरण्येन साध्यहेतुकस्थलेऽवच्छेदावच्छेदेन हेतुमत्ताज्ञानकालीनत्वनिवेशान्नोक्ताव्याप्तिरिति वाच्यम्। तथासति सामानाधिकरण्येनसाध्यहेतुकस्थले हेत्वभाववत्पक्षेऽतिव्याप्त्यापत्तेः अवच्छेदावच्छेदेम हेतुमत्तानिश्चयकालीनतादृशहेत्वभाववत्पक्षविषयकनिश्चयस्याहार्यतया तादृशहेतुमत्ताज्ञानाकालीनसामानाधिकरण्येन हेत्वभाववत्पक्षविषयकनिश्चयस्यैव यादृशशिष्टविषयकतिश्चयपदेन धर्त्तव्यतया तत्रावच्छेदावच्छेदेन हेतुमत्तानिश्चयकालीनत्वस्यासत्त्वादिति चेत्,

अत्रोच्यते—अवच्छेदावच्छेदेन हेतुमत्ताग्रहकालीनत्वघटितोभयाभाव एवासाधारण्यसङ्ग्रहाय निवेशनीयः। सामानाधि करण्येन साध्यहेतुतास्थले सामानाधिकरण्येन हेत्वभाववत्पक्षे चातिव्याप्तिशङ्कैव नोपजायते। यत्रादौ भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानं ततः सामानाधिकरण्येन हेत्वभाववत्पक्षविषयकनिश्चयस्ततोऽवच्छेदावच्छेदेन हेतुमत्तानिश्चयस्तत्राप्रामाण्यज्ञानाभावावच्छेदकक्षणावच्छेदेन तादृशहेत्वभाववत्पक्षविषयकनिरुक्तोभयाभावासत्त्वात्।

एवं चाप्रामाण्यज्ञानाभावावच्छेदकक्षणावच्छेदेनतादृशोभयाभावो

निवेशनीयः, तेनाप्रामाण्यज्ञानाभावविशिष्टयद्रूपावच्छिन्नविषयककनिश्चयावच्छेदकीभूतक्षणावच्छिन्नयद्रूपावच्छिन्नविषयकनिश्चयवृत्तिकाभावाप्रतियोगी निरुक्तोभयाभावस्तद्रूपवत्त्वमिति समुदितार्थः ।

नातो यत्रादावसाधारण्यनिश्चयस्ततस्तद्धर्मिकाप्रामाण्यज्ञानात्मकहेतुमत्त्वानिश्चयस्तत्रासाधारण्यनिश्चयेऽपि तादृशोभयाभावासत्त्वेऽप्यसाधारण्याव्याप्तिः ।

न च तथापि यत्र ज्ञानस्य पक्षत्वं घटादेः सामानाधिरण्येन साध्यत्वं प्रकारकत्वाभावस्य हेतुत्वं तत्र तदभाववद्विशेष्यकतत्प्रकारकत्वरूपाप्रामाण्यग्रहे हेतु मत्ताज्ञानस्याहार्य्यतया हेत्वभाववत्पक्षेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम् ।

तत्रापि संशयात्मकाप्रामाण्यज्ञानस्य संभवात्, तद्व्यक्तित्वादि धर्मितावच्छेदककाप्रामाण्यनिश्चयस्य, तद्वति तत्प्रकारकत्वाभावरूपाप्रामाण्य निश्चयस्य च संभवाच्च ।

न च तथाप्यप्रामाण्यकोटौ तदभाववन्निष्ठविशेष्यत्वतद्वन्निष्ठविशेष्यत्वयोः प्रवेशाद् यत्र निष्ठत्वाभावस्य सामानाधिकरण्येन हेतुत्वं विशेष्यतायाश्च पक्षत्वं विशेषणांशे संशयानभ्युपगमेन तत्र संशयात्मकाप्रामाण्यस्यासंभवात् सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्तिर्दुर्वारैवेति वाच्यम्, तत्रापि भाविज्ञानं निर्विशेष्यकं निष्प्रकारकमित्याकारकाप्रामाण्यज्ञानस्य संभवात् ।

अथैवमपि ह्रदः काञ्चनंमयह्रदवान् गगनादित्यादौ काञ्चनमयत्वव्यापकीभूताभावप्रतियोगिगगनाद्यात्मकविशिष्टे, ह्रदो वह्निमद्ध्रदवान् जलादित्यादौ वन्ह्यभाववज्जलवदात्मकविशिष्टे चातिव्याप्तिः—पक्षधर्मिकहेतुमत्तानिश्चयकालीनस्य तत्तद्विशिष्टविशयकनिश्चयस्य ह्रदधर्मिककाञ्चनकयत्ववह्निमत्त्वादिज्ञानप्रतिबन्धकत्वेन हेतुमत्तानिश्चयाकालीनतत्तन्निश्चयस्य च हेतुमत्ताज्ञानकालीनत्वाभावेन तत्तद्विशिष्टविषयकनिश्चयसामान्य एव तादृशोभयाभावसत्त्वादिति ।

मैवम्—ज्ञानवैशिष्ट्यावच्छिन्नत्वसाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभावस्य निरुक्तोभयाभावप्रतियोगिकुक्षिनिक्षिप्तप्रतिबन्धकतायां निवेशेनैवोक्तदोषवारणसम्भवात् ।

न चैवं घटो गगनभाववदभाववत्कालीनगगनवान् घटत्वादित्यादौ तादृशगगनाभाववद्घटाद्यात्मकबाधेऽव्याप्तिः—तादृशबाधनिश्चये सामान्य-निरुक्तित्रिकोक्तयुक्त्या ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव कल्प-नीयतया निरुक्तोभयाभाववत्प्रतिबन्धकताशून्यत्वघटिततादृशोभयाभावास-त्त्वादिति वाच्यम्। उक्तस्थले शुद्धगगनत्वावच्छिन्नप्रतियोगिताकाभाववत्-पक्षस्यैव बाधत्वोपगमेनोक्तविशिष्टस्यालक्ष्यत्वात्।

लक्ष्यत्वे तु यादृशविशिष्टविषयकनिश्चयत्वव्यापको निरुक्तोभयाभाव इत्यत्र व्यापकत्वम् यादृशविशिष्टविषयकनिश्चयत्ववन्निष्ठाभावप्रतियोगित्वा भावमात्रं, किन्तु यादृशविशिष्टे यादृशविशिष्टविषयकनिश्चयत्ववनिष्ठाभा-वप्रतियोगित्वविशिष्टयादृशविशिष्टे यादृशविशिष्टव्याप्यवत्तानिश्चयनिष्ठा भावप्रतियोगित्वाभावरूपमेव विवक्षणीयम्।

तथाच यद्रूपावच्छिन्ने यद्रूपावच्छिन्नप्रकारकनिश्चयनिष्ठाभावप्रतियो-गित्वविशिष्ट तद्रूपावच्छिन्नविशेष्यकतद्रूपावच्छिन्नव्याप्यत्वावच्छिन्नप्रकारकनिश्च-यनिष्ठाभावप्रतियोगित्वाभाववान् तादृशोभयाभावस्तद्रूपावच्छिन्ने तद्रूपाव-च्छिन्नवत्त्वमिति लक्षणार्थः पर्यवसितः।

एवञ्चोक्तबाधविषयकनिश्चयत्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धक-त्वास्वीकारेऽपि तादृशबाधव्याप्यवत्तानिश्चयत्वेन ज्ञानवैशिष्ट्यानवच्छिन्न-प्रतिबन्धकत्वस्यावश्यंस्वीकार्यतयोक्तबाधाव्याप्तिः सुपरिहारैवेति।

न चैवं पर्वतो वह्निव्याप्याभाववानित्यादौ वह्निमत्पर्वतविषयकनिश्चये तादृशोभयाभावासत्त्वेऽपि. वह्निव्याप्यवत्पर्वतविषयकनिश्चये तादृशोभयाभा वस्याक्षतत्वादिति वाच्यम्। व्याप्यवत्तानिश्चये यत्प्रतिबन्धकताप्रयुक्तोभ-याभावः यत्प्रतिबन्धकतामादायैव लक्षणं संगमनीयम् तत्प्रतिबन्धकतानि-रूपितप्रतिबध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्न प्रतिबन्धकतानिरू-पितप्रतिबध्यताशून्यत्वस्य तद्रूपावच्छिन्नव्याप्यवत्तानिश्चयविशेषणत्वेनैवोक्ता-तिव्याप्तिवारणसंभवात्।

न च तथापि गगनाभाववत्घटवत्कालीनभूतलं गगनवदित्यत्र घटवत्ग-गनाभाववत्घटवत्कालीनभूतले अतिव्याप्तिर्लाघवात् गगनाभाववद्घटवत्-कालीनभूतलविशेष्यकघटवत्त्वनिश्चयत्वेन प्रतिबन्धकतयैवोपपत्त्या घटाव-

च्छेदन गगनाभावनिश्चयविशिष्टगगनाभाववद्घटवत्कालीनभूतलविशेष्य-कघटवत्त्वनिश्चयत्वेन प्रतिबन्धकत्वाकल्पनादिति वाच्यम् ।

उभयाभावप्रतिकोटिनिविष्टप्रतिबन्धकतायामगत्या तत्तत्प्रतिबन्धकता भेदादिकं निवेश्यैवोक्ताऽतिव्याप्तेर्वारणीयत्वात् ।

वस्तुतस्तु घटवद्गगनाभाववत् घटवच्चतादृशभूतलं पटवद्गगनाभाववत् पटवच्च तादृशभूतलमित्यादिनानाविधनिश्चयसाधारणैकरूपेण पक्षता-माथुरीपत्रिकोक्तदिशा ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव सयुक्तिकतया उक्तातिप्रसक्तिरेव नास्तीति ।

एतेन यत्र वह्निव्यापकीभूताभावप्रतियोगिजलस्य वक्षत्वं वह्नेः साध्यत्वं जलस्य हेतुत्वं तत्र वह्निव्यापकीभूताभावप्रतियोगिजलात्मकासाधारण्येऽव्याप्तिः—वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नधर्मिकवह्निमत्त्व-बुद्धिं प्रति लाघवात् तादृशजलत्वावच्छिन्नधर्मिकजलप्रकारकनिश्चयत्वेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकताया एव स्वीकर्त्तव्यतया पक्षधर्मिकहेतुमत्ताज्ञानकालीनकेवलतादृशाधारण्यनिश्चये प्रतिबन्धकत्वाभावेन निरुक्तोभयाभावस्यासत्त्वादित्यपि प्रत्युक्तम् ।

दर्शितयुक्त्या नानाविधनिश्चयसाधारणनिश्चयस्यापि ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताया एव कल्पनीयत्वादिति ।

न चैव मपि ह्रदो वह्निमान् गगनवत्ह्रदकालीनगगनव्याप्यवज्जलवद्वृत्तिजलादित्यादौ जलावच्छेदेन गगनाभावादेर्दोषत्वापत्तिः, तद्विषयनिश्चयस्यपक्षधर्मिकहेतुमत्त्वनिश्चयकालीनस्याहार्य्यतया पक्षधर्मिकहेतुमत्तानिश्चयाकालीनस्य तद्विषयनिश्चयस्यैव धर्तव्यतया तत्र तादृशोभयाभावस्याक्षतत्वादिति वादिति वाच्यम् । भाविज्ञानधर्मिका प्रामाण्यज्ञानाद्युत्तरं कथंचिदनाहार्य्यस्यापि पक्षधर्मिकहेतुमत्ताज्ञानकालीनस्य तद्विषयकनिश्चययस्य संभावादिदि ध्येयम् ॥

अथवा सामानाधिकरण्येन साध्यहेतुतास्थले सामानाधिकरण्येन हेतुमत्ताज्ञानकालीनत्वमेव निवेशनीयमतो न तादृशहेतुकस्थले सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्तिः । सामानाधिकरण्येन साध्यहैतुतास्थले असाधारण्यसंग्रहस्तु असाधारण्याविषयकज्ञाननिष्ठपक्षधर्मताज्ञानकीलीनत्वानुमित्यप्रतिबन्धकत्वोभयाभावविवक्षयै व करणीयः ।

न चैवमसाधारण्याविषयकत्वानुमित्यप्रतिबन्धकत्वोभयाभावमात्रस्यैव सम्यक्त्वे पक्षधर्मताज्ञानकालीनत्वनिवेशो व्यर्थ इति वाच्यम्। धर्मिभेदेन वैयर्थ्याभावात।

न च तथापि वह्निव्यापकीभूताभावप्रतियोगि जलं वह्निमज्जलादित्यादौ सामानाधिकरण्येन साध्यहेतुतास्थले सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्तिर्दुर्वारैवोक्तस्थले तादृशहेत्वभाववत्पक्षविषयकज्ञानमात्रस्यैवासाधारण्य विषयकत्वेनासाधारण्याविहयकज्ञाननिष्ठपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वघटितनिरुक्तोभयाभावस्य तत्राक्षतत्वादिति वाच्यम्। असाधारण्याविषयकपदेनासाधारण्यविषयतानन्तर्गतविषयताशालिज्ञानस्य विवक्षितत्वात॥

यद्वा असाधारण्याविषयकपदेनासाधारण्यविषयत्वाव्यापकीभूतविपयताशालिज्ञानमेव विवक्षणीयम्, तेन सामानाधिकरण्येन बन्ह्यादिसाकजलादिहेतुकस्थले असाधारण्यविषयतानन्तर्गतविषयताशालिनि वह्निव्यापकीमूताभावप्रतियोगि जलं वह्निमदित्याकारकजलांशे वह्नेर्भ्रमात्मकासाधारण्यज्ञाने तादृशोभयाभावासत्त्वेऽपि नासाधारण्याव्याप्तिः—उक्तभ्रमज्ञानस्यासाधारण्यविषयत्वाव्यापकीभूताविषयताशालित्वाभावात्॥

अथवा जातिमान् वन्ह्यभाववानित्यादिज्ञानवारणायैवाव्यापकीभूतविषयिताशून्यत्वमपहाय स्वावच्छिन्नविषयितानन्तर्गतविषयिताशून्यत्वमेव निवेशनोयम्। तावतैवोक्तभ्रममादायासाधारण्याव्याप्तिवारणसम्भवात्।

अत एवैतत्कल्पे वह्निव्यापकीभूताभावप्रतियोगिजलं वह्निमज्जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नधर्मिकजलप्रकारकनिश्चयत्वेनासाधारण्यज्ञानस्य ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वस्वीकारेऽपि न प्रागुक्तासाधारण्याऽव्याप्तिः-असाधारण्याविषयकज्ञाननिष्ठपक्षधर्मताज्ञान कालीनत्वघटितनिरुक्तोभयाभावस्यासाधारण्यज्ञानेऽक्षतत्वात्। उक्तस्थले जलत्वद्वह्निव्यापकीभूताभावप्रतियोगिजलात्मकेऽतिव्याप्तिस्तु कथञ्चित् तत्प्रतिबन्धकता भेदादिकं निवेश्यैव वारणीया॥

वस्तुतो जलवत्तादृशजलेऽसाधारण्यरूपविशिष्टान्तरघटितत्वेनविशिष्टान्तराघटितत्वविरहादेव नातिव्याप्तिः।

गगनाभाववद्घटवत्कालीनभूतलं गगनवदित्यत्र गगनाभाववद्घट-

वत्कालीनघटवत्भूतले प्रागुक्तातिव्याप्तिस्त्वगत्या तत्तत्प्रतिबन्धकताभेदादिकं निवेश्यैव वारणीया।

एतत्कल्पे पक्षधर्मिकहेतुमत्ताज्ञानेऽनाहार्य्यत्वादिकं प्रयोजनविरहेण न निवेश्यते, तेन ह्रदः काञ्चनमयह्रदवान् गगनाद्ध्रदो वह्निमद्ध्रदवान् जलाद्ध्रदो वह्निमान् गगनवद्ध्रदकालीनगगनव्याप्यवज्जलवद्वृत्तिजलादित्यादौ न प्रागुक्तातिव्याप्तीनामवकाशः–आहार्य्यात्मकहेतुमत्ताज्ञानकालीनतत्तद्विशिष्टविषयकनिश्चये निरुक्तोभयाभावासत्त्वादिति ध्येयम्॥

परे तु सर्वत्रैव पक्षतावच्छेदकावच्छेदेन हेतुमत्तानिश्चयकालीनत्वमेव निवेशनीयम्। सामानाधिकरन्येन साध्यहेतुतास्थले सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्तिवारणाय पुनर्यादृशविशिष्टविषयित्वमेव ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानच्छिन्नत्वोभयाभाववत् प्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन विशेषणीयम्।

घटवद्ध्रदो वह्निमान् धूमादित्यादिसामानाधिकरण्येन साध्यहेतुतास्थले सामानाधिकरण्येन धूमाभाववद्ध्रदेऽतिव्याप्तिः ह्रदत्वसामानाधिकरण्येन धूमाभावविषयताया अपिधूमाभावावच्छेदेन घटाभावनिश्चयविशिष्टधूमाभाववद्ध्रदविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वादतः प्रतिबन्धकतायामुभयाभाववत्त्वनिवेशः।

न चैवं यादृशविशिष्टविषयित्वसामान्यं निरुक्तोभयाभाववत्प्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्ववत्तादृशत्वमेव सम्यक् अनुमित्यप्रतिबन्धकत्वघटितोभयाभावदलवैयर्थ्यमिति वाच्यम्। वृक्षः संयोगी तत्त्वादित्यत्र संयोगाभाववद्वृक्षादावतिव्याप्तिवारणायैव तत्सार्थक्यात्।

न च यादृशविशिष्टविषयकनिश्चयेऽव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वनिवेशावश्यकतयोक्तविशेषणदानेऽप्युक्तातिव्याप्तितादवस्थ्यमिति वाच्यम्, यादृशविशिष्टविवयकनिश्चयेऽव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वस्यैव निवेशनीयत्वात्।

अत एव ह्रदः काञ्चनमयह्रदवान् गगनादित्यादौ प्रागुक्तातिव्याप्तीनामप्यनवकाशः—तत्तद्विशिष्टविषयितायां निरूक्तोभयाभाववत्प्रतिबन्धकतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वाभावादिति। न चैवं वह्निव्यापकीभूताभावप्रतियोगिजलं वह्निमज्जलादित्यत्र सामानाधिकरण्येन हेत्वभाव-

वत पक्षे प्रागुक्तातिव्याप्तिः तादृशपक्षविषयिताया अप्यसाधारण्यविषयत्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वादिति वाच्यम्, तदन्तर्गतवह्निव्यापकीभूताभावप्रतियोगित्वप्रकारतानिरूपितजलत्वावच्छिन्नविशेष्यताया एव तादृशप्रतिबन्धकतावच्छेदकत्वेन जलाभावत्वावच्छिन्नप्रकारतानिरूपितवह्निव्यापकीभूताभावप्रतियोगित्वजलत्वोभयधर्मावच्छिन्नविशेष्यतायास्ततोभिन्नत्वेन तादृशप्रतिबन्धकतानवच्छेदकतयैवोक्तातिव्याप्तेरनवकाशादित्याहुः। तच्चिन्त्यम् ॥

यत्तु अवच्छेदावच्छेदेन हेतुमत्ताज्ञानकालीनत्वघटितोभयाभाव एव सर्वत्र विवेशनीयः। सामानाधिकरण्येन हेत्वभाववत्पक्षेऽतिव्याप्तिवारणाय पुनः स्वावच्छिन्नविषधकत्वव्यापकप्रकृतानुमितिप्रतिबन्धकताकधर्मावच्छिन्नविषयिताभिन्ना याऽवच्छेदावच्छेदेन हेतुमत्ताग्रहप्रतिबन्धकतावच्छेदकविषयिता तदन्यत्वेनयद्रूपावच्छिन्नविषयित्वं विशेषणीयम्, अतो न कोऽपि दोष इति।

तत्तुच्छम्। जलं वह्निमज्जलादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलात्मकासाधारण्यविषयितायाः स्वावच्छिन्नविषयकत्वव्यापकप्रतिबन्धकताकधर्मावच्छिन्नविषयिताभिन्नतया वह्निव्यापकीभूताभावप्रीतयोगित्ववज्जलाभाववदित्याकारकज्ञानसहिततादृशप्रतियोगित्ववच्च जलमित्याकारकज्ञानीयावच्छेदावच्छेदेन हेतुमत्ताग्रहप्रतिबन्धकतावच्छेदकतया च निरुक्तविषयिताभिन्नत्वाभावादसाधारण्याव्याप्त्यापत्तेः।

यदि चानतिरिक्तवृत्तित्वरूपमवच्छेदावच्छेदेन हेतुमत्ताग्रहप्रतिबन्धकतावच्छेदकत्वमेव निवेशनीयमतो नोक्तदोषः।

न च ह्रदत्वावच्छेदेन वह्निसाध्यकधूमहेतुकस्थले स्वावच्छिन्नविषयकत्वव्यापबप्रतिबन्धकताकधर्मावच्छिन्नविषयिताभिन्ननिरुक्तहेतुमत्ताग्रहप्रतिबन्धकतानतिरिक्तवृत्तिविषयित्वाप्रसिद्धिरिति वाच्यम्। धूमत्वेनान्यावगाहि–अभावत्वेन घटावगाहि–धूमाभाववान् ह्रद इत्याकारकभ्रमविषयत्वस्यैव तादृशत्वेन प्रसिद्धत्वादित्युच्यते।

तदापि यत्र ह्रदस्य पक्षत्वं ह्रदत्वसामानाधिकरण्येन गगनाभाववत्ह्रदकालीनवह्नेः साध्यत्वं गगनस्य हेतुत्वं तत्र गगनाभाववद्ह्रदकालीनवह्निव्यापकीभूताभावप्रतियोगिगगनरूपासाधारण्ये, एवं यत्राभावस्य पक्षत्वं

सामानाधिकरण्येन वह्नेः साध्यत्वं वह्निमन्निष्ठभेदप्रतियोगितानिरूपितस्वरूपसम्बन्धावच्छिन्नावच्छेदकत्वस्याधेयत्वाभावस्य वा हेतुत्वं, तत्र वह्निव्यापकीभूताभावप्रतियोगिवह्निमन्निष्ठभेदप्रतियोगितावच्छेदकत्वरूपासाधारण्ये वह्निव्यापकीभूताभावप्रतियोग्याधेयत्वाभावरूपासाधारण्ये चाव्याप्तिः तत्तदसाधारण्यविषयितायामवच्छेदावच्छेदेन हेतुमत्ताग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वेन निरुक्तविषयिताभिन्नत्वाभावादिति ।

वस्तुवस्तु असाधारण्यविषयित्वाव्यापकीभूतविषयिताशून्यत्वानुमित्यप्रतिबन्धकत्वोभयाभावो यादृशविशिष्टविषयकनिश्चयत्वव्यापकस्तादृशत्वमिति विषत्तणे न कश्चिद्दोष इति नवीनपदवी सुधीभिर्ध्येया ॥ १२ ॥

सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकं तादृशविशिष्टत्वमिति भट्टाचार्येणोक्तम् ।

अत्र सधर्मितावच्छेदककहेतुमत्तानिश्चयीयहेतुप्रकारकत्वं हेतुतावच्छेदकतापर्याप्त्यधिकरणपर्याप्तावच्छेदकताकत्वेन विशेषणीयम् । अतो जातिमत्त्वान् ह्रद-इत्याकारकहेतुमत्तानिश्चयकालीनस्य वह्निव्यापकीभूताभावप्रतियोगिजलमित्याकारकासाधारण्यनिश्चयस्यानुमित्यप्रतिबन्धकत्वेऽपि न क्षतिः ।

धर्मितावच्छेदकत्वं चोभयमेव निरवच्छिन्नं ग्राह्यम् । तेन जलवान् ह्रद-इत्याकारकहेतुमत्तानिश्चयसमानधर्मितावच्छेदककजातिमान् वह्निमानित्याद्यनुमित्यन्तर्भावेन प्रतिबध्यताया व्यापकत्वभङ्गेऽपि न क्षतिः । न वा दोषविषयकनिश्चयकालीनजातिमत्त्वान् जलवानित्यादिहेतुमत्तानिश्चयीयविशेष्यतावच्छेदकनिष्ठनिरवच्छिन्नावच्छेदकताकविशेष्यताकानुमित्यप्रसिद्धावप्यसम्भवः ।

अथात्र शब्दत्ववान् घटः शब्दत्ववान् शब्दश्च इत्याकारकहेतुमत्तानिश्चयकालीननित्यत्वव्यापकीभूताभावप्रतियोगिशब्दत्वमित्याकारकासाधारण्यनिश्चयस्यापि तादृशनिश्चयसामान्यान्तर्गततया तत्समानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यान्तर्गत-घटो नित्यः शब्दो नित्य-इत्यादिनानानुमितिसाधारणैकप्रतिबध्यत्वाभावात् तादृशानुमितित्वव्यापिका न कापि प्रतिबध्यतेत्यसाधारण्याव्याप्तिरिति ।

न च मुख्यविशेष्यताद्वयानिरूपकत्वस्य हेतुमत्तानिश्चयविशेषणत्वान्नोक्तदोष इति वाच्यम् , क्रमिकविभिन्नधर्मिकहेतुमत्तानिश्चयद्वयसमानकालीनासाधारण्यनिश्चयमादायोक्तदोषतादवस्थ्यात् ।

अत एव प्रथमकालीनान्ते न मुख्यविशेष्यताद्वयशून्यहेतुमत्तानिश्चयविशिष्टत्वं वक्तव्यम् । मुख्यविशेष्यता च धर्मितावच्छेदकत्वानवच्छिन्नप्रकारतानिरूपिता प्रकारत्वानवच्छिन्नविशेष्यता । निश्चयवैशिष्ट्यं च सामानाधिकरण्य--स्वाधिकरणसुखवृत्तित्व—स्वध्वंसवत्त्वैतत्त्रितयसन्बन्धेन, तथाच दोषविषयलनिश्चयाव्यवहितपूर्वोत्पन्नैकधर्मावच्छिन्नविशेष्यताकहेतुमत्तानिश्चयस्यैव लक्षणघटकत्वान्नोक्तदोष इति परास्तम् । यत्रादौ अपेबुध्यात्मकैकधर्मिकहेतुमत्तानिश्चयस्ततोऽपरधर्मिकनिश्चयस्ततोऽसाधारण्यनिश्चयः तत्रोक्त दोषतादवस्थ्याच्च ।

एते नोक्तत्रितय सम्बन्धमध्येस्वाधिकरणा सुखवृत्तित्व मपहाय कालिकेन स्वाधिकरणत्व मात्रनिवेशन मपि प्रत्युक्तम् ।

अत्रोच्यते, स्वसमान कालीन निश्चयीय हेतु प्रकारतानिरूपित विशेष्यतावच्छेदकी भूतयत् किञ्चिद्धर्मावच्छिन्न विशेष्य कानुमितित्व व्यापकत्वस्य निवेश्यत्वेन तादृश यत किञ्चिदर्मावच्छिन्नविशेष्य कानुमितित्व व्यापकत्वस्य तद्धर्मावच्छिन्नविविशेक हेतुमत्तानिश्चय विशिष्टाऽसाधारण्यज्ञाननिष्ठप्रतिबन्धकतानिरूपित प्रतिबध्यतायामेव सत्वान्नोक्ताऽव्याप्तिरिति ध्येयम् ॥

हेतुमत्तानिश्चयश्चात्रावच्छेदकावच्छेदेन ग्राह्यः । अतः समानाधिकरण्येनानुमितिं प्रतिसामाधिकरण्येन हेतुमत्ताज्ञानकालीनासाधारण्यविषयकनिश्चयस्याप्रतिबन्धकत्वेऽपि न तत्स्थलीसाधारण्याव्याप्तिः ।

अत एव संयोगसम्बन्धेन वह्निसाध्यकतत् सम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वह्निहेतुकस्थले व्यभिचारनिश्चमस्याभावांशे नियतहेतुविषयकत्वेन वह्निमानाधेयत्वादित्यादौ च वन्ह्यभाववद्वृत्त्याधेयत्वरूपव्यभिचारनिश्चयस्याधेयत्वांशे हेतुविषयकत्वनैयत्येन लक्षणगमनात् प्रथमकालीनान्तासत्त्वप्रयुक्तस्य स्वसमानकालीनहेतुमत्तानिश्चयाप्रसिध्या भट्टाचार्योक्तासम्भवस्यासङ्गतिरिति परास्तम्—अभावत्वाद्यवच्छेदेन हेतुमत्तानिश्चयस्य तत्रासत्त्वादिति ॥

अथैवमपि—ह्रदत्वावच्छेदेन जलवद्ह्रदकालीनवह्निसाध्यकजलहेतुकस्थले तादृशसाध्यव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्ये लक्षणसमन्वयादसम्भवदानासङ्गतिरेवेति।

न चाव्यावर्तकस्य जलवद्ह्रदकालीनत्वस्य प्रमेयधूमत्वादेरिव प्रतियोगितानवच्छेदकतया तद्विशिष्टवह्निव्यापकत्वमप्रसिद्धं किन्तु शुद्धवह्निव्यापकत्वमेव प्रसिद्धमिति वह्निव्यापकीभूताभावप्रतियोगिजलत्वावच्छिन्नमेवासाधारण्यमिति तज्ज्ञानस्य च न हेतुविषयतानैयत्यमिति वाच्यम् तथापि सामानाधिकरण्यसम्बन्धेन परिमाणत्वावच्छेदेन जन्यगुणविशिष्टपरिमाणस्य समवायेन साध्यतायां सामानाधिकरण्यस्यसम्बन्धेन जन्यगुणस्य हेतुत्वे महाप्रलयावच्छेदेनपरमाण्वादौ जन्यगुणविशिष्टपरिमाणाभावस्य सत्त्वात् परिमाणसामान्याभावस्य च तस्यातिरिक्तत्वसिद्धेः तादृशाभाववद्वृत्तिजन्य गुणरूपव्यभिचारनिश्चयस्यावच्छेदकावच्छेदेन हेतुमत्तावगाहित्वनियमेन तत्र लक्षणसमन्वयात्।

यदि च लाघवेन जन्यगुणवैशिष्ट्यमात्रस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वस्वीकारेण तादृशधर्मावच्छिन्नाभावस्याप्यप्रसिद्धिरित्युच्यते।

तदापि सामानाधिकरण्यसम्बन्धेन संयोगविशिष्टरूपस्य साध्यत्वे सामानाधिकरण्यसम्बन्धेन संयोगस्य हेतुत्वे, एवं प्रमेयत्वविशिष्टवह्निनिरूपितविषयित्वस्य साध्यत्वे प्रमेयत्वस्य च हेतुत्वे तत्तत्साध्याभाववद्वृत्तिसंयोगादिरूपव्यभिचारे लक्षणागमनादसम्भवदानासङ्गतिर्दुर्वारैव।

वस्तुतस्तु हेतुमत्तानिश्चयेऽवच्छेदकावच्छेद्यत्वावगाहित्वमनिवेश्यअनुमितौतन्निवेशनेनैव सामानाधिकरण्येन साध्यतास्थलेऽसाधारण्यसङ्ग्रहसम्भवात् पूर्वोक्तस्थलेऽपि लक्षणसमन्वयसम्भव इति चेत्।

अत्राहुः—वह्नित्वावच्छेदेन प्रमेयत्वविशिष्टवन्ह्यादेरभावस्य साध्यत्वे प्रमेयत्वस्य हेतुत्वे वह्नेः पक्षत्वे प्रमेयत्वविशिष्टवह्निविशिष्टवन्ह्याद्यात्मकबाधे, एवं संयोगविशिष्टरूपस्य साध्यत्वे रूपस्य पक्षत्वे संयोगस्य हेतुत्वे संयोगविशिष्टरूपाभाववद्रूपात्मकबाधे चातिव्याप्तिः—

तत्तद्बाधज्ञानानां पक्षतावच्छेदकीभूतवह्नित्वाद्यवच्छेदेन तत्तद्धेतुमत्तावगाहित्वनियमेन स्वसमानकालीनहेतुमत्तानिश्चयीयधर्मितावच्छेदकीभूतपक्षतावच्छेदकरूपयत्किञ्चिद्धर्मावच्छिन्नविशेष्यकानुमितिसामान्यविरोधि-

त्वात्—अतः स्वसमानकालीनहेतुमत्तानिश्चये स्वभिन्नत्वं निवेशनीयम्, तथा चोक्तबाधज्ञानानां स्वसमानकालीनस्वभिन्नघटः प्रमेय इत्यादिहेतुमत्तानिश्चयीयसमानधर्मितावच्छेदककानुमितिसामान्याविरोधित्वान्नातिव्याप्तिः।

एवं च केवलदोषविषयकनिश्चयस्य तादृशनिश्चयसामान्यान्तर्गतस्य स्वभिन्नस्वसमानकालीननिश्चयाप्रसिध्यैवासम्भवसङ्गतिः।

एवं सति सधर्मितावच्छेदकहेतुमत्तानिश्चयेऽपि स्वभिन्नत्वं निवेश्यम्, अन्यथा तादृशनिश्चयसामान्यान्तर्गतसमूहालम्बनहेतुप्रकारकदोषविषयकनिश्चयकालीनस्वभिन्नहेतुमत्तानिश्चयाप्रसिद्ध्याऽसम्भवापत्तिरिति ध्येयम्॥

यत्तूक्तबाधातिव्याप्तिवारणाय स्वसमानकालीनहेतुमत्तानिश्चयीयमुख्यविशेष्यतावच्छेदकत्वं किञ्चिद्धर्मे निवेशनीयमुक्तबाधादिघटकीभूतहेतुमत्तानिश्चयधर्मितावच्छेदकधर्मस्य तादृशत्वाभावान्नातिव्याप्तिः।

न च प्रमेयवन्ह्यभावादिसाध्यकवह्निपक्षकप्रमेयत्वहेतुकस्थले वन्हिवृत्तिप्रमेयवन्ह्यात्मकबाधेऽतिव्याप्तिस्तादृशबाधनिश्चयेवन्ह्यात्मकमुख्यविशेष्यांश एव हेतुभानादिति वाच्यम्।

अवच्छिन्नविशेष्यत्वानवच्छिन्नत्वस्य मुख्यविशेष्यतायां निवेशनीयत्वात्।

अथवा स्वसमानकालीनहेतुमत्तानिश्चयविशेष्यतायामेववावच्छिन्नविषयत्वानवच्छिन्नत्वं निवेशनीयम्, तथा चोक्तबाधघटकप्रमेयत्वरूपहेतुप्रकारतानिरूपितमुख्यविशेष्यतायां वह्निवृत्तित्वप्रकारतानिरूपितधर्मितावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नत्वात् प्रमेयवह्निविशिष्टवन्ह्यात्मकबाधग्रहे च हेतुप्रकारतानिरूपितविशेष्यतायां प्रमेयवह्नित्वावच्छिन्नप्रकारकत्वावच्छिन्नत्वादुक्तबाधघटकधर्मस्य तादृशत्वाभावान्नातिव्याप्तिः।

एवं स्वधर्मितावच्छेदककहेतुमत्तानिश्चयोऽपि मुख्यविशेष्यताशालित्वेन विशेषणीयः। अन्यथा वह्निव्यापकीभूताभावप्रतियोगिजलनिश्चयकालीनजलवद्ह्रदवान् देश इत्यादिनिश्चयीयहेतुप्रकारतानिरूतमुख्यविशेष्यतावच्छेदकाप्रसिद्ध्याऽसम्भवापत्तेः।

एवं च प्रथमकालीनान्तानुक्तौ—उक्तव्यभिचारसामान्यान्तर्गतकेवलदोषविषयकनिश्चयसमानकालीनहेतुमत्तानिश्चयीयतादृशविशेष्यतावच्छेदकाप्रसिद्ध्याऽसम्भवो निष्प्रत्यूह एवेति।

तत्तुच्छम्—वह्निमान् आधेयत्वादित्यादौ वन्ह्यभाववद्वृत्त्याधेयत्वरू-

पव्यभिचारनिश्चयस्याधेयत्वरूपमुख्यविशेष्यांशे हेतुप्रकारकस्वसमानकालीनहेतुमत्तानिश्चयीयमुख्यविशेष्यतावच्छेदककस्य सुप्रसिद्धतया तादृशव्यभिचार एव लक्षणगमनसम्भवेन प्रथमकालीनान्तानिवेशप्रयुक्तासम्भवदानासङ्गतितादवस्थ्यात्,

ह्रदो वह्निमान् वन्ह्यभावादित्यादौ वह्न्यभाववद्ह्रदात्मकबाधनिश्चयसमानकालीनहेतुमत्तानिश्चयीयमुख्यविशेष्यतावच्छेदकीभूतयत्किञ्चिद्धर्मपदेन ह्रदत्वमादाय वह्न्यभाववद्ध्रदात्मकबाधेऽतिव्याप्तितादवस्थ्याच्चेति ध्येयम् ॥

परे तु नानाधर्मावच्छिन्नविशेष्यकहेतुमत्ता निश्चयकालानासाधारण्यविषयकनिश्चयस्य तादृशनिश्चयसामान्यान्तर्गतस्य स्वसमानकालीनहेतुसत्तानिश्चयसमानधर्मितावच्छेदककानुमितित्वस्य विभिन्नधर्मितावच्छेदककविभिन्नानुमितिसाधारणस्य व्यापकासाधारण्यज्ञानीयैकप्रतिबध्यत्वाप्रसिद्ध्याऽसाधारण्याव्याप्तिवारणाय स्वसमानकालीनहेतुमत्तानिश्चयस्य व्यापिका यानुमितिस्तादृशानुमितित्वव्यापकत्वं प्रतिबध्यतायां निवेशनीयम्। व्याप्यव्यापकभावश्च निरवच्छिन्नधर्मितावच्केदकतासम्बन्धेन।

तथा च स्वसमानकालीननानाधर्मावच्छिन्नविशेष्यकनानाहेतुमत्तानिश्चयानां तादृशसम्बन्धेन व्यापिका तत्तद्धर्मावच्छिन्नविशेष्यकसमूहालम्बनानुमितिरेवेति तादृशानुमितित्वव्यातकत्वं प्रतिबध्यतायामक्षतमेव। अत्राप्युक्तबाधाद्यतिव्याप्तिवारणदिशाऽसम्भवसङ्गतिरिति प्राहुः ॥

केचित्तु उक्तरीत्या प्रतिबध्यतायामनुमितित्वव्यापकत्वरक्षणाय सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितित्वव्यापकस्वनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताकंतादृशविशिष्टत्वमिति लक्षणं व्याचक्षाणा उक्तबाधातिव्याप्तिं वारयन्तो हेतुमत्तानिश्चयासमानकालीनदोषविषयकनिश्चयस्य स्वसमानकालीनहेतुमत्तानिश्चयाप्रसिद्ध्याऽसम्भवः। यादृशदोषविषयकनिश्चये न हेतुमत्ताज्ञाननैयत्यं तादृशदोषलक्षणसम्भवाभाव इत्येवासम्भवपदार्थ इति प्रलपन्ति।

अथात्र वह्निमद्ह्रदकालीनवह्निमान् जलवद्ध्रदकालीनह्रदत्वादित्यादौ वह्निव्यापकीभूताभावप्रतियोगिजलरूपासाधारण्याअनात्मकेऽतिव्याप्तिः

हेतुमत्तानिश्चयकालीनस्य तन्निश्चयसामान्यस्यैव वह्निमद्ध्रदावगाहिताहशानुमितिसामान्यविरोधित्वात् इति चेन्न। ज्ञानवैशिष्ट्यावच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत्त्वस्य प्रतिबन्धकतायां निवेशेनैवोक्तातिव्याप्तिवारणसम्भवात।

न चैवमुक्तस्थले वन्ह्यभाववद्ध्रदादिविषयिताया हेतुमत्तानिश्चयसमानधर्मितावच्छेदकप्रकृतसाध्यानुमितित्वव्यापकप्रतिबध्यतानिरूपिताताहशोभयाभाववत्प्रतिबन्धकतानतिरिक्तवृत्तितया वन्ह्यभाववद्ध्रदादावतिव्याप्तिरिति वाच्यम्। प्रकृतासाध्यसाधनसामानाधिकरण्यग्रहाविरोधित्वदलेनैवतद्वारणादिति ध्येयम्॥

केचित्तु असाधारण्यविषकत्वानवच्छिन्नं यत् प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं तदन्यत्वस्य लक्षणघटकप्रतिबन्धकतायामनुमितिसामान्यविरोधित्वमित्यनेन विवक्षणीयतयोक्तस्थले वह्निव्यापकीभूताभावप्रतियोगिजलविषयकत्वावच्छिन्नप्रतिबन्धकताया असाधारण्यविषयकत्वानवच्छिन्नत्वात्ताहशानुमितित्वव्यापक प्रतिबध्यतानिरूपितत्वाच्च नातिव्याप्तिरित्याहुः। तच्चिन्त्यम्॥

परेतु समूहालम्बनताहशानुमितित्वव्यापकप्रतिबध्यतायां विशिष्टसाध्यग्रहत्वन्यूनवृत्तित्वनिवेशान्नोक्तातिव्याप्तिः।

न चैवमुक्तस्थले वह्निव्यापकीभूताभावप्रतियोगिह्रदत्वरूपासाधारण्येऽव्याप्तिः केवलह्रदत्वधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनताहशासाधारण्यनिश्चयस्यापि ताहशनिश्चयसामान्यान्तर्गतत्वेन तत्समानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदकह्रदत्वावच्छिन्नविशेष्यकानुमितित्वव्यापक प्रतिबध्यताया विशिष्टसाध्यग्रहत्वव्यापकत्वादिति वाच्यम्, विशिष्टसाध्यघटकधर्मनिष्ठधर्मितावच्छेदकताशून्यत्वेन सधर्मितावच्छेदककहेतुमत्तानिश्चयस्य विशेषणीयत्वेनोक्तस्थलेह्रदत्वधर्मितावच्छेदककहेतुमत्तानिश्चयस्य लक्षणाघटकत्वादुक्तासाधारण्ये च घटत्वादिधर्मितावच्छेदककहेतुमत्तानिश्चयमादायैव लक्षणसमन्वयादिति॥

अथवा-हेतुमत्तानिश्चये उक्तावच्छेदकताशून्यत्वनिवेशने उक्तन्यूनवृत्तित्वमनिवेश्य प्रतिबध्यतायां विशिष्टसाध्यघटकधर्मावच्छिन्नमुख्यविशेष्यत्वानवच्छिन्नत्वं निवेश्यापि उक्तातिव्याप्तिर्वारयितुं शक्यते—इत्याहुः।

अथ साध्याभावतद्व्याप्यधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनदोषविषयकनिश्चयस्यापि तादृशनिश्चयसामान्यान्तर्गततया तत्समानकालीनहेतुमत्ताधर्मितावच्छेदकीभूतसाध्याभावादिधर्मितावच्छेदककसाध्यानुमितेरप्रसिध्या असंभवः।

न च धर्मितावच्छेदकतायां निरवच्छिन्नत्वस्य निवेशितत्वान्नासम्भव इति वाच्यम्। तथापि द्रव्यभेदसाध्यकगुणवत्त्वहेतुकस्थले द्रव्यभेदव्यापकीभूताभावप्रतियोगिगुणरूपासाधारण्येऽव्याप्त्यापत्तेः। द्रव्यत्वनिष्ठनिरवच्छिन्नधर्मितावच्छेदकताकगुणवत्त्वरूपहेतुमत्तानिश्चयकालीनदोषविषयकनिश्चयसमानकालीनहेतुमत्तानिश्चयधर्मितावच्छेदकीभूतद्रव्यत्वधर्मितावच्छेदककद्रव्यभेदसाध्यकानुमितेरप्रसिद्धेरिति।

चेन्न। अनाहार्यज्ञानीयसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतधर्मावच्छिन्नविशेष्यताकहेतुमत्तानिश्चयकालीनत्वस्य कालीनान्तेन विवक्षितत्वादिति ध्येयम्।

अथ सधर्मितावच्छेदककहेतुमत्तानिश्चयीययादृशविशिष्टविषयकनिश्चयसामान्यमित्यत्र सामान्यपदस्य व्यापकतार्थकतयातादृशनिश्चयत्वव्यापकतालाभः।

तथा च निश्चयस्याप्राक्रान्ततया स्वपदेन तस्य बोधयितुमशक्यत्वात् स्वपदेन तादृशनिश्चयत्वस्यैव धर्तव्यत्वेन तत्कालीनत्वस्याव्यावर्तकतया स्वाश्रयकालीनत्वमेव निवेशनीयम्, तथाच सति तादृशदोषनिषयकनिश्चयकालीनत्वस्य तादृशदोषविषयकनिश्चयकालीननानाधर्मिका नानाकालीन यावन्तो हेतुमत्तानिश्चयाः सम्भवन्ति तावत्स्वेव सत्त्वादसाधारण्याव्याप्त्यापत्तेः पूर्वोक्तरीत्या वारणेऽपि बाधाद्यतिव्याप्तिर्दुर्वारैव तादृशनिश्चयत्वाश्रयकालीनहेतुमत्तानिश्चयधर्मितावच्छेद कीभूतपक्ष तावच्छेद कादिरूपयत् किञ्चिद्धर्मस्य सर्वत्र ग्रहीतुं शक्यत्वादिति।

न च तादात्म्येन तादृशनिश्चयव्यापकत्वमेव निवेशनीयं, तथा च स्वपदेन तत्तन्निश्चयमादाय सर्वत्र लक्षणं संगमनीयमतो नानिव्याप्तिरिति वाच्यम्, व्याप्यदिश्यनुगतरूपेण तादृशनिश्चयत्वेन निश्चयनिवेशे व्यापकदिशि सत्त्वघटित धर्मनिवेशे व्याप्यव्यापकभावासम्भवात् स्वत्त्वस्याननुगततया तद्घटितधर्मस्य व्यापकतावच्छेदकत्वाभावादिति चेत्।

अत्र केचित्–प्रकृतसाध्यविधेयकप्रकृतहेतुधर्मिकप्रकृतसाध्यनिरूपितव्याप्तिप्रकारताकानुमितिविशिष्टत्वानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपवत्त्वमेवस्वत्वाऽघटित लक्षणं वक्तव्यमतो नोक्तदोषः। तादृशानुमितिवैशिष्ट्यं च स्वनिष्ठभेदप्रतियोगितावच्छेदकत्व स्वीयसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयकालीनत्वोभयसंबंदेन। भेदप्रतियोगितावच्छेदकत्वं च स्वनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यत्वंसंबंधेन। संवंधस्य व्यावृत्तिः स्वयमूह्येत्याहुः। तच्चिन्त्यम् ॥

वस्तुतस्तु सधर्मितावच्छेदकहेतुमत्तानिश्चयकालीनयद्रूपावच्छिन्नविषयकनिश्चयत्वव्यापतकतावच्छेदकं ज्ञानत्वंततद्रूपपरत्वंलक्षणम्। व्यापकता चस्वतादात्मय–स्वसमानकालीहेतुमत्तानिश्चयीधर्मितावच्छेदकावच्छिन्नविशेष्यकप्रकृतसाध्यविधेयकप्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्तिप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबंधकतावत्त्वोभयसंवंधेनेतिध्येयम्।

कश्चित्समाधत्ते-सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयद्रूपावच्छिन्नविषयकनिश्चयसामान्यंप्रकृतसाध्यप्रकारप्रकृतहेतुधर्मिकप्र कृतसाध्यव्याप्तिप्रकारकानुमित्यवृत्ति तद्रूपत्वम्। तादृशानुमितिवृत्तित्वं च स्वसमानकालीननिश्चयीयहेतुतावच्छेदकावच्छिन्नप्र कारतानिरूतविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानि रूपितप्र यिबध्याभाववत्वत्त्वोभयसंबंधेन। एतत् पुनश्चिन्त्यम्॥

ननु वह्निमान् अवृत्तिजलादित्यादौ अनाहार्यहेतुमत्तानिश्चयाप्रसिद्धयाऽव्याप्तिः अवृत्तिजलवानित्यादिनिश्चयस्य नियताहार्यत्वात्।

न च हेतुताच्छेदकतापर्य्याप्त्यनिवेशाद्धेतुतावच्छेदकीभूतशुद्धजलत्वावच्छिन्नवत्तानिश्चयस्यानाहर्य्यस्य प्रसिद्ध्या तत्कालीनवह्निव्यापकीभूताभावप्रतियोगिजलादिनिश्चयमादायैव तादृशजलादौ लक्षणसमन्वय इति वाच्यम्। तथासति वह्निमान् काञ्चनमयजलात्जलशैवालोभयस्मादित्यादौ काञ्चनमयवानित्यादिहेतुमत्तानिश्चयकालीनवह्निव्यापकीभूताभावप्रतियोगिजलमिति निश्चयस्यापि तादृशनिश्चयसामान्यान्तर्गततया तस्यानुमित्यप्रतिबन्धकत्वाद्वह्निव्यापकीभूताभावप्रतियोगिजलात्मकासाधारण्येऽव्याप्तेरिति चेन्न।

निश्चयविशिष्टान्यहेतुतावच्छेदकताश्रयधर्मावच्छिन्नप्रकारकसधर्मिता-

तावच्छेदककनिश्चनिवेशेनैवोक्तदोषवारणसम्भवात् । निश्चयवैशिष्ट्यं च स्वनिष्ठासाधारण्यविषयित्वावच्छिन्नप्रतिबन्धकतानवच्छेदककिञ्चिद्धर्मावच्छिन्नविषयितावत्त्व–स्वसमानकालीनत्व-स्वसामानाधिकरण्यैतत्त्रितयसम्बन्धेन । तथाचोक्तस्थले एवंभूतं हेतुमत्ताज्ञानं वह्निव्यापकीभूताभावप्रतियोगिजलज्ञानकालीनजलवान् ह्रद इति ज्ञानमेवेति तत्कालीनासाधारण्यविषयकनिश्चयमादायैव लक्षणसंगतिः ॥

प्रथमसम्बन्धानिवेशे निश्चयमात्रस्यैव वैशिष्ट्यसत्त्वात् निश्चयविशिष्टान्यनिश्चयस्यैवाप्रसिद्धिरतस्तन्निवेशः । जलशैवालोभयहेतुकस्थले वह्निव्यापकीभूताभावप्रतियोगिजलवह्निव्यापकीभूताभावप्रतियोगिशैवालोभयस्यैवासाधारण्यतयैकघटितासाधारण्यविषयकनिश्चयकालीनहेतुमत्तानिश्चयस्यान्यघटितासाधारण्यविषयकनिश्चयविशिष्टत्वादव्याप्तिरतो द्वितीयसम्बन्धनिवेशः ।

तन्निवेशे चैकघटितासाधारण्येऽन्यघटितासाधारण्यविषयकनिश्चयासमानकालीनस्वघटकहेतुतावच्छेदकीभूतधर्मावच्छिन्नवत्तानिश्चयमादायैव लक्षणसमन्वयः । तृतीयस्य फलं पुरुषान्तरीयनिश्चयमादायाव्याप्तिवारणम् ।

यद्वा हेतुतावच्छेदकघटकयत्किञ्चिद्धर्मावच्छिवत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यविरोधि तादृशत्वमेव लक्षणम् । उक्तस्थले च यत्किंचिद्धर्मपदेन हेतुतावच्छेदकघटकजलत्वामादायैव लक्षणं संगमनीयम् ।

अतएव वह्निमान् वह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूताभावत्वकालीनजलादित्यादावभाववत्वावच्छेदेन तादृशावच्छेदकत्वावगाहिप्रकृतहेतुमत्तानिश्चयकालीनस्य वह्निव्यावकीभूताभावप्रतियोगिअभावनत्वकालीनजलरूपासाधारण्यविषयकनिश्चयस्य नियताहार्य्यतया तादृशासाधारण्याव्याप्तिरित्यपि निरस्तम् । यत्किञ्चित्पदेनोक्तहेतुतावच्छेदकघटकाभाववत्त्वकालीनजलत्वमादायैव तत्र लक्षणसमन्वयादिति ध्येयम ॥१४॥

सर्वमाकाशवत् प्रमेयत्वादित्यादिस्थलीयबाधप्रतिरोधयोरतिव्याप्तिः सर्वमाकाशाभाववदित्यादिनिश्चये सति क्वचिदप्याकाशाद्यनुमितेरनुदयात् अनुभवानुरोधेनासमानधर्मितावच्छेदककज्ञानेऽपि तत्प्रतिबन्धकत्वकल्पनात्तयोरनुमिति सामान्यविरोधित्वादतः सर्वं साध्याभाववत्त्व्याप्यवद्वेत्यादि-

कन्तु साध्यवत्त्वग्रहविरोधित्वेन सामानाधिकरण्यग्रहविरोधि, साध्यानुमितिसामान्याविरोधित्वं वा विशेषणमित्युक्तं दीधितिकृता। निर्धर्मितावच्छेदकज्ञानस्य बाधाद्यप्रतिबध्यत्वे सामानाधिकरण्यग्रहस्य साध्यत्वे सामानाधिकरण्यग्रहस्य साध्यांशे निर्धर्मितावच्छेदकतया तदविरोधित्व मुक्तबाधादेरक्ष्यत्वमेवेति, इत्याशयेनाहानुमितिसामान्याविरोधित्वं वेति भट्टाचार्येणोक्तम्।

अथात्र विरोधवारकसाध्यसमानाधिकरण्यग्रहाविरोधित्वदले साध्यवत्त्वांशेऽधिकरणत्व धर्मितावच्छेदककसामानाधिकरण्यग्रहाविरोधित्वनिवेशेनैव उक्तबाधेऽतिव्याप्तिवारणसम्भवे कृतमनुमितिसामान्याविरोधित्वरूपातिरिक्तविशेषणेनेति। न च यत्र गगनं साध्यमधिकरणत्वं हेतुस्तत्र गगनाभाववदधिकरणात्मके व्यभिचारेऽव्याप्तिभियाऽधिकरणत्वस्य धर्मितावच्छेदकत्वनिवेशासंभव इति वाच्यम। अधिकरणत्वसामानाधिकरण्येन गगनाभावस्यैव तत्र व्यभिचारतयाऽधिकरणत्वसामानाजिकरण्येन साध्यसामानाधिकरण्यग्रहाविरोधित्वस्य तत्र सत्त्वेनाव्याप्त्यनवकाशात्।

एवं यत्र द्रव्यमभाववदवृत्ति सत्त्वादित्वादौ द्रव्यत्वाभाववद्वृत्तिसत्तात्मकव्यभिचाराव्याप्तिभिया साध्यसाधनसामानाधिकरण्यग्रहत्वाव्यापकत्वस्य प्रतिबध्यताया निवेश्यतया व्याप्तिज्ञानत्वावच्छिन्नप्रतिबध्यतामादायैवोक्तव्यभिचारसंग्रहसंवाच्चेति चेन्न।

यत्र गगनस्य साध्यता गगनाभाववदधिकरणस्य हेतुता तत्रसाध्यांशेऽधिकरणत्वधर्मितावच्छेदकस्य प्रकृतहेतुधर्मिकसाध्यसामानाधिकरण्यज्ञानस्यानाहार्य्यस्याऽसम्भवेनाधिकरणत्वस्य धर्मितावच्छेदकत्वनिवेशायोगात्।

एवं यत्राधिकरणत्वाभावस्य साध्यता तत्र साध्यांशेऽधिकरणत्वधर्मितावच्छेदकसाध्यसामानाधिकरण्यज्ञानस्य नियताहार्य्यतया तन्निवेशासम्भवाच्चेति ध्येयम्।

न चैतावताधिकरणत्वस्य धर्मितावच्छेदकत्वनिवेशासम्भवेऽपि साध्यांशे सधर्मितावच्छेदककसाध्यसामानाधिकरण्यग्रहाविरोधित्वनिवेशेनैव सामाञ्जस्यमिति वाच्यम्, तस्यापि प्रकारान्तरत्वादिति ध्येयम ॥१५॥

इति श्रीकालीशङ्करसिद्धान्तवागीशविरचितं सव्यभिचारक्रोडपत्रम् समाप्तम् ॥